श्रीमदनन्तकविकुञ्जरविरचितं

# चम्पूभारतम्

"गुजराती" प्रिन्टिंग प्रेस
बंबई १

मूल्यम् रु. २

## काव्यग्रन्थाः

गङ्गालहरी–महाकविपण्डितराज श्रीजगन्नाथविरचिता, पीयूषलहरीव्याख्यासहिता । ०–५०

चन्द्रालोकः–श्रीपीयूषवर्ष जयदेवकविविरचितोऽलंकारग्रन्थः । पायगुण्डोपाह्ववैद्यनाथ(बाळंभट्ट) विरचितरमाख्यव्याख्यासहितः । १ ००

चम्पूभारतम्–श्रीखण्डे इत्युपाह्वनारायणसूरिविरचितटीकासहितम् । २–००

## श्री नीलकण्ठ भट्टकृता भगवन्त भास्करे मयूखमाला

| | | | |
|---|---|---|---|
| संस्कार मयूखः | २–०० | दान मयूखः | मू. २–०० |
| आचार मयूखः | २–०० | उत्सर्ग मयूखः | अप्राप्य |
| समय मयूखः | २–०० | प्रतिष्ठा मयूखः | अप्राप्य |
| श्राद्ध मयूखः | २–०० | प्रायश्चित मयूखः | मू. २–०० |
| नीति मयूखः | २–०० | शुद्धि मयूखः | मू २–[illegible] |
| व्यवहार मयूखः | २–०० | शान्ति मयूखः | अप्रकटित |

## पारस्करगृह्यसूत्रम्–पंचभाष्योपेतम्

(१) श्रीकर्कोपाध्याय–(२) जयराम–(३) हरिहर–(४) गदाधर–(५) विश्वनाथप्रणीत–भाष्यपञ्चकसमलंकृतम् । कामदेवभाष्यसहित–वाप्यादिप्रतिष्ठाकण्डिकाशौचसूत्रहरिहरभाष्योपेतस्नानसूत्र — कर्क–गदाधरकृतभाष्य–कृष्णमिश्रकृतश्राद्धकाशिकोपेत–श्राद्धसूत्र–भोजन–सूत्ररूपपरिशिष्टसहितं च । मू. २०–००

## विदुरनीतिः

विषमपदटिप्पणसमेता । श्रीमहाभारते उद्योगपर्वांतर्गतप्रजागरपर्वणि महाबुद्धिमतो विदुरस्य राजानं धृतराष्ट्रं प्रति सदुपदेशः । अत्र सर्वसाधारणी नीतिविद्या संक्षेपत उपदिष्टाऽस्ति । तदियं नीतिविद्याबुभुत्सूनां जनानामतीवोपयोगिनी भविष्यतीति । मू. ०–२५

## नाम नामावलि–सूक्तानि

| | | | |
|---|---|---|---|
| गणेशसहस्रनामावलि | ०–४० | पुरुषोत्तमसहस्रनामस्तोत्रम् | ०–८० |
| शिवसहस्रनामावलि | ०–४० | शिवमहिम्नस्तोत्रम् | अप्राप्य |
| विष्णुसहस्रनामावलि | ०–४० | श्रीमृतसंजीवनस्तोत्रम् | ०–४० |
| पुरुषोत्तमसहस्रनामावलि | ०–६० | श्रीदेवीसूक्तम् | ०–४० |
| विष्णुसहस्रनामस्तोत्रम् | ०–२५ | पुरुषसूक्त श्रीसूक्त–लक्ष्मीसूक्तानि | ०–४० |

# CHAMPU BHARAT

OF ANANT

*WITH A COMMENTARY BY*

NARAYANA SURI BAJIRAYA SHRIKHANDA

EDITED BY

GANESH MAHADEV MEHENDALE



Printed and Published by Manilal Itcharam Desai at
**THE GUJARATI PRINTING PRESS,**
No. 8, SASSOON BUILDINGS, CIRCLE, FORT,
BOMBAY.

---

V. S. 1972. A. D. 1915

PRICE Rs 3-0-0

श्रीमदनन्तकविकुञ्जरविरचितं

# चम्पूभारतम् ।

श्रीखण्डोपाह्वबाजीरायात्मजनारायणसूरिविरचितटीकासनाथम् ।

मेहेंदळे इत्युपाह्वमहादेवसुतगणेशेन संशोधितं
टिप्पण्या संयोजितं च

मुम्बय्यां
फोर्टसर्कलाख्ये प्रविभागेऽष्टमसंख्याके सासूनभवने
'मणिलाल इच्छाराम देसाई' इत्यनेन स्वीये 'गुजराती'
मुद्रणयन्त्रालये मुद्रयित्वा तत्रैव प्रकाशितम् ।

विक्रमसंवत् १९७२. क्रिस्ताब्दः १९१५.

मूल्यं रूप्यद्वयम् ।

# विज्ञापनम् ।



अखिलगीर्वाणवाग्विदामत्यादरणीयं वाग्देव्याः स्वच्छन्दविहारोद्यानमिवातिललितपदबन्धं दिगन्तविश्रान्तयशसा श्रीमदनन्तकविना निर्मितं गद्यपद्योभयात्मकं चम्पूभारतं नाम काव्यं भारतीयैः पठनपाठनयोर्नित्यादृतत्वात्प्रथिततमम् ।

टीका चास्य करवीरराष्ट्रान्तर्वर्तिभूधरदुर्ग( मुदरगड )निवासिना राजतः प्राप्तजीविकेन विद्वन्मुकुटमणिना श्रीखण्डोपाह्वनारायणपण्डितेन विरचितेयं मूलतात्पर्यजिज्ञासूनामत्युपयुक्ता स्याद्यतोऽत्र शब्दचमत्कृतिप्रचुरतयाऽनुप्रासादीनामिव श्लेषस्यापि कविना तत्र तत्र प्रयुक्तत्वात्तदर्थस्य चेतोऽन्यत्रानुपपादनात् ।

इयं च चत्वारिंशतो वत्सरेभ्यः प्राक्शिलाक्षरैर्मुद्रितापि सांप्रतं दुर्लभा समजनीत्यालोच्य मुद्रणं समारब्धम् । एतन्मुद्रणावसरेऽस्मत्सुहृद्भिः सावन्तवाडीसंस्थानान्तर्गतवालावलीक्षेत्रनिवासिभिः ‘ चिकण्ये ’ इत्युपाह्वपौराणिकआपाशास्त्रिभिः स्वलिखितपुस्तकदानेन बहूपकृताः स्मः ।

ग्रन्थेऽस्मिँल्लास्यकारादृतपाठान्तराणि क–संज्ञया, शाके १७८६ वत्सरे मूलमात्रमुद्रितपुस्तकोपलब्धपाठान्तराणि च ख–संज्ञया निवेशितानि । पाठान्तरेऽधिकश्लोकानां टीका तत एव विविच्य संनिवेशिता । लोकोपयुक्ततां निर्वोढुं योग्यविषयटिप्पण्या सनाथीकृत्य संशोध्य च मुद्रितोऽयं ग्रन्थः सहृदयानामादरविषयः स्यादित्याशास्ते विद्वज्जनानुचरः संशोधकः—

मेहेंदळे इत्युपाह्वो महादेवसुतो
गणेशशर्मा ।

# चम्पूभारतस्य कथानुक्रमः।

## तृतीयस्तवके ।

---

चतुर्थस्तबके ।

## पञ्चमस्तबके ।

---

षष्ठस्तबके ।

## दशमस्तबके ।



## एकादशस्तबके ।



## द्वादशस्तबके ।

इति चम्पूभारतकथानुक्रमः समाप्तः ।

---

श्रीमदनन्तकविकुञ्जरविरचितं

# चम्पूभारतम् ।

नारायणरायश्रीखण्डेविरचितटीकासहितम् ।

## १ प्रथमस्तवकः ।

कल्याणं वो विधत्तां करटमदधुनीलोलकल्लोलमाला-
खेलल्लोलम्बकोलाहलमुखरितदिक्चक्रवालान्तरालम् ।
प्रत्नं वेतण्डरत्नं सततपरिचलत्कर्णतालप्ररोह-
द्वाताङ्कूराजिहीर्षादरविवृतफणाश्रृङ्गभूषाभुजङ्गम् ॥ १ ॥

---

वेतण्डतुण्डगण्डाभ्यां भाण्डाभ्यां मदवारिणः ।
निःसृता पापडिम्भस्य रक्ष्यान्नो डाकिनीधुनी ॥ १ ॥

अथ श्रीमदध्वरीन्द्रधुरीणानन्तभट्टकविः भारतसमुद्रात्सारमुद्धृत्य चम्पूप्रबन्धं चिकीर्षुः तस्य निर्विघ्नसमाप्तिप्रचयगमनार्थं कृतेष्टदेवतास्मरणं शिष्यशिक्षायै निबध्नन् एतद्रसमास्वादयतां कल्याणमाशास्ते—कल्याणमिति । प्रत्नं पुरातनम् 'पुराणे प्रतनप्रत्नपुरातनचिरन्तनाः' इत्यभिधानात् । वेतण्डरत्नं गजश्रेष्ठं गजाननमित्यर्थः । वेतण्डरत्नमिति गजाननपर्यायो वैजयन्त्याम् 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः । तस्य गजनराकृतिविशिष्टयेऽपि 'सर्वेषु गात्रेषु शिरः प्रधानम्' इत्यभियुक्तोक्तेः "महाहस्ती दक्षिणेन" इतिश्रुतेश्च वेतण्डत्वेन ग्रहणम् । वः युष्माकं कल्याणं कुशलं विधत्तां करोतु । विदधातेः करोत्यर्थत्वं, युष्मभ्यं कल्याणं ददात्वित्यर्थः । कीदृशं वेतण्डरत्नं करटयोः गण्डस्थलयोः मदधुनीनां मदोदकसरितां लोलासु चञ्चलासु कल्लोलमालासु महालहरीपरंपरासु खेलतां रोलम्बानां भ्रमराणां कोलाहलैः झंकारकलकलैः कृत्वा मुखरितं शब्दयुक्तं कृतं दिशां चक्रवालस्य मण्डलस्य अन्तरालं मध्यभागो येन तत् । पुनः कीदृशं कर्णौ तालाविव झर्झरसंज्ञकतालविशेषाविव कर्णतालौ, सततं निरन्तरं यथा तथा परिचलन्तौ यौ कर्णतालौ ताभ्यां सकाशात् प्ररोहतां उत्पद्यमानानां वाताङ्कुराणां वाय्वङ्कुराणाम् अल्पवायूनामित्यर्थः । आजिहीर्षया भक्षयितुमिच्छया दरम् ईषत् विवृतानि प्रसारितानि फणाशृङ्गाणि फणाग्रभागाः—मुखानि यैस्तथाभूताः भूषाभुजङ्गाः कटककटिसूत्रकेयूरादिभूषणभूताः भुजङ्गाः नागराजाः यस्य तत् । अङ्कूरशब्दो दीर्घादिरपि ' अङ्कूरश्चाङ्कुरः प्रोक्तः ' इति हलायुधः । "अन्येषामपि दृश्यते" इति दीर्घः । अत्रोभाभ्यां विशेषणाभ्यां वेतण्डत्वसमर्थनात् काव्यलिङ्गमलंकारः, ' समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम् ' इति लक्षणात् । स्रग्धरावृत्तम् । अत्र ग्रन्थ-

[ नवनीतसुगन्धयो नखाङ्का
नवनीपाङ्कुरनन्दनीयशोभाः ।
कुशलं कलयन्तु गोपिकानां
कुचवास्तव्यकुटुम्बिताधुरीणाः ॥ १ ॥ ]
तुहिनकिरणवंशस्थूलमुक्ताफलानां
विपुलभुजविराजद्वीरलक्ष्मीविभूम्नाम् ।
हसितसुरपुरश्रीरस्ति सा हस्तिनाख्या
रिपुजनदुरवापा राजधानी कुरूणाम् ॥ २ ॥
यस्यामुदग्रनृपमन्दिरचन्द्रशाला-
वातायने गतिवशाद्वपुषि प्रसक्ताम् ।
दीपाग्रधूममषिकां शिशिरांशुबिम्बे
मोहात्कुरङ्ग इति मुग्धजना वदन्ति ॥ ३ ॥

---

प्रारम्भे मगणनिक्षेपात् 'मो भूमिस्त्रिगुरुः श्रियम्' इत्युक्त्या एतद्रसास्वादनादि कुर्वतां लक्ष्मीरूपं फलं सूचितम् ॥ १ ॥

तुहिनेति । इतिहासद्वारा रसाविर्भावं करिष्यन्नादौ हस्तिनाख्यां राजधानीं वर्णयति दशभिः पद्यैरेकेन गद्येन च । हस्तिना इति आख्या नाम यस्याः सा प्रसिद्धा कुरूणां कुरुदेशानां राजानः कुरवः । कुरुशब्दात् "कुरुनादिभ्यो ण्यः" इति ण्यप्रत्ययस्य "तद्राजस्य बहुषु—" इति राजकृतबहुत्वे लुक् । तेषां राजधानी राजावासनगरी अस्ति । राजानो धीयन्ते धार्यन्ते ययेति "करणाधिकरणयोश्च" इति करणे ल्युट् । विहसिता स्वस्मिन्नुत्कर्षेणोपहसिता तुच्छीकृता सुरपुरस्यामरावत्याः श्रीः संपत् शोभा वा यया सा । तथा रिपुजनैः शत्रुसमूहैः दुरवापा दुःखेनापि प्राप्तुमशक्या । कीदृशां कुरूणां तुहिनकिरणवंशस्य चन्द्रवंशस्य स्थूलमुक्ताफलानां पृथुलमौक्तिकानामिति रूपकम् । वंशशब्दस्य वेणुवाचकत्वेन मुक्ताफलोत्पत्तिस्थानत्वं युक्तमेव । विपुलयोः स्थूलयोः भुजयोः अधिकरणयोः विराजन् शोभमानः वीरलक्ष्म्याः विशिष्टो भूमा बाहुल्यं येषां तेषाम् । भूमेत्यत्र बहुशब्दात् भावार्थे इमनिचि "बहोर्लोपो भू च बहोः" इति प्रकृतेर्भूभावः, प्रत्ययादेर्लोपश्च । अत्र रूपकातिशयोक्त्योरेकत्र समावेशात् संसृष्टिः ॥ २ ॥

यस्यामिति । यस्यां हस्तिनापुर्याम् उदग्रस्य उच्चस्य नृपमन्दिरस्य या चन्द्रशाला गृहोपरिगृहं तस्योपरिगृहम् एवंरीत्याऽन्तिमगृहम् 'चन्द्रशालाशिरोगृहम्' इत्यमरः । तस्य वातायने गवाक्षे गतिवशात्कदाचिद्गमनवशात् वम् अमृतं पुष्पाणीति वपुट् अमृतमयं तस्मिन् । यथा वाप्याः जलोत्पादकत्वं तथा बिम्बस्यामृतोत्पादकत्वम् । शिशिरांशोः चन्द्रस्य बिम्बे प्रसक्तां लग्नां दीपाग्रस्य वातायनस्थदीपशिखायाः धूममषिकां धूमजन्यकज्जलं कुरङ्ग इति हरिणाकारत्वात् हरिणोऽयमिति मुग्धजनाः मोहात् अज्ञानात् हेतोः वदन्ति । यद्वा ऊहात् तर्कात् मा वदन्ति चन्द्रबिम्बस्थोऽयं हरिणो हरिणो न भवति किंतु हस्तिनापुरीस्थराजगृह-

ग्रीष्मेषु शीतकरकान्तकृतोदरासु
यद्गोपुराग्रिमदरीषु पथाऽऽगतस्य ।
विश्राम्यतो हरिहयस्य विलम्बनेषु
चिह्नं तदीयदिनसन्ततिदीर्घभावः ॥ ४ ॥

यत्राङ्गनावदनयामवतीशहृष्य-
च्चन्द्राश्मसौधगलितः सलिलप्रवाहः ।
वृन्दारकेन्द्रनगरीवृहदुत्सवाय
मन्दाकिनीति लभते महतीमभिख्याम् ॥ ५ ॥

---

वातायनसंवन्धिदीपमषिकेयं गतिवशात् विम्वे प्रसक्तेत्यर्थः । अत्र मुग्धमोहपदाभ्यां हरिणत्वमपह्नुत्य दीपधूममषिकात्वारोपादपह्नुत्यलंकारः । स चापह्नवः उदग्रनृपमन्दिरचन्द्रशालावातायने गतिवशादिति युक्तिकथनेन कृत इति हेत्वपह्नुतिरलंकारः । तदुक्तम् 'स एव युक्तिपूर्वश्चेदुच्यते हेत्वपह्नुतिः' इति । तथा चन्द्रविम्वे चन्द्रशालावातायनदीपधूममषिकाया असंवन्धेऽपि संवन्धकथनात् संबन्धातिशयोक्तिरलंकारः । तयोरेकत्र समावेशात् संकरः । एवं च अत्युच्चराजमन्दिरवैशिष्ट्यकथनेन राजधान्याः लोकोत्तरसौन्दर्यं व्यज्यते ॥ ३ ॥

**ग्रीष्मेति** । ग्रीष्मेषु प्रतिसंवत्सरग्रीष्मर्तुषु पथा आकाशमार्गेण आगतस्य यस्याः नगर्याः गोपुराणां पुरद्वाराणाम् 'पुरद्वारं तु गोपुरम्' इत्यभिधानम् । अग्रिमासु उपरितनासु दरीषु गृहतुल्यगृहेषु विश्राम्यतः विश्रान्तिमनुभवतः हरिहयस्य हरिद्वर्णाश्वस्य सूर्यस्य विलम्वनेषु उदयाचलास्ताचलपर्यन्तगतिकालाधिककालेषु चिह्नं ज्ञापकं तदीयाया ग्रीष्मीयायाः दिनसन्ततेः दिनसमूहस्य दीर्घभावः दीर्घत्वम् । कथंभूतासु गोपुराग्रिमदरीषु शीतकरकान्तैः चन्द्रकान्तमणिभिः कृतानि उदराणि भूमिभित्त्याद्यन्तरीयभागा यासां तासु । इदं विश्रान्तिहेतुत्वेन विशेषणं, यथा कश्चित्पान्थो ग्रीष्मर्तौ पथि श्रान्तो मध्याह्ने शीतलस्थले घटिचतुष्टयं विश्रान्तिसुखमनुभूय पुनर्गच्छति तथाऽयमादित्योऽपि मार्गस्थशीतलचन्द्रकान्तमणिमयगृहेषु प्रतिदिनं विश्रान्तिमनुभूय गच्छति । कुत एतदिति चेत् उदयाचलादस्ताचलपर्यन्तगमनविषये शरदादिऋतुसंबन्धिदिनघटिकापेक्षयैतदृतुसंबन्धिदिनघटिकाधिक्यदर्शनादनुमीयते इति भावः । अत्र गोपुरोपरितनगृहाणामादित्यविश्रान्तिस्थानत्वासंबन्धेऽपि संवन्धकथनात्संवन्धातिशयोक्तिरलंकारः । तेषां गृहाणां चन्द्रकान्तमणिमयत्वकथनेन समृद्धिमद्वस्तुकथनादुदात्तालंकारश्च । तयोः संसृष्टिः । तेन नगरीगोपुरोपरितनगृहाणामत्युच्चत्वं नगर्याः समृद्धिमद्वस्तुयुक्तत्वं च व्यज्यते ॥ ४ ॥

**यत्रेति** । यत्र यस्यां नगर्याम् अङ्गनानां सुन्दरीणां वदनयामवतीशाः मुखचन्द्राः तैः हृष्यन्तः तत्किरणस्पर्शैः स्रवन्तः चन्द्राश्मानः ऊर्ध्वभागस्थवेदिकासंवन्धिचन्द्रकान्तमणयो यस्य तस्मात्सौधात् गलितः अधोभागस्थस्वर्गसमीपे पतितः सलिलप्रवाहः चन्द्रकान्तीयजलप्रवाहः वृन्दारकेन्द्रस्य नगर्याः अमरावत्याःबृहदुत्सवाय मन्दाकिनीति महतीम् अभिख्याम् अभिधानं लभते प्राप्नोति । 'अभिख्या नामशोभयोः' इत्यमरः । मन्दं न्यूनम् अकं पापं

दीप्रैरगारमणिभिर्दिवसायमानां
निश्चिन्वते मनसि यत्र निशां युवानः ।
कार्तान्तिकैरखिलकालनिवेदनाय
घण्टामणेरभिहतस्य घनारवेण ॥ ६ ॥
वक्त्रं विलासमणिदर्पणधार्यमाणं
वामा हिमांशुरयमित्यवधार्य यस्याम् ।
आदर्शविम्बधृतिरश्रुतदृष्टपूर्वा
तस्येति तादृशधियं विनिवारयन्ति ॥ ७ ॥

---

करोतीति मन्दाकिनी, मन्दं अकति गच्छतीति वा । अत्र यः स्वर्गादप्युच्चसौधगताङ्गनामुखचन्द्रकिरणस्पर्शजन्यचन्द्रकान्तीयजलप्रवाहः स्वर्गसमीपे पतितः स एव मन्दाकिनीनाम्नी आकाशनदीति अत्यद्भुतार्थवर्णनादत्युक्तिरलंकारः। तेन राजान्तःपुरस्त्रीणां लोकोत्तरसौन्दर्यं व्यज्यते ॥ ५ ॥

**दीप्रैरिति** । यत्र यस्यां नगर्यां युवानः गृहान्तस्थिततरुणपुरुषाः दीप्रैः स्वतःसिद्धप्रकाशैः अगारमणिभिः गृहसंवन्धिहीरकादिरत्नैः कृत्वा दिवसायमानां दिवसमिवाचरन्तीं निशां रात्रिं मनसि कृतान्तं ज्योतिःशास्त्रसिद्धान्तं विदन्ति ते कार्तान्तिकाः कालनिवेदिनः, तद्वेदेत्यर्थे "क्रतूक्थादि–" इत्यनेन ठक् । तैः अखिलानां समस्तमनुष्याणां कालनिवेदनाय समयज्ञापनाय अभिहतस्य ताडितस्य घण्टामणेः घण्टामध्यवर्तिमणेः घनारवेण निविडशब्देन महाशब्देनेति यावत् । यद्वा घनवत् घनगर्जनवत् आरवः शब्दः तेन कृत्वा निश्चिन्वते दिवसो गतः इदानीमियं निशेति निश्चयं कुर्वन्ति, नत्वन्धकारेणेत्यर्थः । प्रौढानामपि संशयः किं पुनर्वक्तव्यं स्त्रीवालानामिति ध्वनयितुं युवपदम् । यद्वा निशाम् अगारमणिभिः दिवसायमानामिति विधिविशेषणत्वेनान्वयः । अत्रोक्तार्थेन स्वयंप्रकाशमणिविशिष्टागारवैशिष्ट्येन नगर्या अलौकिकत्वं व्यज्यते ॥ ६ ॥

**वक्त्रमिति** । यस्यां नगर्यां वामाः स्त्रियः 'प्रतीपदर्शिनी वामा' इत्यमरः । विलासार्थे यत् मणिदर्पणं हीरकरत्नदर्पणं तेन धार्यमाणं स्वस्मिन् स्थाप्यमानं दर्पणे प्रतिविम्बितमित्यर्थः । वक्त्रं स्वमुखम् अयं हिमांशुः चन्द्र इत्यवधार्य मत्वा तस्य सुधांशोः आदर्शे दर्पणे विम्बधृतिः । अथ च दर्शम् अमावास्यामभिव्याप्य विम्वस्थितिः श्रुता चासौ दृष्टा च श्रुतदृष्टा पूर्वं श्रुतदृष्टा श्रुतदृष्टपूर्वा तथा न भवति अश्रुतदृष्टपूर्वा कदापि न श्रुता न दृष्टेत्यर्थः । इति पश्चाद्विचारेण तादृशं धियं सुधांशुरयमिति वुद्धिं विनिवर्तयन्ति दूरीकुर्वन्ति, मिथ्येति मन्यन्ते इत्यर्थः । दर्पणे स्वमुखप्रतिविम्वं दृष्ट्वा इदं चन्द्रविम्वमिति मत्वा ततः चन्द्रबिम्बस्य स्थितिराकाशे दृष्टा दर्पणे न श्रुता न दृष्टा च, तत्रापि दर्शमभिव्याप्य नैव श्रुता दृष्टा चेति विचारेण नायं चन्द्र इति निश्चिन्वन्तीत्यर्थः । अनेन पौरस्त्रीणामलौकिकसौन्दर्यं व्यज्यते ॥ ७ ॥

---

१ क. वर्तयन्ति ।

आलापकालसमपल्लविताङ्कवीणा-
सौरभ्यपातिमधुपारवसंकुलस्य ।
तन्त्रीस्वनस्य समितौ तरुणीस्वनस्य
जानाति यत्र चतुरोऽपि न तारतम्यम् ॥ ८ ॥
शालीनतामविगणय्य सखीसमाजे
पश्चात्कृतस्य कमितुः प्रणयप्रकोपात् ।
मुग्धाः समीक्ष्य मुकुरायितरत्नभित्तौ
छायां क्षणानुतपनं शमयन्ति यस्याम् ॥ ९ ॥
चित्रं दिदर्शयिषुणा जनितस्य यस्यां
मध्यं विनैव विधिना महिलाजनस्य ।
अङ्गं नितम्बजघनादि यतो यतोऽध-
स्तुङ्गं कुचाद्युपरि याति ततोऽनुकूलम् ॥ १० ॥

---

**आलापेति** । यत्र नगर्यां समितौ सभायां मुखध्वनिना केवलरागस्वरूपदर्शनमालापः तस्योच्चारणकालेन समं यथा तथा पल्लविता पल्लववती कृता वादनार्थमङ्गुलीयुक्ता कृतेत्यर्थः । उपमानवाचकपल्लवशब्देनोपमेयाङ्गुलीग्रहणम् । अत्र पल्लववतीशब्दात्तत्करोतीति णिच् इष्टवद्भावात् पुंवद्भावमतुब्लुकौ । या अङ्कवीणा उत्सङ्गस्थवीणा आलापार्थं प्रसृतमुखसंबन्धिनि सौरभ्ये सौगन्ध्ये विषये पतन्ति तच्छीलाः भ्रमराश्च तेषाम् आरवैः शब्दैः संकुलस्य मिश्रितस्य तन्त्रीस्वनस्य तन्तुवाद्यविशेषस्वनस्य तरुणीस्वनस्य च तारतम्यं न्यूनाधिकभावं चतुरोऽपि गानवादनकलायामत्यन्तनिपुणपुरुषोऽपि न जानाति । इतरो न जानातीति किमु वक्तव्यमितिद्योतनार्थमपिशब्दः । अथवा पूर्णरागस्वरूपवेदिना दीपकल्याणरागे गीयमाने दीपस्थाने दीपाः प्रादुर्भवन्ति, वसन्तरागे गीयमाने काष्ठे पुष्पपल्लवाः प्रादुर्भवन्तीत्यैतिह्यमाश्रित्य आलापकालसमं पल्लविता संजातपल्लवा या अङ्कवीणा—पल्लवेत्युपलक्षणं पुष्पाणाम्—तस्याः सौरभ्ये इति व्याख्येयम् ॥ ८ ॥

**शालीनतामिति** । यस्यां नगर्यां मुग्धाः अप्रौढाः स्त्रियः सखीनां समाजे प्रणयप्रकोपात् प्रेमकलहजन्यकोपात् हेतोः शालीनतां साधुताम् अविगणय्य अगणयित्वा त्यक्त्वेत्यर्थः । पश्चात्कृतस्य आत्मनः पराङ्मुखावस्थानेन पृष्ठतः कृतस्य कमितुः कामुकस्य छायां प्रतिबिम्बं, कमितुः पृष्ठतः करणेन अग्रतो जातायां मुकुरायितायां मुकुरवदाचरितायां रत्नभित्तौ समीक्ष्य सम्यग्दृष्ट्वा क्षणानुतपनं कामुकविरहासहिष्णुतया क्षणमात्रं जातो यः व्यर्थं मया प्रियः पश्चात्कृत इति पश्चात्तापः तं शमयन्ति शान्तिं नयन्ति । एतेन नगर्याः रत्नभित्तिवैशिष्ट्यं तेन च संपदतिशयो द्योत्यते ॥ ९ ॥

**चित्रमिति** । यस्यां नगर्यां चित्रम् आश्चर्यं दिदर्शयिषुणा लोकान् प्रति दर्शयितुमिच्छुना विधिना ब्रह्मणा मध्यं मध्यमावयवं विनैव जनितस्योत्पादितस्य यतः गच्छतः,

---

१ क. स्वरस्य ।

पङ्केरुहाणि परिखामवतीर्य यस्यां
प्राकारभित्तिमभितः परिवेष्टयन्ति ।
अन्तः स्थितिं विदधतामबलाजनाना-
मास्यानि जेतुमखिलानि किलात्मभासा ॥ ११ ॥

या खलु पुरा कुरुधराधिपापराधसमेधितक्रोधेन हलधरेण निजायुधेन हठात्कर्षणशिक्षया तत्क्षणं समुत्क्षिप्तदक्षिणक्षितिभोगा तदीयभुवनभूषणायमानां भोगावतीमात्मना विजेतुं भागीरथीपाथःपथेनावतीर्य कृतप्रस्थानेवाद्यापि दृश्यते ॥ १ ॥

---

इणः शतरि रूपम् । महिलाजनस्य वधूजनस्य नितम्बजघनादि कटिपश्चाद्भागपुरोभागादि अङ्गम् अवयवः, जातिमभिप्रेत्यैकवचनम् । अधो भूभागे यतः यस्यां दिशि याति गच्छति ततः तस्यां दिशि उपरि नितम्बजघनादेरूर्ध्वभागे तुङ्गम् उच्चं पृथुलमित्यर्थः । कुचाद्यङ्गम् अनुकूलं यथा तथा याति । महिलाजनस्य मध्यभागमदृष्ट्वा कटेरधोभागोर्ध्वभागौ सान्तरालौ सहैव गच्छन्तौ दृष्ट्वा लोक आश्चर्यं मन्यते इति भावः । अनयाऽत्युक्त्या वधूजनमध्यभागस्य तनुत्वं प्रतिपाद्यते ॥ १० ॥

**पङ्केरुहाणीति ।** पङ्केरुहाणि कमलानि आत्मभासा स्वकान्त्या अन्तः नगर्या मध्यभागे स्थितिं विदधतां कुर्वताम् अबलाजनानाम् अखिलानि आस्यानि मुखानि जेतुं किल जेतुमिव यस्या नगर्याः परिखाम् अवतीर्य परिखोदके प्रविश्य प्राकारभित्तिम् अभितः सर्वतः परिवेष्टयन्ति । अत्र कमलकृतप्राकारवेष्टनस्य अन्तर्गतवधूमुखजयः फलं न भवतीत्यफलस्य फलत्वेनोत्प्रेक्षणात् फलोत्प्रेक्षालंकारः । यद्यपि " पर्यभिभ्यां च " इति तसिल्विधायके सूत्रे सर्वोभयार्थाभ्यामेव इति नियमात् अभित इत्यस्योभयत इत्यर्थता युक्ता तथापि 'अभितः शीघ्रसाकल्यसंमुखोभयतोऽन्तिके' इति मेदिनीकोशानुसारेण साकल्यार्थे प्रयोगः ॥ ११ ॥

**येति ।** या हस्तिनापुरी पुरा खलु पूर्वकाले । खल्विति इतिहाससूचकम् । कुरूणां धराधिपो राजा दुर्योधनः तस्य दुर्भाषणरूपापराधेन समेधितः सम्यक् वृद्धिं प्राप्तः क्रोधो यस्य तेन हलधरेण बलरामेण निजायुधेन स्वीयलाङ्गलायुधेन कृत्वा या हठात्कर्षणरूपा शिक्षा तया तत्क्षणम् अपराधक्षणे इत्यर्थः । अत्यन्तसंयोगे द्वितीया । समुत्क्षिप्त ऊर्ध्वभागं नीतः दक्षिणः क्षितिभागः भूमिभागो यस्यास्तथाभूता सती तदीयभुवनस्य बलरामीयलोकस्य, बलरामस्य शेषावतारत्वात् पाताललोकस्येत्यर्थः । भूषायमाणां भूषावदाचरन्तीं भोगावतीम् एतन्नाम्नीं नागानां राजधानीम् आत्मना स्वयं विजेतुं पराजेतुम् अवतीर्य भागीरथीपात्रे अवतरणं कृत्वा भागीरथ्याः पाथःपथेन जलमार्गेण कृतप्रस्थानेव कृतगमनप्रारम्भेव अद्यापि दृश्यते, लोकैरिति शेषः । अत्र नगर्यां प्रस्थानकरणरूपधर्मोत्प्रेक्षणाद्ध-

---

१ ख. परिघाम् । २ ख. मन्तःस्थितिम् । ३ क. शिक्षयेति नास्ति । ४ ख. क्षणेन । ५ क. ख. भागतया । ६ क. ख. भोगवतीम् । ७ क. किलेत्यधिकम् । ८ क. ख. परीत्यधिकम् ।

उपेत्य तां पाण्डुरुदारविक्रमः
प्रजामनः पल्लवयन्प्रशासनात्।
यशःप्रकाशैर्यमुनासखीसखै-
र्निनाय लोकं निजनामवाच्यताम्॥ १२॥

यं [1]पराशरसुतो निखिलावनिदेशावनाय निजजननीनिदेशवशमना मनागितराश्चर्यतपश्चर्यालंकर्मीणः समानोदर्यस्य विचित्रवीर्यस्य कुटुम्बिन्यामम्बालिकायां संपादयामास॥ २॥

चित्रं चरित्रं जगतीतलेऽस्य न श्लाघयामास नरेषु को वा।
स यत्स्वयं पाण्डुरपि स्वकेन गुणेन रक्तानकरोत्समस्तान्॥ १३॥

---

र्मोत्प्रेक्षालंकारः। पुरा दुर्योधनो निजकन्यास्वयंवरे बलात्कन्याहर्तारं श्रीकृष्णपुत्रं साम्बं द्रोणकर्णादिभिः षड्भिः रथिभिर्जित्वा कारागृहे बन्दीकृतवान्। तच्छ्रुत्वा क्रुद्धान् यादवान् निवार्य साम्ना तं मोचयितुं गतं बहिरुद्यानस्थं साम वदन्तं बलरामं प्रति पूजार्थमागतो दुर्योधनो दुर्भाषणानि कृत्वा गतवान्। ततः क्रुद्धेन रामेण पुरीं भागीरथ्यां न्युब्जां विक्षेप्तुं दक्षिणभागे लाङ्गलाग्रेण विदार्योन्नीयाकृष्टा। तदानीं शरणागतभीष्मदुर्योधनादिभिः कन्यामुपायनीकृत्य साम्बमुन्मुच्य तत्सान्त्वं कृतमिति श्रीभागवतस्थकथाऽत्रानुसंधेया॥ १॥

उपेत्येति। उदारविक्रमः महापराक्रमः पाण्डुः एतन्नामा राजा ताम् उक्तरूपां हस्तिनापुरीम् उपेत्य प्राप्य शासनात् दुष्टनिग्रहशिष्टानुग्रहरूपात् हेतोः प्रजानां मनः पल्लवयन् प्रफुल्लं कुर्वन् आह्लादयन्निति यावत्। यमुनासख्याः भागीरथ्याः सखायः शुभ्रगुणसादृश्यात् मित्राणि तैः यशसां प्रकाशैः लोकं भूलोकं निजनाम्नः पाण्डु इति स्वीयनाम्नः यो वाच्यः शुभ्र इत्यर्थस्तत्तां शुभ्रत्वं निनाय नयति स्म। अत्र लोकं शुभ्रं चकारेत्यर्थस्य निजनामवाच्यतां निनायेति रीत्यन्तरेण कथनात्पर्यायोक्तमलंकारः। तदुक्तम् 'पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम्' इति॥ १२॥

यमिति। मनागितरत् बहु आश्चर्यं यस्यास्तथाभूता या तपश्चर्या तस्याः अलंकर्मीणः कर्म कर्तुं समर्थ इत्यर्थः। कर्मणे अलमित्यर्थेकालंकर्मशब्दात् "अषडक्ष–" इत्यनेन स्वार्थे खप्रत्ययः। पराशरसुतो व्यासः निजजनन्याः व्यासस्य कानीनत्वात् शन्तनुपत्न्याः सत्यवत्याः निदेशे आज्ञायां वशं मनो यस्य तथाभूतः सन् निखिलो य अवनिदेशस्तस्यावनाय रक्षणाय सत्यवतीपुत्रस्य विचित्रवीर्यस्य पत्न्याम् अम्बालिकायां यं पाण्डुं संपादयामास अजीजनत्। संतत्यभावे देवरात्सुतोत्पत्तिः कर्तव्येतिशास्त्राधारेण महातपस्विव्यासपुत्रोऽयं पाण्डुरिति भावः॥ २॥

चित्रमिति। सः स्वयं पाण्डुरपि अर्थान्तरे शुभ्रोऽपि स्वकेन गुणेन शुभ्रतया समस्तान् जनान् रक्तान् लोहितान् अनुरक्तांश्च अकरोत् इति यत् तत् चित्रम् आश्चर्यकारकम्

---

१ क. किलेत्यधिकम्। २ क. ख. अवनीदेशावनाय। ३ क. ख. अवनम्रमनाः।

अन्तर्भवत्कृष्णमृगाजिनाङ्कैः सुनिर्मलैः षोडशदानकीर्तेः ।
खण्डैरमुष्येन्दुरकारि धात्रा मृषाऽयमब्धेरजनीति वार्ता ॥ १४ ॥
जग्राह निग्राहपरः परश्रियां करे कराग्रेण करेणुचङ्क्रमः ।
कुन्तीं शकुन्तेशरथो यथा रमां समुद्रकाञ्चीं च समुद्रकन्यकाम् १५

अथ कदाचन मृगयोपलालितहृदयो नरेश्वरोऽयमश्वे शशिश्वेततेजसि विश्वातिशायिनि रयविजितमातरिश्वनि कृताधिरोहः पार्श्वधृतविश्वकद्रुभिरनेकवागुरोपकरणानुरोधैर्योधैरनुद्रुतो मृदुभद्रविनयाभ्यां यदुमद्रतनयाभ्यामनुविद्धः सिद्धगणगणनीयमहिमवतो हिमवतोऽवँजगाहे महतीमटवीतटवीथिकाम् ॥ ३ ॥

---

अस्य चरित्रं जगतीतले नरेषु को वा पुरुषः न श्लाघयामास अपि तु सर्वोऽपि श्लाघयामासेत्यर्थः । अत्र विरोधाभासालंकारः 'आभासत्वे विरोधस्य विरोधाभास इष्यते' इतिलक्षणात् । गुणेन दयादाक्षिण्यौदार्यादिना रक्तान् स्वस्मिन्ननुरक्तान् इति विरोधपरिहारः ॥ १३ ॥

अन्तरिति । धात्रा ब्रह्मणा अन्तर्भवत् कृष्णमृगस्य अजिनं वधः चर्म च तद्रूपः अङ्कः कलङ्कः येषु तैः 'अजिनं वधचर्मणोः' इति रत्नकोशः । सुतरां निर्मलैः अमुष्य राज्ञः षोडशदानानां तुलापुरुषरत्नधेन्वादिषोडशमहादानानां कीर्तेः खण्डैः इन्दुः अकारि कृतः । अयम् इन्दुः अब्धेः सकाशात् अजनि जात इति वार्ता मृषा मिथ्या । षोडशमहादानेषु कृष्णमृगाजिनदानं वर्तते । तत्र अजिनशब्दस्य वधवाचकत्वेन मृगवधेन चर्मणो लाभेन च तद्दानस्य पापजन्यत्वात् पापस्य कृष्णत्वात् तद्दानकीर्तिखण्डस्य कृष्णमृगचर्माकारकलङ्कत्वेन परिणामात् इतरखण्डानां शुभ्रत्वाच्च सकलङ्कश्चन्द्रो जात इति भावः । अत्र अन्तर्भवत्कृष्णमृगाजिनाङ्कैरित्यनेन हेतुकथनपूर्वकं मृषापदेनाब्धिजातत्वं निह्नुत्य कीर्तिखण्डजातत्वारोपणात् हेत्वपह्नुतिरलंकारः ॥ १४ ॥

जग्राहेति । परश्रियां शत्रुसंपदां निग्राहपरः निग्रहकारी करेणोः गजस्य चङ्क्रम इव चङ्क्रमो गमनं यस्य तथाभूतः स पाण्डुः कराग्रेण कुन्तीं कुन्तिदेशराजस्य पोषककन्यां वसुदेवभगिनीं पृथां, मद्रकन्यां मद्रराजकन्यां माद्रीं च करे जग्राह परिणीतवानित्यर्थः । कः के इव शकुन्तेशः पक्षीन्द्रो गरुडः रथो वाहनं यस्य स विष्णुः रमां लक्ष्मीं समुद्रः काञ्ची रशना यस्यास्तां पृथ्वीं च यथा परिणीतवान् तद्वत् । अत्रानुप्रासो नाम शब्दालंकारः ॥ १५ ॥

अथेति । अथानन्तरं कदाचन मृगयया उपलालितं वशीकृतं हृदयं मनो यस्य सोऽयं नरेश्वरो राजा पाण्डुः सिद्धगणानां गणनीयो मान्यो यो महिमा प्रभावः सोऽस्या-

---

१ क. ख. करैः । २ क. ख. शकुन्तीशरथो । ३ क. कदाचित् । ४ क. रोचिषि । ५ क. रयेति नास्ति । ६ क. वागुराद्युप° । ७ क. अवेति नास्ति ।

तत्र स तावदतिक्षुल्लकवनमल्लिकामतल्लिकोद्वेल्लितधम्मिल्लोऽवलग्नदृढलग्नकच्छपुटीविच्छुरितच्छुरिको निषङ्गानुषङ्गमांसलिततमांसललितः परनिरासपरं शरासनवरं करे कुर्वाणो गीर्वाणगणचक्रवर्तिविक्रमः क्रमेण विविधमृगचक्रवधं विधातुमुपचक्रमे ॥ ४ ॥

भूभुजोऽस्य सविधे विचरन्त्यो-
भोजमद्रसुतयोर्दृशि शोभाम् ।
जेतुकाममिव सर्वसमष्ट्या
प्रादुरास पुरतो मृगयूथम् ॥ १६ ॥

---

स्तीति तस्य हिमवतः हिमाचलस्य महतीम् अटवीतटानां वीथिकां परंपराम् अवजगाहे प्रविवेश । कीदृशो राजा शशीव श्वेतं तेजो यस्य तस्मिन् निजगतिकौशलेन विश्वस्मिन्नतिशेते अतिशयेन वर्तते तस्मिन्, शीघ्रगत्या विजितः मातरिश्वा वायुर्येन तस्मिन् अश्वे कृताधिरोहः । तथा पार्श्वयोः धृताः विश्वकद्रवो मृगयाकुशला श्वानो यैस्तैः 'श्वा विश्वकद्रुर्मृगयाकुशलः' इत्यमरः । अनेकानि वागुरोपकरणानि मृगवन्धिनीसाधनानि अनुरुन्धन्ति मृगयानुकूलतया गृह्णन्ति ये तैः योधैः अनुद्रुतः अनुगतः । तथा मृदुभद्रः शुभः विनयो ययोस्ताभ्यां यदुमद्रयोः यादवमद्रराजयोः तनयाभ्यां कुन्तीमाद्रीभ्याम् अनुविद्धः युक्तः । अत्रत्यसर्वगद्येषु प्रायो वृत्त्यनुप्रासच्छेकानुप्रासादयः शब्दालंकाराः सन्त्येव, क्वचित्क्वचित् उत्प्रेक्षाद्यर्थालंकारा अपि वर्तन्ते ॥ ३ ॥

**तत्रेति** । तत्र वनतटपरंपरासु सः पाण्डुः । तावदिति वाक्यालंकारे । क्रमेण विविधाः ये मृगाः अरण्यपशवः 'पशवोऽपि मृगाः' इत्यमरः । तेषां चक्रस्य समूहस्य वधं विधातुं कर्तुम् उपचक्रमे आरेभे । कीदृशः सः प्रशस्ता वनमल्लिकाः वनसंवन्धिमल्लिकाकुसुमानि वनमल्लिका मतल्लिकाः "प्रशंसावचनैश्च" इति मतल्लिकाशब्देन समासः । अतिक्षुल्लकाभिः अतिसूक्ष्माभिः वनमल्लिकामतल्लिकाभिरुद्वेल्लितः गुम्फितः धम्मिल्लः संयतकचा यस्य सः, तथा वलग्ने मध्यभागे दृढं यथा तथा लग्नः संबद्धो यः कच्छपुटः शम्बरमृगचर्ममयकटिहृदयवेष्टकम् 'पडदाळ' इति प्रसिद्धम् । तत्र विच्छुरिता अन्तः स्थापिता छुरिका लघुखड्गो येन सः, तथा मांसलौ मांसविशिष्टौ कृतौ मांसलितौ अतिशयेन तौ मांसलिततमौ, निषङ्गयोः तूणीरयोः अनुषङ्गेन संबन्धेन मांसलिततमौ यौ अंसौ स्कन्धौ ताभ्यां ललितः सुन्दरः, तथा परेषां शत्रूणां निरासवरं शरासनवरं करे कुर्वाणः धर्ता, गीर्वाणगणानां चक्रवर्ती राजा इन्द्रः तत्तुल्यपराक्रमः । अत्र मृगयाकर्तुः स्वभावकथनात् स्वभावोक्तिरलंकारः ॥ ४ ॥

**भूभुज इति** । अस्य भूभुजः राज्ञः सविधे समीपे विचरन्त्योः कुन्तीमाद्र्योः नेत्रशोभां जेतुकाममिव जेतुमिच्छु इव मृगयूथं मगवृन्दं सर्वेषां समष्ट्या एकीभावेन पुरतः

---

१ ख. मांसलतमांस° । २ क. निरासनपरम् । ३ क. गणेति नास्ति । ४ क. चक्रेति नास्ति ।

क्षोणीपतौ मदकलं प्रति कृष्णसारं
　　तूणीमुखे पतितपाणिनखाङ्कुरेऽस्मिन् ।
एणीकुलानि तरलैर्यमुनाजलानां
　　वेणीमिवाक्षिवलनैर्विपिने वितेनुः ॥ १७ ॥
कुरङ्गयूनां कुरुते स्म भीतिं
　　गुरोः कुलस्यामृतदीधितेर्नः ।
सजातिरेषां तनुते कलङ्क-
　　मितीव रोषादिषुभिः स पाण्डुः ॥ १८ ॥
प्रजवं हयं गमयते ततस्ततः
　　पतिता नृपाय शललीशलालिका[1] ।
गहने वनेऽपि पिशुनत्वमाचरन्
　　ग्रहणे वराहकुलवर्तनीभुवाम् ॥ १९ ॥

---

प्रादुरास प्रादुर्बभूव । यथा वृक्षाणां व्यष्टया ग्रहणे वृक्षाः इति बहुत्वं समष्टया ग्रहणे वनमित्येकत्वं भासते तथा मृगाणां समष्टया यूथमिति भावः । एवं च सर्वे मृगा एकीभूय ऐकमत्यं कृत्वा नेत्रशोभाजयेच्छया आगताः किमिति हेतूत्प्रेक्षा ॥ १६ ॥

क्षोणीपताविति । अस्मिन् क्षोणीपतौ राज्ञि मदेन कलम् आविष्टं, सुन्दरं वा कृष्णसारं प्रति उद्दिश्य शरग्रहणार्थं तूणीमुखे पतिताः पाणिनखाङ्कुराः यस्य तस्मिन् सति हरिणीकुलानि चञ्चलैः अक्ष्णां वलनैः दर्शनपरंपराभिः यमुनाजलानां वेणीमिव प्रवाहमिव वितेनुः रचयामासुः । अत्र कविसंप्रदाये दर्शनवलनानां कृष्णत्वेन तत्र यमुनाप्रवाहोत्प्रेक्षणात्स्वरूपोत्प्रेक्षालंकारः ॥ १७ ॥

कुरङ्गेति । सः पाण्डुः एषां हरिणानां सजातिः समानजातिः, हरिणः नः अस्माकं कुरूणां कुलस्य गुरोः उत्पादकस्य अमृतदीधितेः चन्द्रस्य कलङ्कं तनुते कुरुते इति रोषादिव इषुभिः कुरङ्गाश्च ते युवानः कुरङ्गयुवानः । विशेषणविशेष्यभावे कामचारात् कुरङ्गशब्दस्य विशेषणत्वं कुरङ्गेषु युवान इति वा । तेषां भीतिं कुरुते स्म चकारेत्यर्थः । अत्र कुरङ्गभीतिकरणं प्रति उक्तरोषस्याहेतुत्वेऽपि हेतुत्वकथनात् हेतूत्प्रेक्षालंकारः ॥ १८ ॥

प्रजवमिति । पतिताः शललीशलालिकाः शल्यसंज्ञकपशोः स्थूलरोमरूपशललीसंज्ञकशलाकाः 'श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम्' इत्यमरः । ततस्ततः तत्तत्स्थले हयं गमयते नृपाय गहने दुर्गमे वनेऽपि वराहकुलानां वर्तनीभुवां मार्गभूमीनां ग्रहणे स्वीकारविषये पिशुनत्वं सूचकत्वम् आचरन् । नगरे खलाः पिशुनत्वमाचरन्तु अत्राचेतना अपि निर्जने वनेऽपि पिशुनत्वमाचरन्नित्याश्चर्यद्योतनार्थो अपिशब्दः । वराहेभ्य आत्मनो रक्षणार्थं शल्यपशुभिः स्वशरीरमुक्ताः शरतुल्यशललीशलाकाः वराहगमनमार्गे पतिताः, ताभिरनेन मार्गेण वराहा गता इति राज्ञा ज्ञातमिति भावः ॥ १९ ॥

---

१ क. ख. शलाकिकाः ।

वेशन्तपङ्कविहृतेर्विनिवृत्त्य सद्यः
प्रत्युद्यतां ध्वनिषु मत्सरिणां हयस्य ।
भूदार एष वनपोत्रवतामतानीत्
भूदारशब्दमसहिष्णुरिवान्तमेषाम् ॥ २० ॥

तूर्णं प्रधाव्य तुरगं स्वयमन्यतोऽसौ
पाण्डुः कुलं परिववार लुलाययूनाम् ।
अग्रे विषाणकरधूननदुर्विधत्वा-
त्सत्यापितद्विरदभावविपर्ययाणाम् ॥ २१ ॥

आकर्ण्य क्षितिपहया रवानसह्या-
नामूलं कुपितधियस्तिरो विषाणम् ।
व्याधूयान्तिकतरुषु क्षणान्निचख्नु-
र्व्याक्रष्टुं पुनरथ तच्चिरं न शेकुः ॥ २२ ॥

---

**वेशन्त इति ।** भूः दाराः जाया यस्य स भूपतिः एष पाण्डुः हयस्य ध्वनिषु मत्सरिणाम् अत एव वेशन्तानाम् अल्पसरसां पङ्केषु विहृतेः क्रीडायाः निवृत्य सद्यः ध्वनिश्रवणसमय एव प्रत्युद्यतां संमुखमापततां वनपोत्रवतां वनसूकराणां भूदार इति शब्दः वाचकं नाम मन्नाम एतेषु वर्तते इति मत्सरेण असहिष्णुः सन्निव एषां सूकराणम् अन्तं वधं व्यतानीत् अकरोत् । 'क्रोडो भूदार इत्यपि' इत्यमरः । अत्र सूकरवधे असहिष्णुत्वहेतुकल्पनात् हेतूत्प्रेक्षा । सा च वराहवाचकभूदारशब्दस्यान्यार्थकल्पनात् निरुक्त्यलंकारोत्थापितेति तयोरङ्गाङ्गिभावेन संकरः ॥ २० ॥

असौ पाण्डुः स्वयम् अन्यस्मिन्देशे तुरङ्गं तूर्णं प्रधाव्य शीघ्रं गमयित्वा लुलाययूनां महिषयूनां कुलं परिववार रुरोध । कीदृशां लुलाययूनाम् अग्रे मुखपुरोभागे विषाणे दन्तौ करधूननं शुण्डाचालनं च तेषु दुर्विधत्वं दारिद्र्यम् अभाव इति यावत् । तस्माद्धेतोः सत्यापितः सत्यत्वेन प्रतिपादितः द्विरदभावविपर्ययः गजत्वाभावो यैस्तेषाम् । यान् दृष्ट्वा उच्चत्वस्थूलत्वनीलत्वधर्मैः इमे गजा इति बुद्धिर्जाता । ततो दन्तशुण्डादण्डाभावदर्शनेन नेमे गजा अपि तु वनमहिषा इति बुद्धिरुत्पन्नेति भावः । अनेन वनमहिषाणाम् अतिस्थूलत्वं व्यज्यते ॥ २१ ॥

**आकर्ण्येति ।** महिषाश्ववैरात् असह्यान् गजाश्वशब्दान् आकर्ण्य कुपितधियो महिषाः विषाणं शृङ्गं तिरः तिर्यक् व्याधूय कम्पयित्वा समीपवृक्षेषु क्षणात् अतित्वरयेत्यर्थः । आमूलं मूलपर्यन्तं निचख्नुः आरोपयामासुः । अथानन्तरं तत् शृङ्गं तरुभ्यः आक्रष्टुं चिरं न शेकुः शक्ता न बभूवुः । महिषाणां बलातिरेकाद्बुद्धिमान्द्याद्श्ववैराच्चायं स्वभावः । तत्कथनात्स्वभावोक्तिरलंकारः 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम्' ॥ २२ ॥

---

१ क. विशाल° । २ ख. अपि तच्चिरात्. क. चिरात् ।

कुरुतेति ततः सहैव वासं कुलकूटस्थकृतान्तवाहनेन ।
मदधूतविषाणमण्डलाग्रे महिषौघे निचखान मण्डलाग्रम् ॥ २३ ॥
तन्न चित्रमवनीपतेस्ततश्चन्द्रहासपतनं चकार यत् ।
पोषितेषु वनमध्यचर्यया पुण्डरीकनिवहेषु मीलनम् ॥ २४ ॥
गहनमस्तशरारुमृगव्रजं कृतवताऽप्यमुना जविवाजिना ।
ममृगिरे हरयो मदशालिनो मनुजपेन गिरीशदरीशयाः ॥ २५ ॥
विस्फारघोषमवकर्ण्य विनिर्गतानां
हुंकुर्वतां तरुणकेसरिणां गुहाभ्यः ।
या केवलं प्रथममानन एव भल्लै-
स्तां पञ्चतां स विदधे सकलेऽपि देहे ॥ २६ ॥

---

**कुरुतेति** । ततः स्वस्य कुलस्य कूटस्थम् आदिप्रवर्तकं तत् कृतान्तस्य यमस्य वाहनं महिषः तेन वासं स्थितिं कुरुत इतीव मदेन धूतं कम्पितं विषाणमण्डलाग्रं येन तस्मिन्महिषौघे मण्डलाग्रं करवालं निचखान रोपयामास । मृतप्राणिनो यमलोकं गच्छन्तीति पुराणादिवचनैरियमुत्प्रेक्षा, यथा सुराजा कुलवृद्धं मुञ्चतो बालान् संताड्योपदिशति वृद्धसमीपं वासं कुरुतेति तद्वत् ॥ २३ ॥

**तदिति** । ततो महिषवधानन्तरम् अवनीपतेः राज्ञः चन्द्रहासस्य खड्गस्य पतनं, वनमध्ये अरण्यमध्ये चर्यया संचारेण पोषितेषु पुष्टिं नीतेषु पुण्डरीकानां व्याघ्राणां निवहेषु मीलनं मरणं चकारेति यत् तत् चित्रं न यतो महाशूरस्य खड्गपतनेन व्याघ्रमरणं भवेदेव । तर्हि किं चित्रं कविसम्प्रदाये राज्ञश्चन्द्र इव यो हासः तस्य पतनम्, उदकमध्यचर्यया पोषितेषु पुण्डरीकाणां सितकमलानां निवहेषु मीलनं संकोचं चकारेति यत् तच्चित्रम् । हासस्य चन्द्रकार्यकारित्वेनाश्चर्यं दृष्टमिति भावः । अथवा इदमपि चित्रं नेत्यर्थः । अत्रोभयार्थयोर्वर्ण्यगतत्वात् प्रकृते श्लेषालंकारः ॥ २४ ॥

**गहनमिति** । गहनं वनम् अस्तो हतः शरारूणां व्याघ्रवृकादिघातुकानां मृगाणां पशूनां व्रजो यस्मिन् तत् कृतवताऽपि जवितुरगेण अमुना मनुजपेन राज्ञा गर्वशालिनो गिरीशस्य दरीषु गुहासु शेरते तथाभूताः हरयः सिंहाः ममृगिरे अन्विष्टाः । सर्वे घातुका हताः परंतु सिंहा अवशिष्टा इति मनसि निधाय तेषामन्वेषणं चक्रे इति भावः ॥ २५ ॥

**विस्फारेति** । स राजा विस्फारघोषं धनुषः शब्दं श्रुत्वा गुहाभ्यो विनिर्गतानां रोषेण हुंकुर्वतां तरुणसिंहानाम् आननेषु या पञ्चता केवलमासीत् तां पञ्चतां बाणैः कृत्वा सकलेऽपि देहे विदधे चकार । पञ्चं विस्तृतम् आस्यं यस्य स पञ्चास्यः सिंहः, इति विग्रहे आस्ये पञ्चता नाम विस्तारः, सकलेऽपि देहे तां पञ्चतां नाम पञ्चत्वं—मरणमित्यर्थः । अत्र एकनालावलम्बि फलद्वयवत् एकपञ्चताशब्दवाच्यार्थद्वयस्याभेदाध्यवसायमाश्रित्येयमुक्तिः पर्यायालंकारभेदविकासावगाहिनी, एकावयवस्थितवस्तुना सर्वावयवव्यापनात् ॥ २६ ॥

---

१ क. निजघान । २ क. विष्फार° ।

एवमश्रान्तमृगयापरिश्रान्तमपरिमितस्वेदशीकरनिकरकोरकितफाल-मूलमातेनिरे तमाश्यानं तुहिनगिरिदेश्या नन्दनीयमन्दिमानो मानससरो-रविन्दमकरन्दबिन्दुसंदोहसौरभीपारदृश्वानो मातरिश्वानः ॥ ५ ॥

अनन्तरमसौ परंतपः समन्ततः शकुन्तरवनिरन्तरदिगन्तरादखिल-मृगकुलशरण्यादरण्यादुत्प्लवमानस्य कस्यचिदनुप्लवनमन्दितजविच-मूरोश्चमूरोः सरणिमनुसरमाणस्तदीयतनूरुहचित्रबिन्दुरुचिनिकरैरिव गगनमुत्पतद्भिः खुररजोभिरनुमीयमानतुरगगतिर्दूरमतिपपात ॥ ६ ॥

तत्र तावत् क्वचन लतागुल्मपरिसरे स नरनाथः परिकथिततरुणि-मप्रथिमकलेवरमशिथिलरतिसुखसनाथं हरिणमिथुनं नयनपथस्याति-थीचकार ॥ ७ ॥

तिग्मेन बाणेन जघान तस्मिन्युग्मे नराणामधिपः पुमांसम्।
वातायुराकारमसौ महर्षेर्जातायुरन्तः सहसाऽऽललम्बे ॥ २७ ॥

---

एवमिति। मातरिश्वानो वायवः एवम् अश्रान्तया निरन्तरया मृगयया परिश्रान्तम् अपरिमितैः स्वेदबिन्दुसमूहैः कोरकितं संजातकोरकं फालमूलं भालोर्ध्वभागो यस्य तं राजानम् आश्यानं शीतलत्वेन गतश्रमम् आतेनिरे चक्रुः। कीदृशा वायवः, तुहिनगिरिभवाः, श्लाघनीयमन्दिमानः, मानससरोवरसंबन्ध्यरविन्दानां मकरन्दबिन्दुसमूहस्य सौरभ्याः सौगन्ध्यस्य पारदृश्वानः पारं दृष्टवन्तः। एतेन विशेषणत्रयेण क्रमेण शीतत्वमन्दत्वसुग-न्धित्ववैशिष्ट्यमुच्यते ॥ ५ ॥

अनन्तरमिति। अनन्तरं किंचिच्छ्रमापगमानन्तरं परान् शत्रून् तापयति परंतपः असौ पाण्डुः कस्यचिच्चमूरोः मृगविशेषस्य सरणिं गमनमार्गम् अनुसरमाणः सन् दूरम् अति पपात जगाम। कीदृशस्य चमूरोः, समन्ततः शकुन्तानां पक्षिणां रवैः निरन्तरं भरितं दिशामन्तरं यस्य तस्मात् अखिलमृगकुलानां शरण्यात् रक्षणे साधुनः अरण्यात् उत्प्लव-मानस्य उड्डीयमानस्य, तथा अनुप्लवनेन पश्चाद्धावनेन मन्दिताः मन्दाः कृताः जविनश्च-मूनां ऊरवो येन तस्य। कीदृशो राजा, तदीयानां चमूरुसंबन्धिनां तनूरुहचित्रबिन्दूनां रुचिनिकरैः कान्तिसमूहैरिवेत्युत्प्रेक्षा। गगनमुत्पतद्भिः खुररजोभिः अनुमीयमाना तुर-गगतिर्यस्य सः ॥ ६ ॥

तत्रेति। तत्र दूरदेशस्थले स नरनाथः क्वचन कुत्रचित् वनलतागुल्मस्य परिसरे मध्यभागे हरिणमिथुनं नयनमार्गस्य अतिथीचकार ददर्शेत्यर्थः। कीदृशं मृगमिथुनम्, परिकथितः प्रकटीकृतः तरुणिमप्रथिमा तारुण्यातिशयो येन तादृशं कलेवरं यस्य तत्। अशिथिलेन निबिडेन रतिसुखेन सनाथं युक्तम् ॥ ७ ॥

तिग्मेनेति। नराणामधिपः तिग्मेन तीक्ष्णेन बाणेन तस्मिन् मृगयुग्मे पुमांसं

---

१ ख. सौरभ्य°। २ क. तदनन्तरम्। ३ क. मन्दीभूतजव°। ४ क. रुचीति नास्ति। ५ ख. रुचिरैर्गगनं समुत्पतद्भिः। ६ क. सुदूरमनु°। ७ क. कस्मिंश्चित्। ८. क. प्रथित°।

ततः कृपामन्दमनाः किन्दमनामधेयः संदानिततनुःस्यन्दमानरुधिरेण महारुषा कल्परविकल्पमहारुषा तस्मिन्महीभृति संभोगसंभेदकमम्भोजदृशां दम्भोलिमिव सहस्राक्षः शापमुदस्राक्षीत् ॥ ८ ॥

तदनु तापसशापेन विरचितमनस्तापेन तेन धरणीपतिना चतुरङ्गं बलमिव सप्ताङ्गं राज्यमपि व्यसृजत ॥ ९ ॥

अष्टाङ्गयोगानवतोऽस्य राज्ञो
मिष्टान्नमासीन्मृदु कन्दमूलम् ।
गर्भो वनस्याजनि केलिसौधो
दर्भोऽपि सिंहासनतां जगाहे ॥ २८ ॥

अहो नरपतितापसयोः समानरूपफलमिदमाचरितम् ॥ १० ॥

तथाहि–वाणशापप्रयोगाभ्यां बाधितौ तावुभावपि ।
तपस्वितां यतः सद्यस्तादृशीमुपजग्मतुः ॥ २९ ॥

---

जघान । जातः आयुषः अन्तो यस्य सोऽसौ वातायुर्मृगः सहसा तस्मिन्नेव क्षणे महर्षेः आकारम् आललम्बे दध्रे । अत्र प्रतिचरणमक्षरद्वयावर्तनात्सभङ्गयमकालंकारः ॥ २७ ॥

**तत इति** । ततो वाणघातानन्तरं कृपायां मन्दं मनो यस्य सः निष्कृपः स्यन्दमानं गलत् रुधिरं यस्मात्तेन महता अरुषा व्रणेन संदानिता बद्धा युक्तेत्यर्थः, तनुर्यस्य सः किन्दमनामधेयो महर्षिः कल्परविकल्पा कल्पान्तरविसदृशी यां महारुट् महाक्रोधः तया तस्मिन् महीभृति राज्ञि अम्भोजदृशां कमलनयनानां स्त्रीणां संभोगस्य संभेदकं शापं महीभृति पर्वते सहस्राक्षः दम्भोलिं वज्रमिव उदस्राक्षीत् उत्ससर्ज ॥ ८ ॥

**तदन्विति** । तदनन्तरं तापसशापेन विरचितः मनस्तापो यस्य तेन धरणीपतिना चतुरङ्गं हस्त्यश्वरथपदात्यवयवं सैन्यमिव स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलरूपसप्तावयवं राज्यमपि व्यसृजत त्यक्तम् । वैराग्यावलम्बेनोभयं त्यक्त्वा वनवासं चकारेति भावः ॥९॥

सप्ताङ्गराज्यपालनसमये घृतशर्करायुक्तमिष्टान्नादीनि भोग्यवस्तूनि यथाऽऽसन् तथाऽधुनाऽपि अष्टाङ्गयोगपालनसमये मिष्टान्नादीन्याह–**अष्टेति** । अष्टाङ्गयोगान् अवतः पालयतोऽस्य राज्ञः मृदु कन्दमूलमिति समाहारः, मिष्टान्नं स्वाद्वन्नमासीत् । वनस्य गर्भो मध्यः क्रीडासौधो जातः । दर्भोऽपि सिंहासनत्वं जगाहे प्रापेत्यर्थः ॥ २८ ॥

**अहो इति** । अहो आश्चर्यम् । नरपतितापसयोः इदमाचरितम् आचरणं समानरूपं तुल्याकारं फलं यस्य तथाविधम् ॥ १० ॥

तदेवोपपादयति–**तथाहीति** । यतः वाणप्रयोगशापप्रयोगाभ्यां बाधितौ पीडितौ उभावपि सद्यः तत्क्षणे मृगदेहत्यागेनाष्टाङ्गयोगधारणेन च तादृशीं तपस्वितां तापसताम् उपजग्मतुः प्रापतुः । उभावपि तापसौ जाताविति भावः ॥ २९ ॥

---

१ क. दारित° । २. क. ख. भूपेन । ३ क. ख. चतुरङ्गबलं° । ४ क. सप्ताङ्गराज्य° । ५ क. ख. व्यसृज्यत ।

क्रमादतिपतिते चावरोधवधूजनानुरोधगुणदात्रे गणरात्रे ॥ ११ ॥

अपाकरिष्यन्ननपत्यभावमपत्यभावं भुवनं करिष्यन् ।
उवाच देवीमुचितं स पाण्डुरुपह्वरे जातुचिदूहदक्षः ॥ ३० ॥

परिपालयतोऽपि मे महीं परिपूर्तिर्न तनूजदुर्गतेः ।
प्रजया हि मनुष्य इत्यसौ प्रथते हि श्रुतिवर्णपद्धतिः ॥ ३१ ॥

गात्रं न केवलमशेषबुधोपलाल्यं
गोत्रं च तत्रभवतः कुमुदैकबन्धोः ।
आपाण्डु वर्तत इति स्वयमेव मन्ये
यस्मात्प्रजां न लभसे यदुवीरकन्ये ॥ ३२ ॥

नह्यतीव विधिरप्यसुतानां नह्यते फलमिति श्रुतिसिद्धेः ।
जीवतो मम यथाऽद्यवसाय्यो मीलतोऽपि न तथा परलोकः ॥ ३३ ॥

---

**क्रमादिति** । दिनपक्षमासादिक्रमात् अवरोधवधूजनस्य अन्तःपुरस्त्रीजनस्य अनुरोधगुणः अनुकूलतागुणः तस्य दात्रे लवित्रे गणरात्रे अतिपतिते सति 'गणरात्रं निशा बह्वयः' इत्यमरः । स्त्रीसंभोगप्रतिबन्धिकासु बहुषु रात्रिषु गतास्वित्यर्थः ॥ ११ ॥

ऊहदक्षः विचारनिपुणः सः पाण्डुः जातुचित्कदाचित् उपह्वरे रहसि देवीं पट्टराज्ञीं कुन्तीम् उचितं यथा तथा उवाच । किं करिष्यन्नुवाचेत्यपेक्षायामाह—अपेति । अनपत्यभावम् अपुत्रत्वम् अपाकरिष्यन् दूरीकुर्वन्, तथा भुवनं भूलोकं न विद्यते पत्युः पालयितुः राज्ञः अभावो यस्मिन् तथाविधं करिष्यन् । स्वदोषपरिहारपूर्वकं परहितं करिष्यन्निति भावः ॥ ३० ॥

**परिपालयत इति** । तदेव वचनं सप्तभिः पद्यैराह । तनूजस्य पुत्रस्य दुर्गतेः दारिद्र्याद्धेतोः महीं पालयतोऽपि मे मम परिपूर्तिः पूर्णता नास्ति । हि यस्मात्कारणात् प्रजया मनुष्यः पूर्णो भवतीत्यर्थका "प्रजया हि मनुष्यः" इत्याकारिका असौ श्रुतेः वर्णपद्धतिः अक्षरपरंपरा, अक्षरशैली वा प्रथते प्रसिद्धा वर्तते । अतः अपुत्रत्वात् मयि पूर्णं मनुष्यत्वं नास्तीति भावः । अत्र श्रुतिप्रमाणोपन्यासेनापूर्णतायाः समर्थनाच्छब्दप्रमाणालंकारोत्थापितकाव्यलिङ्गमलंकारः ॥ ३१ ॥

**गात्रमिति** । तत्रभवतः पूज्यस्य कुमुदानाम् एकबन्धोः मुख्यस्य मित्रस्य चन्द्रस्य अमृतमयत्वात् अशेषैः बुधैः देवैः उपलाल्यं लोभनीयं गात्रं शरीरं केवलम् एकम् आपाण्डु आसमन्तात्पाण्डु शुभ्रं न वर्तते अपि तु अशेषैः बुधैः पण्डितैः उपलाल्यं गोत्रं च कुलमपि पाण्डुं मर्यादीकृत्य आपाण्डु वर्तत इत्यहम् अद्य स्फुटं व्यक्तं मन्ये तर्कयामि । हे यदुवीरकन्ये कुन्ति ! यस्मात्कारणात्प्रजां पुत्रसन्ततिं न लभसे न प्राप्नोषि । मत्सकाशात्त्वयि पुत्रसंतत्यभावात् पाण्डुपर्यन्तं सोमवंश इत्यहं तर्कयामीति भावः । आपाण्डुशब्दार्थयोरेकवाचकत्वेनाभेदाध्यवसायात् । अप्यर्थश्चकारः । इयमुक्तिभङ्गी च ॥ ३२ ॥

**नहीति** । विधिरपि श्रुतिस्मृतिविहितकर्माऽपि असुतानामपुत्राणाम् अतीव फलं नहि

---

१ क. ख. स्फुटमद्य ।

अहं किमम्बा किमभीष्टतापदे
तवेति मातुर्धुरि तातपृच्छया ।
प्रलोभतुल्यं प्रवदन्तमर्भकं
मुदा हसन् जिघ्रति मूर्ध्नि पुण्यभाक् ॥ ३४ ॥

निन्द्यते पितृभिस्तप्तैर्निरपत्यधनः पुमान् ।
अध्वनीनैर्गतिश्रान्तैरवकेशीव पादपः ॥ ३५ ॥

कदाऽपि तातशब्दस्य कल्पभूमिरुहामिव ।
नार्थीभवितुमर्हामि नरवाहनसंनिभः ॥ ३६ ॥

किं भोगवैभवयशःक्षितिजीविताद्यै-
रम्भोरुहाक्षि नियमैरनघैस्त्वमेव ।
शापातिरेकदवपावकशायिनो मे
तापापनोदविधये तनयं प्रसूष्व ॥ ३७ ॥

---

नह्यते न ददातीत्यर्थः । इत्यर्थस्य "नापुत्रस्य लोकोऽस्ति" इतिश्रुत्यादिसिद्धेः परलोकः स्वर्गलोकः मम जीवतः सतः यथा आहवेन यज्ञेन साध्यः तथा मीलतः प्राणत्यागं कुर्वतः सतः साध्यो न भवति । मरणानन्तरम् अयथाभावादपुत्रत्वाच्च । अथ च परलोकः जीवतः सतः यथा आहवेन युद्धेन साध्यः तथा मीलतः सतः साध्यो न भवति । मरणानन्तरं युद्धाभावादिति भावः । 'आहवः समरे यज्ञे' इति हेमचन्द्रः ॥ ३३ ॥

**अहमिति** । पुत्रिणां भाग्योत्कर्षमाह—हे शिशो ! तव अभीष्टतापदे इष्टतास्थाने किमहं किंवा अम्बा, इति मातुर्धुरि अग्रभागे तातस्य पृच्छया प्रश्नेन प्रलोभतुल्यं प्रकृष्टलोभानुरूपं यथा तथा प्रवदन्तमर्भकं पुण्यभाक् पुण्यवान् भाग्यवानित्यर्थः, मनुष्यः मुदा हसन् सन् मूर्ध्नि जिघ्रति । यद्वा अर्भकं यः मुदा हसन् मूर्ध्नि जिघ्रति स भाग्यवानिति यत्तच्छब्दाध्याहारेण संबन्धः ॥ ३४ ॥

स्वनिन्दां प्रकटीकुर्वन् सामान्येनाह—**निन्द्यत इति** । इतः परं भाविश्राद्धीयकव्याद्यभावात् तप्तैः संतप्तैः पितृभिः निरपत्यधनः अपत्यरूपधनरहितः पुमान् निन्द्यते । कैः क इव, गतिश्रान्तैः गत्या मार्गगमनेन अध्वनीनैः अध्वगैः अवकेशी वन्ध्यः पादप इव ॥ ३५ ॥

स्वस्य पुत्रवत्तानर्हतामाह—**कदेति** । नरवाहनसन्निभः कुबेरतुल्योऽहं कदाऽपि कल्पवृक्षाणामिव तातशब्दस्य अर्थी भवितुं नार्हामि योग्यो न भवामि । अयं भावः, संपदा कुबेरतुल्यत्वात् कल्पवृक्षाणाम् अर्थीभवितुं याचकीभवितुं यथा नार्हामि तथा अनपत्यत्वात् तातशब्दस्य अर्थो वाच्यो तद्वान् भवितुं नार्हामीति । अर्थद्वयेऽपि अर्थार्थिशब्दाभ्यां च्विप्रत्यये रूपं तुल्यम् ॥ ३६ ॥

इदानीं मुनिशापात् अपुत्रत्वशोकापनोदने मम सामर्थ्याभावात् त्वमेव यत्नं कुरुष्वे-

---

१ क. प्रसुष्व ।

इत्यसंकोचतः शोचतः पत्युरग्रभुवि समग्रमन्दाक्षरमणीयं मन्दाक्षरमणीयन्त्रितमिदं वचनं पृथाऽपि कथयामास ॥ १२ ॥

राजन् पुरा खलु पिता मम पितामहसमानस्य निशान्तमधिवसतः कृशां तनुलतां तपसा वहतोऽपि दिशां ततिषु निशान्तरविकान्तभृशान्तरङ्गरुचां तरङ्गपरंपरां तरलयितुरशान्तमनसो मुनेरुपान्तपरिचरणाय मामनुशासितशैशवराज्यामपि नियोज्यामकरोत् ॥ १३ ॥

ततो निदेशान्समयेषु लब्धुं मया महायत्नजुषा महर्षेः।
आरामवल्लीरपहाय तस्य भ्रूवल्लिमेव प्रतिपाल्य तस्थे ॥ ३८ ॥
यथा यथा सेवनयत्नजन्मना निदाघतोयेन निषिक्तमङ्गकम्।
तथा तथाऽवर्धत तापसान्तिके महाविकासा मम भक्तिवल्लरी॥३९॥

---

स्याह—किमिति। भोगो विषयसुखानुभवः, वैभवं प्रभुता, यशः कीर्तिः, क्षितिः पृथिवी, जीवितं परमायुः इत्यादीनि मम सन्ति तैः किं प्रयोजनं न किमपीत्यर्थः। हे अम्भोरुहाक्षि! त्वमेव अनघैः निर्दोषैः नियमैः व्रतोपवासदेवताराधनादिभिः शापातिरेकः शापतीव्रतैव दवपावकः तत्र शेतेऽसौ तस्य मे तापापनोदविधये तापनाशकर्म कर्तुं तनयं प्रसूष्व ॥ ३७ ॥

इति असंकोचेन शोचतः पत्युः अग्रभागे पृथाऽपि कुन्त्यपि समग्रमन्दाक्षेण संपूर्णलज्जया रमणीयं, मन्दानि अल्पस्वरेणोच्चारितानि अक्षराणि मणय इव रत्नानीव तैः यन्त्रितं गुम्फितम् इदं वक्ष्यमाणं वचनं कथयामास ॥ १२ ॥

हे राजन्! पुरा खलु मम पिता मुनेः दुर्वाससः उपान्तस्य समीपभागस्य परिचरणाय सेवनाय अनुशासितं शैशवराज्यं बालराज्यं यया तामपि बालामपीत्यर्थः, मां नियोज्यां भृत्यामकरोत्। कीदृशस्य मुनेः, वरदाने पितामहेन ब्रह्मणा समस्य। तथा निशान्तम् अस्मद्गृहम् अधिवसतः, गृहे तिष्ठत इत्यर्थः। तथा तपसा कृशां तनुलतां शरीरलतां वहतोऽपि दिशां ततिषु समूहेषु दशदिक्ष्वित्यर्थः। निशान्ते प्रातःकाले रविकान्तस्य भृशान्तरङ्गाणाम् अत्यन्तमित्राणां तत्सदृशानामित्यर्थः। रुचां कान्तीनां तरङ्गपरंपरां लहरीपङ्क्तिं तरलयितुः चञ्चलां कर्तुः। तथा अशान्तं मनो यस्य। किंचिदप्यपराधमसहिष्णोरिति भावः ॥१३॥

ततो महायत्नेन सेवनमाह—तत इति। यत्नकर्त्र्या मया समयेषु पदार्थापेक्षाकालेषु निदेशान् आज्ञाः लब्धुम् आरामवल्लीः अपहाय बाल्यात् क्रीडार्थं वल्लीनां जलसेकपुष्पावचयादि त्यक्त्वेत्यर्थः। तस्य ऋषेः भ्रूवल्लीमेव प्रतिपाल्य भ्रूवल्लिचालनसंज्ञया फलपुष्पाद्यानयनादि सूचयेदिति तत्र दृष्टिं न्यस्येत्यर्थः। तस्थे स्थितम् ॥ ३८ ॥

यथेति। सेवने यो यत्नस्तस्माज्जन्म यस्य तेन निदाघतोयेन घर्मोदकेन अल्पम् अङ्गम् अङ्गकं यथा यथा निषिक्तं सिक्तं तथा तथा तापसान्तिके ऋषिसमीपे, इङ्गुदीवृक्षनिकटे

---

१ क. ख. कान्ति। २ क. अन्तरङ्गमैत्र्याम्। ३ क. नियोगम्।

तपस्विनस्तस्य तपःकृशस्य सरूपतामाप्तुमिव श्रयद्भिः ।
दिने दिने मे दयनीयरूपैरङ्गैरशेषैरतिकार्श्यमापे ॥ ४० ॥

आपादनेन समिधामभिषेकवारा-
मभ्यर्चनासुमनसामपि तापसेन्द्रः ।
मय्येव शिष्यजनताममतां वितन्व-
न्नन्ते वसन्तमपि कोपमपाचकार ॥ ४१ ॥

एकां समां तत्र वसन् कदाचिदेकां स मां पार्श्वगतामवेक्ष्य ।
समाधिवृत्त्या सह मौनमुद्रां समापयामास तपोधनेन्द्रः ॥ ४२ ॥

वत्से भवत्सेवासंप्रदायेन संप्रति भृशं प्रसीदामीति व्याहृत्य स मुनिरनुकम्पितचेता मह्यमत्यर्थमभीप्सितार्थसमर्थापनपरतन्त्रं कमपि मन्त्रमुपादिक्षत् ॥ १४ ॥

अपि क्रुधामावसतेरमुष्मान्मत्वा गुरुत्वं वरमन्त्रलाभे ।
अपुष्पवत्यामपि मे दशायामामोदभारोऽधिकमाविरासीत् ॥ ४३ ॥

---

च 'इङ्गुदी तापसतरुः' इत्यमरः। महाविकासा मम भक्तिवल्लरी अवर्धत । वृक्षसमीपे स्थिता का च वल्ली जलेन सिक्ता सती यथा वर्धते तद्वत् ॥ ३९ ॥

**तपस्विन इति** । तपःकृशस्य तस्य तपस्विनः मुनेः सरूपतां प्राप्तुमिव श्रयद्भिः आश्रयद्भिः मुनिमिति शेषः। दयनीयानि दयाविषयाणि रूपाणि आकृतयो येषां तैः, मे मम अशेषैः अङ्गैः अवयवैः कार्श्यम् आपे प्राप्तम् । तत्सेवया ममातीव कार्श्य-मासीदिति भावः ॥ ४० ॥

**आपादनेनेति** । तापसेन्द्रः समिधाम्, अभिषेकार्थं वारां जलानाम्, अभ्यर्चनार्थं पूजार्थं सुमनसां पुष्पाणामपि आपादनेन संपादनेन मय्येव शिष्यजनतायां शिष्यसमूहे या ममता तां वितन्वन्कुर्वन् सन् अन्ते वसन्तं निकटे स्थितमपि, शिष्यमपीति ध्वनिः, कोपम् अपाचकार दूरीचकार, तत्याजेत्यर्थः ॥ ४१ ॥

**एकामिति** । सः तपोधनेन्द्रः तत्र तातगृहे एकां समां संवत्सरं वसन् सन् कदाचि-त्पार्श्वगताम् एकां माम् अवेक्ष्य समाधिवृत्त्या सह मौनमुद्रां समापयामास ।समाधिवृत्तिं मौनमुद्रां च विसर्जयामासेत्यर्थः। समाधिविसर्जनान्ते उवाचेति भावः ॥ ४२ ॥

**वत्सेति** । हे वत्से बाले! 'भवत्याः सेवासंप्रदायेन सेवारीत्या संप्रति भृशं प्रसी-दामि' इति व्याहृत्य उक्त्वा अनुकम्पितं कृपायुक्तं चेतो यस्य स मुनिः मह्यम् अत्यर्थम् अभीप्सितार्थस्य इष्टार्थस्य समर्थापने दाने परतन्त्रं परवशम् । अत्यर्थमित्यस्य परतन्त्रमित्यनेन संबन्धः, इष्टार्थस्यावश्यदातारमित्यर्थः। कमपि मन्त्रम् उपादिक्षत् उपदिष्टवान् ॥१४॥

**अपीति** । क्रुधां क्रोधानाम् आवसतेः स्थितिस्थानस्य अमुष्मात् दुर्वाससः वररूपम-न्त्रस्य, श्रेष्ठमन्त्रस्य वा लाभे सति गुरुत्वं मुनौ उपदेष्टृत्वं मयि महतः शिष्यत्वेन महत्त्वं च



१ क. ख. इवाश्रयद्भिः । २ क. ज तामपिताम् । ३ ख. आदिशत् ।

अधुना तस्य प्रभावेन शतमखमुखासु निखिलासु लेखलेखासु ये ये परार्ध्यास्ते ते रहसि ध्यानमात्रसाध्यसांनिध्याः स्वस्यानुरूपगुणविभवानात्मभवान्मयि विकसदनुकम्पाः संपादयिष्यन्ति ॥ १५ ॥

इति नृपाय कृपायतचेतसो यदुसुता मुनिनेतुरनुग्रहम् ।
अदशनव्रणपीडमहस्पतेरभिदधे रतिसंगमनं विना ॥ ४४ ॥

इति वचनमयीं सुधां किरन्तीं यदुनृपतेस्तनयां प्रशंसमानः ।
पतिरनुमनुते स्म पौरवाणां प्रकृतमहोत्सवपारदर्शनाय ॥ ४५ ॥

धर्मात्प्राप युधिष्ठिरं पवनतो भीमं च भीमं द्विषां
जिष्णोर्जिष्णुमतीवधृष्णुमनघा कुन्ती मुनेर्विद्यया ।
अन्या साऽपि तयैव तत्र नकुलं रूपास्पदं गीष्पतेः
सच्छात्रं सहदेवमप्यजनयन्नासत्ययोरन्तिकात् ॥ ४६ ॥

---

मत्वा अपुष्पवत्यां पुष्पं—स्त्रीरजः तदभाववत्यामपि मे दशायां बाल्यावस्थायामित्यर्थः । आमोदभारः हर्षातिशयः, अथ च कुसुमाभावदशायामपि सुगन्धातिशयः अधिकं यथा तथा आविरासीत् ॥ ४३ ॥

**अधुनेति** । अधुना तस्य मन्त्रस्य प्रभावेन शतमखमुखासु इन्द्रादिषु निखिलासु लेखलेखासु देवपङ्क्तिषु ये ये परार्ध्याः श्रेष्ठाः देवाः ते ते रहसि ध्यानमात्रेण साध्यं सान्निध्यं येषां ते, विकसन्ती अनुकम्पा दया येषां, तथाभूताः सन्तः मयि स्वस्यस्वस्यानुरूपाः गुणाः, विभवः, ऐश्वर्यं च येषां तान् आत्मसंभवान् औरसपुत्रान् संपादयिष्यन्ति जनयिष्यन्ति ॥ १५ ॥

**इतीति** । यदुसुता कुन्ती कृपया आयतं विकसितं चेतो यस्य तस्य मुनीनां नेतुर्नायकस्य इति उक्तप्रकारमनुग्रहं नृपाय अभिदधे उवाच । परंतु दक्षाध्वरे वीरभद्रेण पूष्णो दन्तानां पातितत्वात्, न विद्यते दशनव्रणानां चुम्बने दन्तक्षतानां पीडा यस्मिन् तत् अहस्पतेः सूर्यस्य रतिसङ्गमनं न अभिदधे । अयं भावः, भर्तुः स्वस्मिन् व्यभिचारिणीत्वशङ्कया 'तदानीं मन्त्रपरीक्षार्थं सूर्याह्वानं कृतं तेन तत्समागमात् कर्णः पुत्रो जातः' इति न कथितमिति ॥ ४४ ॥

**इतीति** । इति वचनमयीं सुधां किरन्तीं वर्षन्तीं यदुनृपतेः तनयां कुन्तीं प्रशंसमानः पौरवाणां पतिः तेषु श्रेष्ठः पाण्डुः प्रकृतो यो महोत्सवः पुत्रोत्पादनोत्सवः तस्य पारदर्शनाय अनुमनुते स्म अनुमोदितवान् ॥ ४५ ॥

**धर्मादिति** । कुन्ती मुनेर्विद्यया देवाह्वानमन्त्रेण धर्मात् 'कटिलम्बितवल्कलः' इत्यादिवक्ष्यमाणस्वरूपात् धर्मसंज्ञकदेवविशेषात् युधिष्ठिरं प्राप । पवनतः वायोः सकाशात् द्विषां भीमं भयोत्पादकं भीमं प्राप । जिष्णोः इन्द्रात् अतीवधृष्णुं प्रगल्भं जिष्णुम् अर्जुनं प्राप ।

---

१ क. लेखारेखासु । २ क. कृतसांनिध्याः । ३ क. स्वानुगुणगुणगणविभवान्, ख. स्वस्वानु' । ४ क. ख. चेतसे । ५ क. ख. [illegible] । ६ एतदग्रे क. ख. तदनन्तरम् ।

तदनु वासवनन्दनसंभृताः
सपटुगीतिरवप्रमदालयः ।
सुमनसस्तु यथोचितमाचरन्
निपतनं भुवि नृत्तविधिं दिवि ॥ ४७ ॥

जन्मोत्सवो महानेषां जलमत्यच्छमावहन् ।
विद्यामनन्यसामान्यां व्रीडां कुम्भभुवोऽनयत् ॥ ४८ ॥

स्वस्य चक्रगतिं सख्युः स्वयमप्याश्रिता इव ।
जवात्प्रदक्षिणज्वाला जज्वलुर्यज्वपावकाः ॥ ४९ ॥

सामोदो भीमसंभूतिसंभूताशौचवत्तया ।
संकुचन्निव संस्पर्शे समीरो मन्दमाववौ ॥ ५० ॥

---

अन्या सा माद्र्यपि तयैव विद्यया तत्र स्थले नासत्ययोः अश्विनीकुमारयोः अन्तिकात् लावण्यास्पदं नकुलं, गीष्पतेः बृहस्पतेः सच्छात्रं सच्छिष्यं सहदेवमपि अजनयत् ॥४६॥

**तदिति ।** तदनु तज्जन्मानन्तरं सुमनसः पुष्पाणि देवाश्च यथोचितम् आत्मनो यथायोग्यं भुवि जन्मभूमौ निपतनम् अन्तरिक्षात्पतनं, दिवि अन्तरिक्षे नृत्यविधिम् आचरन् अकुर्वन् । कथंभूताः सुमनसः, वासवस्य नन्दनात् वनात्संभृताः संपादिताः । अथ च वासवनन्दनेन जयन्तेन संभृता युक्ताः । तथा पटुगीतिरवैः सुन्दरगीतिशब्दैः सहिताः, प्रमदाः प्रकृष्टमदाः अलयो भ्रमराः यासु ताः । अथ च सपटुगीतिरवाः प्रमदालयः स्त्रीपङ्क्तयो येषु ते । देवैः पुष्पवृष्टिः कृता, अन्तरिक्षे देवीसहिता देवाश्च ननृतुरिति भावः ॥ ४७ ॥

**जन्मेति ।** एषां पुत्राणां महान् जन्मोत्सवः अतिस्वच्छं जलम् आवहन् कुर्वन् कुम्भभुवः अगस्त्यस्य अन्यैः सामान्या समा न भवतीत्यनन्यसामान्या ताम् अव्यभिचारिणीं विद्यां जलानां स्वच्छीकरणशक्तिं व्रीडां लज्जाम् अनयत् प्रापयामास । नयतिर्द्विकर्मा । श्रावणे मासि अगस्त्योदये सति जलानि स्वच्छानि भवन्तीति पुराणादावुक्तत्वात् तच्छक्तेर्जलानां स्वच्छताकर्तृत्वम् । तेषां जन्मोत्सवे शुभसूचकत्वात् जलानि स्वच्छानि जातानि तानि दृष्ट्वा मत्तोऽन्य एतज्जन्मोत्सवोऽपि मत्कार्यकारी वर्तते इति मत्वा सा विद्या लज्जते स्मेत्यर्थः ॥ ४८ ॥

**स्वेति ।** यज्वनाम् अग्निहोत्रिणां पावकाः स्वस्य सख्युः मित्रस्य वात्यारूपवायोः चक्रगतिं चक्राकारक्रमणं स्वयमप्याश्रिता इवेत्युत्प्रेक्षा । जवात् प्रदक्षिणाः ज्वालाः येषां तथाभूताः सन्तः जज्वलुः । तत्समयेऽग्नयः प्रदक्षिणार्चिष आसन्निति भावः ॥ ४९ ॥

**सामोद इति ।** सामोदः सहर्षः ससुगन्धश्च समीरः वायुः भीमस्य स्वपुत्रस्य संभूत्या जन्मना संभूता जाता या अशौचवत्ता जननाशौचवत्ता तया ऋष्यादीनां संस्पर्शे संकुचन्निव मनसि संकोचं कुर्वन्निव मन्दं शनैः स्वल्पं च यथा तथा ववौ । तदानीं मन्दसुगन्धिवायव आसन् इति भावः ॥ ५० ॥

कन्यकात्वेऽपि मय्येषा कामुकीति स्मरन्निव ।
प्रसूतिंदिवसं कुन्त्याः प्रादिद्युतदहस्करः ॥ ५१ ॥
पुष्पात्प्रागेव सुषुवे पुत्रमेषेति वीरुधः ।
फलेग्रहय एवासन् प्रसूनात्प्राक् पृथावने ॥ ५२ ॥
तदनु गुणगणैरभङ्गुरशुभंयुताविकासमये समये ॥ १६ ॥
प्रजाधिपोऽसौ प्रथमं युधिष्ठिरे सुतेषु तेजस्विषु तेषु पञ्चसु ।
प्रभाकरे पञ्चतपा इवोन्नते प्रपातयामास विलोचनद्वयम् ॥ ५३ ॥

तपस्विनीनां स्तनपायिनस्ते
दरक्कणत्कीचकदत्तकर्णाः ।
वने दिनान्ते वसुधेन्द्रपुत्रा
वल्केषु निद्रासुखमन्वभूवन् ॥ ५४ ॥

---

**कन्यकेति** । अहस्करः सूर्यः एषा कुन्ती कन्यकात्वेऽपि मयि कामुकी रत्यर्थमिच्छावती आसीत्, इति स्मरन्निव कुन्त्याः प्रसूतिदिवसं प्रादिद्युतत् अतिप्रकाशितवान् । तदानीं सूर्योऽपि स्वच्छप्रकाशयुक्तोऽभवदिति भावः ॥ ५१ ॥

**पुष्पादिति** । पृथायाः वने निवासारण्ये वीरुधः लताः एषा कुन्ती पुष्पात् स्त्रीरजसः, कुसुमाच्चेति ध्वनिः । प्रागेव पुत्रं सुषुवे इति हेतोरिवेति लुप्तोत्प्रेक्षा । प्रसूनात् पुष्पात् प्रागेव फलेग्रहयः अवन्ध्याः—सफला एवासन् ' स्यादवन्ध्यः फलेग्रहिः ' इत्यमरः । ' इवादिकपदाभावे गूढोत्प्रेक्षां प्रचक्षते ' इति । वीरुध इत्युपलक्षणं तेन तदा द्रुमलताः सफला आसन्निति भावः ॥ ५२ ॥

**तदिति** । तदनु तदनन्तरं गुणगणैः शुभतिथिवारनक्षत्रादिभिः अभङ्गुरा अनश्वरा या शुभंयुता शुभान्वितता ' शुभंयुस्तु शुभान्वितः ' इत्यमरः । तस्याः विकासमये वृद्धिप्राचुर्यविशिष्टे समये ॥ १६ ॥

**प्रजेति** । असौ प्रजाधिपो राजा तेजस्विषु तेषु पञ्चसु मध्ये "यतश्च निर्धारणम्" इत्यनेन निर्धारणे षष्ठीसप्तम्योर्विधानात्सप्तमी । उन्नते श्रेष्ठे युधिष्ठिरे प्रथमं चक्षुर्द्वयं प्रपातयामास न्यस्तवान् । कः कस्मिन्निव, पञ्चाग्निसाध्यं तपो यस्य स पञ्चतपा मुनिः उन्नते उच्चे प्रभाकरे सूर्ये इव । स मुनिर्यथा चत्वारोऽग्नयः पञ्चमः सूर्यः तेषु मध्ये समीपस्थानग्नीन् त्यक्त्वा अतितेजस्वित्वात् दूरस्थे सूर्ये दृष्टिं न्यस्यति तद्वदिति भावः ॥ ५३ ॥

**तपस्विनीति** । ऋषिपत्नीनां स्तनंदुग्धपायिनः ते वसुधेन्द्रपुत्राः दरम् ईषत् क्वणद्भ्यो वायुना शब्दायमानेभ्यः कीचकेभ्यो वेणुविशेषेभ्यो दत्ताः तच्छब्दश्रवणार्थमर्पिताः कर्णा यैस्तथाभूताः सन्तः दिनान्ते सायंकाले वल्केषु वल्कले निद्रासुखं अन्वभूवन् अनुभूतवन्तः। सार्वभौमराजपुत्राणामिन्द्रादिभ्यो जातानामपीयमवस्थेति भावः ॥ ५४ ॥

---

१ क. विकाससमये समये ।

क्षुत्पीडया स्तनरसे कलहं शिशूनां
कुन्ती तदा शमयितुं कुचकुम्भयुग्मे ।
एकं युधिष्ठिरधनञ्जययोश्च भाग-
मेकं समीरणसुतस्य च संविभेजे ॥ ५५ ॥

निशाचरैः समं बाल्ये नियोद्धुमिव कौतुकी ।
उत्तानशयने मुष्टिमुदग्रां मारुतिर्दधौ ॥ ५६ ॥

ततः क्रमेण गतेषु कतिपयेषु वासरेषु ॥ १७ ॥

पद्भिरात्मपितृयोषिति भूमौ स्पर्शनं परिहरन्त इवैते ।
जानुभिः करसरोजसहायैश्चङ्क्रमं चमदकुर्वत बालाः ॥ ५७ ॥

आदाय भीममतिमांसलमुत्तमाङ्गे-
ऽप्याघ्राय जानुकृतचङ्क्रममाश्रमान्ते ।
बाहालतैव वहनाद्विरराम शश्वत्
कौतूहलं न तु कदाचन तापसीनाम् ॥ ५८ ॥

वृद्धतापसपुरःप्रसारितं वेणुदण्डमवलम्ब्य शैशवे ।
भावयन्निव गदापरिग्रहं भाविनं पवनभूश्चचार सः ॥ ५९ ॥

---

क्षुदिति । कुन्ती तदा पुत्राणां बाल्यावस्थासमये शिशूनां क्षुत्पीडया स्तनरसे कलहं शमयितुं युधिष्ठिरधनञ्जययोः कुचकुम्भयोर्युग्मे युग्ममध्ये एकं स्तनं भागं, समीरणसुतस्य च एकं स्तनं भागं संविभेजे एतादृशं विभागं कृतवती । अत्र स्तनयोः कुम्भोपमानत्वेन तेषां क्षुच्छामकत्वं सूच्यते ॥ ५५ ॥

निशेति । मारुतिः भीमः उत्तानं शयनं यस्मिन् तस्मिन् वयसि निशाचरैः समं नियोद्धुं बाहुयुद्धं कर्तुं कौतुकीव उदग्राम् उच्चां मुष्टिं दधौ । बालस्वभावान्मुष्टिबन्ध इत्युत्प्रेक्षा ॥ ५६ ॥

तत इत्यादि स्पष्टम् ॥ १७ ॥

पद्भिरिति । बालाः एते युधिष्ठिरादयः पाण्डोः महीपतित्वात् आत्मनः पितुः योषिति भार्यायां भूमौ पद्भिः चरणैः स्पर्शनं परिहरन्तः वर्जयन्त इव करकमलयुतैः जानुभिः चङ्क्रमं गमनं चमदकुर्वत सुन्दरं यथा तथा अकुर्वत, यद्वा चमत् सुन्दरं गमनमकुर्वतेति संबन्धः ॥ ५७ ॥

आदायेति । आश्रमसमीपे जानुभ्यां कृतः चङ्क्रमो गमनं येन तम्, अतिशयेन मांसलं पुष्टं भीमम् आदाय उत्तमाङ्गे मस्तकेऽपि आघ्राय तापसीनाम् ऋषिपत्नीनां बाहालतैव बाहुलतैव वहनाद्धेतोः शश्वत् विरराम, कौतूहलं वहनोत्कण्ठा तु कदाचन न विरराम । हस्ताः श्रान्ताः वहनोत्कण्ठा तु कदाऽपि न विरतेति भावः । 'भुजा बाहा च बाहौ स्यात्' इति त्रिकाण्डशेषः ॥ ५८ ॥

वृद्ध इति । स पवनभूः भीमः शैशवे वृद्धतापसेन पुरः अग्रभागे प्रसारितं वेणु-

मुनिसुतैरविशेषजुषो वने मुहुरमी नवशैशवकेलिषु ।
मलिनतामनयन्त कलेवरं मदकलाः कलभा इव धूलिभिः ॥ ६०॥
तत्र तत्र मृदुपांसुषु पाण्डोः पुत्रपादतलविन्यसनेन ।
छत्रकेतुकुलिशैः स्फुटरेखैश्चित्रवत्यभवदाश्रयभूमिः ॥ ६१ ॥
लीलास्मितैः सृक्कियुगाद्गलद्भिर्लालाजलानां ललितैः पृषद्भिः ।
बाला दधुस्ते हृदि मौक्तिकानां माला धुतोल्लेखनरन्ध्रसूत्राः ॥६२॥
अत्यन्तबाल्यादमृतायिताभिरन्योन्यमर्धोक्तिभिराह्वयत्सु ।
स भीमसेनोऽजनि पाण्डसूनुष्वर्धोक्तनामाऽपि च पूर्णनामा ॥६३॥

तदानीमयमम्बालिकासूनुरविलम्बितं संक्रन्दन इव पञ्चनन्दनागमसंपदा तया मुदममितम्पचां बभार ॥ १८ ॥

---

दण्डम् अवलम्ब्य गृहीत्वा भाविनं गदायाः परिग्रहं स्वीकारं भावयन्निव मानयन्निव सूचयन्निवेति वा, चचार इतस्ततो जगाम ॥ ५९ ॥

वने मुनिसुतैः समानवर्तिनः अमी कुमाराः नवासु नूतनासु शैशवकेलिषु, यद्वा नवशैशवसंबन्धिकेलिषु मदेन कलाः सुन्दराः कलभाः करिशावका इव धूलिभिः अङ्गं मलिनताम् अनयन्त ॥ ६० ॥

**तत्रेति** । आश्रमभूमिः मृदुपांसुषु तत्र तत्र स्थलेषु पाण्डोः पुत्रपादतलानां विन्यसनेन हेतुना स्फुटाः आकारसूचकाः रेखा येषां तैः छत्रध्वजकुलिशैः कृत्वा चित्रवती अभवत् । अनेन बालानां साम्राज्यलक्षणं सूच्यते ॥ १६ ॥

**लीलेति** । ते बालाः सृक्किणोः ओष्ठप्रान्तयोर्युगात् गलद्भिः कान्तिरूपेण पतद्भिः 'प्रान्तावोष्ठस्य सृक्किणी' इत्यमरः । लीलास्मितैर्ललितैः लालाजलानां पृषद्भिः बिन्दुभिश्च कृत्वा हृदि उरस्थले धुतानि गतानि उल्लेखनरन्ध्रसूत्राणि याभ्यस्ताः शाणोल्लेखनरन्ध्रसूत्ररहिता इत्यर्थः । मौक्तिकानां मालाः दधुः । रन्ध्रसूत्रादिकारणाभावेऽपि मौक्तिकमालारूपकार्यकथनाद्विभावनालङ्कारः 'विभावना विनापि स्यात्कारणं कार्यजन्म चेत्' इतिलक्षणात् ॥ ६२ ॥

**अत्यन्तेति** । पाण्डुसूनुषु अत्यन्तबाल्यात् अमृतायमानाभिः कर्णयोः अमृतवदाचरन्तीभिः नाम्नाम् अर्धोक्तिभिः अन्योन्यम् आह्वयत्सु आह्वानं कुर्वत्सु सत्सु स भीमसेनो अर्धोक्तनामाऽपि भीम इत्युक्तेऽपीत्यर्थः । पूर्णनामा अभवत्, उत्तरपदलोपेन भीम इत्यस्यापि पूर्णत्वात् ॥ ६३ ॥

**तदानीमिति** । तदानीमयमम्बालिकासूनुः पाण्डुः अविलम्बितं द्रुतं संक्रन्दन इव इन्द्र इव तया पञ्चानां नन्दनानां पुत्राणाम् आगमेन प्राप्त्या या संपत् तया, अन्यत्र पञ्चानां नन्दनागमानां नन्दनवनसंबन्धिकल्पवृक्षाणां संपदा संपत्त्या अमितम्पचां बहुलां

---

१ क. ख. आश्रमभूमिः । २ क. सृक्कियुगात्, ख. सृक्कयुगात् । ३ क. पृषतैर्बृंहद्भिः । ४ क. पुत्रेष्व° । ५ ख. अमितां बभार ।

पुत्रेषु तेषु क्रमपोषितेषु
विलोकयन्त्या विहरत्सु कुन्त्याः ।
आप्याययामासतुरन्तरङ्गं
प्राप्यापि माद्रीतनयौ यमत्वम् ॥ ६४ ॥

तैरादराद्वनलतासु दृढीकृतासु
दोलाविधेः परिचितस्य महर्षिपुत्रैः ।
पर्यायलब्धमसकृत् पवमानसूनो-
रारोहणं द्रुतमभूदवसानभूमिः ॥ ६५ ॥

भीमेन दन्तयुगुले विधृतं यमन्ये
वन्येभमारुरुहुरद्रिनिभं सगर्भ्याः ।
शुण्डां प्रगृह्य विजयः स्वयमेव मानी
तं लीलया रदपथेन समारुरोह ॥ ६६ ॥

तदनु विधिवदुपनीतानां क्रमेण मधुरेण शिरसा वयसा च विधृत-वपुषां विनयगौरवपुषां सकलासु कलासु कौशलमुन्मीलयतां तेषां यशांसि वलभेदनमदावलस्य धाम्नोर्युगलमपि युगपदुल्लङ्घयामासुः १९

मुदं बभार दध्रे। अमितम्पचाशब्दो योगेनापरिमितधान्यपचनकर्त्र्यां स्थाल्यां वर्तते तस्य स्थूलत्वगुणयोगादत्र प्रयोगः ॥ १८ ॥

**पुत्र इति** । क्रमेण पोषितेषु विहरत्सु तेषु पुत्रेषु मध्ये माद्रीसुतौ यमत्वम् अन्तकत्वं प्राप्यापि विलोकयन्त्याः कुन्त्याः अन्तरङ्गम् आप्याययामासतुः तुष्टिं पुष्टिं वा निन्यतुरिति विरोधाभासः, यमत्वं यमलत्वं प्राप्येति विरोधपरिहारः ॥ ६४ ॥

**तैरिति** । ऋषिपुत्रैः सह तैः युधिष्ठिरादिभिः परिचितस्य अभ्यस्तस्य दोलाविधेः दोलाकर्मणः वनलतासु बहूनां रज्जूकरणेन दृढीकृतासु सतीषु पर्यायेण लब्धं पवमान-सूनोः भीमस्यारोहणम् असकृत् वारंवारं च अवसानभूमिः समाप्तिस्थानम् अभूत् । भीम-स्यातिमांसलत्वेन बहुभारत्वात् आरोहणे लतानां त्रोटनात् शीघ्रदोलाकर्मसमाप्तिरभू-दिति भावः ॥ ६५ ॥

**भीम इति** । अन्ये युधिष्ठिरादयः सगर्भ्याः भ्रातरः भीमेन दन्तयुगुले विधृतम् अद्रि-तुल्यं यं वन्येभं वनगजम् आरुरुहुः, मानी शौर्याभिमानवान् विजयः अर्जुनः तं गजं स्वयमेव शुण्डां प्रगृह्य धृत्वा लीलया रदपथेन दन्तमार्गेण समारुरोह । अर्जुनस्य रदपथेनारोहणस्यो-क्तत्वात् अन्यबन्धूनां पश्चान्मार्गेणारोहणं ज्ञायते । अयं बाललीलैकदेश उक्तः ॥ ६६ ॥

**तदिति** । तदनु विधिवत् यथाशास्त्रम् उपनीतानां कृतोपनयनानां क्रमेण मधुरेण मनोहरेण वयसा तारुण्येन विधृतं स्वीकृतं वपुर्येषां, शिरसा नमनादौ शिरोनमनेन विन-यस्य नम्रतायाः गौरवम् आधिक्यं पुष्णन्ति तेषां सकलासु कलासु गीत्यादिषु कौशलं

१ क. डोलाविधेः । २ ख. विधृते ।

नवतरुणिमलक्ष्मीनन्दनीयं शरीरं
कुरुवृषभसुतानां कुर्वती नेत्रपात्रम् ।
मुनिततिरिति मेने मोहनाय त्रिलोक्याः
स्वविशिख इव कामः सोऽपि किं पञ्चधाऽभूत् ॥ ६७ ॥

अथ कदाचिदखिलहरिदन्तरनिरन्तरवलमानमलयपवमानकम्पितचम्पकसंपादितसौरभसंपदनुकम्पितनिखिलनिलिम्पपथाः केसरकुसुमकेसरशिखरभासुरधूलिधूसरदिशो मनसिजविजयसहकारचतुरसहकारपल्लवतल्लजपरिचर्वणगर्वायमाणकलकण्ठयुवकण्ठोक्तपथिकजनसंदोहजीवितसंदेहाः वनदेवतावदनतिलकायमानतिलकावलीकलिकापलितंभावुकनभोविभागा मदनहुतभुगङ्गारसदृशकमलभृङ्गारमधुरसङ्गारचितमदभृङ्गारवविभवतुङ्गा अरहितमिथुनशृङ्गाररसाः समुन्मिषद्धासन्तिकामिषेण सीमन्तिनीरतेरुदन्तं दुरन्तं मनसि विचिन्त्य रहसि वसन्तं नृपं तमिव हसन्तो वसन्तोदयवासरा मन्दमन्दमरण्याङ्गणधरण्यां कमपि विकासमापादयामासुः ॥ २० ॥

---

उन्मीलयतां प्रकटयतां तेषां कुमाराणां यशांसि वलभेदनमदावलस्य इन्द्रगजस्य ऐरावतस्य धाम्नोः स्वर्गस्थानशुभ्रतेजसोर्युग्मं युगलमपि युगपल्लङ्घयामासुः । परमशुद्धानि यशांसि स्वर्गादप्युपरि गतानीति भावः ॥ १९ ॥

नवतरुणिम्नः नूतनतारुण्यस्य लक्ष्म्या शोभया नन्दनीयं दर्शनीयं, श्लाघनीयं वा कुरुवृषभस्य कुरुश्रेष्ठस्य सुतानां शरीरं नेत्रपात्रं नेत्रविषयं कुर्वती मुनिततिः कर्त्री 'सः कामोऽपि स्वविशिख इव स्वबाण इव पञ्चधा अभूत् किम्' इति वाक्यात्मकं कर्म, मेने मनुते स्म । यथा कामबाणः अरविन्दाशोकादिरूपेण पञ्चस्वरूपो जातः तथा कामोऽपि पञ्चस्वरूपोऽभूत् किमिति मेने इत्यर्थः । तारुण्ययोगात् स्वरूपेण मदनतुल्या अभूवन्निति भावः ॥ ६७ ॥

अथ शापवशात् पाण्डोः देहावसानं कथयिष्यन् तद्धेतुत्वेन वसन्तर्तुवैभवमाह—अथेत्यादिगद्यपद्यैः । अथ कदाचित् वसन्तोदयवासराः वसन्ताविर्भावदिवसाः मन्दात् मन्दम् अतिमन्दम् अरण्याङ्गणसंबन्धिधरण्यां कमपि वाचामगोचरम् अतिसुन्दरमिति यावत् । विकासं वैभववृद्धिम् आपादयामासुः संपादितवन्तः । कथंभूताः वासराः, अखिलेषु सर्वेषु हरिदन्तरेषु दिशां मध्यभागेषु निरन्तरं वलमानेन गन्त्रा मलयपवमानेन मलयाचलादागतेन पवमानेन दाक्षिणात्यवायुनेत्यर्थः, कम्पिता ये चम्पकास्तेभ्यः संपादितया सौरभसंपदा अनुकम्पितः युक्त इत्यर्थः, निखिलः निलिम्पपथः देवमार्गः आकाशो येषु ते । तथा केसरकुसुमानां वकुलपुष्पाणां केसरशिखरेषु किञ्जल्काग्रभागेषु भासुरा कान्तिमती या धूलिः परागः तेन धूसराः ईषत्पाण्डवो दिशो येषु ते । तथा मनसिजविजयस्य सहकारे साहाय्यकरणे चतुराणां कुशलानां सहकाराणाम् आम्रवृक्षाणां ये पल्लवतल्लजाः प्रशस्तपल्लवाः तेषां परिचर्वणेन

---

१ क. निखिलेति नास्ति । २ क. भृङ्गारु° । ३ क. मनसीति नास्ति । ४ क. अरण्याङ्कधरण्याम् ।

किं शुकस्य वदने रुचिरत्वं किं शुकस्य हृदयेऽपि वशित्वम् ।
किंशुकस्य कुसुमेषु नदन्ती शंसति स्म मधुपालिरितीव ॥ ६८ ॥
कुरवके रवकेलिभृतः सुधासमधुरं मधुरं मधु षट्पदाः ।
पपुरवापुरवार्यमपि स्मयं नृपवने पवनेरितपादपे ॥ ६९ ॥

अथास्मिन्नमुना तपोवनकुटीरपरिसरे पटीरगिरिबन्धुना गन्धवहस्तनन्धयेन सन्निधिं नीयमानो मद्रजः परिग्रहस्तपस्यन्तमपि मनस्यन्तः कं परितापसंपदा न लिम्पेदित्यर्थान्तरमप्यलिगिरा बोधयन्त्यामिव वासन्त्यामयं क्षणादेव क्षितिपतिरिक्षुधन्वनो लक्ष्यतामध्यरुक्षत् ॥ २१ ॥

---

भक्षणेन गर्वायमाणैः गर्वं कुर्वद्भिः कलकण्ठयुवभिः कोकिलयुवभिः कण्ठोक्तः स्पष्टमुक्त इत्यर्थः, पथिकजनानां संदोहस्य समूहस्य जीवितसंदेहः प्राणधारणसंशयो येषु ते। एतद्विसेषु विरहिणामध्वगानां प्राणधारणं भवति वा न वेति कोकिलाः कथयन्ति किमिति भावः । तथा वनदेवतावदनेषु तिलकायमानाभिः तिलकवदाचरन्तीभिः तिलकावलिकलिकाभिः तत्कान्तिभिः पलितंभावुकाः शुभ्रीभवन्तः नभोविभागाः येषु ते । पलितंभावुका इत्यत्र "कर्तरि भुवः–"इत्यनेन खुकञ् प्रत्ययः । तथा मदनहुतभुजः मदनाग्नेः अङ्गारैः सदृशा ये कमलान्येव भृङ्गाराः द्विमुखपात्राणि तत्संबन्धिमधुरसे मकरन्दरूपे मद्यरूपे इति ध्वनिः, सङ्गेन आरचितः कृतः मदो येषां तेषां भृङ्गाणाम् आरवविभवेन शब्दैश्वर्येण तुङ्गाः महान्तः । तथा अरहितः विद्यमानः मिथुनानां स्त्रीपुंसानां शृङ्गाररसो येषु ते । तथा सीमन्तिनीरतेः उदन्तं वृत्तान्तं दुरन्तं दुष्टः अन्तः परिणामो यस्य तथाभूतं मनसि विचिन्त्य रहसि एकान्ते प्रियया सह वसन्तं तं नृपं समुन्मिषन्तीनां विकसत्कुसुमानां वासन्तिकानां मल्लिकालतानां मिषेण हसन्त इवेत्युत्प्रेक्षा कैतवापह्नुतिगर्भा ॥ २० ॥

**किमिति** । किंशुकस्य पलाशवृक्षस्य कुसुमेषु नदन्ती शब्दं कुर्वती मधुपानां भ्रमराणां मद्यपानामिति ध्वनिः, आलिः पङ्क्तिः कर्त्री एतत्पुरः शुकस्य कीरस्य वदने रुचिरत्वं किं न किमपीत्यर्थः । तथा शुकस्य मुनेः हृदये मनसि वशित्वं स्वाधीनत्वं किम् । एतद्दर्शने न तन्मनोऽपि निरङ्कुशं भवेदिति भावः । इति शंसति स्मेव कथयामास किम् ॥ ६८ ॥

**कुरवके इति** । पवनेन ईरिताः कम्पिताः पादपाः यस्मिन् तस्मिन् नृपस्य वने कुरवके वृक्षे रवकेलिं शब्दक्रीडां बिभ्रति तथाभूताः षट्पदाः भ्रमराः सुधया समा धूः भारो यस्मिन् तत् । माधुर्येण मनःप्रीतिकरत्वे सुधामधुनोः साम्यात्सुधया समधुरत्वम् । अत एव मधुरं मधु मकरन्दं मद्यमिति ध्वनिः, पपुः । अवार्यं स्मयं मदकार्यं गर्वमपि अवापुः । अत्र यमकालंकारे रवके रवके इत्यत्र वबयोरभेदस्वीकाराद्यमकत्वम् ॥ ६९ ॥

**अथेति** । अथ वासन्त्यां माधवीलतायाम् इति अर्थान्तरमपि उक्तवाक्यस्यार्थद्वयमपीत्यर्थः, अलिगिरा भ्रमरशब्देन बोधयन्त्यां सत्यामिव अयं क्षितिपतिः क्षणादेव

---

१ क. कुटीरेति नास्ति । २ क. ख. वनवासन्त्यामयम् ।

परिहृत्य तनुं चित्ते बाणं कामो मुमोच यत् ।
अन्तरेवातिरक्तोऽभूदव्रणस्तद्बहिर्नृपः ॥ ७० ॥

कं केलिदेशमुपयाम्यधुनेति तावत्
कङ्केलिसंवलनकल्पितचित्रशोभम् ।
माद्र्या करेणुरिव साकमसौ करेण्वा
गूढं ययौ कुरबकद्रुलतानिकुञ्जम् ॥ ७१ ॥

शापं च मृत्युप्रदमग्रजातेस्तापं च पत्युः स्मरजं निरीक्ष्य ।
दूरेतरस्मिन्सुरतेऽपि देव्या दोलायमानं हृदयं तदाऽऽसीत् ॥७२॥

चाटुप्रयोगे चतुरः स पाण्डुः प्रसूनतल्पे प्रविवेशितायाः ।
क्षौमं बिभेद स्मरराजधान्याः क्षौमं कराम्भोजदलेन तस्याः ॥७३॥

---

इक्षुधन्वनः मदनस्य लक्ष्यतां शरव्यताम् अध्यरुक्षत् आरोहणं कृतवान्, मदनवशो जात इति भावः । इतीति किं, अस्मिन् कुटीरस्य पर्णशालायाः परिसरे आसमन्ताद्भागे अमुना पटीरगिरिबन्धुना मलयाचलसंबन्धिना गन्धवहस्य स्तनन्धयेन लघुबालेन मन्दवायुनेत्यर्थः, सन्निधिं नीयमानो मद्रजःपरिग्रहः मत्परागरूपपरिजनः । अथ च मद्रात् मद्रराजात् जातः परिग्रहः पत्नी माद्रीत्यर्थः 'पत्नी परिजनादानमूलशापाः परिग्रहाः' इत्यमरः । तपस्यन्तमपि कं पुरुषम् अन्तः मनसि तापसंपदा न लिम्पेत् अपि तु सर्वमपि मनसि तापसंपदा लिम्पेदिति ॥ २१ ॥

**परिहृत्येति** । यत् यस्मात् कामः तनुं परिहृत्य वर्जयित्वा चित्ते बाणं मुमोच, तत्तस्मान्नृपः अन्तरेव चित्ते एव अतिशयितं रक्तं यस्य सः अतिरक्तोऽभूत् बहिर्भागे अव्रणोऽभूत् । अतिरक्तः माद्र्यामत्यन्तमनुरक्तोऽभूदित्यर्थान्तरम् ॥ ७० ॥

**कमिति** । असौ नृपः तावत् आदौ अधुना कं केलिदेशं क्रीडास्थलम् उपयामि गच्छामि इति विचार्य माद्र्या साकं कुरवकवृक्षलतानां निकुञ्जं तदाच्छादितस्थानं गूढं यथा तथा ययौ । कीदृशं निकुञ्जं, कङ्केलिवृक्षाणां संवलनेन वेष्टनेन कल्पिता चित्रा अद्भुता शोभा यस्य तम् । कया क इव, करेण्वा हस्तिन्या साकं करेणुः हस्तीव । अनयोपमया मदशक्त्यादिवैशिष्ट्यं द्योत्यते ॥ ७१ ॥

**शापमिति** । अग्रजातेः ब्राह्मणस्य मृत्युप्रदं शापं, पत्युः स्मरजं मदनजनिततापं दुःखं च निरीक्ष्य विचार्य दूरेतरस्मिन् अतिप्रत्यासन्ने सुरते सत्यपि हृदयं मनः दोलायमानं दोलवत् आसीत् । यथा दोला वारंवारं पूर्वपश्चिमदिग्भागौ गच्छति तथा माद्रीमनोऽपि ब्राह्मणशापं पतितापं चागच्छदिति भावः ॥ ७२ ॥

**चाटुरिति** । चाटुप्रयोगे प्रियभाषणे चतुरः सः पाण्डुः प्रसूनतल्पे पुष्पशय्यायां प्रविवेशितायाः नीतायाः माद्र्याः क्षौमं दुकूलं कराम्भोजदलेन करकमलपत्रेण बिभेद विस्रंसयामासेत्यर्थः । कीदृशं क्षौमं, स्मरस्य राजधान्याः वराङ्गस्य क्षौमम् अट्टापरपर्यायम् उच्चप्रा-

---

१ ख. दूरेतरे° । २ क. डोलायमानम् । ३ क. ख. °राजधानीक्षौमम् ।

तत्र तौ राजदम्पती मुनिशापवलपरिचिचीषयेव मुहुरभङ्गुरालिङ्गनमङ्गलतरङ्गितकुचकुम्भसंभृतघर्मजलनिर्मितमदनयौवराज्याभिषेकमधरितमधुरसमधुरिमाधरबिम्बचुम्बनाडम्बरविडम्बिताम्बरचरकुटुम्बिजीवनमतिजवपम्फुल्यमानधम्मिल्लविगलदविरलवकुलमुकुलपुनरुक्तपुष्पतल्पमविगणितवीणागुणक्वणितभणितमसृणितमतिचिरंमुषितमसमशरसमरमुन्मीलयामासतुः ॥ २२ ॥

आयुषः संततिं दीर्घामावहन्नपि पौरवः ।
आयुषः संततेरन्तमारुरोह रतेरिव ॥ ७४ ॥

नृपस्य दूरीकृतपाशसंगमं यमं विहायैकमुपेयुषो वधूम् ।
अजस्रमूरीकृतपाशसंगमो यमोऽपरः संनिदधे लतागृहे ॥ ७५ ॥

---

कारोपरितनस्थानम् ‘ स्यादट्टः क्षौममस्त्रियाम् ’ इत्यमरः । कठिनपदार्थभेदने तीक्ष्णशस्त्रस्य हेतुत्वम् । अत्र कमलपत्रेण क्षौमभेदकथनेन हेतूनामसमग्रत्वेऽपि कार्योत्पत्तिकथनाद्विभावनालंकारभेदः ॥ ७३ ॥

**तत्रेति ।** तत्र तौ जाया च पतिश्च दम्पती राज्ञी च राजा च राजानौ च तौ दम्पती चेति कर्मधारयः । मुनिशापवलस्य परिचिचीषया परिचेतुमिच्छयेत्र अतिचिरं मुषितं शापभयाद्रहितम् असमशरसमरं मदनयुद्धम् उन्मीलयामासतुः प्रवर्तयामासतुः । कथंभूतं समरं, मुहुः अभङ्गुराणि दृढानि आलिङ्गनान्येव मङ्गलतरङ्गाः, ते संजाताः ययोस्तौ मङ्गलतरङ्गितौ यौ कुचकुम्भौ ताभ्यां संभृतेन संपादितेन घर्मजलेन निर्मितः मदनस्य यौवराज्याभिषेको यस्मिन् तम् । तथा अधरितः मधुरसस्य क्षौद्ररसस्य मधुरिमा माधुर्यं येन तस्याधरबिम्बस्य चुम्बनाडम्बरेण चुम्बनव्यापारेण विडम्बितम् उपहसितम् अम्बरचरकुटुम्बिनां देवानां जीवनम् अमृतं यस्मिन् तम् । तथा अतिजवेन पम्फुल्यमानात् भृशं विह्वंसतः धम्मिल्लात् बद्धकेशात् विगलद्भिः अविरलवकुलमुकुलैः पुनरुक्तं पुष्टमित्यर्थः, पुष्पतल्पं यस्मिन् तम् । तथा अवगणितं धिक्कृतं वीणागुणानां क्वणितं शब्दो येन तेन भणितेन रतिकूजितेन मसृणितं स्निग्धपदार्थभरितं व्याप्तमित्यर्थः । पम्फुल्यमानेति ‘ ञिफला–विशरणे’ इत्यस्य यङन्तस्य रूपम् ॥ २२ ॥

**आयुरिति ।** पौरवः पाण्डुः आयुषः दीर्घां संततिं परंपराम् आवहन्नपि आयुषः संततेः अन्तम् अवसानम् आरुरोह जगामेति विरोधाभासः । आयुषः एतत्पूर्वजायुर्नामकस्य संततिं वंशं वहन् आयुषो जीवितकालस्य संततेः परंपराम् आरुरोहेति विरोधपरिहारः । कस्या इव, रतेरिव । यथा रतेरन्तम् आरुरोह तथेत्यर्थः ॥ ७४ ॥

**नृप इति ।** दूरीकृतः पाशसंगमः संसारपाशसङ्गो येन तम् एकं यमम् अहिंसादिरूपं विहाय त्यक्त्वा भोगार्थं पुष्पपल्लवाद्यवचयेन हिंसासंभवादिना तत्त्यागः । अथवा यमं साहचर्याद्ब्रह्मचर्यादिनियमं विहाय वधूम् उपेयुषः संगच्छमानस्य लतागृहे अजस्रम् ऊरीकृतः

---

१ क. ख. ‘चिचिक्षयेव । २ ख. मुहुर्मुहु’ । ३ क. चुम्बनाडम्बरमिति नास्ति । ४ क. ख. मणित’ । ५ क. ख. चिरप्रमुषित’ । ६ क. आजगाम ।

आलिङ्गनेन कुरवो हरिणेक्षणाना-
मामोदगौरवभृतो भुवि सर्व एव ।
तन्मध्यभागपि तदा स कथं नु पाण्डु-
रालिङ्ग्य मद्रतनयामवधिं प्रपेदे ॥ ७६ ॥
निद्रया किल निमीलितं मृतेर्मुद्रया निजमुदीक्ष्य वल्लभम् ।
उद्रवा करमुदस्य विह्वला मद्रराजतनया रुरोद सा ॥ ७७ ॥
तन्निशम्य समवेत्य कुमारैस्तादृशं पतिमवेक्ष्य रुदन्त्याः ।
भोजपुंङ्गवभुवोऽश्रुविपातैर्भूरपि स्वयममुञ्चत बाष्पम् ॥ ७८ ॥
माद्र्या ततोऽनुमृतया सह तस्य राज्ञो
निर्वर्तितासु तनयैर्निखिलक्रियासु ।
भूयोऽपि तौ सुमनसां पुरतः प्रकाशं
जायापती तु सुरतोत्सवमन्वभूताम् ॥ ७९ ॥

स्वीकृतः पाशहस्तत्वात् पाशसंगमो येन सः अपरो यमः कृतान्तः सन्निदधे समीपस्थो बभूव । यथा कस्यचिदशस्त्रं पुरुषं दृष्ट्वा पलायमानस्य पुरुषस्य पुरस्तादपरः सशस्त्रः पुरुषो भवति तद्वज्जातमिति भावः ॥ ७५ ॥

आलिङ्गनमिति । सर्वे एव कुरवः कुरवकवृक्षः भुवि हरिणेक्षणानाम् आलिङ्गनेन आमोदस्य सौगन्ध्यस्य गौरवेण आधिक्येन भृतः पूर्णः आसीत् । तदुक्तम् 'पादाहतः प्रमदया विकसत्यशोकः शोकं जहाति वकुलो मुखसीधुसिक्तः । आलिङ्गितः कुरवकः कुरुते विकासमालोकितस्तिलक उत्कलिको विभाति' इति । अथ च सर्वे एव कुरवः ववयोरभेदात् कुरुवंशोत्पन्नाः प्रियालिङ्गनेन आमोदस्य हर्षस्य गौरवं बिभ्रति ते तथाभूता आसन् । तन्मध्यभागपि श्लेषेण कुरवशब्दवाच्यवृक्षमध्यगतोऽपि सः पाण्डुः तदा मद्रतनयां माद्रीम् आलिङ्ग्य अवधिम् आयुषः समाप्तिं कथं नु प्रपेदे प्राप । नु वितर्के । सर्वकुरवशब्दवाच्यानां प्रमदालिङ्गनेनामोदभाक्त्वं, तत्रत्यैकस्यैव तदालिङ्गनेन कथं नु नाश इति प्रश्नो वा ॥ ७६ ॥

निद्रेति । मृतेर्मुद्रया मरणचिह्नविशिष्टया निद्रया मीलितं किल सत्यं निश्चेष्टं निजं वल्लभम् उदीक्ष्य उच्चैः रवो यस्याः सा उद्रवा विह्वला म्लाना सा माद्री करम् उदस्य उत्क्षिप्य रुरोद ॥ ७७ ॥

तदिति । तत् रोदनाक्रन्दनं निशम्य श्रुत्वा कुमारैः युधिष्ठिरादिभिः समवेत्य तादृशं मृतिमुद्रया युतं पतिम् अवेक्ष्य रुदन्त्याः भोजपुङ्गवभुवः यादवविशेषभोजश्रेष्ठकन्यकायाः कुन्त्याः अश्रुविपातैः भूरपि स्वयं बाष्पम् अश्रु ऊष्माणं च अमुञ्चत् । कुन्तीरोदनेनाचेतना भूरपि बाष्पं मुमोच किं पुनः सचेतना वक्तव्या इति द्योतयितुमपिशब्दः ॥ ७८ ॥

माद्र्येति । ततः तनयैः अनुमृतया सहगमनविधिना पश्चान्मृतया माद्र्या सह तस्य

१ क. तथा । २ क. ख. सममेत्य । ३ क. ख. निपातैः । ४ क. तया । ५ विषमालङ्कारोऽत्र अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात्' इति लक्षणात् ।

तदनु नव्यवैधव्यबहुविधव्यथायाः पृथायाः पुरतो निर्मर्यादपितृशोकविदीर्यमाणधैर्यसोदर्यजनपरिवार्यमाणाय हृदि विदितनिखिलधर्मजाताय धर्मजाताय महत्यामपि विपत्त्यां वैयात्येन भवितव्यमिति राजनियमाङ्कुशं प्रकाश्य काश्यपादयो दयोपेताः शतशृङ्गमुनिपुङ्गवास्तुङ्गमणिसौधशृङ्गसंकुलं कुलक्रमागतं कुरुनगरमेतानवतारयामासुः ॥ २३ ॥

मन्दं मन्दमुपेत्य तत्र सदयो मत्पाण्डुपुत्राङ्कुराः
क्वेति प्रेमपुरःप्रसारितकरः कुर्वन्दृढालिङ्गनम् ।
स्पर्शं स्पर्शमिमान्निजाङ्कगमितान्भ्रातुः स्मरन् कौरव-
श्च्योतद्भिर्नयनाम्बुभिः स विदधे लोकं नदीमातृकम् ॥८०॥

पाण्डवेषु दृढतापरिणाहप्रायरूपबलसंपदियत्ताम् ।
स्पर्शनं विदधतैव दृशान्धः पाणिना परिममौ धृतराष्ट्रः ॥ ८१ ॥

---

राज्ञः सकलासु और्ध्वदेहिकक्रियासु निर्वर्तितासु कृतासु सतीषु तौ जायापती सुमनसां देवानां पुरतः अग्रे, पुरतः पुरे अमरावत्यां सुरतोत्सवं भूयोऽपि प्रकाशं प्रकटं यथा तथा अन्वभूताम् अनुभूतवन्तौ, सुराणां देवानां भावः सुरता तत्संबन्ध्युत्सवं तत्रत्यमुपभोगं चक्रतुः । उभौ स्वर्गलोकं गताविति भावः ॥ ७९ ॥

**तदिति** । तदनु नव्यवैधव्येन बहुविधा बहुप्रकारा व्यथा यस्याः तस्याः पृथायाः पुरतः निर्मर्यादेन पितृशोकेन विदीर्यमाणं धैर्यं येषां तैः सोदर्यजनैः बन्धुभिः परिवार्यमाणाय, हृदि चित्ते विदितं धर्मजातं धर्मसमूहो येन तस्मै धर्मजाताय धर्मपुत्राय महत्यामपि विपत्यां वैयात्येन धार्ष्ट्येन भवितव्यं भाव्यम् इति राजनयस्य राजनीतेः नियमरूपमङ्कुशं नियमनकर्तारमङ्कुशं वा प्रकाश्य प्रकटमुक्त्वा दयोपेताः काश्यपादयः शतशृङ्गपर्वतसंबन्धिमुनिपुङ्गवाः एतान्पृथासहितकुमारान् कुरुनगरं हस्तिनापुरम् अवतारयामासुः प्रवेशयामासुः । कीदृशं नगरं, तुङ्गैः उन्नतैः मणिमयसौधशिखरैः संकुलं व्याप्तम् । तथा कुलक्रमेणागतं पूर्वजानां पुत्रपौत्रप्रपौत्रादिक्रमेण प्राप्तम् ॥ २३ ॥

**मन्दमिति** । सदयः आन्ध्यात् प्रेम्णा पुरः प्रसारितौ करौ येन सः कौरवः धृतराष्ट्रः यत्र धर्मादयः स्थितास्तत्र मन्दं मन्दम् उपेत्य मम पाण्डोः पुत्ररूपाः अङ्कुराः क्व सन्तीत्युक्त्वा दृढालिङ्गनं कुर्वन् सन् निजाङ्कं स्वसमीपभागं गमितान् प्रापितान् इमान् धर्मादीन् स्पर्शस्पर्शं स्पृष्ट्वास्पृष्ट्वा भ्रातुः स्मरन् भ्रातरं स्मरन्नित्यर्थः, श्च्योतद्भिः गलद्भिः नयनाम्बुभिः लोकं तं देशमित्यर्थः, नदीमातृकं वृष्टिं विना उदकसमृद्धं विदधे चकार । यथा रोदनाश्रुभिः स देशो जलमयो जातस्तावद्भ्रातृदुःखेन रुरोदेति भावः ॥ ८० ॥

**पाण्डवेष्विति** । दृशा अन्धः धृतराष्ट्रः पाण्डवेषु दृढतापरिणाहयोः प्रायः बाहुल्यं, रूपबलयोः संपच्च तयोः इयत्ताम् एतावत्त्वं तत्र परिणाहो विशालतारूपं सौन्दर्यम् ' प्रायो

---

१ क. विधेति नास्ति । २ क. ख. विदार्य' । ३ क. राजनयनियमाङ्कुरम्, ख. राजनयनाङ्कुशम् । ४ क. 'शृङ्गं कुलक्रमागतम् । ५ क. सदसः । ६ क. ख. श्च्योतद्भिः । ७ क. तत्र' ।

दत्त्वा तत्तत्प्रत्यहं यद्यदिष्टं यावत्स्वेषामात्मजानां शतेऽपि ।
पाण्डोः पुत्रेष्वम्बिकासूनुरेतेष्वेकैकस्मिन्प्रेम तावद्बबन्ध ॥ ८२ ॥

एवं वत्सभावेऽपि भक्तिमत्सु तेषु निजपितृवत्सलतामसकृत्समीक्ष्य मत्सरेण दुर्मनायमानो हृदयालवाले सुयोधनो राधेयप्रधानदुर्वोधमेधोत्सेधसविधधरणीरुहमधिरूढामकुतोरोधां विरोधविषवीरुधमेधाञ्चक्रे२४

तीव्रोदयानविनयान् दधतां क्रमेण
दुर्योधनाद्यसुहृदां दुरहंकृतीनाम् ।
पट्टाभिषेकमभिलष्यति फालभागे
कुट्टाकभावकुतुकं कुरुते स्म भीमः ॥ ८३ ॥

पञ्चधा प्रवहन्तीनां पवनात्मज एव सः ।
कौरवक्रोधसिन्धुनां क्रमात्संगमभूरभूत् ॥ ८४ ॥

इत्यनन्तभट्टकविकृतौ चम्पूभारते प्रथमः स्तवकः समाप्तः ॥ १ ॥

---

भून्त्यन्तगमने ' इत्यमरः । स्पर्शनं विदधता कुर्वता पाणिना हस्तेनैव परिममौ परिमितविषयाञ्चक्रे । प्रज्ञाचक्षुष्ट्वात् हस्तस्पर्शेनैव ज्ञातवानिति भावः ॥ ८१ ॥

दत्त्वेति । अम्बिकासूनुः धृतराष्ट्रः प्रत्यहं दिने दिने यत् यत् वस्तु इष्टं तत्तद्दत्त्वा स्वेषां स्वकीयानाम् आत्मजानां शतेऽपि सर्वोपरीत्यर्थः, यावत्प्रेमास्ति तावत्प्रेम एतेषु युधिष्ठिरादिषु मध्ये एकैकस्मिन्कुमारे बबन्ध दधारेत्यर्थः ॥ ८२ ॥

एवमिति । एवं वत्सभावेऽपि बाल्येऽपि भक्तिमत्सु तेषु पाण्डवेषु निजपितुः वत्सलतां प्रेम असकृत् वारंवारं समीक्ष्य मत्सरेण परोत्कर्षासहिष्णुतया दुर्मनायमानः दुर्मना भवन् सुयोधनः हृदयरूपे आलवाले वृक्षमूलाय जलाधारे विरोधरूपां विषवीरुधं विषवल्लीम् एधाञ्चक्रे वर्धयामास । कीदृशीं वीरुधं, राधेयप्रधानाः कर्णमुख्या ये दुर्वोधाः दुर्वोधस्य कर्तारः तेषां मेधोत्सेधः बुद्ध्यौन्नत्यं तदेव सविधधरणीरुहः समीपवृक्षः तम् अधिरूढां कर्णादिदुर्बुद्ध्याश्रयेण वृद्धिं गतामित्यर्थः । तथा न विद्यते कुतोऽपि रोधः प्रतिबन्धो यस्यास्ताम् । पाण्डवेषु मत्सरेण विरोधं चक्रे इति भावः ॥ २४ ॥

तीव्रोदेति । भीमः दुर्योधनादीनाम् असुहृदां शत्रूणां फालभागे ललाटावयवे पट्टाभिषेकम् अभिलष्यति इच्छति सति तत्र कुट्टाकभावः ताडनकर्तुर्भावः ताडनमित्यर्थः, तद्रूपं कुतुक कौतुकं करुते स्म ताडनरूपमाङ्गलिकस्रगादिबन्धनं चकारेति भावः । कीदृशाम् असुहृदां, तीव्र उदयो येषां तान् अविनयान् अन्यायान् दधतां कुर्वताम् । तथा दुष्टा अहंकृतिः अभिमानो येषां तेषाम् ॥ ८३ ॥

पञ्चधा पञ्चप्रकारैः पञ्चस्वरूपैः प्रवहन्तीनां कौरवक्रोधसिन्धूनां दुर्योधनादिक्रोधनदीनां क्रमात्सः पवनात्मजः भीम एव संगमभूः अभूत् । कौरवक्रोधः पूर्वं पाण्डवोपरि

---

१ ख. दुर्योधनः । २ क. ख. दुर्बोधमे । ३ क. अकुतोऽनुरोधाम् । ४ क. फालदेशे ।

## २ द्वितीयः स्तवकः ।

एकदा तु ते सर्वेऽपि सुपर्वसरितः सलिलेषु चिरं विहृत्य समुत्तीर्णा वीचीभिरनीचीभिरुत्कूलितफेनकूटेष्विव पटगृहवाटीषु परिगृहीतमनोहराम्बरपटीरहाराभ्यवहाराः कुमाराः कुशलकुशीलववालककुलशीलितविचित्रवादित्रकलशीरवविवशीकृतमनसः सुखमासामासुः ॥ १ ॥

रहसि नलिनतल्पे रत्नपर्यङ्ककल्पे
दिनविरतिसमीरैः सेव्यमानः स भीमः ।
तटभुवि कुसुमानां तादृशैर्गन्धपूरै-
रधिकमलसताया हानिद्रौ निदद्रौ ॥ १ ॥

---

पृथक् पृथक् स्वल्प आसीत्, ततः सः ताडनकर्तरि भीमे एव एके महारूपेणावर्ततेति भावः ॥ ८४ ॥

इत्यनन्तभट्टकृतचम्पूभारतटीकायां प्रथमस्तवकः समाप्तः ॥ १ ॥

---

पूर्वस्तवकान्ते दुर्योधनादीनां विशेषेण द्वेषपात्रं भीमो बभूवेत्युक्तम्, तद्विशदयितुं कुमाराणां भागीरथीजलतटगतक्रीडामाह—एकदेत्यादिगद्यपद्यैः। एकदा तु सुपर्वसरितः देवनद्याः भागीरथ्याः सलिलेषु विहृत्य क्रीडित्वा समुत्तीर्णाः जलाद्बहिर्निर्गताः अनीचीभिः महतीभिः 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेव' इतिनियमात् नीचपर्यायन्यक्शब्दादुगितश्चेति ङीप् 'न्यङ्नीचखर्वह्रस्वाः स्युः' इत्यमरः। वीचीभिः लहरीभिः उत्कूलितेषु ऊर्ध्वकूलं प्रापितेषु फेनानां कूटेषु राशिष्विवेत्युत्प्रेक्षा। पटगृहवाटीषु पटमण्डपसमूहेषु परिगृहीताः स्वीकृताः मनोहराः अम्बरादयो यैः—अम्बराणि वस्त्राणि, पटीरश्चन्दनः, हाराः मुक्तारत्नानां हाराः, अभ्यवहारो भोजनं च—ते सर्वे कुमाराः युधिष्ठिरदुर्योधनादयः कुशलाः ये कुशीलवानां चारणानां वालकास्तेषां कुलेन समुदायेन शीलिताः वादिताः विचित्रवादित्राणि मृदङ्गवेणुतूर्यादीनि कलश्यो घटाश्च तेषां रवैः विवशीकृतं स्वायत्तीकृतं मनो येषां तथाभूताः सन्तः, सुखं यथा तथा आसामासुर्निषेदुः ॥ १ ॥

दिनविरतिसमीरैः सायंकालसंबन्धिवायुभिः सेव्यमानः सः भीमः तटभुवि भागीरथीतीरभूमौ रहसि एकान्ते रत्नपर्यङ्कसदृशे नलिनतल्पे कमलशय्यायाम् अधिकं गाढं यथा तथा निदद्रौ निद्रां चकार। कीदृश्यां तटभुवि, कुसुमानां तादृशैः अनुपमैः गन्धपूरैः सुगन्धसमूहैः अलसतायाः निद्राविषये आलस्यस्य हानिदाः नाशकराः द्रवो द्रुमाः यस्यां तस्याम्, अथवा आलस्यस्य हानिदाः हानिनाशकाः द्रुमाः यस्याम्। 'दो—अवखण्डने' दैवादिकः। आलस्येन निद्रा आयातीति तत्करा इत्यर्थः ॥ १ ॥

---

१ क. अपीति नास्ति। २ क. चिरमिति नास्ति । ३ क. ख. वाटेषु। ४ ख. परिशीलित'। ५ ख. मानसाः।

अथ निशीथे तथाभूतस्य तस्य जिघांसया कुरुनरेन्द्रनन्दनेन चोदितैर्नरेन्द्रैरुपेत्य युगपदेव झटिति निभृतं समुद्घाटितेषु नियन्त्रणपेटकेषु ॥ २ ॥—

सुते पितृस्वादिमसंप्रदायशुशुत्सयेव श्वसनाशनेन्द्राः ।
समीरसूनुं समुपेत्य जिह्वावहिःप्रसारान् बहुशो वितेनुः ॥ २ ॥
सुप्तस्य तस्य तु सुयोधनभृत्यमुक्ता
वाताशनाश्च सकला वनदेवताश्च ।
आशीर्द्वयं वपुषि चायुषि च प्रतेनुः
पूर्वा न तत्र चरमैव पुपोष वीर्यम् ॥ ३ ॥
मर्मदत्तरसना भुजङ्गमा मारुतेर्वपुषि सुप्तिभूरुहः ।
मुष्टिमेयतनवो विरेजिरे मूलिका इव बहिर्विनिर्गताः ॥ ४ ॥

---

अथ स्वापानन्तरं निशीथे मध्यरात्रे तथाभूतस्य गाढनिद्रायुतस्य तस्य भीमस्य जिघांसया हन्तुमिच्छया कुरुनरेन्द्रस्य धृतराष्ट्रस्य नन्दनेन दुर्योधनेन चोदितैः प्रेरितैः नरेन्द्रैः विषवैद्यैः 'नरेन्द्रो वार्तिके राज्ञि विषवैद्येऽपि कथ्यते' इति त्रिकाण्डशेषः । उपेत्य समीपं गत्वा युगपदेव झटिति शीघ्रं निभृतं गुप्तं यथा तथा नियन्त्रणपेटकेषु सर्पकारागृहभूतपेटकेषु समुद्घाटितेषु सत्सु ॥ २ ॥—

श्वसनाशनेन्द्राः नागश्रेष्ठाः समीरसूनुं भीमं समुपेत्य सुते पुत्रे भीमे पितुः वायोः स्वादिमा स्वादुत्वं तस्य संप्रदायः रीतिः तस्याः शुशुत्सयेव शोधनेच्छयेवेत्युत्प्रेक्षा । बहुशः जिह्वानां बहिःप्रसारान् वितेनुः चक्रुः । भीमं प्रति प्रथमं चञ्चलजिह्वाभिः पस्पृशुरिति भावः। अत्र वायुभक्षकत्वाभिप्रायकत्वश्वसनाशनसमीरसूनुमिति च विशेष्यस्य साभिप्रायत्वात्परिकराङ्कुरः । तदुक्तम् 'साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः' इति ॥ २ ॥

सुयोधनस्य भृत्यैर्मुक्ताः पेटात् बहिर्निष्कासिताः वाताशनाः नागाः वनदेवताश्च सुप्तस्य तस्य भीमस्य वपुषि देहे, आयुषि च आशिषोः द्वयं प्रतेनुः प्रयुयुजुः । तत्र पूर्वा आशीः अहिदंष्ट्रा वीर्यं सामर्थ्यं न पुपोष । चरमैव आशीः देवतानामाशीः सैव वीर्यं पुपोष । स भीमः नागकृतदंष्ट्रादंशेन न मृतः अपि तु वनदेवताप्रयुक्ताशीर्वादेन तस्यायुर्वृद्धिर्जातेति भावः । 'आशीर्हिताशंसाहिदंष्ट्रयोः' इत्यमरः । 'आशीस्तालुगता जिह्वा यया स्पृष्टो न जीवति' इत्यभिधानं च ॥ ३ ॥

मारुतेः भीमस्य वपुषि मर्मसु मर्मस्थानेषु दत्ताः रसनाः जिह्वाः ( येषु मुकुटीभूताः मूलिकाः अल्पमूलानीवेत्युत्प्रेक्षा ?) मुष्ट्यां मेयाः परिमातुं योग्याः तनवो येषां ते भुजङ्गमाः सुप्तिरेव निद्रैव भूरुट् वृक्षस्तस्य बहिर्विनिर्गताः वटादिवृक्षाणामिव बहिः प्रकटीभूताः मूलिकाः अल्पमूलानीवेत्युत्प्रेक्षा, विरेजिरे शुशुभिरे ॥ ४ ॥

---

१ ख. निभृतसमुद्घटितेषु । २ क. ख. दशनाः ।

अपरेद्युरपि पुनराजीवन्तं निद्रारुणनयनराजीवं तं स मुग्धधीः स्निग्ध इव जग्धिकेलिकायामारालिककरदापितकवलनिचोलितकरालगरलविह्वलं प्रह्वलम्बिशिरसं रज्जुभिः परिणाह्य परिणाहिनीभिरसुहृदां हृदि शूलं शूलकीलिते निर्जरसरिदन्तर्जले विसर्जयामास ॥ ३ ॥

तेषां तदानीं धृतराष्ट्रजानां तीरे च नीरे दिविषत्तटिन्याः ।
मरुत्सुतं मारयितुं प्रवीरं सारा गुणाः साधनतामवापुः ॥ ५ ॥

पातालभुवि तदागमनकौतुकिना वासुकिना संमानितः स धृतिमानितस्ततोऽष्टासु दिशासु तदनुगुणपरिगणनदिनगणात्ययशङ्कितैरितैरपत्यैः सह विचित्य 'वत्स रिपुभर्त्सन भीम क्व वा निषीदसि' इति विषीदन्त्याः कुन्त्याः नवममपि वासरमनवममेव संजनयन्प्रभञ्जनभूरमृताञ्जनैरिव दृशौ रञ्जयामास ॥ ४ ॥

---

अपरेद्युरपि तदुत्तरदिनेऽपि मुग्धधीः मूढधीः सः दुर्योधनः स्निग्ध इव मित्रमिव पुनः आजीवन्तं पूर्ववत् सजीवं निद्रया अरुणे लोहिते नयनकमले यस्य तं, जग्धिकेलिकायां सहभोजनक्रियायाम् आरालिकानां वल्लवानां करैर्दापितेषु कवलेषु मोदकादिग्रासेषु निचोलितम् आच्छन्नं करालं तीक्ष्णं गरलं तेन विह्वलम् व्याकुलम्, अत एव प्रह्वलम्बि अधोलम्बि शिरो यस्य, असुहृदां शत्रूणां हृदि मनसि शूलं शूलमिव दुःखप्रदं तं भीमं परिणाहिनीभिः दीर्घाभिः रज्जुभिः परिणाह्य सेवकैः बन्धयित्वा शूलकीलिते निर्जरसरितो भागीरथ्याः अन्तर्जले जलमध्ये विसर्जयामास तत्याज ॥ ३ ॥

तदानीं धृतराष्ट्रजानां तेषां दुर्योधनादीनां प्रवीरं महावीरं मरुत्सुतं भीमं मारयितुं हन्तुं दिविपदां देवानां तटिन्याः भागीरथ्याः तीरे नीरे च क्रमेण साराः अरेण विषेण सहिताः गुणाः सूदाः, साराः दृढाः गुणाः रज्जवश्च साधनतां सहायताम् अवापुः । 'सूदा औदनिका गुणाः' इत्यमरः । यद्वा मरुत्सुतं मारयितुं पाताललोकस्थामृतपानेन मारं मदनतुल्यं कर्तुं सारा गुणाः सहायतामवापुः ॥ ५ ॥

ततः गङ्गाजले भीमविसर्जनानन्तरं पाताललोके भागीरथ्यन्तर्गतमार्गेण तस्य भीमस्यागमनेन यत्कौतुकम् आश्चर्यं तद्विशिष्टेन वासुकिना नागराजेन प्राशनार्थामृतदानादिना संमानितः धृतिमान् धैर्यवान् सर्पसभायां प्रविष्टोऽप्यभीत इति भावः । प्रभञ्जनभूः भीमः ततस्ततः तस्मिन् तस्मिन् स्थले अष्टासु दिशासु तस्याः अष्टसंख्यायाः अनुगुणम् अनुरूपं परिगणनं यस्य तस्य दिनगणस्य दिनाष्टकस्य अत्ययेन अतिक्रमेण शङ्कितैः तन्मरणादिशङ्कायुतैः इतैः अपत्यैः युधिष्ठिरादिभिश्चतुर्भिः पुत्रैः सह विचित्य भीमान्वेषणं कृत्वा 'हे वत्स! हे रिपुभर्त्सन शत्रुपराजयकारिन्! हे भीम ! क्व वा निषीदसि निषण्णोऽसि' इत्याक्रोशेन विषीदन्त्याः खेदं कुर्वन्त्याः कुन्त्याः दृशौ अमृताञ्जनैरिवेत्युत्प्रेक्षा । रञ्जयामास स्वस्मिन्

---

१ क. अन्येद्यु° । २ क. सजग्धिके°, ख. सग्धिके° । ३ क. ख. करेति नास्ति । ४ क. लम्बितशि° । ५ क. ख. हृदयशूलमपि । ६ क. ख. °गणनं दिनगणमत्ययशङ्किभि° । ७ क. ख. हा वत्स । ८ क. ख. विषीदन्त्याः ।

आगतस्य तस्य मदावलायुतबलावहानां पृदाकुपरिषदुपदापितदश-कलशपीयूषाणां पानाद्विशेषपरिपोषगात्रं सवित्रीभुजान्तर इव कौरव-हृदयेऽपि मोदविषादसंपदौ न ममतुः ॥ ५ ॥

तदनन्तरम्—

काष्ठां परां कार्मुककौशलस्य काष्ठाः परास्तानपि तद्यशोऽपि ।
प्रज्ञादृगारोपयितुं प्रवृत्तो व्यज्ञापयद्विष्णुपदीतनूजम् ॥ ६ ॥

सोऽपि कृत्यविदामग्रणीरपरेणेव शरजन्मना कृपेण बहुकृपेण निरव-द्यवीरयशोनिषद्यां चापविद्यामापाद्यापि तां पुनरुक्तयितुं दिशि दिशि जैत्रगुणं पौत्रगणं महता धननिवहेन सह विविधधनुरागमप्राणस्य द्रोणस्य चरणयोरुपहारीचकार ॥ ६ ॥

---

अनुरक्तीचकार । यथा कश्चित्सिद्धामृताञ्जनैः दृशौ रञ्जयित्वा सुखयति तद्वत् । किं कुर्वन्, अनवममपि वासरं दिनं नवमं न भवति इत्यनवममेव संजनयन् कुर्वन्निति विरोधः, न अवमम् अनवमम् अनिन्द्यमित्यर्थेन तत्परिहारः ॥ ४ ॥

पातालादुपरि आगतस्य तस्य भीमस्य गात्रं शरीरं सवित्र्या मातुः कुन्त्याः भुजयोः अन्तरे मध्यभागे इव सोदराणां युधिष्ठिरादीनां कौरवाणां दुर्योधनादीनां च हृदयेऽपि क्रमेण मोदविषादानां हर्षखेदानां संपदौ न ममतुः । यथा आलिङ्गनसमये मातुर्भुजान्तरे न ममौ । मदावलानां गजानाम् अयुतस्य दशसहस्रस्य बलावहानां बलसमर्पकाणां पृदाकुपरिषदा सर्पसभया उपदापितानां दशकलशपरिमितानां पीयूषाणां पानात् प्राशनतः विशेषितः पूर्वस्मादतिशयितः परिपोषः पुष्टिर्यस्य तत् । इदं भुजयोर्मध्ये अमानस्य हृदये हर्षविषादयोरमानस्य च हेतुगर्भं विशेषणम् ॥ ५ ॥

तदनन्तरं प्रज्ञादृक् ज्ञानचक्षुः धृतराष्ट्रः तानपि पाण्डवानपि कार्मुककौशलस्य धनुषि पटुत्वस्य परां काष्ठाम् अवधिम् आरोपयितुं नेतुं तेषां पाण्डवानां यशोऽपि पराः काष्ठाः दिशः आरोपयितुं नेतुं प्रवृत्तः सन् विष्णुपद्याः भागीरथ्याः तनूजं पुत्रं भीष्मं व्यज्ञापयत् विज्ञापितवान् ॥ ६ ॥

कृत्यविदां कार्यविदाम् अग्रणीः श्रेष्ठः सः भीष्मोऽपि अपरेण शरजन्मनेव स्कन्देनेव बहुकृपेण कृपेण कृपाचार्येण निरवद्यानां निर्दोषाणां वीरयशसां निषद्याम् आपणरूपां चापविद्याम् आपाद्य संपाद्यापि तां चापविद्यां पुनरुक्तयितुम् अधिकां कर्तुं दिशि दिशि जैत्राः जयनशीलाः गुणाः यस्य तं पौत्राणां धर्मादीनां दुर्योधनादीनां गणं समूहं महता धननिवहेन सह विविधो नानाप्रकारो यो धनुरागमः धनुर्वेदः तस्य प्राणस्य द्रोणस्य द्रोणाचार्यस्य चरणयोरुपहारीचकार । चापविद्यापूर्णतार्थं पौत्रान् द्रोणाचार्यनिकटे स्थापितवानिति भावः ॥ ६ ॥

---

१ क. पृथकु° । २ ख. परिवृढदापित° । ३ क. ख. निषेवणेन विशेषित° । ४ ख. पोषपात्रं गात्रम् । ५ क. ख. सोदरेत्यधिकम् । ६ ख. यशसो निप° । ७ क. उपधीच° ।

सिन्धुजातकलशीभुवोस्तयोः
स्नेहभारमवलोक्य तादृशम् ।
तत्र पौरनिकरः समाचर-
च्चित्रपूरजठरे निमज्जनम् ॥ ७ ॥

कुमारास्तूर्णमारुक्षन् कुम्भयोनेरनुग्रहात् ।
कोटिं कोदण्डसारस्य गुणिनस्ते गुणा इव ॥ ८ ॥

कूलस्थस्यानुकुर्वन् कुरुसुतसदसः कुम्भयोनेः कदाचित्
स्नातुं मध्ये जलानां चिरकृतवसतेः सिन्धुभूवर्धमानः ।
आदौ पादौ निपीड्य स्फुटकमलरुचौ बिभ्रदन्तेवसत्वं
ग्राहो जग्राह कश्चित्स्वयमपि विजयास्त्रागमान्तं महान्तम् ॥९॥

---

तयोः प्रस्तुतयोः सिन्धुजातो नदीपुत्रो भीष्मः कलशीभूः द्रोणजन्मा द्रोणः तयोः । अस्मिन्ग्रन्थे द्रोणकलशयोः पात्रसामान्यात् द्रोणे घटकलशकुम्भशब्दप्रयोगः। तादृशं लोकविलक्षणं स्नेहभारं स्नेहातिशयम् अवलोक्य पौराणां निकरः समूहः तत्र तस्मिन् चित्रपूरजठरे आश्चर्यपूरमध्ये निमज्जनं समाचरत् अकरोत्, इति प्रस्तुतार्थः । सिन्धूनां समुद्राणां जातं समूहः कलशीभूः घटजन्मा अगस्त्यः तयोः परस्परशात्रवयोः स्नेहभारम् अवलोक्य जनः आश्चर्यपूरे निमज्जनं चकारेति अप्रस्तुतार्थस्यापि स्फुरणात्, पौरनिकर इति कर्तृपदे श्लेषाभावाच्च समासोक्तिरलंकारः । तदुक्तम् ' समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ' इति ॥ ७ ॥

गुणिनः गुणविशिष्टास्ते कुमाराः कुम्भः द्रोणः योनिः उत्पत्तिस्थानं यस्य तस्य द्रोणाचार्यस्य अनुग्रहात् तूर्णं शीघ्रं गुणा इव कोदण्डसारस्य कोटिम् आरुक्षन् आरोहणं कृतवन्तः । अत्र गुणगुणिनोः सामानाधिकरण्यम्। एककोदण्डसारकोटौ जातमित्यर्थोक्तिसंभवस्तु गुणाः शौर्यनम्रतादयः तद्विशिष्टाः कुमाराः कोदण्डसारस्य चापविद्यासारांशस्य कोटिम् उत्कर्षम् आरुक्षन् । के इव, गुणा इव । यथा गुणाः मौर्व्यः कोदण्डश्रेष्ठस्य कोटिं चापाग्रभागं आरोहन्ति तद्वत् । ' कोटिः स्त्री धनुषोऽग्रेऽस्त्रौ संख्याभेदप्रकर्षयोः' इति मेदिनी ॥ ८ ॥

कदाचित् कूलस्थस्य भागीरथीतीरस्थस्य कुरुसुतानां धर्मादीनां सदसः समूहस्य अनुकुर्वन् अनुकुर्वता सिन्धुभुवि नदीभूमौ वर्धमानः। सिन्धुभुवा भीष्मेण हेतुना वर्धमानस्येति पक्षे सदसः विभक्तिविपरिणामेन संबन्धः । कश्चिद्ग्राहः नक्रः जलानां मध्ये स्नातुं चिरं कृता वसतिर्येन तस्य कुम्भयोनेः द्रोणस्य स्फुटा कमलस्य रुगिव रुक् कान्तिर्ययोस्तौ पादौ आदौ निपीड्य नितरां पीडयित्वा पक्षे वन्दित्वा अन्तेवसत्वं समीपस्थत्वं, पक्षे शिष्यत्वं च बिभ्रत् सन् स्वयमपि महान्तं विजयस्य अर्जुनस्यास्त्रागमेन अस्त्रप्राप्त्या अन्तं मृत्युं, पक्षे विजयप्रापकास्त्राणाम् आग्नेयवायव्यब्राह्मादीनाम् आगमस्य प्राप्तेः अन्तं पारं जग्राह स्वीचकार । ग्राहे श्लेषेण शिष्यत्वमानीतमिति चमत्कारः ॥ ९ ॥

---

१ क. स्निग्धभाव° । २ ख. कोटीम् ।

ततस्ते सर्वोत्तरा अपि शरासेषु दक्षिणा गुरुदक्षिणां कुरुत मह्यं द्रुह्यतो द्रुपदस्य युधि बलाद्गृहीतस्य समर्पणमिति गुरुणा चोदिताः सर्वेऽप्यहंपूर्विकया विमतेषु कृतावज्ञसेनं याज्ञसेनं पुरं निरुध्य चिरमयुध्यन्त ॥ ८ ॥

कृत्ते भल्लैर्धनुषि स गुरुद्रोहिणस्तस्य जीव-
ग्राहे बाहाञ्चलपरिचलत्खड्गवल्लीसहायः ।
पुत्रावल्यां सुबलदुहितुः पूर्वपक्षीभवन्त्यां
सिद्धान्तोऽभूद्दिवि भुवि बुधैः श्लाघितः सव्यसाची ॥ १० ॥

पार्थमेव पुरतो निधाय ते पौरवास्तदनु सन्निधौ गुरोः ।
भक्तिभिर्व्यनमयन्निजं शिरः पार्षतस्तु परिभूतिलज्जया ॥ ११ ॥

---

ततः विद्याभ्यासानन्तरं सर्वेभ्यः उत्तराः उत्तरदिक्स्थाः अपि शरासेषु चापेषु दक्षिणाः दक्षिणदिक्स्थाः इति विरोधः, उत्तराः श्रेष्ठाः दक्षिणाः कुशला इति विरोधपरिहारः । मह्यं द्रुह्यतः द्रोहं कुर्वतः अत एव युधि बलाद्गृहीतस्य द्रुपदस्य समर्पणं गुरुदक्षिणां कुरुत इति गुरुणा द्रोणाचार्येण चोदिताः प्रेरिताः सर्वेऽपि ते पाण्डवाः, कौरवाः, कर्णादयश्च शिष्याः अहंपूर्विकया अहं पूर्वमहं पूर्वमितिभाषणेन कृता अवज्ञा तुच्छता यस्याः सा सेना यस्मिन् तत् यज्ञसेनस्य द्रुपदस्य संबन्धि पुरं निरुध्य वेष्टित्वा चिरम् अयुध्यन्त ॥ ८ ॥

गुरवे द्रुह्यतीति गुरुद्रोही तस्य द्रुपदस्य धनुषि भल्लैः बाणैः कृत्ते छिन्ने सति जीवग्राहे जीवतः ग्रहणविषये सुबलनाम्नो राज्ञः दुहितुः कन्यायाः गान्धार्याः पुत्रावल्यां पुत्रपङ्क्तौ पूर्वपक्षीभवन्त्यां पूर्वपक्षत्वं स्वीकुर्वन्त्यां सत्यां जीवग्राहे प्रारम्भं कुर्वत्यां सत्यामित्यर्थः । सव्यसाची अर्जुनः सिद्धान्तः सिद्धान्तोत्तरतुल्यः, जीवतो ग्रहणकर्ता युद्धसमाप्तिकारी चाभवत् । यथा शास्त्रिसभायां अनेककृतपूर्वपक्षोपमर्दकः सिद्धान्तो भवति तथाऽर्जुनो जात इति भावः । कथंभूतः सव्यसाची, बाहायाः भुजस्य अचले अग्रे हस्ते इत्यर्थः । परिचलन्ती खड्गवल्ल्येव सहायो यस्य सः । दिवि स्वर्गे भुवि लोके च बुधैः देवैः पण्डितैश्च श्लाघितः ॥ १० ॥

तदनु ते पौरवाः पार्थम् अर्जुनमेव पुरो निधाय गुरोः सन्निधौ भक्तिभिः निजं शिरः व्यनमयन् । पार्षतः द्रुपदस्तु परिभूत्या स्वपराभवेन या लज्जा तया निजं शिरः व्यनमयत् इति वचनविपरिणामेनान्वयः । अत्र पौरवाणां द्रुपदस्य च वर्ण्यानामेव शिरोनमनैकक्रियान्वयित्वेन तुल्ययोगितालंकारः । तदुक्तम् 'वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता' इति ॥ ११ ॥

---

१ क. ख. शरासनेषु । २ क. कयापीत्यधिकम् । ३ ख. चेत्यधिकम् । ४ क. पार्षदस्तु ।

अथो गुरुर्नीतमधिज्यधन्वना
पुरःप्रदेशं पुरुहूतसूनुना ।
तरङ्गिताक्षं तमवेक्ष्य विद्विषं
वचो गभीरं वदति स्म सस्मितः ॥ १२ ॥

अरे क्षत्रियसत्तम पुरा महत्तरमग्निदेश्यमग्निवेश्यं मुनिमस्त्रपरिश्रमाय प्रश्रयेण सह शुश्रूषमाणस्त्वं मत्कृते पितुरनन्तरं ममाधिराज्यपदस्य प्रथममर्धं भवते वितीर्य ततः परमर्धमहमनुभविष्यामीति यद्यथा प्रत्यशृणुथास्तत्तथा निर्वर्तितं खलु धिग्विप्रमिति क्षुरप्रवरप्रायेण विप्रियवचनेन प्रथीयसीं मम मनसि व्यथां वितीर्णवता महार्णवरशनावतीं वसुमतीं स्वयमेवानुभवता भवता ॥ ९ ॥

आबालवृद्धं जडसक्तमेव जनाः समस्ता द्रुपदं यदाहुः ।
तस्मात्त्वयि स्वीकृततादृशाख्ये कथं नु भज्येत न मित्रतेजः ॥१३॥

---

अथो सस्मितः ईषद्धास्यसहितः गुरुः अधिज्यधन्वना पुरुहूतसूनुना अर्जुनेन पुरःप्रदेशं नीतं स्थापितं, तरङ्गिते नयने चञ्चले अक्षिणी यस्य तं, विद्विषं शत्रुं द्रुपदम् अवेक्ष्य गभीरं वचः वदति स्म उवाच ॥ १२ ॥

अथ तं व्याजस्तुत्याह गद्यपद्याभ्याम्—अरे इति । अरे क्षत्रियसत्तम ! महत्तरम् अतिमहान्तम् अग्निदेश्यम् अग्निसदृशम् अग्निवेश्यनामानं मुनिम् अस्त्रपरिश्रमाय अस्त्रविद्याभ्यासाय प्रश्रयेण नम्रतया सह शुश्रूषमाणस्त्वं मत्कृते मदर्थे पितुः अनन्तरं ममाधिराज्यपदस्य प्रथमम् अर्धम् आदौ भवते तुभ्यं वितीर्य दत्त्वा ततः परम् अवशिष्टम् अर्धम् अहम् अनुभविष्यामीति यत् यथा येन प्रकारेण प्रत्यश्रृणुथाः प्रतिज्ञामकरोः तत् तथा तेन प्रकारेण धिग्विप्रमिति क्षुरप्रवरप्रायेण तीक्ष्णत्वेन क्षुरतुल्यबाणविशेषश्रेष्ठतुल्येन विप्रियवचनेन प्रथीयसीम् अतिमहतीं मम मनसि व्यथां वितीर्णवता दत्तवता महार्णव एव रशना काञ्ची तद्वतीं समुद्रसहितामित्यर्थः । वसुमतीं स्वयमेवानुभवता भवता निर्वर्तितं खलु कृतं खलु निश्चयेन ॥ ९ ॥

यद्यस्मात् आबालवृद्धं बालवृद्धानभिव्याप्य समस्ताः जनाः द्रोः वृक्षस्य पदं मूलं जडसक्तं डलयोरभेदाज्जले सक्तम् आसक्तमेव मूर्खे सक्तमेव च आहुः वदन्ति, विपश्चित इति शेषः । तस्मात् स्वीकृता तादृशी आख्या नाम येन तस्मिन् त्वयि द्रुपदे. मित्रतेजः सूर्यतेजः सुहृत्तेजश्च कथं न भज्येत, अपि तु भज्येतैव । यथा जलसक्ते वृक्षमूले सूर्यतेजः न प्रसरति तथा जडसक्तपुरुषे सुहृत्तेजः न प्रसरतीति भावः । अत्र योगेन द्रुपदेति नाम्नः करणात् निरुक्त्यलंकारः ॥ १३ ॥

---

१ क. सस्मितम् । २ क. ख. रे रे क्ष° । ३ क. नामेत्यधिकम् । ४ क. क्षुरप्रायेण । ५ ख. महेति नास्ति । ६ क. । नन्विंत्यधिकम् ७ क. जलसक्तमेव । ८ 'निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम्' इति तल्लक्षणम् ।

इति व्याजस्तुतिवचनेन पौरवान्ते वसता भार्गवान्तेवसता प्रधर्षितः पार्षतस्तेन सार्धमर्धराज्यपरिवर्तनेन परमङ्गीकृत्य कृत्यविदां ककुदस्तौ जम्भरिपुकुम्भसंभवावुभावप्युपयममेवं प्रवर्तयितुं कृतक्रतुनिर्वर्तनः सोमकान्तिकोपास्यौ पुत्रौ भागीरथीतटवनावसथस्य याजस्य मुनिराजस्य याजनानुग्रहेण परिजग्राह ॥ १० ॥

ततोऽपि धर्मतनयं तपनीयपीठ-
मारोप्य चक्षुरिव लब्धममुं तपोभिः ।
आवर्जितैः कलशवारिभिरभ्यषि-
ञ्चदानन्दबाष्पसलिलैरवनिं च पौराः ॥ १४ ॥
आबिभ्रतो धरणिमङ्गदनिर्विशेषं
नानाधनायतिभिरस्य नयोदिताभिः ।
पस्त्यं समस्तमपि वासवसन्निभस्य
कोशीबभूव कुतुकैः सह कौरवाणाम् ॥ १५ ॥

---

व्याजस्तुतिवचनेन निन्दापर्यवसायिवचनेन पौरवाणाम् अन्ते समीपे वसता भार्गवस्य परशुरामस्य अन्तेवसता शिष्येण प्रधर्षितः कृत्यविदां ककुदः प्रधानः पार्षतः द्रुपदः तेन द्रोणेन सार्धम् अर्धराज्यस्य परिवर्तनेन विनिमयेन परं केवलं पूर्वोक्तं वचनम् अङ्गीकृत्य स्वीकृत्य तौ उभावपि कुम्भजम्भरिपुभ्यां घटमहेन्द्राभ्यां संभवो जन्म ययोस्तौ द्रोणार्जुनौ उपयममेव प्रथमं द्रोणं यमसमीपमेव प्रवर्तयितुं प्रेषयितुं, द्वितीयमर्जुनम् उपयमं विवाहमेव प्रवर्तयितुं प्रापयितुं कृतं निर्वर्तनं क्रतुसमापनं येन तथाभूतः सन् सोमकान्तिः चन्द्रकान्तिश्च कोपश्च ताभ्यां युक्ते आस्ये ययोस्तौ, सोमकैः द्रुपदसेवकविशेषैः अन्तिके समीपे उपास्यौ सेव्यौ च, पुत्री च पुत्रश्च पुत्रौ द्रौपदीधृष्टद्युम्नौ भागीरथीतटवनम् आवसथः स्थानं यस्य तस्य मुनिराजस्य याजस्य याजनाम्नः याजनमेव पुत्रेष्टीकरणमेवानुग्रहः तेन परिजग्राह स्वीचकार । वीरोऽर्जुनो जामाता भवतु द्रोणस्तु मत्पुत्रहस्तात् म्रियतामिति कन्यापुत्रौ यज्ञकर्मणा संपादयामासेति भावः ॥ १० ॥

ततोऽपि धृतराष्ट्रोऽपि तपोभिः लब्धं चक्षुरिवेत्युत्प्रेक्षा, अन्धस्य नेत्रलाभः परमसुखदः तद्वदस्यापि युधिष्ठिरलाभ इत्यर्थः । अमुं धर्मतनयं धर्मराजं तपनीयपीठं सुवर्णसिंहासनम् आरोप्य आवर्जितैः भागीरथ्यादिभ्यः संपादितैः कलशवारिभिः अभ्यषिञ्चत्, पौराः पुरसंबन्धिजनाश्च आनन्दबाष्पसलिलैः अवनिं भूमिम् अभ्यषिञ्चन् । तस्य यौवराज्याभिषेकेण सर्वेषामानन्दो जात इति भावः ॥ १४ ॥

अङ्गदेन केयूरेण निर्विशेषं तुल्यं यथा तथा धरणिम् आबिभ्रतः धारयतः स्वभुजबलेन भूमिं पालयतः वासवसन्निभस्य पराक्रमे इन्द्रतुल्यस्य धर्मराजस्य नयेन नीत्या उदिताभिः

---

१ क. ख. वसतेति नास्ति । २ क. ख. 'परिवर्तनमात्रमङ्गी' । ३ क. एवेति नास्ति । ४ क. ख. कृतनिर्वर्तनः । ५ क. तटेति नास्ति । ६ क. तत इत्यधिकम् । ७ क. 'रवनीम् ।

पारेसिन्धु प्रथितमेथ तं प्रत्यहं वर्धमानं
सोढुं पार्थाभ्युदयमपटोः स्वात्मजस्यानुरोधात्।
प्रीतो राजाऽप्यनुजतनयप्रेममार्गे प्रयातुं
मातुर्दोषादिव बहिरगादन्तरप्यन्धभावम्॥ १६॥

तदनु सौबलीजानिरसौ बलीयसाऽमर्षेण धर्षितः सहजविनयं धर्मतनयमाहूय कृतावहित्थो गिरमित्थमुत्थापयामास॥ ११॥

वत्स संप्रति वारणावतं पुरमुपेत्य वारणाननगुरोरुत्सवं वारणाय विपदां निषेव्य सहानुजैस्तत्र वास्तव्यो निरवधिसुखमनुशाधि वसुधामिति॥ १२॥

तस्याशयं हृदि विदन्नपि धर्मसूनु-
स्तातस्य वाचमविलम्ब्य तथेत्यगृह्णात्।

---

उत्पन्नाभिः नानाधनानाम् आयतिभिः धनाद्यागमैः समस्तमपि पत्त्यं गृहं कौरवाणां कुतुकैः आह्लादैः सह कोशीबभूव। तत्र गृहं कोशीबभूव द्रव्यैः परिपूर्णं बभूव, कौतुकं तु कोशीबभूव कुड्मलीबभूव, संकोचं प्रापेत्यर्थः। कुतुकैः सह कोशीबभूवेति जनरञ्जनसाहित्योक्तेः सहोक्तिरलंकारः। तदुक्तम् 'सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः' इति॥ १५॥

अथ धर्माभिषेकानन्तरं पारेसिन्धु समुद्रपरतीरे प्रथितं प्रसिद्धं प्रत्यहं वर्धमानं तं पार्थानाम् अभ्युदयं कीर्तिधनागमादिरूपं सोढुमपटोः असमर्थस्य स्वात्मजस्य स्वपुत्रस्य दुर्योधनस्य अनुरोधात् मनोरथानुरूपव्यापारात् प्रीतो राजा धृतराष्ट्रोऽपि अनुजस्य कनिष्ठबन्धोः पाण्डोः तनयानां प्रेममार्गे प्रयातुं गन्तुं मातुः अम्बिकायाः दोषात् पुत्रार्थं देवरं व्यासं प्रति गमनसमये स्वनेत्रबन्धनापराधात् बहिरिव बहिरिन्द्रियचक्षुरिव अन्तरपि अन्तःकरणेऽपि अन्धभावम् अन्धत्वम् अगात् प्राप्तवान्। यथा बहिश्चाक्षुषज्ञानाभाववान् तथान्तःकरणेऽपि विचारशून्यो जात इति भावः॥ १६॥

तदनु बलीयसा अतिबलवता अमर्षेण क्रोधेन धर्षितः पराभूतः सौबली गान्धारी जाया यस्य सोऽसौ धृतराष्ट्रः सहजः स्वतः सिद्धः विनयो यस्मिन् तं धर्मतनयं धर्मराजम् आहूय कृता अवहित्था आकारगोपनं येन तथाभूतः सन् इत्थं वक्ष्यमाणप्रकारेण गिरम् उत्थापयामास उवाचेत्यर्थः॥ ११॥

हे वत्स! संप्रति वारणावतनामकं पुरम् उपेत्य गत्वा विपदां वारणाय नाशाय वारणाननस्य गजाननस्य गुरोः पितुः शिवस्य उत्सवं निषेव्य अनुभूय तत्र वारणावते वास्तव्यः वसन् "वसेस्तव्यत्कर्तरि—" इति कर्तरि तव्यत्प्रत्ययः। पौरजनेभ्यः भवति उत्पद्यते तया गिरा वाण्या स्तव्यः स्तुत्यः त्वं वसुधां निरवधिसुखम् अपरिमितसुखं यथा तथा अनुशाधि पालय इति॥ १२॥

तस्य धृतराष्ट्रस्याशयं केनचिन्निमित्तेन पाण्डवाः ग्रामान्तरे स्थाप्या इत्यभिप्रायं हृदि

---

१ क. 'मथितम्', ख. 'ममितम्'। २ क. वास्तव्यपौरजनभव्यया गिरा स्तव्यो, ख. वास्तव्यो गिरा पौरजनभुवा स्तव्यो। ३ क. 'सुखमनु', ख. 'सुखेनानु'।

तत्तादृशेषु गुरुशासनपालनेषु
कूलंकषं गुणगणेन कुलं हि पूरोः ॥ १७ ॥
धर्मभूरनुजैः साकं तद्गिरा तत्पुरं ययौ ।
कर्मचोदनया जीवः कायमन्यमिवेन्द्रियैः ॥ १८ ॥
सविनयमथ दर्शितं महीयः सचिववरेण पुरोचनेन शत्रोः ।
जतुगृहमभजन्त तत्र पार्था जगदिव नूत्नमशेषवस्तुपूर्णम् ॥ १९ ॥
तत्र ते विदुरभृत्यभाषितैः सौबलेयशतमन्युहेतुना ।
पञ्चतामपि परां धनञ्जयप्रापणेन जतुधाम्नि मेनिरे ॥ २० ॥
शिशमयिषुरपि द्विषां स मन्त्री निभृतशरारुरिमान्निगूढभावान् ।
अवसरमनलावृते निकेते प्रतिदिनमेधयितुं प्रतीक्षते स्म ॥ २१ ॥

---

स्वमनसि विदन्नपि जानन्नपि धर्मसूनुः तातस्य वाचम् अविलम्ब्य विलम्बमकृत्वा तथेति तथास्त्वित्युक्त्वा अग्रहात् स्वीचकार । तादृशेषु गुरुशासनानां गुर्वाज्ञानां पालनेषु तत् प्रसिद्धं पूरोः कुलं गुणानां गणेन समूहेन कूलंकषं परिपूर्णम् । अत्र पूर्वार्धोक्तविशेषस्योत्तरार्धोक्तसामान्येन समर्थनादर्थान्तरन्यासोऽलंकारः । तदुक्तम् 'उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः' इति ॥ १७ ॥

धर्मभूः धर्मराजः अनुजैः बन्धुभिः साकं तस्य धृतराष्ट्रस्य गिरा तत्पुरं वारणावतनगरं ययौ जगाम । कः कैः सह कमिव, जीवः लिङ्गदेहविशिष्टः इन्द्रियैः सह कर्मणः पुण्यपापरूपस्य चोदनया प्रेरणया अन्यं कायं देहमिव ॥ १८ ॥

अथ पार्थाः तत्र वारणावते शत्रोः दुर्योधनस्य सचिववरेण अमात्यश्रेष्ठेन पुरोचनेन सविनयं यथा तथा दर्शितं महीयः अतिविशालं विशेषवस्तुभिः पदार्थैः पूर्णं जतुगृहं लाक्षानिर्मितं गृहं नूत्नं नूतनं जगदिव अभजन्त ॥ १९ ॥

तत्र तस्मिन् जतुधाम्नि लाक्षागृहे ते पाण्डवाः सुबलायाः देवमातुः अपत्यं पुमान् सौबलेयः स चासौ शतमन्युः क्रोधः हेतुर्यस्य तेन धनञ्जयस्य अर्जुनस्य प्रापणेन प्राप्त्या स्वेषाम् एका पञ्चता पञ्चत्वं संख्या अस्ति अथ विदुरभृत्यभाषितैः विदुरप्रेषितभृत्यभाषणैः सौबलेयानां गान्धारेयाणां दुर्योधनादीनां शतमन्युः इन्द्रः हेतुः कारणं यस्य तेन धनञ्जयस्य अग्नेः प्रापणेन अन्यामपि पञ्चतां मरणं मेनिरे मानितवन्तः । धनञ्जयप्राप्त्या एका पञ्चताऽस्ति तथैवान्याऽपि स्यादिति निश्चितवन्त इति भावः ॥ २० ॥

निभृतः गुप्तः शरारुः घातुकः द्विषां शत्रूणां मन्त्री सः पुरोचनः निगूढः गुप्तः भावः स्ववधकरणरूपोऽभिप्रायो येषां तान् इमान् पाण्डवान् शिशमयिषुः शमयितुमिच्छुरपि अनलावृते अनलोद्दीपकलाक्षादिवस्त्वावृते निकेते गृहे एधयितुं वर्धयितुं प्रतिदिनम् अवसरं प्रतीक्षते स्म प्रतीक्षाञ्चक्रे इति विरोधः, शिशमयिषुः मारयितुमिच्छुः अन-

---

१ ख. 'मन्यदिवं' ।

जातुचिदपत्यैः सह [1] भृत्यभावमिषादमीषामामिषफलेषु विषं निनीषन्त्या निषादयोषित इव तस्य पुरोचनस्य निद्रायामपि द्राघिमाणं दातुकामेन तत्र सद्मनि क्षणदायामाशुशुक्षणिं क्षणान्निक्षिप्य जननीसोदरजननीचेतरसुखसंवेशमणिमञ्चायमानभुजशिखरसीमेन भीमेन [4] विदुरकिंकरकृतलिङ्गया सुरङ्गया निर्जग्मे ॥ १३ ॥

पार्थद्विषां विग्रहमेकमेकं विभज्य सप्तापि शिखाः कृशानोः ।
स्वीकृत्य तृप्ताः स्वशिरःप्रकम्पैः संश्लाघिरे तत्र समीरसूनुम् ॥२२॥

प्रपश्यतां पौरनृणां प्रभाते सांक्रामिकं रोगमिवाभितापम् ।
आविभ्रतामश्रुभिरेव शान्तिरापादि तत्राग्निहठात्क्रियायाः ॥ २३ ॥

तत्रालये दग्धतनूनथैतान्निश्चित्य पार्थान्निजचारवाचा ।
दुःखापदेशेन सुयोधनाद्याः संमोदबाष्पं ससृजुः सभायाम् ॥२४॥

---

लाक्षृते अनलव्याप्ते गृहे एधयितुम् एधान् काष्ठानि कर्तुं दग्धुम् अवसरं तेषाम् असावधानतायुक्तसमयं प्रतीक्षते स्मेति विरोधपरिहारः ॥ २१ ॥

जातुचित् कदाचित् अपत्यैः पञ्चभिः पुत्रैः सह भृत्यभावमिषात् सेवकत्वकपटात् हेतोः अमीषां पाण्डवानाम् आमिषफलेषु भक्ष्यफलेषु भक्ष्यमांसफलेषु वा विषं निनीषन्त्याः गुप्तं स्थापयितुमिच्छन्त्याः निषादयोषित इव तस्य पुरोचनस्य निद्रायामपि द्राघिम्णं दीर्घत्वं मरणमित्यर्थः, दातुं कामः इच्छा यस्य तेन जननीसोदरजनानां नीचेतरत् बहुलं यत् संवेशसुखं निद्रासुखं तदर्थं मणिमञ्चायमाना रत्नमयमञ्चकवदाचरन्ती भुजशिखरयोः स्कन्धयोः सीमा यस्य तेन भीमेन तत्र तस्मिन् सद्मनि क्षणदायां रात्र्याम् आशुशुक्षणिम् अग्निं क्षणान्निक्षिप्य विदुरकिंकरेण कृतं लिङ्गं गुप्ताकारो यस्याः तया सुरङ्गया भूतलान्तर्गतगुप्तमार्गेण निर्जग्मे बहिर्निर्गतम् । जतुगृहाग्निना सपुत्रनिषादीपुरोचनौ दग्धुं तत्राग्निं प्रक्षिप्य गुप्तमार्गेण जननीबन्धुभिः सह भीमो जगामेति ॥ १३ ॥

कृशानोः अग्नेः सप्तापि शिखाः जिह्वारूपाः ज्वालाः पार्थद्विषां निषादीतत्पुत्रपुरोचनानां सप्तानाम् एकम् एकं विग्रहं शरीरं विभज्य स्वीकृत्य च तृप्ताः सत्यः स्वशिरःप्रकम्पैः स्वाग्रचालनैः समीरसूनुं स्वमित्रपुत्रं भीमं संश्लाघिरे श्लाघितवत्य इवेति इवादिकपदाभावात् गूढोत्प्रेक्षालंकारः ॥ २२ ॥

प्रभाते ज्वलद्गृहं प्रपश्यताम् अत एव सांक्रमिकं संसर्गजन्यं खर्जूप्रभृतिरोगमिव अभितापम् आविभ्रतां धारयताम् अग्नेस्तापो दाहेन लाक्षागृहे वर्तते तद्गृहदर्शनसंसर्गेण प्रपश्यतां तापो जात इत्यर्थः । पौरजनाभितापो दुःखजन्यः पौरनृणामश्रुभिः रोदनजन्यनेत्रोदकैरेव । तत्र गृहे अग्नेः हठात्क्रियाया बलात्कारेण दाहक्रियायाः शान्तिः आपादि संपादिता। पौरजनैः स्वोपायैरग्निशान्तेरभावाद्रुदितमिति भावः ॥ २३ ॥

अथ सुयोधनाद्याः सभायां निजचाराणां स्वकीयदूतानां वाचा तत्र तस्मिन् आलये

---

१ क. ख. पञ्चभिरित्यधिकम् । २ ख. °मामिषेषु । ३ क. ख. °संवेशसुखम° । ४ क. तस्माद्गृहादित्यधिकम् । ५ क. ख. शश्लाघिरे । ६ क. पुत्रम् ।

तावत्सोऽपि गन्धवहसूनुरन्धतमसधुरंधरं सक्थिजवसमुत्थितमरुदुत्पाटिततरुविटपविघटनसमुद्भ्रान्तशकुन्तकुलबद्धनिष्वानमध्वानं विलङ्घ्य कस्यचित्काननकासारतीरतरोरधिपरिसरमेतानवतार्य तदीयपरिरक्षणविचक्षणजागरः क्षणमवतस्थे ॥ १४ ॥

तत्र कापि तरुणी तडिदाभा तं ययौ जतुगृहे सुखितेन।
चूषणाय तपसां वनमार्गे चोदिता हुतवहेन शिखेव ॥ २५ ॥
अधरोष्ठविभागरेखिका सुदृशोऽस्या वदनेऽस्ति वा न वा।
इति सा हृदि तस्य संशयं परिमार्ष्टुं किल मौनमत्यजत् ॥ २६ ॥

एतां प्रशास्ति भुजया वनराज्यसीमा-
मेकः स्वयं नरभुजामृषभो हिडिम्बः।
अर्धांशभाग्जनवधे सममन्तकेन
तुल्याभिधानपदया स्वसृमान्मया यः ॥ २७ ॥

---

जतुगृहे एतान् पार्थान् दग्धतनून् निश्चित्य दुःखापदेशेन दुःखमिषेण संमोदबाष्पम् आनन्दजन्यनेत्रजलं ससृजुः तत्यजुः। मनस्यानन्दो जातो, बहिर्दुःखाभिनयः कृत इति भावः ॥ २४ ॥

यावद्गृहदाहादि चलितं तावत् सः गन्धवहसूनुः भीमोऽपि अन्धतमसानां गाढतमसां धुरंधरभारवाहकं तद्व्याप्तमित्यर्थः। अध्वानं मार्गं विलङ्घ्य कस्यचित्काननकासारस्य वनसंबन्धितडागस्य तीरतरोः अधिपरिसरं समीपभागे एतान् जननीसहितबन्धून् अवतार्य तदीयपरिरक्षणे विचक्षणः कुशलः जागरो यस्य तथाभूतः सन् क्षणम् अवतस्थे तस्थौ। कीदृशं अध्वानम्, सक्नोः ऊर्वोः जवात् वेगात् समुत्थितेन मरुता उत्पाटितानां तरूणां विटपविघट्टनेन स्वस्थितिशाखाभ्रंशेन समुद्भ्रान्तैः उत्कटभ्रमवद्भिः शकुन्तकुलैः पक्षिसमूहैः बद्धः आरब्धः निष्वानः शब्दो यस्मिन् तम् ॥ १४ ॥

तत्र तद्वाक्यवृक्षसमीपे तडितः प्रभेव प्रभा अङ्गकान्तिर्यस्याः सा काऽपि तरुणी तं भीमं ययौ। तामुत्प्रेक्षते, वनमार्गे तमसां चूषणाय पानाय नाशायेत्यर्थः, जतुगृहे सुखितेन गृहभक्षणात्तृप्तेन हुतवहेनाग्निना चोदिता प्रेषिता स्वकीया शिखेव ॥ २५ ॥

अस्याः सुदृशः सुलोचनायाः उत्तरोष्ठात् सकाशात् अधरोष्ठविभागः तस्य रेखिका रेखारूपं चिह्नम् अस्ति वा नास्ति इति तस्य भीमस्य हृदि संशयं परिमार्ष्टुं दूरीकर्तुमिव सा स्त्री मौनम् अत्यजत्, भाषणसमये ओष्ठविभागो जातः। एवं च संवृत्तमुखत्वं ? सुलक्षणमुखं भीमं प्रत्यवोचदिति भावः। एको वा वाक्यालंकारे ॥ २६ ॥

नरभुजां राक्षसानां मध्ये ऋषभः श्रेष्ठः एकः हिडिम्बः स्वयं भुजया बाहुबलेनेत्यर्थः, एतां वनराज्यस्य सीमां प्रशास्ति रक्षति, यः जनानां वधे मरणे अन्तकेन यमेन समम्

---

१ क. 'बन्धुरं सक्थि'। २ क. ख. 'विटपवसतिविघटन'। ३ क. 'निबद्ध'। ४ क. विचक्षणः क्षण', ख. जागरविचक्षणः। ५ क. ख. मुदितेन। ६ क. ख. एनाम्।

वीतशङ्कमिह तेऽद्य तिष्ठतः कीदृशं ककुदमित्ययं मम।
चित्तरङ्गभुवि नृत्तकौशलीमुत्तरङ्गयति चित्रलासकः॥ २८॥
रुधिरं पातुकामेन तेन वो हन्तुमीरिता।
अधरं पातुकामाऽहमस्मि ते रूपसंपदा॥ २९॥
अद्य ते सविधमापतेदसौ हृद्यमेतदुचितं वचः शृणु।
मारणं रिपुषु तन्वताऽमुना मा रणं कुरु, महान्बलेन सः॥ ३०॥
उपयामविधौ त्वरस्व मे कृपया मारशराः शरारवः।
दिवि वा भुवि वाऽथ दिक्षु वा रमये त्वामुपनीय रंहसा॥ ३१॥
इत्येनां भाषमाणां रजनिचरपतिः क्रोधलिङ्गैः स्फुलिङ्गै-
र्दग्धैर्वाक्ष्णोरभीक्ष्णं स्फुटघटितभुजास्फोटवाचाटिताशः।
बिभ्राणो बभ्रु केश्यं त्वमिह वससि को मृत्युवक्त्रार्धजग्धो
दुर्बुद्धे तिष्ठ यासि क्व पुनरिति गिरा मेदुरः प्रादुरासीत्॥ ३२॥

---

अर्धांशं भजति स्वीकरोति तथाभूतः, तुल्यम् अभिधानपदं वाचकशब्दो यस्यास्तया मया स्वसृमान् भगिनीयुक्तश्च वर्तते। यः प्राणिवधे यमात् दायाद इवार्धांशग्राही हिडिम्बानाम्न्या मया भगिन्या युतश्च वर्तते इति भावः॥ २७॥

इह वने अद्य वीतशङ्कं निःशङ्कं तिष्ठतः ते कीदृशं ककुदं प्राधान्यं धैर्यमित्यर्थः, वर्तते। इत्ययं चित्रलासकः आश्चर्यनटः मम चित्तमेव रङ्गभूः सभाभूमिः तस्यां नृत्तकौशली नृत्यकौशलम् उत्तरङ्गयति प्रकटयति। अस्मिन् भयंकरारण्ये रात्रौ निर्भयस्तिष्ठसि तेन मे मनसि आश्चर्यं जायते इति भावः॥ २८॥

रुधिरं पातुकामेन तेन हिडिम्बेन वः युष्मान् हन्तुम् ईरिता प्रेरिता अहं ते तव रूपसंपदा सौन्दर्यातिशयेन अधरं पातुकामाऽस्मि, त्वत्सौन्दर्यमोहिता त्वयि कामुक्यस्मीत्यर्थः॥ २९॥

मम वचनानुसारेण वर्तसे चेत्तर्हि ते जीवनं भवेत् नान्यथेत्याह द्वाभ्याम्—अद्येति। असौ हिडिम्बः अद्य ते सविधं समीपम् आपतेत् जवेनागच्छेत् अतः मे हृद्यं प्रियम् उचितं हितं वचः शृणु। तदेवाह—रिपुषु मारणं तन्वता शत्रून् निघ्नतेत्यर्थः, अमुना राक्षसेन रणं युद्धं मा कुरु। यतः सः राक्षसः बलेन महान् सर्वापेक्षया अधिको वर्तते॥ ३०॥

त्वं कृपया मे उपयामविधौ विवाहकर्मणि त्वरस्व त्वरां कुरु। त्वराया हेतुमाह—मारेति। मारशराः मदनबाणाः शरारवः घातुकाः, मम प्राणहरा वर्तन्ते इति भावः। मत्स्वीकारेण ते सुखं भविष्यतीत्याह—दिवीति। दिवि अन्तरिक्षे भुवि पृथिव्यां वा दिक्षु दूरदेशे वा रंहसा वेगेन उपनीय रमये। वर्तमानसामीप्ये लट्। विवाहोत्तरं सद्य एव रमयिष्ये इत्यर्थः ३१

रजनीचरपतिः हिडिम्बः इति भाषमाणाम् एनां हिडिम्बां क्रोधलिङ्गैः—अनया तेषां मारणे किमिति विलम्बः कृतः,—इति तदुपरि क्रोधस्तदनुमापकैः अक्ष्णोः स्फुलिङ्गैः क्रोधा-

---

१ क. 'र्दग्धैर्वाक्ष्णो', ख. 'र्दग्धैर्वाक्ष्णो'।

तस्मिन् रक्षसि नेदिष्ठे तादृक्षपरुषाक्षरे।
अपमृत्युरिवोदस्थादनिलस्यात्मसंभवः॥ ३३॥
वृक्षेण वृक्षं गिरिणा गिरीन्द्रं हस्तेन हस्तं वचसा वचश्च।
परस्परेण प्रतिरुध्य घोरं समीकमेतौ सममादधाते॥ ३४॥
स्वसुः समक्षं स्वयमेव मुष्ट्या बलं बिडौजा इव वज्रसख्या।
हिडिम्बमेनं यमराजधानीकुटुम्बिमुख्यं कुरुते स्म भीमः॥ ३५॥

तदनु तिमिरकदम्बेनेव हिडिम्बेन निर्मुक्तात्तस्मादहर्मुखादिव वनात्सं-ध्ययेव सरागया तथा कमलपालिकया सह तपनभानव इव राजसूनवस्ते निष्क्रम्य शालिहोत्रमुनेः सदसि वीतिहोत्रभासं व्यासं भगवन्तमासे-व्य तत्र तन्निदेशादहानि कानिचिदतिवाहयाञ्चक्रुः॥ १५॥

---

म्रिकर्णैः दग्ध्वैव इह वने त्वं मृत्युवक्त्रे अर्धजग्धः अर्धभक्षितः को वससि। हे दुर्बुद्धे! तिष्ठ पुनः पुनः क्व यासि गच्छसीति गिरा मेदुरः युक्तः सन् प्रादुरासीत्। कथंभूतः, अभीक्ष्णं निरन्तरं स्फुटं घटिताः कृताः ये भुजास्फोटाः भुजोपरि हस्तताडनानि तैः वाचा-टिताः वाचालाः कृताः आशाः दिशो येन सः। तथा बभ्रु पिङ्गलं कैश्यं केशसमूहं बिभ्राणः॥ ३२॥

अनिलस्य आत्मसंभवः भीमः तादृक्षाणि तादृशानि उक्तप्रकाराणि परुषाणि रौद्राणि अक्षराणि यस्य तस्मिन्, अर्थगतं पारुष्यं तद्वाचकपदाक्षरेष्वारोप्येयमुक्तिः। तस्मिन् रक्षसि नेदिष्ठे अतिसमीपस्थे सति मूर्तिमान् अपमृत्युरिव उदस्थात् उदतिष्ठत्। रक्षसीति क्लीवत्वनिर्देशेन भीमस्याग्रे तस्य दौर्बल्यं व्यज्यते॥ ३३॥

एतौ भीमराक्षसौ घोरं समीकं युद्धं समं यथा तथा आदधाते चक्राते। किं कृत्वा, परस्परेण अन्योन्येन वृक्षेण वृक्षं गिरिणा गिरीन्द्रं हस्तेन हस्तं वचसा वचश्च प्रतिरुध्य निवार्य। स्ववृक्षेण राक्षसवृक्षं निरुध्य राक्षसोऽपि स्ववृक्षेण भीमवृक्षं निरुध्य। एवं गिरिणा गिरीन्द्रमित्यादावपि ज्ञेयम्॥ ३४॥

भीमः स्वयमेव स्वसुः राक्षसभगिन्याः हिडिम्बायाः समक्षं वज्रसख्या वज्रतुल्यया मुष्ट्या बिडौजाः इन्द्रः वज्रेण बलं बलासुरमिव एनं हिडिम्बं यमराजधान्यां यमनगर्यां ये कुटुम्बिनः कुटुम्बवत्सलाः तेषु मुख्यं कुरुते स्म चकार। हिडिम्बं जघानेति भावः॥ ३५॥

तदनु हिडिम्बवधानन्तरम् अहर्मुखात् उषःकालादिव सरागया प्रीतिमत्या रक्तिम्ना युक्तया च तया कमलपालिकया तत्तडागस्थकमलरक्षित्र्या हिडिम्बया सह ते राजसूनवः पाण्डवाः शालिहोत्रमुनेः सदसि आश्रमे वीतिहोत्रस्य वह्नेः भा इव भाः कान्तिर्यस्य तं व्यासम् आसेव्य वन्दनादिना तत्सेवां कृत्वा तदाज्ञया अतिवाहयाञ्चकुर्यापयामासुः। अत्रोपमानोपमेयवाक्यावयवेषु पृथगिवशब्दप्रक्षेपात् मालोपमालंकारः॥ १५॥

---

१ ख. 'वनमध्यात्सं' । २ क. सरसि। ३ क. कतिचिदति'।

पुत्रं तत्र घटोत्कचं पवनभूसङ्गादनङ्गातुरा
प्राप्तं सर्वगुणैर्मनोजवसतां प्रासूत नक्तञ्चरी ।
कुर्यां वः स्मृत एव कर्मसु हरेः शक्तेरपि स्रंसना-
मित्युक्त्वा स पितॄन्यथाभिलषितं युक्तस्तया निर्ययौ ॥ ३६ ॥

ततस्ते वन्याशनैर्धन्या धारितवसुधासुधाशनाकृतयः प्रावृषमिव बकबलाक्रान्तां पातालनगरीमिव प्रत्यहं वर्धमानवलिशोकामङ्गराज्यसीमामिव सूर्यतनयानुकूलप्रतिष्ठां रविरथाक्षधुरमिवैकचक्रां पुरीं क्रमादाक्रम्य कस्यचिद्गृहमेधिनो गृहमध्यमेत्य सुखमध्यवात्सुः ॥ १६ ॥

भिक्षामटद्भिरथ तत्र पृथाकुमारैरर्धं विभज्य पृथगर्पितमन्नराशेः ।
आकण्ठमभ्यवहरन्निखिलैः प्रतीकैः पुत्रो बभूव मरुतः पुनरुक्तपोषः ३७

तत्र तत्र द्विजैरेते पृष्टा नाशं पृथाभुवाम् ।
इत्यूचुर्वयमत्रैव विद्मस्तेषां तु संस्थितिम् ॥ ३८ ॥

---

तत्र सरस्तीरे अनङ्गातुरा मदनपीडिता सा नक्तञ्चरी राक्षसी हिडिम्बा पवनभुवः भीमस्य सङ्गात् घटोत्कचनामानं पुत्रं प्रासूत । कीदृशं पुत्रं, सर्वगुणैर्मनोजवसतां पितृसाम्यं प्राप्तम् । 'मनोजवसः पितृसंनिभः' इत्यमरः । स घटोत्कचः पितॄन् भीमादीन् इत्युक्त्वा तया मात्रा युक्तः सन् यथाभिलषितं यथेच्छं निर्ययौ । इति किं, कर्मसु दुष्करव्यापारेषु स्मृत एव अहं हरेरपि इन्द्रस्यापि शक्तेः सामर्थ्यस्य, आयुधविशेषस्य च स्रंसनां व्ययं कुर्याम् ॥ ३६ ॥

ततः वन्यानां वनसंबन्धिफलादीनाम् अशनैः भक्षणैः धन्याः स्वस्तिमन्त ते पाण्डवाः धारिता वसुधासुधाशनानां भूदेवानां—ब्राह्मणानाम् आकृतिर्यैस्ते तथाभूताः सन्तः एकचक्रां पुरीम् आक्रम्य कस्यचिद्गृहस्थाश्रमिणो गृहमध्यमेत्य प्राप्य सुखं यथा तथा अध्यवात्सुः वसन्ति स्म । कीदृशां पुरीं, प्रावृषमिव बकबलेन बकराक्षसबलेन, बकपक्षिसमूहेन च आक्रान्तां पातालजगतीमिव पाताललोकमिव । वर्धमानः वृद्धिं गतः शोको देयभागशोको यस्यां, वर्धमानः क्षीणतां गतः बलिशोको बलिदैत्यशोको यस्यां ताम् अङ्गराज्यसीमामिव । सूर्यतनयायाः यमुनायाः अनुकूलं तीरानुरोधेन प्रतिष्ठा स्थितिर्यस्याः, अन्यत्र सूर्यतनयस्य कर्णस्य अनुकूला प्रतिष्ठा यस्याः ताम् । रविरथाक्षस्य धुरमिव एकचक्रां तन्नाम्नीम्, अन्यत्र एकं चक्रं यस्याः ताम् ॥ १६ ॥

अथ तत्र एकचक्रायां भिक्षामटद्भिः गच्छद्भिः पृथाकुमारैः अन्नराशेः पृथक् अर्धं विभज्य अर्पितमन्नम् आकण्ठम् अभ्यवहरन् भक्षयन् मरुतः पुत्रः निखिलैः प्रतीकैः अवयवैः पुनरुक्तः द्विगुणितः पोषः पुष्टिर्यस्य तथाभूतो बभूव ॥ ३७ ॥

तत्र तत्र तस्मिंस्तस्मिन् स्थले द्विजैः पृथाभुवां पार्थानां नाशं मरणं पृष्टाः एते पाण्डवाः 'वयम् अत्रैव अस्यां नगर्यामेव तेषां पाण्डवानां संस्थितिं मरणं, सम्यक् स्थितिं

---

१ क. °भुवमिव, ख. °जगतीमिव । २ ख. °तनुजे° । ३ . °रश्मिम् । ४ क. ख. हरन्नखिलैः ।

यक्षेण केनापि हतो हिडिम्ब इति ब्रुवाणेषु मिथो द्विजेषु।
आकूतगर्भं हसितं सगर्भ्याश्चक्रुर्मुखं वीक्ष्य समीरसूनोः॥ ३९॥

एकदा सायमन्तर्गृहे निरवग्रहं निष्पतद्भिर्बाष्पैस्तरङ्गितोत्तमाङ्गमुत्सङ्गभुवि पत्युरपत्यं पुरोधाय यातुधानापराधभयानुरोधेन मन्दितं क्रन्दितमुत्सृजन्तीं कुन्ती समुपसृत्य विषादनिदानं विप्रायताक्षीमप्राक्षीत्। साऽपि तां कृपालुतया हृदि लगद्गदां गद्गदाक्षरमाचचक्षे॥ १७॥

साधयेयमिति धर्मसंग्रहं संदधाति मिथुनं परस्परम्।
आधये परमनेकजन्मनोरावयोरजनि पापसंग्रहः॥ ४०॥

अयि किं ब्रवीमि परिपाकमंहसा-
मतिभीषणो बक इति क्षपाचरः।
स्वसुरादरात्स्वयमुपागतो यमो
यमुनावनान्तमवलम्ब्य वर्तते॥ ४१॥

---

च विद्मः जानीमः' इति ऊचुः। सत्यस्य हानिर्मा भूदिति विदग्धतया श्लिष्टमुत्तरं दत्तवन्त इति भावः॥ ३८॥

द्विजेषु 'केनापि यक्षेण हिडिम्बो हतः' इति मिथो ब्रुवत्सु सत्सु सगर्भ्याः युधिष्ठिरादयो भ्रातरः समीरसूनोः मुखम् वीक्ष्य आकूतम् 'एतदस्य कर्म न जानन्ति' इत्यभिप्रायः गर्भे यस्य तत् हसितं हास्यं चक्रुः॥ ३९॥

एकदा सायं सायंकाले अन्तर्गृहे निरवग्रहं निष्प्रतिबन्धं निष्पतद्भिर्बाष्पैः नेत्रोदकैः तरङ्गितं संजाततरङ्गम् उत्तमाङ्गं शिरो यस्य तत् अपत्यं पुत्रं पत्युः उत्सङ्गभुवि समीपभूम्यां पुरोधाय अग्रे निधाय यातुधानात् बकराक्षसात्—बहुदिवसैरेको मनुष्यो देयः तद्विषयेऽपि एषा रोदितीति क्रुद्धो भवेदिति—यद्भयं तदनुरोधेन मन्दितं मन्दं कृतं क्रन्दितं रुदितशब्दम् उत्सृजन्तीं प्रकटयन्तीं विप्रस्य आयताक्षीं विपुलनेत्रां पत्नीं प्रति कुन्ती समुपसृत्य समीपं गत्वा विषादनिदानं दुःखकारणम् अप्राक्षीत् पप्रच्छ। साऽपि विप्रपत्न्यपि कृपालुतया हृदि अन्तःकरणे लगद्गदां जायमानहृद्रोगां तां कुन्तीं गद्गदाक्षरं दुःखजन्यबाष्पेण कण्ठरोधात् अव्यक्ताक्षरम् आचचक्षे कथयामास। दुःखकारणं कर्मार्थात्संबध्यते॥ १७॥

धर्मसंग्रहं साधयेयं कुर्याम् इति हेतुना मिथुनं स्त्रीपुंसं परस्परं—स्त्री पुंसा पुमान् स्त्रिया च, संदधाति जायापतित्वेन मिलति। परंतु अनेकजन्मनोः बहुजन्मनोः आवयोः दम्पत्योः पापसंग्रहः आधये विवाहप्रभृतिमनोव्यथार्थम् अजनि जातः॥ ४०॥

अयीतिकोमलामन्त्रणेऽव्ययम्। अयि कुन्ति! अंहसां पापानां परिपाकं परिणामं किं ब्रवीमि; अतिशयेन भीषणः भयंकरः बक इति बकनामा क्षपाचरः राक्षसः स्वसुः भगिन्याः यमुनायाः आदरात् स्वयम् आगतः साक्षात् यम इव यमुनावनान्तं यमुनातीरगतवनमध्यम् अवलम्ब्य अधिष्ठाय वर्तते॥ ४१॥

---

१ क. ख. 'त्तमाङ्गमपत्यमुत्सङ्गभुवि पु'। २ क. ख. 'मिवागतो।

मा भून्नाशो युगपदिति नो भीरुभिर्जातु पौरैः
पूर्वैर्लब्ध्वाऽवसरमसकृत्प्रार्थनाभिः प्रकॢप्तम् ।
एकैकस्मिन्नहनि वितरत्येकमेकं पुमांसं
कृत्वा तस्मै बलिमिह जनस्तुङ्गमन्नस्य राशिम् ॥ ४२ ॥

तादृशः प्रलयकालकठोरो वासरः स तु ममालयभूमेः ।
द्वारि तिष्ठति बकात्परितुष्टात्पारितोषिकमिवाद्य जिघृक्षुः ॥ ४३ ॥

बालानिव प्रवयसोऽपि नराशनोऽयं
भुञ्जीत चेन्मम स एव हि पुण्यपाकः ।
बालेन भाव्यमिति तद्बलिषु व्यवस्था
कण्ठे पुनः कलयति क्रकचस्य धाटीम् ॥ ४४ ॥

संतानमूलमिदमेकमपत्यमास्ते
संवर्तकालसहजश्च स राक्षसेन्द्रः ।
संभूयते च समयः क्षपया महत्या
संतीर्यतां कथमियं सखि मे विपत्तिः ॥ ४५ ॥

---

इह नगर्यां जातु कदाचित् भीरुभिः भयशीलैः पूर्वैः पूर्वजैः पुरवासिभिः नः अस्माकं सर्वेषां युगपत् एकसमये नाशः मा भूत् मा भवतु इति हेतोः असकृत् पुनः पुनः प्रार्थनाभिः अवसरं राक्षसानुमोदनावकाशं लब्ध्वा प्रकॢप्तं प्रतिदिनम् इयत्तया देयत्वेन निश्चितं तुङ्गम् उच्चम् अन्नस्य राशिं कृत्वा एकैकस्मिन्नहनि एकम् एकं पुमांसं पुरुषं बलिं जनः पौरलोकः तस्मै राक्षसाय वितरति ददाति । जनः प्रतिदिनम् एकं देयं पुरुषं प्रतिगृहं क्रमेण पर्यायेण ददातीत्यर्थः ॥ ४२ ॥

तादृशः वक्तुमविषयः क्रमप्राप्तः प्रलयकालवत्कठोरः रौद्रः सः वासरस्तु मम आलयभूमेः गृहस्थलस्य द्वारि तिष्ठति, यस्मिन्नस्मत्पुरुषो देयः सः वासरः क्रमेण करभागादानार्थी राजपुरुष इव मम गृहं प्राप्तः । द्वारि तिष्ठतीत्यनेन विलम्बं न सहते इति भावः । तं वासरं उत्प्रेक्षते, अद्य समीचीनबलिदानेन परितुष्टात् बकराक्षसात् पारितोषिकं संतोषेण देयं धनादि जिघृक्षुरिव ग्रहीतुमिच्छुरिव वर्तते ॥ ४३ ॥

अयं नराशनः राक्षसः बालानिव प्रवयसोऽपि वृद्धानपि चेत् भुञ्जीत भक्षयेत् तर्हि स एव वृद्धभोजनमेव—विधेयाभिप्रायेण पुंल्लिङ्गता—मम पुण्यस्य पाकः फलोदयः । परंतु तन्नास्तीत्याह—बालेनेति । बालेन भाव्यमिति तस्य राक्षसस्य बलिषु व्यवस्था पुनः मम कण्ठे क्रकचस्य करपत्रस्य धाटीं शैलीं कलयति करोति । इयं व्यवस्था क्रकचेन कण्ठच्छेदव्यथां करोतीति भावः ॥ ४४ ॥

'त्यजेदेकं कुलस्यार्थे' इतिन्यायेन एकमपत्यं देयमिति चेदत आह—**संतानेति ।** संतानस्य वंशस्य मूलं बीजम् एकमपत्यमास्ते । कृपया बालं न भक्षयेदिति चेदत आह—

---

१ क. नित्यम् । २ ख. कलयते ।

इत्युदीर्य सरभसावगाहनहृदयसमुत्कूलितं शोकसरःपूरमिव नयनसलिलं विशृङ्खलं खेलयन्त्यै तस्यै तनयेषु द्वितीयः समरेष्वद्वितीयः सुतः सखि ते दीयते स एव तत्प्रीणनप्रणाशनयोर्बली भविष्यति मा भैषीरिति सा नरदेवमहिषी प्रत्यश्रौषीत् ॥ १८ ॥

अनयोरथ दम्पत्योरश्रुहेतोः शुचः पदे।
आनन्दस्यातिरेकोऽभूदादेश इव तत्क्षणम् ॥ ४६ ॥

तमिमं प्रसुवा रहस्युदन्तं
गदितो वायुसुतो बलावलेपात्।
मनसा न बकं लिलेह रात्र्या-
मनसा धारितमन्नराशिमेव ॥ ४७ ॥

---

संवर्तेति। सः प्रलयकालसहोदरः निष्कृप इत्यर्थः। पुत्रदाने विलम्बश्च नास्तीत्याह—समयः दानकालः दुःखेन महत्या वस्तुतः अल्पया क्षपया संभूयते संनिधो भवति। हे सखि! इयम् उक्तरूपा अतिमहती मे विपत्तिः कथं संतीर्यतां निराक्रियताम्। केनापि प्रकारेण निराकर्तुमशक्येति भावः॥ ४५ ॥

इति उदीर्य उक्त्वा सरभसं सवेगं यथा तथा अवगाहनं शोकसरसि प्रवेशः तेन हृदयात् समुत्कूलितम् ऊर्ध्वं गतं शोकसरसः पूरमिव नयनसलिलं विशृङ्खलम् अप्रतिबन्धं खेलयन्त्यै तस्यै विप्रपत्न्यै हे सखि! 'तनयेषु द्वितीयः समरेषु अद्वितीयः निरुपमः सुतः ते तुभ्यं दीयते। स एव तस्य राक्षसस्य प्रीणनप्रणाशनयोः तृप्तिप्राणहरणयोः बली भविष्यति देयपुरुषबलिः बलवांश्च भविष्यति। मा भैषीः भयत्यागं कुरु' इति सा नरदेवस्य पाण्डोः महिषी पट्टराज्ञी कुन्ती प्रत्यश्रौषीत् प्रतिज्ञातवती॥ १८ ॥

अथ तत्क्षणम् अनयोः दम्पत्योः अश्रुणः हेतोः कारणस्य शुचः पदे स्थाने, सुबन्ते पदे च आनन्दस्य अतिरेकः अतिशयः आदेश इव अभूत्। त्वां युवाम् इत्यादीनां पदानां त्वा वामित्याद्यादेशैर्यथा रूपान्तरं भवति तद्वत् शोकस्थाने आनन्दो जातः, शोकाश्रूण्येवानन्दाश्रूणि जातानीति भावः॥ ४६ ॥

प्रसुवा मात्रा कुन्त्या तम् इमम् उदन्तं वृत्तान्तं रहसि एकान्ते गदितः उक्तः वायुसुतः भीमः बलस्यावलेपात् गर्वात् रात्र्यां मनसा बकं राक्षसं न लिलेह आस्वादं न जगृहे, मनसि नानीतवानित्यर्थः। अपि तु अनसा शकटेन धारितमन्नराशिमेव लिलेह, श्वो दध्योदनादि बहु मिलिष्यतीति वारंवारं मनसा चिन्तितवानित्यर्थः। यद्यपि प्रसुवेत्यत्र तृतीयैकवचने " ओः सुपि " इति यणादेशेन प्रस्वेति भाव्यं तथापि सूतेऽसौ सूः प्रकृष्टा सूः प्रसूरिति विग्रहे 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञा' इत्युक्तत्वात् प्रशब्दस्य पूःनः क्रियायोगाभावेन तन्निरूपितगतिसंज्ञाभावात् 'गतिकारकेतरपूर्वपदस्य यण् नेष्यते' इति यणोऽभावः॥ ४७ ॥

---

१ ख. 'स्कूलितशोक'। २ ख. मयेत्यधिकम्। ३ क. ख. 'त्प्राणनाशने बली।

अपरेद्युरखिलजनानन्दकरे भगवति दिनकरे मन्देहकुलमवस्कन्दितुमुदयगिरिशिखरमधिरूढे ॥ १९ ॥—

स शकटमधिरुह्य भीमसेनो
दधिकलशीकुलशीफरान्नराशिम् ।
वकभवनवनं विवेश शाखा-
नगरमिवान्तकवीरराजधान्याः ॥ ४८ ॥

कङ्कालोच्चयकल्पितान्तकचमूशाटीकुटीविभ्रमे
तत्र क्रुद्धतदौपवाह्यमहिषश्वासोग्रचक्रानिले ।
गृध्रध्वाङ्क्षसृगालघोषविकसद्रक्षोपदानस्तवे
भुञ्जानः शकटस्थ एव स तदा चक्रे महत्क्ष्वेडितम् ॥४९॥

सोऽपि तदिदं निशम्य वलिपुरुषविशेषभारमन्दितशकटागमेन प्रथममेव कृतोन्मेषं रोषं द्विगुणयन् गिरिकन्दरमन्दिरमुखात्सरभसं विनिर्गत्य ॥ २० ॥—

---

अपरेद्युः अपरस्मिन्नहनि अखिलजनानाम् आनन्दकरे दिनकरे मन्देहकुलं सूर्यरथप्रतिरोधकानाम् एतन्नामकराक्षसानां कुलम् अवस्कन्दितुं पराजेतुम् उदयगिरिशिखरम् अधिरूढे प्राप्ते इत्यर्थः । शत्रुकुलपराजयाय दुर्गाग्रमारूढे इति भावः ॥ १९ ॥—

स भीमसेनः दधिकलशीनां दधिघटानां कुलेन शीफरः मिश्रितः अन्नराशिर्यस्मिन् तं शकटम् अधिरुह्य वकस्य भवनं यस्मिन् तद्वनं, यद्वा वकभवनयुतं वनं विवेश। वनमुत्प्रेक्षते, अन्तकवीरस्य राजधान्याः संयमिन्याः शाखानगरमिव महानगरावयवलघुग्राममिव । ‘ वाडी ’ इति महाराष्ट्रभाषायाम् ॥ ४८ ॥

तत्र वने स भीमः शकटस्थ एव भुञ्जानः दधिमिश्रितान्नराशिं भक्षयन् सन् तदा महत् क्ष्वेडितं सिंहनादं चक्रे । कीदृशे वने, कङ्कालोच्चयेन मनुष्यशरीरास्थिसंघेन कल्पितः कृतः अन्तकचम्वाः यमसेनायाः शाटीकुटीविभ्रमः पटमण्डपभ्रान्तिर्यस्मिन् । क्रुद्धो यः तस्य यमस्य औपवाह्यः महिषः तस्य श्वास इव उग्रः चक्रानिलः वात्यानिलो यस्मिन् । गृध्राः ध्वाङ्क्षाः काकाश्च सृगालाः गोमायवश्च तेषां घोषेण शब्देन विकसन् प्रकटीभवन् रक्षसः अपदानेन वृत्तवीरकर्मणा स्तवो यस्मिन् । एते गृध्राद्यास्तदुच्छिष्टमांसोपजीवनाः अत एव यस्माद्येषामुपजीविका तस्य वर्णनं तेषामुचितम् । एतेन विशेषणत्रयेण वनस्यातिभयंकरत्वं प्रतिपाद्यते ॥ ४९ ॥

सोऽपि राक्षसोऽपि तदिदं क्ष्वेडितं निशम्य श्रुत्वा वलिरूपो यो पुरुषविशेषः तस्य भारेण मन्दितं मन्दं कृतं यत् शकटागमनं तेन प्रथममेव आदावेव कृतोन्मेषं कृतोदयं रोषं द्विगुणयन् सन् गिरेः कन्दरस्य गुहायाः मुखात् द्वारात् सरभसं सवेगं विनिर्गत्य ॥२०॥—

---

१ क. ॰निखिल॰ । २ क. ॰करेऽपि । ३ क. ॰शीभरान्न॰, ख. ॰शेखरान्न॰ । ४ क. क्ष्वेलितम् ।
५ क. भारेति नास्ति ।

एवं को वाऽपराध्नोत्यमुमविगणयन्बाहुमत्रेति घुष्य-
न्व्यक्तोरोरक्तरेखाकृतविरुदजगद्धातुकत्वप्रशस्तिः।
क्रोशन्मर्त्याङ्गखादत्वरणपरिचलत्सृक्किलग्नास्थिदण्ड-
स्थूले दंष्ट्रे दधानः पवनभुवमभिप्राद्रवद्यातुधानः ॥ ५० ॥
निजभुजयुगलीनियन्त्रणाभिर्नियमितयत्नपरस्परावुभौ तौ।
निगडितनयनं निलिम्पपङ्क्तेर्निरवहतां निपुणं नियुद्धशिल्पम् ॥५१॥
[2] पुत्रस्य वायोर्भुजदौर्ललित्यं बकं वने तत्र चिरं चरन्तम्।
निन्ये दशां कामपि राक्षसस्त्रीने[3]त्राम्बुवर्षर्तुविलासयोग्याम् ॥ ५२ ॥
तं विकृष्य पुरसीम्नि निशीथे तत्क्षणात्कुणपमर्शनदोषम्।
मार्ष्टुकाम इव मारुतसूनुर्मातुरङ्घ्रिमुपसेवितुमागात् ॥ ५३ ॥

---

यातुधानः राक्षसः अत्र वने अमुं बाहुम् अविगणयन् तिरस्कुर्वन् को वा पुरुषः एवम् अनया रीत्या अपराध्नोति ममापराधं करोति' इति घुष्यन् आक्रोशन् सन् पवनभुवं भीमम् अभिप्राद्रवत् संमुखमापतत्। कीदृशो यातुधानः, व्यक्ताभिः प्रकटाभिः उरसि रक्तरेखाभिः शुष्कभक्ष्यप्राणिरुधिररेखाभिः कृतं विरुदं सर्वलोकज्ञानजनकं चिह्नं यस्यास्तथाभूता जगतः घातुकत्वस्य प्रशस्तिः कीर्तिर्यस्य सः। यद्वा व्यक्ता उरोरक्तरेखाकृतविरुदा जगद्धातुकत्वप्रशस्तिर्यस्येति विग्रहः। क्रोशताम् आक्रोशतां मर्त्यानां मनुष्याणाम् अङ्गानि अवयवाः तेषां खादे भक्षणविषये त्वरणेन त्वरया परिचलतोः सृक्किणोः ओष्ठप्रान्तयोः लग्नैः शङ्कुवदासक्तैः अस्थिदण्डैः स्थूले विशाले दधानः। आभ्यां विशेषणाभ्यां बीभत्सरसपोषः ॥ ५० ॥

निजभुजयोर्युगल्या युग्मेन यन्त्रणाभिः बन्धनैर्नियमितः निरुद्धः यत्नो याभ्यां तौ च तौ परस्परौ च उभौ तौ भीमराक्षसौ निलिम्पपङ्क्तेः देवसमुदायस्य निगडितानि बद्धानि नयनानि यस्मिन् तत् निपुणं संपूर्णमित्यर्थः, नियुद्धशिल्पं बाहुयुद्धकौशलं निरवहताम् अकुरुतामित्यर्थः ॥ ५१ ॥

व[illegible]पुत्रस्य भुजयोः दौर्ललित्यं दुश्चेष्टितत्वं तत्र तस्मिन् वने चिरं संचरन्तं बकं राक्ष[illegible]च रक्षस्त्रीणां नेत्राम्बुषु विषये वर्षर्तोर्विलासस्य योग्यां कामपि दशाम् अवस्थ[illegible]मरणदशां निन्य इत्यर्थः। अत्र बकं जघानेति वक्तव्ये तस्य भङ्ग्यन्तरेण कथनात् पर्य[4]योक्तमलंकारः ॥ ५२ ॥

मारुतसूनुः भीमः निशीथे तं राक्षसं पुरसीम्नि नगरसमीपदेशे विकृष्य तत्क्षणात् कुणपमर्शनदोषं शवस्पर्शदोषं मार्ष्टुकाम इव परिहर्तुकाम इव मातुः कुन्त्याः अङ्घ्रिम् उपसेवितुम् आगात् आगच्छत्। निशीथे राक्षसशवम् आलोक्य पुरसमीपे निक्षिप्य मातुः समीपं गतवानित्यर्थः ॥ ५३ ॥

---

१ क. ख. सृक्कलग्ना°। २ क. तत इत्यधिकम्। ३ क. ख. नेत्राभ्रव°। ४ 'पर्यायोक्तं यदन्यस्य वचो भङ्ग्यन्तराश्रयम्' इति तल्लक्षणम्।

आलोक्य यातुशवमेतदशेषपौरैरह्नो मुखे परवशीक्रियते स्म चेतः ।
आश्चर्यपूरपरिमेलनफेनिलाभिरानन्दसागरतरङ्गपरंपराभिः ॥ ५४ ॥
भवनमेत्य तदा गृहमेधिनः पवनजे प्रवणीकृतमूर्धनि ।
प्रयुयुजे सममाशिषमक्षतैः प्रमुदितः पुरि तत्र महाजनः ॥ ५५ ॥
निशि जातु निकेतवेदिकाया निकटे सुप्तिसुखं निषेव्य पार्थान् ।
पथिकोऽपररात्रजागरूकः प्रबभाषे गिरमीदृशीं प्रसङ्गात् ॥ ५६ ॥
पाञ्चालिकां युवमनोरथरत्नसौध-
पाञ्चालिकां हृदि ममेति ममेति कृत्वा ।
अद्य स्वयंवरमहाय नृपाः प्रयान्ति
दूतैः समं द्रुपदभूपतिराजधानीम् ॥ ५७ ॥
भोक्तुमन्नमपि सूपसमग्रं दोग्धुमप्यभिनवप्रसवा गाः ।
लंभ्यते द्विजगणोऽपि च तस्माद्वत्सलाद्दुहितुरुत्सवकाले ॥ ५८ ॥

---

अह्नः मुखे प्रातःकाले अशेषैः पौरैः एतत् यातुनः राक्षसस्य शवमालोक्य चेतः आश्चर्याणां पूरस्य महौघस्य परिमेलनेन अन्तःप्रवेशेन फेनिलाभिः फेनविशिष्टाभिः आनन्दसागरस्य तरङ्गपरंपराभिः कृत्वा परवशीक्रियते स्म पराधीनं चक्रे । अयं च बलवान् केन हतः एतादृशो महान् आकृष्यात्र केनानीत इत्याश्चर्ययुक्ततद्धननजन्यानन्दसमुद्रे पौरजनचेतो ममज्जेति भावः ॥ ५४ ॥

तत्र तस्यां पुरि तदा प्रमुदितः महाजनः श्रेष्ठजनः गृहमेधिनः गृहस्थाश्रमिणो विप्रस्य भवनं गृहम् एत्य प्रवणीकृतो नम्रीकृतो मूर्धा येन तस्मिन् पवनजे भीमे अक्षतैः समम् आशिषम् आशीर्वादं प्रयुयुजे । आशीर्वादेन सहाक्षतारोपणं कृतवानित्यर्थः ॥ ५५ ॥

जातु कदाचित् अपररात्रे निशीथोत्तररात्रिभागे जागरूकः पथिकः कश्चन पान्थः ब्राह्मणः निशि निकेतस्य गृहस्य वेदिकायाः परिष्कृतभूमेः निकटे समीपे अङ्गणे सुप्तिसुखं निद्रासुखं निषेव्य अनुभूय प्रसङ्गात् तत्रत्यवृत्तकथनप्रसङ्गात् पार्थान् ईदृशं वक्ष्यमाणप्रकारं बभाषे ॥ ५६ ॥

'अद्य नृपाः राजानः हृदि मनसि पञ्चालानां राजा पाञ्चालः द्रुपदः [illegible] स्त्री पाञ्चाली सैव पाञ्चालिका तां मम मम इति कृत्वा स्वयंवरमहाय स्वयंवरोत्सवाय द्रुपदनगरीम् आह्वानार्थम् आगतद्रुपदराजदूतैः समं गच्छन्ति । कीदृशीं पाञ्चालिकां, यूनः मनोरथ एव रत्नसौधः तस्य पाञ्चालिकां पुत्तलिकाम्। अनेन विशेषणेन तस्याः सौन्दर्यवैशिष्ट्यं द्योत्यते ॥ ५७ ॥

तत्र ब्राह्मणानां गमने को लाभ इत्यपेक्षायामाह--भोक्तुमिति । द्विजगणोऽपि दुहितुः कन्यायाः विवाहोत्सवकाले वत्सलात् कन्यास्नेहयुक्तात् तस्मात् द्रुपदराजात् भोक्तुं सूपसमग्रं सूपाढ्यमन्नमपि, दोग्धुं नूतनप्रसवाः गा अपि प्राप्स्यति ॥ ५८ ॥

---

१ क. 'वेदिकायाम् । २ क. ख. लप्स्यते ।

नहि तत्र भवेदपार्थता विजयः सिद्धिमुपैष्यति स्फुटम् ।
युगपत्सुखमस्तु वो महत् द्रुतमागच्छत तन्महौजसः ॥ ५९ ॥
इति वाचमुपश्रुतिं द्विजातेर्हृदि कृत्वा सुधयेव निर्मितां ताम् ।
पथि भूसुरयूथमध्यभाजः प्रति पाञ्चालपुरं प्रतस्थिरे ते ॥ ६० ॥

ते पुनरनेकदिननीतजनपदवनसीमानः पथि कृतोदयेन भगवता पराशरदायादेन जतुसदनपरिच्यवनेन वो नवो हर्षः पार्षतस्य समुन्मिषतीति गिराऽनुगृहीताः साक्षात्प्ररोहता भुजप्रतापानलेनेव फाल्गुनकरवल्गितेन महताऽलाततेजसा नितान्तसीमन्तितसन्तमसया पदव्या त्रिविष्टपतटिनीं प्राविक्षन् ॥ २१ ॥

इन्दीवरात्प्रतितरङ्गमनुप्रविष्टै-
र्बिम्बैरिवाब्धिदुहितुस्तरुणीकदम्बैः ।
क्रीडन्समं पयसि चित्ररथो विलोक्य
पार्थान् रुरोध कुपितः प्रधनं चिकीर्षुः ॥ ६१ ॥

---

तत्र अपार्थता निष्फलता पार्थरहितता च न भवेत् । विजयः जयः गमनोद्योग इति यावत्, अर्जुनश्च सिद्धिं स्फुटम् उपैष्यति । वः युष्माकं युगपत् महत् सुखमस्तु, पञ्चानामपि स्त्रीप्राप्तिसुखम् एकस्मिन्नेव काले भवत्विति गूढाशीरस्तित्यर्थः । तत्तस्मात् हे महौजसः ! शीघ्रम् आगच्छत' ॥ ५९ ॥

ते पार्थाः सुधया निर्मितामिव उपश्रुतिरूपां द्विजातेः इति तां पूर्वोक्तां वाचं हृदि मनसि कृत्वा पथि ब्राह्मणसमुदायमध्ये गताः सन्तः पाञ्चालपुरं प्रति प्रतस्थिरे । 'नक्तं निर्गत्य यत्किंचित् शुभाशुभकरं वचः । श्रूयते तद्विदुर्धीरा दैवप्रश्नमुपश्रुतिम्' इति हारावली ॥ ६० ॥

ते पार्थाः पुनः अनेकदिनैः नीताः लङ्घिताः जनपदवनानां सीमानो यैस्ते पथि मार्गे कृताविर्भावेन पराशरस्य दायादेन पुत्रेण व्यासेन 'वः युष्माकं जतुगृहात् सुखनिर्गमनेन पार्षतस्य द्रुपदस्य नवो हर्षः समुन्मिषति आविर्भविष्यति' वर्तमानसामीप्ये भविष्यति लट् । इति गिरा अनुगृहीताः कृतानुग्रहाः सन्तः पदव्या मार्गेण भागीरथीं प्राविक्षन् प्राविशन् । कीदृश्या पदव्या, साक्षात्प्ररोहता आविर्भवता भुजप्रतापाग्निनेव फाल्गुनकरे अर्जुनहस्ते वल्गितेन चञ्चलेन अलाततेजसा ज्वलत्काष्ठतेजसा नितान्तम् अत्यन्तं सीमन्तितम् उभयभागयोः अपसारितं सन्तमसं समन्ताद्वर्तमानं तमो यस्यास्तया ॥ २१ ॥

तत्र भागीरथीम् इन्दीवरात् सकाशात् प्रतितरङ्गं प्रविष्टैः लक्ष्म्याः बिम्बैरिव तरुणीसमूहैः सह गङ्गोदके क्रीडन् चित्ररथनामा गन्धर्वः पार्थान् विलोक्य 'क इमे अस्मद्रहसि रात्रावागताः' इति मनस्यानीय कुपितः युद्धं चिकीर्षुः सन् रुरोध ॥ ६१ ॥

---

१ क. 'संघम' । २ क. पुनरप्यनेक' । ३ क. 'भवन' । ४ क. फल्गुनकरवल्गि' । ५ क. निशीत्यधिकम् । ६ क. समयेत्यधिकम् । ७ क. तत्र खल्वित्यधिकम् ।

अस्त्रमात्मसमनामदैवतं संप्रयुज्य समरे धनञ्जयः ।
तत्र तस्य रथमग्रवर्तिनं जातुषालयसहायमातनोत् ॥ ६२ ॥
गन्धर्वाणां पत्युर्गर्वजुषः सौरसैन्धवे तस्मिन् ।
पाथसि भङ्गः शिशिरो रोधसि भङ्गस्तु तापहेतुरभूत् ॥ ६३ ॥
सख्यस्य लाभात्सपदि प्रहृष्यन्
कुशीलवेन्द्रः कुरुनन्दनानाम् ।
प्रादर्शयत्स्वां प्रथमं विनीतिं
पश्चादमीषां पदवीं च रम्याम् ॥ ६४ ॥
धर्मभूरथ सहोदरैः समं धौम्यमध्वनि समीक्ष्य विश्रुतम् ।
प्राणिनामयमहिंसकोऽपि सन् पादपीडनममुष्य क्लृप्तवान् ॥ ६५ ॥
यथाऽऽतिथ्यविधौ प्रीतः स पुरस्कुरुते स्म तान् ।
तथाऽध्वगमने तेऽपि तं प्रश्रयवशंवदाः ॥ ६६ ॥
धौम्यस्य सुधामधुरिमधौरेयीभिः स्वयंवरकथाभिः ।
द्रुपदपुरसरणिरेषां द्वित्राण्यभवत्पदानीव ॥ ६७ ॥

---

तत्र तस्मिन् युद्धे धनञ्जयः अर्जुनः आत्मना समं धनञ्जय इति नाम यस्य तादृशं दैवतं यस्य तत् अस्त्रम्—अग्न्यस्त्रमित्यर्थः । संप्रयुज्य अग्रभागे स्थितं तस्य गन्धर्वस्य रथं जतुनः विकारः जातुषः स चासो आलयः गृहं तस्य सहायं मित्रम् अकरोत् । अग्न्यस्त्रं प्रयुज्य तस्य रथं ददाहेत्यर्थः ॥ ६२ ॥

गर्वयुक्तस्य गन्धर्वपतेः सौरसैन्धवे सुरनदीसंबन्धिनि तस्मिन् पाथसि पयसि भङ्गः तरङ्गः शिशिरः शीतलः अभूत् । रोधसि तीरे भङ्गः पराजयस्तु उष्णः मनःसंतापकारणं चाभूत् ॥ ६३ ॥

कुशीलवेन्द्रः गन्धर्वः पाण्डवानां सख्यस्य लाभात् सपदि प्रहृष्यन् सन् प्रथमं स्वां विनीतिं विनयं प्रादर्शयत्, पश्चादमीषां पाण्डवानां रम्यं मार्गं प्रादर्शयत् ॥ ६४ ॥

अथ धर्मसूनुः अध्वनि प्रसिद्धं धौम्यऋषिं समीक्ष्य, अयं धर्मसूनुः प्राणिनाम् अहिंसकोऽपि अपीडकोऽपि सन् सहोदरैः समम् अमुष्य पादपीडनं क्लृप्तवान् करोतीति विरोधः, पादपीडनं पादवन्दनमिति परिहारः । विरोधाभासोऽलंकारः ॥ ६५ ॥

आतिथ्यकरणे प्रीतः सः धौम्यः तान् पार्थान् यथा पुरस्कुरुते स्म सन्मानं चक्रे तथा स्नेहाधीनास्ते पार्थाः अपि अध्वगमने तं धौम्यं पुरस्कुर्वते स्म अग्रतश्चक्रिरे । अत्र शब्दच्छलेन परस्परोपकारात् अन्योन्यमलंकारः 'अन्योन्यं नाम यत्र स्यादुपकारः परस्परम्' इति लक्षणात् ॥ ६६ ॥

सुधायाः मधुरिमा माधुर्यं तस्य धौरेयीभिः धूर्वहाभिः अमृततुल्याभिरित्यर्थः, धौम्यस्य द्रौपदीस्वयंवरकथाभिः द्रुपदपुरमार्गः एषां पार्थानां द्वे वा त्रीणि वा द्वित्राणि पदानीव अभवत् । कथानुसंधानेन गमनानुसंधानाभावात् मार्गोऽल्प इव जात इति भावः ॥ ६७ ॥

भूदेवेष्वतिनिविडेषु मध्यभाजां
पञ्चानामपि युगपत्पृथासुतानाम् ।
पुस्फोर द्रुपदपुरं पुरःप्रदेशे
वक्त्राब्जे सरभसमक्षि दक्षिणं च ॥ ६८ ॥
कुमारिकाया द्रुपदस्य भूपतेः
कुचोपमाद्द्व्यमिवाभिवीक्षितुम् ।
कुरूद्वहास्तत्र पुरे कुतूहला-
त्कुलालगेहं प्रथमं समाविशन् ॥ ६९ ॥
तामागमन्नथ पुरीं शतशःससैन्याः
स्मारं युगोदयमिवाद्भुतमावहन्तः ।
भूपाः स्तुता भुजमुदस्य पठद्भिरग्रे
पद्यं निबद्धविरुदं पटुबन्दिवृन्दैः ॥ ७० ॥
द्यावाभूमी निरुन्धन्यदुबलरजसां श्रेणिभिः सीरपाणि-
र्वेगादागात्सवीरः स्वविनयगुरुणा शौरिणाऽन्वीयमानः ।
आहारश्चायुधं च द्विषदवमतये येन संसेव्यमाने
ते द्वे हालाहलत्वं रणभुवि वहतो नामतः कृत्यतश्च ॥ ७१ ॥

---

अतिनिविडब्राह्मणमध्यस्थानां पञ्चानामपि पाण्डवानां पुरोभागे द्रुपदपुरं पुस्फोर चाक्षुषज्ञानविषयं बभूव, मुखकमले दक्षिणाक्षि सरभसं सवेगं पुस्फोर स्फुरति स्म । अत्र प्रकृतयोरेव द्रुपदपुराक्ष्णोः स्फुरणक्रियान्वयात् तुल्ययोगितालंकारः[1] ॥ ६८ ॥

तत्र पुरे कुरूद्वहाः पाण्डवाः कुतूहलात् द्रुपदराजकुमारिकायाः कुचसदृशद्व्यमभि-वीक्षितुमिव प्रथमं प्रवेशक्षणे कुलालगेहं कुम्भकारगृहं प्रविविशुः ॥ ६९ ॥

अथ ससैन्याः शतशः भूपाः राजानः अद्भुतम् अलौकिकं स्मारं स्मरसंबन्धिनं युगो-दयं युगकाष्ठप्राप्तिम् आवहन्त इव प्राप्तयुगं वहन्त इवेत्यर्थः । यद्वा युगकालम् अनुसरन्त इव स्मरपरतन्त्राः सन्त इति भावः, तां पुरीम् अगमन् । कीदृशो भूपाः, अग्रभागे निबद्धं विरुदं शत्रुजयसत्पात्रदानाद्यद्भुतकर्म तज्जन्यनामादि यस्मिन् तत्पद्यं भुजम् उद्यम्य ऊर्ध्वं कृत्वा पठद्भिः बन्दिसमूहैः स्तुताः ॥ ७० ॥

यादवसैन्यसंबन्धिरजसा श्रेणिभिः समूहैः द्यौश्च भूमिश्च द्यावाभूमी आकाशपृथिव्यौ ते निरुन्धयन् आच्छादयन् वीरैः प्रद्युम्नादिभिः सहितः सः प्रसिद्धः, वीरो वा स्वस्मिन् यो विनयो नम्रता तेन गुरुणा पूज्येन शौरिणा श्रीकृष्णेन अन्वीयमानः अनुगम्यमानः सीरपाणिः बलभद्रः वेगात् आगात् । कीदृशः सीरपाणिः, येन शत्रुजयाय संसेव्यमाने स्वीक्रियमाणे आहारः भक्ष्यम् आयुधमस्त्रं च आस्तां ते द्वे आहारायुधे रणभुवि नामतः हालाहलत्वं हाला मद्यं हलं सीरं तयोर्भावः हालाहलत्वं मद्यलाङ्गलत्वं वहतः धारयतः, कृत्यतः परनाशकर्मणा च हालाहलत्वं विषत्वं वहतः ॥ ७१ ॥

---

१ 'वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता' इति तल्लक्षणम् ।

विभ्राणो मणिदीप्रकुण्डलधरं कर्णत्रयं पार्श्वयो-
रग्रे चातिमनोज्ञरूपमखिलेष्वङ्गेषु दुर्योधनः ।
सेनादुन्दुभिनादतुन्दिलनभाः स्वस्यानुबिम्बायितै-
रासीदत्स नवाधिकैः परिवृतप्रान्तो नवत्याऽनुजैः ॥७२॥
तदनु परितः कीर्णैः पुष्पैस्तरङ्गितसौरभं
मणिमयमहामञ्चारूढावनीन्द्रपरंपरम् ।
अगरुजनितैर्धूपैरालिह्यमानवितानकं
स्वनितपटहं प्रापुः पार्थाः स्वयंवरमण्डपम् ॥ ७३ ॥
जाग्रत्सोमककीर्तिसोमनिमिषत्पद्मावकाशात्यया-
त्प्राप्तेन्दीवरनित्यवासघटितश्यामप्रभा श्रीरिव ।
पाञ्चालस्य सुता ततः परिजनैः सार्धं पुरः पश्यतां
राज्ञां बुद्धिमिवाधिरुह्य शिबिकां रङ्गस्थलीं प्राविशत् ७४
द्रौपदीमुखशशिद्युतिसंपत्कौमुदीमहति रङ्गतटाके ।
पक्ष्मचक्रयुगलं नृपतीनां तत्क्षणं विजघटे बहुदूरम् ॥ ७५ ॥

---

मणिभिः दीप्राणां देदीप्यमानानां कुण्डलानां धरं धर्तृ अखिलेषु अङ्गेषु अवयवेषु अङ्ग-देशेषु च अतिमनोज्ञरूपम् अतिसौन्दर्यविशिष्टं यत्कर्णत्रयं—श्रोत्रे राधेयं च—पार्श्वभागयोः अग्रे भागे च विभ्राणः दधानः दुर्योधनः आसीदत् आजगाम । कीदृशो दुर्योधनः, सेनानां दुन्दुभीनां च नादेन तुन्दिलं नभो यस्य सः । यथा कस्यचिदुदरं बहुभक्ष्यभक्षणेन तुन्दिलं भवति तद्वद्बहुशब्दैर्जातमित्यर्थः । तथा स्वस्य प्रतिबिम्बवदाचरितैः नवतिमितैः अनुजैः परिवृतः समन्ताद्भागे स्वसदृशानुजानां नवनवत्या वेष्टित इत्यर्थः ॥ ७२ ॥

तदनु पार्थाः स्वयंवरमण्डपं प्रापुः । कीदृशं मण्डपं, आसमन्तात् प्रक्षिप्तैः पुष्पैः तर-ङ्गितः संजाततरङ्गः सौरभः सुगन्धो यस्मिन् तम् । मणिमयमहामञ्चारूढा अवनीन्द्र-परंपरा भूपसमूहा यस्मिन् तम् । धूपैः आलिह्यमानानि संवध्यमानानि वितानानि यस्मिन् तम् ॥ ७३ ॥

ततः द्रुपदकन्या पुरः पश्यतां राज्ञां बुद्धिमिवेत्युपमा । यथा बुद्धिम् आरूढा तथा शिबिकां नरयानम् आरुह्य रङ्गस्थलीं सभाभूमिं प्राविशत् । कीदृशी द्रुपदसुता, जाग्रत् सदा सन्निधानो यः सोमकानां द्रुपदवंशीयराज्ञां कीर्तिसोमः कीर्तिचन्द्रः तेन निमिषद्भिः संकुचद्भिः पद्मैः कृत्वा यः अवकाशात्ययः वासस्थाननाशः तेन प्राप्तः इन्दीवरेषु नीलक-मलेषु नित्यवासः तेन घटिता जनिता श्यामप्रभा यस्याः सा श्रीरिव लक्ष्मीरिवेत्युत्प्रेक्षा । तया अलौकिकसौन्दर्यं व्यज्यते ॥ ७४ ॥

द्रौपद्याः मुखमेव शशी तस्य द्युतिसंपदेव कौमुदीसंज्ञकं महः तेजो यस्मिन् तस्मिन् रङ्गतटाके सभासरसि नृपतीनां पक्ष्मणी एव चक्रयुगलं चक्रवाकद्वन्द्वं तत्क्षणं बहुदूरं विज-

---

१ क. °दीप्त° । १ क. ख. °त्ययप्राप्तेन्दी° । २ क. ख. °युगुलम् ।

तां पश्यतः सदसि तस्य महीसुराणां
वामेतरे महति वासवनन्दनस्य ।
अन्तर्बलस्य सपदि प्रकटीबुभूषो-
रुद्वल्गनं किल भुजे स्फुरणं बभूव ॥ ७६ ॥

तावत्सरभसमुपेत्य साक्षादादेष्टुमनाः प्रद्युम्न इव धृष्टद्युम्नः सायकैः साकं सकाशमुपनीतं स्वयंवरदिदृक्षया सपरिवारं प्रत्यासन्नमिव पन्नगपतिं चापं पुरस्कृत्य कन्यावलोकनधन्यान् राजन्यानेवमवादीत् ॥ २२ ॥

बाणेन संप्रति नृपा दिवि लक्ष्यमेतत्
तच्छायवद्भुवि निपातयितुं पटुर्यः ।
मौर्वीमिमामिव स दक्षिण एव पाणौ
कुर्यात्स्वसारमभिदर्श्य मम स्वसारम् ॥ ७७ ॥

इत्थं प्रगल्भमुदिता रभसेन पीठा-
दुत्थाय चापमुपसृत्य करेऽपि कृत्वा ।
आत्मानमेव कृतयत्नमनैषुरार्तिं
मौर्वीलतां न तु महीपतिपङ्क्तयस्ताः ॥ ७८ ॥

---

घटे वियुक्तं बभूव । रात्रौ चक्रवाकमिथुनविघटनं प्रसिद्धं ज्योत्स्नायां सुतराम् । द्रौपदीसौन्दर्यं दृष्ट्वा नृपलोचनेषु ताटस्थ्यमभूदिति भावः ॥ ७५ ॥

संदसि महीसुराणां ब्राह्मणानां मध्ये तां द्रौपदीं पश्यतः तस्य वासवनन्दनस्य अर्जुनस्य वामेतरे दक्षिणे महति भुजे स्फुरणं बभूव । तदुत्प्रेक्षते, सपदि तस्मिन् क्षणे प्रकटीभवितुमिच्छोः अन्तर्बलस्य तदन्तर्वर्तिपराक्रमस्य वल्गनमिव बहिर्निर्गमनविषये चेष्टैव ॥ ७६ ॥

तावत् सरभसं रङ्गम् आगत्य साक्षात् आदेष्टुं प्रत्यक्षमाज्ञापयितुं मनो यस्य सः मदन इव धृष्टद्युम्नः तस्याः भ्राता स्वयंवरं द्रष्टुमिच्छया परिवारसहितमागतं नागराजं वासुकिमिव सायकैः सह समीपमानीतं चापं पुरस्कृत्य राज्ञामग्रभागं नीत्वा कन्यावलोकनेन धन्यान् कृतार्थान् क्षत्रियान् एवं वक्ष्यमाणमवादीत् ॥ २२ ॥

'हे नृपाः संप्रति दिवि आकाशे स्थितम् एतत् लक्ष्यं कर्म तच्छायवत् तस्य लक्ष्यस्य छायामिव अनातपमिव, प्रतिबिम्बमिव वा बाणेन भुवि पातयितुं यः क्षत्रियः पटुः समर्थो भवेत् सः स्वस्य सारं बलम् अभिदर्श्य—मौर्वीमिव दक्षिणपाणौ—एव मम स्वसारं कुर्यात्' एतद्धनुः सज्यं कृत्वेदं लक्ष्यमेकबाणेन यः पातयेत् सः मत्स्वसुः पाणिग्रहणं कुर्यादित्यर्थः ॥ ७७ ॥

इत्थं प्रगल्भं यथा तथा धृष्टद्युम्नेन उक्ताः ताः महीपतीनां पङ्क्तयः समूहाः, पङ्क्तयः इति स्त्रीत्वनिर्देशेन पराक्रमाभावः सूचितः । वेगेन आसनादुत्थाय चापम् उपसृत्य करे कृत्वाऽपि

---

१ ख. °भसं समुपेत्य ।

दृष्ट्वाऽथ राजकमिदं द्विजमध्यसंघा-
निर्गत्य संसदि निलिम्पपतेः कुमारः ।
चापे शरं करधृते समधत्त लज्जां
भूपेषु भूरि कुतुकं पुरुषेन्द्रपुत्र्याम् ॥ ७९ ॥

वीरेण तेन विशिखेन विलूनमूलं
चक्रभ्रमेण पतयालु तदा शरव्यम् ।
अस्मिन्समाजवलये त्वयमेव दोष्मा-
नित्याहिताभिनयलीलमिवाबभासे ॥ ८० ॥

[3] निष्पतत्सुरकराञ्जलिपुञ्जा-
त्पुष्पवर्षमभितः कुरुवीरम् ।
मन्दहास इति विक्रमलक्ष्म्याः
संदधे सकलचेतसि बुद्धिम् ॥ ८१ ॥

पाञ्चालपुत्रीप्रहिताः कटाक्षाः
पाण्डोस्तनूजं परितो ववल्गुः ।
माङ्गल्यमालाऽवतरेदिहेति
माध्वीलिहः पूर्वमिवोपयाताः ॥ ८२ ॥

---

गृहीत्वाऽपि कृतयत्नम् आत्मानमेव आर्तिं व्यथाम् अनैषुः नीतवन्तः, मौर्वीलतां तु आर्तिं धनुषः कोटिं न अनैषुः। धनुः सज्यं केनापि न कृतं कुतो लक्ष्यवेध इति भावः ॥ ७८ ॥

अथ निलिम्पपतेः देवेन्द्रस्य कुमारः अर्जुनः संसदि सभायाम् इदम् अकृतकार्यं राजकं राजसमूहं दृष्ट्वा ब्राह्मणसमूहमध्यात् निर्गत्य करधृते तस्मिन् चापे शरं भूपेषु लज्जां च द्रोपद्यां कौतुकम् आश्चर्यं च समधत्त यौगपद्येनस्थापयामास ॥ ७९ ॥

तदा तेन वीरेण अर्जुनेन बाणेन छिन्नमूलं चक्रवत् भ्रमणेन पतनशीलं शरव्यं लक्ष्यम् 'अस्मिन् वीरसमाजमण्डले तु अयमेव दोष्मान् प्रशस्तबाहुशाली' इति आहिता कृता अभिनयलीला अर्थसूचकचेष्टा येन तदिव आबभासे भाति स्म । यथा कश्चित् अङ्गुली-भ्रमणचेष्टया एतत्समाजे अयमेव विद्वानिति कंचन सूचयति तद्वत् ॥ ८० ॥

तदानीं सुरकराञ्जलिसमूहात् कुरुवीरमभितः अर्जुनस्य आसमन्तात् निष्पतत् पुष्पाणां वर्षं वृष्टिः शुभ्रतया पराक्रमलक्ष्म्याः मन्दहास इति सकलमनुष्यचेतसि बुद्धिं संदधे स्थापयामास ॥ ८१ ॥

द्रौपद्या प्रेषिताः कटाक्षाः इह अस्मिन् स्थले माङ्गल्यमाला वरणपुष्पमाला अवतरेत् आगच्छेत् इति ज्ञात्वा पूर्वमागताः माध्वीलिहः भ्रमरा इव पाण्डोः तनूजं परितः अर्जुनस्य समन्तात् ववल्गुः बभ्रमुः । अत्र श्यामत्वचञ्चलत्वगुणयोगादुत्प्रेक्षा ॥ ८२ ॥

---

१ क. ख. 'संघमध्या°'। २ क. 'वसुधेन्द्र°'। ३ क. तदानीमित्यधिकम् । ४ अत्र सहोक्तिरलंकारः—'सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः' इति लक्षणात् । ५ तर्जनीमङ्गुष्ठेनाग्रे संयोज्य करसहितकराङ्गुलिस्पन्दनम् ।

जननान्तरनेत्रवारिसृष्ट-
त्रिपथाहेमपयोजगुम्फितेव ।
वलवैरिभुवस्तयाऽधिकण्ठं
वरणे चम्पकमालिका वितेने ॥ ८३ ॥

तदनु स महावीराग्रेसरः समग्रगुणशेखरितां नरपतिसुतामिव शरासनलतामुद्वहन् राज्ञां बलमवज्ञाय सभाङ्गणान्निश्चक्राम ॥ २३ ॥

तदात्व एव[1] खलोऽयमखिलानस्मानतिस्मयेन विस्मरन्कस्मैचिद्दुहितरं विप्राय प्रायच्छदिति द्रुतं द्रुपदाय द्रोहमुन्निद्रयतः कतिचन राजन्यान् जन्याभिमुखान् प्रति सुलभोन्मेषेण सरभसभुजोन्नीतैरुपवीतैः कण्ठमावेष्ट्य ममायं यष्टेर्ममायं विष्टरस्य लक्ष्यमिति[4] जातिचापलं कुर्वाणान् धरणिगीर्वाणान् भवतां पुनराशीरेव जयराशीकरणायालमिति सस्मितं निवर्तयन्नमर्त्यपतिकुमारो युधि समारोपितधनुर्गुणनिरर्गलनिर्गलितेन शरनिकरेण तेषां परेषामधिकां दिशि दिशि कान्दिशीकतां दिदेश ॥ २४ ॥

---

तत्र तया द्रौपद्या पीतचम्पकपुष्पाणां मालिका वरणविषये वलवैरिभुवः इन्द्रपुत्रस्य अर्जुनस्य अधिकण्ठं कण्ठे वितेने आमुक्ता स्थापितेति यावत् । पीतगुणयोगात् मालामुत्प्रेक्षते, जननान्तरे पूर्वजन्मनि नेत्रवारिणा नेत्राश्रुणा सृष्टानि उत्पादितानि यानि त्रिपथायां भागीरथ्यां हेमपयोजानि सुवर्णकमलानि तैः गुम्फितेव ग्रथितेव । 'द्रौपद्याः पूर्वजन्मनि स्वर्गलक्ष्मीरूपायाःभागीरथ्यां नेत्रपतितदुःखाश्रुविन्दुजन्यहेमकमलानि दृष्ट्वा इन्द्रेण त्वं कासि किमिति रोदिषीति पृष्टा' इत्यादि भारतीयाद्यपर्वस्थकथानुसंधेया ॥ ८३ ॥

तदनु महावीरेषु अग्रेसरः श्रेष्ठः सोऽर्जुनः समग्रगुणैः सौन्दर्यादिभिः, समग्रगुणेन संपूर्णमौर्व्या च शेखरितां युक्तां नरपतिसुतां द्रोपदीमिव धनुर्लतां समुद्वहन् वहमानः, धारयंश्च राज्ञां बलम् अगणयित्वा सभाङ्गणात् निर्जगाम ॥ २३ ॥

तदात्वे एव तदानीमेव ' खलः अयं द्रुपदः अखिलान् अस्मान् अतिस्मयेन अतिगर्वेण विस्मरन् सन् कस्मैचिद्विप्राय कन्यां ददौ ' इति मनस्यानीय द्रुपदाय द्रोहं प्रकटयतः जन्याभिमुखान् युद्धाभिमुखान् कतिचित् राजन्यान् क्षत्रियान् प्रति सुलभोदयेन रोषेण सवेगं भुजेभ्यः उन्नीतैः ऊर्ध्वं नीतैः उपवीतैः यज्ञोपवीतैः कण्ठम् आवेष्ट्य 'अयं क्षत्रियः मम यष्टेर्लक्ष्यम् । अयं मम विष्टरस्य आसनस्य लक्ष्यम्' इति भाषणेन ब्राह्मणजातेः चापलं -स्वपरबलयोः अविचारं-कुर्वाणान् धरणीगीर्वाणान् ब्राह्मणान् ' भवतां पुनः आशीर्वाद एव जयानां राशीकरणाय अलं समर्थः' इत्युक्त्वा सस्मितं यथा तथा निवर्तयन् अर्जुनः युधि युद्धे समारोपितात् धनुर्गुणात् निरर्गलं निष्प्रतिबन्धं यथा तथा निर्गलितेन निर्गतेन

---

१ 'णात्क्षणा' । २ क. खल्वित्यधिकम् । ३ क. ख. 'ण रोषेण सरभसं भु' । ४ क. ख. वचनेनेत्यधिकम् । ५ ख. 'मारोऽपि स' ।

तावदस्य राजसंघस्य जङ्घालतामनुकुर्वद्भिरिव रथार्वद्भिरपरार्णवा-भ्यर्णमवतीर्णवति तूर्णमर्णोजवन्धौ तेन निहितां दीप्तिमपर इव तां दयि-तामनुरञ्जयन्नयमपि धनञ्जयस्तामेव वासभुवमाससाद ॥ २५ ॥

स्वेदाम्बुभिर्निटिलजैः पदयोः सवित्री-
मार्द्रीचकार स तया सह चापपाणिः ।
मोदाम्बुभिर्नयनजैस्तमियं च मौलौ
विस्मेरचेतसि कुलालवधूसमाजे ॥ ८४ ॥

कुवलयदृशः कुम्भं जिग्युः कुचैरिति भाषिते
करिवरशिरः कर्मेत्येवं प्रहृष्टमनाश्चिरम् ।
द्रुपददुहितुर्दृष्ट्वा तुङ्गौ कुलालपतिः कुचौ
निजमपि घटं निश्चित्यैवं नितान्तमलज्जत ॥ ८५ ॥

अन्येद्युर्गृहमुपनीय पूजितांस्तान्
व्यासोक्त्या विदितवरः पुरामरातेः ।
पञ्चापि क्षितिपतिनन्दनान्सुतायाः
पाञ्चालो निशि परिणीतयेऽनुमेने ॥ ८६ ॥

---

बाणसमूहेन तेषां परेषां शत्रूणां दिशि दिशि अधिकाम् अपरिमितां कान्दिशीकतां भयेन द्रुततां भयेन पलायनमिति यावत्, दिदेश ददौ ॥ २४ ॥

तावत् अर्णोजवन्धौ कमलवन्धौ सूर्ये अस्य भयद्रुतस्य जङ्घालताम् अतिजविताम् अनुकु-र्वाणैरिव रथस्य अर्वद्भिः अश्वैः अपरार्णवस्य पश्चिमसमुद्रस्य अभ्यर्णं समीपदेशम् अवतीर्ण-वति सति अस्तं गतवति सतीत्यर्थः । तेन सूर्येण निहितां स्वस्मिन् स्थापितां दीप्तिम् अपरः धनञ्जयोऽग्निरिव अयमपि धनञ्जयः अर्जुनः तां द्रौपदीम् अनुरञ्जयन् सन् तामेव कुलालसंबन्धिनीमेव वासभुवम् आससाद प्राप ॥ २५ ॥

चापपाणिः अर्जुनः तया द्रौपद्या सह निटिलजैः भालजातैः घर्मोदकैः सवित्रीं मातरं पदयोः आर्द्रीचकार तया सह कुन्तीं ननामेत्यर्थः । इयं कुन्ती च अनेन अस्मद्गृहस्थितेन केनचि-द्दरिद्रेण विप्रेण राजन्यालब्धेति विस्मेरं साश्चर्यं चेतो यस्य तस्मिन् कुलालवधूसमूहे तम् अर्जुनं मौलौ चूडायां पुत्रस्य महालाभो जात इति नयनजैः आनन्दाश्रुभिः आर्द्रीचकार ८४

'कुवलयदृशः कमलनेत्राः सुन्दराः स्त्रियः कुचैः कुम्भं जिग्युः जितवत्यः' इति कवि-लोकभाषणे करिवरशिरः गजेन्द्रकटः कर्म न त्वस्मत्कृतः कलशः, इत्येवं निश्चित्य चिरं प्रहृष्टमनाः कुलालपतिः द्रौपद्याः उच्चौ कुचौ दृष्ट्वा 'निजकुचैः कुम्भं जिग्युः' इति भाषणे-ऽस्मद्घटोऽपि कर्मेत्येवं निश्चित्य अत्यन्तम् अलज्जत ॥ ८५ ॥

अथान्येद्युः अन्यस्मिन् दिवसे निशि रात्रौ व्यासोक्त्या पुराम् अरातेः सदाशिवस्य विदि-तः ज्ञातः 'पञ्च भर्तारो भविष्यन्ति' इति द्रौपद्याः पूर्वजन्मीयवरो येन सः पाञ्चालो द्रुपदः

---

१ क. ख. °परामिव । २ क. ख. °व प्र° ।

ततः परमीदृशोत्सवश्रवणात्परमानन्दमनुभवन्तीभिरन्तःपुरिकाभिः परिवृता तां सखीजना मण्डनमण्डपिकामुपनीय प्रसाधयितुमारभन्त ॥२६॥

द्रौपद्याः पञ्चपत्नीत्वे द्रष्टुं लिपिमिवोत्सुका ।
सीमन्तशिल्पव्याजेन शिरोजान्व्यभजत् सखी ॥ ८७ ॥

मृगमदतिलकं रराज तन्व्या
मुखशशिनो महसा वलाहृतायाः ।
चिकुरमिषजुषोऽपराधशान्त्यै
नमितमपत्यमिवान्धकारवन्द्याः ॥ ८८ ॥

अधिनासिकाशिखरमाकलितं नवमौक्तिकं नरपतेर्दुहितुः ।
शुशुभे मुखाम्बुरुहमध्यचरस्मितहंसिकाजनितमण्डमिव ॥ ८९ ॥

---

कन्यायाः परिणीतये परिणयार्थं पञ्चापि क्षितिपतितनयान् पाण्डुराजपुत्रान् अनुमेने अनुमोदं दत्तवान् । लक्ष्यं भित्त्वा राजकन्यां गृहीत्वा निवासस्थानगतोऽर्जुनः 'जननीवचनेन पञ्चभिरस्माभिर्भ्रातृभिरियं परिणीता' इति वचनं दूतमुखेन द्रुपदं प्रतिप्रेषितवान् । ततः एकस्याः पञ्चभर्तृत्वम् अदृष्टश्रुतपूर्वमिति संदिग्धमनसि राजनि, व्यासेन प्रकटीभूय 'इयं पूर्वजन्मनि ऋषिकन्याऽऽसीत् । तदा दीर्घायुः सर्वगुणैः संपन्नो वरो वरणीय इति मनस्यानीय तपस्तेपे । तदा वहुकालेन वृद्धत्वदशायां तुष्टेन शिवेन वरं वृणीष्वेत्युक्ते सा संक्रमेण वरमिति पञ्चवारं जगाद । पञ्चवारं वरयाचनात् तव सकलगुणसंपन्नाः पञ्च वरा उत्तरजन्मनि भविष्यन्तीति वरं दत्त्वा शिवोऽन्तर्हितः' इति आदिपर्वस्येतिहासः प्रोक्तोऽत्रानुसंधेयः ॥८६॥

तदनन्तरं सखीजनाः ईदृशोत्सवस्य धनुःसज्जीकरणपूर्वकलक्ष्यभेदनकर्तृक्षत्रियवरेण सह राजपुत्रीस्वयंवरोत्सवस्य श्रवणात् अत्यानन्दमनुभवन्तीभिः अन्तःपुरसंवन्धिराजस्त्रीभिः परिवृतां तां द्रौपदीं प्रसाधनस्थलमण्डपिकाम् उपनीय प्रसाधयितुम् अलंकर्तुम् आरभन्त ॥ २६ ॥

सखी द्रौपद्याः पञ्चपुरुषपत्नीत्वविषये ब्रह्मणा लिखितां लिपिं द्रष्टुम् उत्कण्ठिता सतीव सीमन्तकरणकौशलव्याजेन शिरोजान् केशान् व्यभजत् उभयतोऽपसारयामासेत्यर्थः । केशप्रसाधनं चक्रे इति भावः ॥ ८७ ॥

तन्व्याः कृशाङ्ग्याः द्रौपद्याः मृगमदस्य कस्तूर्याः तिलकं रराज । लघुत्वश्यामत्वगुणयोगात् तदुत्प्रेक्षते, तेजसः पराभवरूपापराधस्य शान्त्यै नमितं नम्रीकृतं मुखचन्द्रस्य कान्त्या वलेन आहृतायाः चिकुरमिषं केशमिषं जुषते स्वीकरोति तस्याः अन्धकाररूपायाः वन्द्याः अपत्यमिवार्भकमिव । काचन स्त्री स्वापराधशान्त्यर्थं यथा स्वापत्यं प्रभुचरणयोर्नमयति तद्वत् ॥ ८८ ॥

राजपुत्र्याः नासिकाग्रे स्थापितं नवमौक्तिकं मुखकमलस्य मध्ये चरति मध्यचरी तया

---

१ क. ख. °पुरिकाभिः । २ क. ख. शशिना ।

सुतरां जनमोदमादधाते सुदृशो मौक्तिकरत्नकर्णपत्रे ।
परिचेतुमिवाननेन्दुसेवां परिवेषस्य शिशू समीपभाजौ ॥ ९० ॥

ताटङ्के तरलमणिप्रभातरङ्गे
तन्वङ्ग्या मुखमभितस्तदा व्यभाताम् ।
मूर्तत्वं प्रकटमुपेत्य जागरूके
वर्णौ द्वे नयनविपाठयोरिवान्त्ये ॥ ९१ ॥

सख्याः करोऽञ्जनविधौ सकृदेव गन्तु-
मापाङ्गभागमपटुः श्रममानशे यः ।
रेखावधेरनवगामितया दृगंशं
पूर्वोक्तमेव स पुनः पुनराललम्बे ॥ ९२ ॥

सकलमपि वपुर्विभूष्य तन्व्याः
सपदि सखी विपुलेक्षणाम्बुजापि ।
चिरतरमनवेक्ष्य मध्ययष्टिं
करधृतकाञ्चनकाञ्चिरेव तस्थौ ॥ ९३ ॥

---

सितरूपया हंसिकया जनितं प्रसूतम् अण्डमिव शुशुभे । इयं शुभ्रत्ववर्तुलत्वधर्मयोगादुत्प्रेक्षा ॥ ८९ ॥

सुदृशः सुन्दरनेत्रायाः मौक्तिकरत्ननिर्मिते कर्णपत्रे ताटङ्के जनाह्लादं सुतराम् आदधाते कुर्वाते । वर्तुलत्वगुणयोगादुत्प्रेक्षते, मुखचन्द्रसेवां परिचेतुम् अभ्यसितुं समीपे स्थितौ परिवेषस्य शिशू इव ॥ ९० ॥

भूयः ताटङ्कप्रसाधनमाह—ताटङ्के इति । तदा तरलाः चञ्चलाः मणिप्रभानां रत्नप्रभानां तरङ्गाः ययोस्ते ताटङ्के वर्तुले कर्णभूषणे द्रौपद्याः मुखमभितः मुखस्योभयभागे व्यभातां शुशुभाते । अत्र उत्प्रेक्षते, प्रकटं मूर्तत्वं प्राप्य जागरूके विद्यमाने नयनविपाठयोः दृग्बाणयोः अन्त्ये द्वे वर्णे ठकाराक्षरयोः ताटङ्कयोश्च वर्तुलत्वगुणसाम्यादियमुत्प्रेक्षा । 'स्थलक्ष्वेडो विपाठश्च चित्रपुङ्खः शरः सरः' इति त्रिकाण्डशेषः ॥ ९१ ॥

द्रौपद्याः नेत्रयोः अञ्जनप्रक्षेपविधौ यः सख्याः करः नयनयोर्विपुलत्वादापाङ्गभागं नेत्रान्तभागम् अभिव्याप्य सकृदेव एकयत्नेनैव गन्तुम् अपटुः असमर्थः सन् श्रमम् आनशे प्राप । अञ्जनस्य रेखावधेः अनवगामितया अज्ञानपूर्वम् अक्तं क्षिप्ताञ्जनमेव दृगंशं नेत्रांशं पुनः पुनः आललम्बे स्वीचकार । अनयातिशयोक्त्याऽञ्जनप्रसाधनद्वारा नयनयोर्वैपुल्यं द्योत्यते ॥ ९२ ॥

विपुले ईक्षणाम्बुजे यस्यास्तथाभूताऽपि सखी सपदि तस्मिन्समये द्रौपद्याः सकलमपि

---

१ क. सुतनोर्मौं° । २ क. दृगञ्जम्, ख. दृगन्तम् । ३ क. °देशम् । ४ संवन्धरूपातिशयोक्त्युज्जीवितो भ्रान्तिमदलंकारोऽत्र ।

काञ्चीकलापमणिबिम्बितपार्श्वयोषि-
त्कौशेयपङ्क्तिरवनीन्द्रसुता बभासे।
आविर्भविष्यदधिगोष्ठि कटीनिमग्नं
वासःशतं जनदृशामिव सूचयन्ती ॥ ९४ ॥

आतङ्कपीडामददां पुराऽह-
मस्या द्रुतं भाविषु वल्लभेषु।
एवं विचिन्त्येव भयेन पादे
लाक्षाकृतं धाम पपात तन्व्याः ॥ ९५ ॥

तस्याः सखीषु सकलास्वपि तत्तदङ्गं
वेगाद्विभूषितवतीषु विवाहवेषैः।
कालक्षिपासहनवृद्धपुरोहितानां
कोपस्य पात्रमभवत् कुचशिल्पकर्त्री ॥ ९६ ॥

---

वपुः विभूष्य भूषणैर्भूषयित्वा मध्ययष्टिम् अदृष्ट्वा करे धृता काञ्चिः रशना यया तथा-भूतैव चिरतरं तस्थौ। यत्र काञ्चीभूषणं बन्धनीयं तस्य मध्यावयवस्यादर्शनात् भूषण-हस्तैव तस्थावित्यर्थः। अत्र विपुलेक्षणत्वेऽपि दर्शनाभावोक्त्या पुष्कलकारणसत्वेऽपि कार्यानुत्पत्तिरूपविशेषोक्त्यलंकारोत्थापिता मध्यादर्शना युक्तिरलंकारः। 'कार्याजनि-र्विशेषोक्तिः सति पुष्कलकारणे' 'अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम्.' इति लक्षणात् ॥ ९३ ॥

काञ्चीकलापस्य रशनाभूषणस्य मणिषु रत्नेषु बिम्बिता प्रतिबिम्बिता पार्श्वयोषितां पार्श्वभागस्थितस्त्रीणां कौशेयपङ्क्तिः कौशेयपीताम्बरादिवस्त्रसमूहो यस्याः सा द्रौपदी बभासे शुशुभे। तामुत्प्रेक्षते, अधिगोष्ठि सभामध्ये आविर्भविष्यत् कट्यां निमग्नं निलीय स्थितं वाससां शतं जनदृशां सूचयन्तीव ज्ञापयन्तीव ॥ ९४ ॥

अस्याः भाविषु वल्लभेषु पतिषु आतङ्कपीडाम् 'इदं लाक्षागृहम् अस्मान् धक्ष्यतीति शङ्कापीडां पुरा अहम् अददाम्' इत्थं विचार्य लाक्षया कृतं धाम तेजः, गृहं च भयेन द्रौपद्याः पादे पपात। कश्चित्स्वापराधशान्त्यर्थं यस्यापराधः कृतः तदीयभार्याशरणं कृत्वा पादवन्दनं करोतीति तद्वत् ॥ ९५ ॥

सकलास्वपि सखीषु तस्याः द्रौपद्याः तत्तदङ्गं कर्णनासिकाद्यङ्गं विवाहोचितवेषैः वेगात् त्वरया विभूषितवतीषु कुचयोः शिल्पस्य पत्रादिलेखनशिल्पस्य कर्त्री सखी कालक्षिपां मुहूर्तकालक्षेपं न सहन्ते तथाभूताः ये वृद्धपुरोहिताः तेषां कोपस्य पात्रं स्थानमभवत्। कुचयोः पत्रावल्याः शिल्पस्यासमाप्तत्वात्कोपस्य पात्रं जातेति भावः। अनेन कुचयोः वैपुल्यं द्योत्यते ॥ ९६ ॥

---

१ क. °स्तदा। २ क. 'लक्षपास°। ३ विलम्बासंबन्धेऽपि संबन्धकल्पनोक्त्युज्जीवितं पुरोहितको-पहेतुभूतत्वात्पदार्थहेतुकं काव्यलिङ्गमलंकारः। तयोश्चाङ्गाङ्गिभावेन संकरः।

एवमलंकृतामेनामवलोक्य स्वयमपि संध्यारुणिमसंपादितलाक्षाकृत्यामञ्जनतिलकमञ्जुलमुखभागां परिणेतुमिव प्रतीचीं दिशमुपगतवति भगवति भासां निधौ ॥ २७ ॥—

तस्यामेव क्षपायां सपदि निजकुलोत्तंसपार्थोत्सवाना-
मालोकायेव साक्षाद्विशति हिमरुचौ द्यां शुभंयौ मुहुर्ते ।
सोपानैरध्यरुक्षन्मणिगणखचितैर्वेदिमेते कुमाराः
सालंकाराः पुरोधःसरभसनिहितैः संविधानैः समग्राम् ॥ ९७ ॥

तत्र मुहूर्तगुणेष्विव समन्तादोजायमानेषु दीपेषु मन्त्रविदां वदनेष्विव शब्दायमानेषु वाद्येषु कुलपालिकाः कमनीयमणिनिकायकोरकितैः कनकभूषणैरविकृतसहजरामणीयकां कन्यकाममीषां सकाशे निवेशयामासुः ॥ २८ ॥

पूतपार्श्वे कुशाङ्कुरैः पुरस्तान्मणिकुट्टिमे ।
प्राज्वलत्तस्य धौम्यस्य प्रतिबिम्बमिवानलः ॥ ९८ ॥

---

एवम् अलंकृताम् एनां द्रौपदीम् अवलोक्य भगवति भासां निधौ सूर्ये स्वयमपि संध्यारुणिम्ना रागेण संपादितं लाक्षाकृत्यं लाक्षारसकृत्यं यस्यास्ताम् अञ्जननामा दिग्गजः तिलक इव तेन, यद्वा अञ्जनगजतिलकवृक्षैः मञ्जुलः सुन्दरः मुखभागः पुरोभागो यस्यास्तां, स्त्रीपक्षे नेत्रकपोलयोः कज्जलतिलकाभ्यां सुन्दरमुखभागाभ्यां प्रतीचीं दिशं परिणेतुमिव उपगतवति सति । यावत् द्रौपदी विभूषिता तावदस्तसमयो जात इति भावः ॥ २७ ॥—

तस्यामेव रात्र्यां शुभंयौ शुभयुक्ते मुहूर्ते सपदि तत्कालं हिमरुचौ चन्द्रे निजकुलश्रेष्ठपार्थविवाहोत्सवानां साक्षात् आलोकनायेव द्याम् उच्चदेशम् आकाशं प्रति विशति सति सालंकाराः चन्दनभूषणादिभिरलंकृताः कुमाराः वराः पार्थाः मणिखचितैः रत्नगणविशिष्टैः सोपानैः वेदिं पाणिग्रहणस्थानम् अध्यरुक्षन् आरोहणं कृतवन्तः । कीदृशीं वेदिं, पुरोधसा कुलगुरुणा सरभसं सवेगं यथा तथा निहितैः स्थापितैः संविधानैः पाणिग्रहणविधिसामग्रीभिः समग्रां संपूर्णां, युक्तामित्यर्थः ॥ ९७ ॥

तत्र तस्यां वेद्यां दीपेषु विवाहसुमुहूर्तगणेष्विव समन्तात् ओजायमानेषु अनोजांसि ओजांसि भवन्ति ओजायमानाः इति विग्रहः । अनोजस्विनः ओजस्विनः प्रकाशविशिष्टाः ज्योतिःशास्त्रबलविशिष्टाश्च, भवन्त इत्यर्थः । तेषु सत्सु वाद्येषु भेरीतूर्यादिषु मन्त्रविदां ब्राह्मणानां वदनेष्विव शब्दायमानेषु शब्दं कुर्वत्सु सत्सु कुलपालिकाः कुलश्रेष्ठसुवासिन्यः स्त्रियः रत्नसमूहविशिष्टैः सुवर्णभूषणैः अविकृतं विकारं न प्रापितं सहजसौन्दर्यं यस्यास्तां कन्यकां द्रौपदीम् अमीषां पार्थानां समीपे स्थापयामासुः ॥ २८ ॥

कुशाङ्कुरैः पूतपार्श्वभागे मणिकुट्टिमे रत्नैर्बद्धभूमौ तस्य धौम्यर्षेः प्रतिबिम्बमिव

---

१ क. °मालोक्य । २ क. °रञ्जितम्° । ३ क. °मरकतख° । ४ क. °मणिकोरकि° । ५ क. °व इवा° ।

धर्मान्प्रजाश्च बहु संचिनुतानयेति
शाम्यत्समिच्चटचटाकृतिभिर्ब्रुवाणः।
तामात्मजां द्रुपदराज इवानलोऽपि
प्रादादिवोन्नतशिखाग्रकरेण तेभ्यः॥ ९९॥
अथ जातुपालयसमर्पणात्कृतं
परिपोषमस्य वपुषोऽभिवीक्षितुम्।
स्पृहयालवः किल पृथासुताः क्रमा-
त्परिचक्रमुर्हुतवहं वधूसखाः॥ १००॥
कठिनत्वसंपदवलेपभरा-
त्कुचकुड्मलस्य कुरुवीरवधूः।
कृतनिर्जयेव पतिपाणिधृतं
पदमश्मनः शिरसि सा निदधे॥ १०१॥
कन्यकाभ्युपहृता विधिलाजाः
कन्दलत्यनलरोचिषि पेतुः।

---

अनलः अग्निः पुरस्तात् प्राज्वलत् ज्वलति स्म। अनयोत्प्रेक्षया धौम्यस्य तेजस्वित्वं द्योत्यते॥ ९८॥

हे वराः! 'अनया कन्यया धर्मान् प्रजाः पुत्रांश्च संचिनुत संपादयत' इति शाम्यतीनां ज्वलन्तीनां समिधां चटचटाकृतिभिः चटचटात्कारैः कृत्वा ब्रुवाणः वदन् अग्निरपि उन्नतं यत् शिखाग्रं तदेव करः तेन द्रुपदराज इव ताम् आत्मजाम् आत्मनः सकाशाज्जातां—द्रुपदकृतयज्ञकुण्डात् द्रौपदीधृष्टद्युम्नयोरुद्भवात्—तेभ्यः पार्थेभ्यः प्रादादिव दत्तवानिवेत्युत्प्रेक्षा॥ ९९॥

अथ जातुपालयस्य लाक्षाविकारकृतगृहस्य समर्पणात् भक्षणार्थं दानात् कृतम् अस्य अग्नेः वपुषः परिपोषम् अभितः वीक्षितुं स्पृहयालवः इच्छव इव पार्थाः वधूसखाः वधूसहायाः सन्तः हुतवहम् अग्निं क्रमात् परिचक्रमुः परितो बभ्रमुः—प्रदक्षिणं चक्रुः। किलेत्युत्प्रेक्षायाम्॥ १००॥

कुरुवीराणां वधूः द्रौपदी विवाहविधिप्राप्तम् अश्मनः पाषाणस्य शिरसि उपरि, मस्तके च पतिपाणिभिः धृतं पदं निदधे स्थापयास। वधूमुत्प्रेक्षते, कुचः कुड्मल इव तस्य कठिनत्वसंपदः आधिक्यस्य अवलेपभरात् गर्वातिशयात् कृतः निर्जयः अश्मनो जयो यया सेव। यथा अभिमानी राजा निर्जितस्य मस्तके पादं निक्षिपति तद्वत्॥ १०१॥

कन्यया अभ्युपहृताः हुताः विधिप्राप्ताः लाजाः कन्दलयति परिचलति अनलार्चिषि

---

१ ख. सह सं°। २ क. ख. °चटात्कृ°। ३ क. °भुजम्। ४ क. ख. कन्यया°। ५ क. °कृता।

पञ्चवल्लभकराग्रविमर्दा-
द्राहुवंशगलिता इव मुक्ताः ॥ १०२ ॥
विधिचोदनासु मणिदीपयष्टिका-
स्फुरदिन्दिराप्रतिकृतेश्च सुभ्रुवः ।
उभयोर्विवेचनविधौ पुरोधसः
स्खलनं बभूव न तु मन्त्रतन्त्रयोः ॥ १०३ ॥
बाहुप्रताप इव साक्षिणि हव्यवाहे
सामन्तराजधरणेरिव याज्ञसेन्याः ।
काङ्क्षासमं क्रमश एव करं गृहीत्वा
हर्षेण वृद्धिमभजन्नवनीन्द्रपुत्राः ॥ १०४ ॥
पाञ्चालराजश्च स पाण्डवश्च
पुष्यत्तमौ पूजकपूज्यभावम् ।
आढ्यं भविष्णुत्वमकिंचनत्वं
व्यत्यस्यतां ताविव यौतकैः स्वैः ॥ १०५ ॥

---

अग्निज्वालायां पेतुः अपतन् । शुभ्रत्ववर्तुलत्वधर्मयोगात् तामुत्प्रेक्षते, पञ्चपतिकराग्रैः संमर्दनात् बाहुरेव वंशः वेणुः तस्माद्गलिताः मुक्ता इव । वेणूनां मुक्तोत्पत्तिस्थानत्वम् अन्तस्थितद्रव्यस्य विमर्देन बहिर्निःसरणं भवतीति च प्रसिद्धम् ॥ १०२ ॥

विधिचोदनासु विधिप्राप्तानुष्ठानप्रेरणाविषयेषु रत्नमयदीपयुक्ता यष्टिका तस्यां स्फुरन्ती या इन्दिराप्रतिकृतिः लक्ष्मीमूर्तिः, लक्ष्मीवत् प्रतिछाया वा तस्याः, सुभ्रुवः द्रौपद्याश्च अनयोरुभयोः विवेचनविधौ पार्थक्येन ज्ञानविधौ पुरोधसः धौम्यस्य स्खलनं बभूव, मन्त्रतन्त्रयोः मन्त्रविवाहप्रयोगानुष्ठानयोस्तु स्खलनं न बभूव । अनेन द्रौपद्याः लक्ष्मीसादृश्यं द्योत्यते ॥ १०३ ॥

अवनीन्द्रपुत्राः पाण्डुनन्दनाः हव्यवाहे अग्नौ बाहूनां प्रतापे इव साक्षिणि सति याज्ञसेन्याः द्रौपद्याः सामन्तराजानां माण्डलिकभूभृतां धरणेरिव करं हस्तं, करभागं च क्रमश एव ज्येष्ठानुक्रमेणैव कालदेशक्रमेण च काङ्क्षासमं पुत्रकन्येच्छानुरूपं च यथा तथा गृहीत्वा हर्षेण वृद्धिम् अभ्युदयम् अभजन् स्वीचक्रुः । 'अङ्गुष्ठमेव गृह्णीयाद्यदि कामयीत पुमांसमेव मे पुत्रा जायेरन्' इति 'अङ्गुलीरेव स्त्रीकामो रोमान्ते हस्तं साङ्गुष्ठमुभयकामः' इति गृह्यसूत्रम् ॥ १०४ ॥

पूजकपूज्यत्वे पुष्यत्तमौ अतिशयेन वृद्धिं नयन्तौ तौ द्रुपदयुधिष्ठिरौ स्वैः स्वकीयैः यौतकैः जामातृश्वशुराभ्यां परस्परदेयपदार्थैः आढ्यंभविष्णुत्वं धनसमृद्धत्वम् अकिंचनत्वं दारिद्र्यं च व्यत्यस्यतामिव व्यत्यासमकुरुतामिवेत्युत्प्रेक्षा । राज्ञा जामात्रे सम-

---

१ क. ख. परितः स्फुरत्प्र° । २ ख. व्यत्यास्यताम् । ३ क. °स्ते

एवमन्तरिक्षनिक्षिप्तलक्ष्यवेधलक्षणेन शुल्कनिष्कैण निजकण्ठनिष्कायितकन्याभुजलतानेतान् पथि कौन्तेयानवगन्तारो दुरहंतारोपितनिवर्तनमतयो विकर्तनतनयोपायविधेयैः सहायैः सह संमन्त्र्य समारब्धपूर्वस्य युद्धपलायनाध्ययनस्य द्वितीयावृत्तिविच्छित्तिं परिजिहीर्षमाणा इव शकुनिभागिनेयाः सेनापुरःसरनिस्साणनिस्सारितनिस्वानलालितैः क्ष्वेडितैः क्षालितगवाक्षमौनरौक्ष्यं द्रुपदनगरं पुनरपि निर्वार्य निरुच्छ्वासयाञ्चक्रुः । तत्क्षणमेव सत्वरं निर्गत्वरेषु विविधैरायुधैरशून्येषु द्रुपदसैन्येषु ॥ २९ ॥—

पृथासुतास्तेऽपि रथाधिरूढा
द्विधा विचार्यैव पुरान्निरीयुः ।
शरैर्विधातुं द्विषतोऽपि चूर्णा-
स्तत्सुभ्रुवामप्यलकानचूर्णान् ॥ १०६ ॥

द्वत्वं दत्तं जामात्रा राज्ञे अकिंचनत्वं दत्तं किमिति लोको मेने इत्यर्थः । राज्ञा जामातृभ्यो यौतकमियद्दत्तं येन स्वयमकिंचनो जात इति भावः ॥ १०५ ॥

एवम् अन्तरिक्षे निक्षिप्तं स्थापितं यत् लक्ष्यं मत्स्यरूपं तस्य वेधलक्षणेन वेधरूपेण शुल्कनिष्केण कन्यार्थदेयमौल्यधनेन निजकण्ठेषु निष्कायिता कण्ठभूषणीकृता कन्यावाहुलता यैस्तान् एतान् कौन्तेयान् पार्थान् अवगन्तारः पार्था इमे इति ज्ञातारः पथि मार्गे दुरहंतया दुरहंकारेण आरोपिता उत्पादिता पार्थानां निवर्तने मतिर्येषां ते शकुनेः भागिनेयाः गान्धारीपुत्रा दुर्योधनादयः विकर्तनतनयस्य सूर्यपुत्रस्य कर्णस्य ये उपायाः पार्थानां निवर्तनोपायाः तेषां विधेयैः वश्यैः सहायैः शकुन्यादिभिः सह संमन्त्र्य सेनायाः पुरःसरो यो निःसाणो दुन्दुभिः तस्मान्निःसारितः प्रकटीकृतः यो निःस्वानः शब्दः तेन ललितैः मनोहरैः क्ष्वेडितैः वीराणां सिंहनादैः क्षालितं दूरीकृतं गवाक्षाणां मौनस्य रौक्ष्यं दारिद्र्यं यस्मिन् तत्, भेरीक्ष्वेडितशब्दानां प्रतिध्वनयो गवाक्षेषु जाता इत्यर्थः । द्रुपदनगरं पुनरपि—पूर्वमेकवारं द्रोणाज्ञया द्रुपदनगरं निरुद्धमिति हेतोः पुनरपीत्युक्तं—निर्वार्य वेष्टयित्वा निरुच्छ्वासयाञ्चक्रुः अन्तःस्थितप्राणिनां वहिर्निर्गमनादिप्रतिबन्धं चक्रुः । एतन्मन्त्रकर्तृशकुनिभागिनेयानुत्प्रेक्षते—**समारब्धेति** । पूर्वं समारब्धं समारब्धपूर्वं तस्य युद्धात्पलायनरूपस्याध्ययनस्य द्वितीयावृत्तेः विच्छित्तिं विच्छेदं परिहर्तुमिच्छव इव । यथा कश्चित् कृतस्याध्ययनस्य विस्मरणं मा भूदिति द्वितीयावृत्तिं करोति तद्वत् । अनेकैः आयुधैः युक्तेषु द्रुपदसैन्येषु तत्क्षणमेव सत्वरं यथा तथा निर्गत्वरेषु पुराद्बहिर्गमनं कुर्वत्सु सत्सु ॥ २९ ॥—

ते पृथासुता अपि रथाधिरूढाः सन्तः द्विधा विचारं कृत्वैव पुरान्निर्जग्मुः । विचारद्वै-

१ ख. 'धनलक्ष्ं' । २ ख. 'ललितैः । ३ क.क्ष्वेलितैः । ४ क. 'नकक्ष्यम् । ५ क. 'पुरम् । ६ क. निरुध्य । ७ क. निर्गतेषु ।

शङ्खं[1] दध्मुस्ताडयन्ति स्म भेरीश्चक्रुः क्ष्वेडां[2] चापनादं[3] विवव्रुः ।
सिद्धादीनां द्योसदां लालनीये युद्धारम्भे ते द्वयेऽपि प्रवीराः॥१०७॥
अनयोर्वलयोर्महारथानामवलोकाय नभोजुषां सुरीणाम् ।
सुदृशां च पुरस्य सौधभाजां वरणस्रग्विधृतैव भेदिकाऽभूत् ॥१०८॥
आसीदताम्याशु धनुर्धराणामासीदतास्यत्करकौशलानाम् ।
क्षणं मिथो बाणगणं[4] निरुध्य व्रणं विना तत्र रणं महीयः ॥ १०९ ॥
रथिकं रथिको द्विरदं द्विरदस्तुरगं तुरगः पदगं पदगः ।
इतरेतरमेत्य रणं विदधौ[5] दिवि नारदविस्मयनाकतरुम् ॥ ११० ॥
रजोन्धकारेषु दृशोन्धयत्सु करैः करान्कौतुकसूत्रचिह्नान् ।
परामृशन्तो युधि पाण्डुपुत्राः परस्परं पर्यहरन्प्रहारान् ॥ १११ ॥

---

विध्यमाह—शरैरिति । शरैः वाणैः द्विषतोऽपि शत्रूनपि चूर्णान् खण्डान् विधातुं कर्तुं, तेषां शत्रूणां सुभ्रुवां वधूनाम् अलकानपि केशानपि अचूर्णान् पतिजीवनेन सौभाग्यवत्त्वात् अखण्डान् विधातुम् । शरैः शत्रूणां प्राणहरणं कर्तव्यम् अथवा जित्वा सप्राणा मोक्तव्या इति विचारद्वैविध्यं फलति । मानवतां युद्धात् पलायमाने मरणमस्मरणं भवतीति भावः ॥ १०६ ॥

स्वर्गवासिनां देवानां द्रष्टुं प्रिये युद्धारम्भे ते द्वयेऽपि उभयपक्षस्थिता अपि प्रवीराः शङ्खं दध्मुः वादयामासुः, भेरीस्ताडयामासुः, सिंहनादं चक्रुः, चापगुण्टणत्कारं चक्रुः प्रकटीचक्रुश्च ॥ १०७ ॥

अनयोः सैन्ययोः संबन्धिनां महारथानाम् एतत्संज्ञकमहावीराणाम् अवलोकनाय नभोजुषां नभसि प्राप्तानां सुरीणाम् अप्सरसां, नगरसौधस्थितानां सुदृशां सुन्दरस्त्रीणां च भेदिका भेदकर्त्री अप्सरोभिः हस्ते धृता नूतनपतिवरणविषये स्रक् पुष्पमालिकैव अभूत् । वीराणां धर्मयुद्धे संमुखमरणे स्वर्गवासस्मरणात् अप्सरसां पतित्वेन तद्वरणम् । नगरस्त्रियोऽप्सरस्तुल्या इति भावः ॥ १०८ ॥

अताम्यत् विकसत् करकौशलं येषां तेषाम् आशु शीघ्रम् आसीदतां परस्परं संघट्टमानानां धनुर्धराणां महीयः अतिशयेन महत् रणं युद्धं क्षणं मिथः वाणसमूहं निरुध्य खेटादिना रुद्ध्वा, वाणेन वाणं संछिद्य वा व्रणं विना आसीत् ॥ १०९ ॥

चतुरङ्गसैन्यमध्ये रथिकादिकः स्वसमानं रथिकादिकं प्रति अन्योन्यम् एत्य प्राप्य दिवि अन्तरिक्षे नारदविस्मयस्य नाकतरुं कल्पवृक्षं नारदस्य बह्वाश्चर्यदायकमित्यर्थः, रणं विदधौ चकार ॥ ११० ॥

रजसामन्धकारेषु दृशः वीराणां नेत्राणि अन्धानि कुर्वत्सु, कौतुकसूत्राणि माङ्गलिकसूत्राणि चिह्नानि येषां तान् करान् हस्तान् स्वकीयकरैः परामृशन्तः स्वकीयः

---

१ क. ख. शङ्खान् । २ क. क्ष्वेलाः । ३ क. 'नादान्वि' । ४ क. 'गणोपरोधाद्व्रणं न कस्यापि रणं नवं यत् । ५ क. विदधे ।

सोमकेष्वपसर्पत्सु सूर्यसूनोः शितैः शरैः।
कूजयामास कोदण्डं कुलिशायुधनन्दनः॥ ११२॥

तेन जनन इव प्रधनेऽपि वृकोदरद्वितीयेन करोदरपरिकर्मीकृतस्य कार्मुकस्य वर्मनिर्माथिभिः शरोर्मिभिर्निर्मितैर्मर्मणो भयप्रसारिभिः स्वेदवारिभिः पदान्येव यानपदेऽभिषिञ्चन्तः समराजिरकन्दलितपार्थयशश्चतुर्थीचन्द्रावलोकनं परिहर्तुमिव मुखं निवर्त्य सौबलेयाः केवलैरेव बाहुभिः कुरुपुटभेदनं प्रति पलायाम्बभूवुः॥ ३०॥

बीभत्सुचापविवृतेषु महत्सु कर्म-
स्वेकं दृढं जगृहिरे युधि धार्तराष्ट्राः।
वीक्ष्य स्थितेषु विमतेषु विलोलजीवं
पृष्ठं प्रकाश्य गमनं पृथुना जवेन॥ ११३॥

---

परकीयो वा इति ज्ञानार्थं परामृशन्तः पाण्डुपुत्राः युधि परस्परं प्रति प्रहारान् पर्यहरन्, वर्जयामासुः। सूत्रच्छिद्रेयं भ्रातेति ज्ञात्वा प्रहारं न चक्रुरित्यर्थः॥ १११॥

सूर्यसूनोः कर्णस्य शितैः तीक्ष्णैः शरैः सोमकेषु द्रुपदपक्षीयेषु अपसर्पत्सु पृथग्भागे गच्छत्सु सत्सु "आत्मा वै पुत्रनामासि" इति श्रुत्या सूर्यसूनुसकाशादपि सोमपलायनं युक्तमिति सूचितम्। कुलिशायुधनन्दनः अर्जुनः कोदण्डं धनुः कूजयामास सशब्दं चकार। धनुषः प्रत्यञ्चारणत्कारं चकारेत्यर्थः॥ ११२॥

जनने उत्पत्ताविव प्रधने युद्धेऽपि वृकोदरद्वितीयेन वृकोदरः द्वितीयः सहायो यस्य तेन अर्जुनेन करोदरे करमध्ये परिकर्मीकृतस्य धृतस्य कार्मुकस्य कवचभेदिभिः बाणतरङ्गैः निर्मितानि ईर्माणि व्रणान्येव मर्माणि प्राणिघातकानि येषां ते भयेन प्रसारिभिः क्षरद्भिः स्वेदोदकैः कृत्वा पदान्येव चरणानेव यानपदे पलायनाधिकारे अभिषिञ्चन्तः सौबलेयाः गान्धारीपुत्राः दुर्योधनादयः समराङ्गणे कन्दलितं प्रसृतं यश एव भाद्रपदशुक्लचतुर्थीचन्द्रकला तस्याः अवलोकनं परिहर्तुमिव वञ्चयितुमिव मुखं निवर्त्य पश्चात्कृत्वा केवलैः बाहुभिः सहैव न तु कन्यायशआदिभिः सह कुरुराजधानीं प्रति पलायाम्बभूवुः पलायनं चक्रुः॥ ३०॥

धार्तराष्ट्राः धृतराष्ट्रपुत्राः कर्णशकुन्यादयः युधि युद्धे बीभत्सोः अर्जुनस्य चापेन विवृतेषु प्रकटितेषु महत्सु कर्मसु मध्ये एकं कर्म दृढं यथा तथा जगृहिरे स्वीचक्रुः। किं कृत्वा, विमतेषु शत्रुषु स्थितेषु सत्सु विलोला चञ्चला जीवा मौर्वी यस्मिन् तत्तु, अन्यत्र विलोलाः बहिर्गमने चञ्चलाः जीवाः प्राणाः यस्मिन् तत् पृष्ठभागं प्रकाश्य शत्रून्प्रति दर्शयित्वा पृथुना जवेन वेगेन गमनं रणाङ्गणे प्रापणम्, अन्यत्र रणाङ्गणात् गमनम् अपसरणं

---

१ ख. कुकुशा°। २ क. °भिर्निक्त्तम°। ३ क. °विसा°। ४ क. °भिः स्वपदा°। ५ क. ख. चन्द्रकलावलो°।

विजयात्परमेतेषामृजवोऽप्यरिभीषणाः ।
सद्यो गुणाः समुन्नेमुरवनेमुस्तु धन्विनाम् ॥ ११४ ॥
ते निवृत्य नगरं समाविशन् भूषिता द्रुपदराजपूजया ।
अप्यशेषजनकेन शौरिणा जन्यभावमुपजग्मुषा समम् ॥ ११५ ॥
पार्थ एव सहजेष्वखिलेषु प्रायशो युधि बलं श्रुतवत्याः ।
अन्वभूदधिकमीक्षणवृष्टेरार्जकांशमिव राजसुतायाः ॥ ११६ ॥
वृत्तान्तमेवमवकर्ण्य स राजवृद्धः
क्षत्त्रा सकाशमुपनीय सहानुजातैः ।
धर्मात्मजाय धुरि कंसभिदोऽर्धभागा-
दन्वर्थतामथ विभज्य ददौ स्वनाम्नः ॥ ११७ ॥

---

वीक्ष्य दृष्ट्वा । यथा कश्चित् कस्यचित् अनेककर्मदर्शनेऽपि स्वबुद्धिसामर्थ्यानुसारेण यत्कि-ञ्चित्कर्म दृढं गृह्णाति तद्वत् पार्थधनुषोऽनेककर्मणां मध्ये विलोलजीवं पृष्ठं प्रकाश्य पृथुना जवेन गमनलक्षणमेकं कर्म दृढं जगृहुरित्यर्थः ॥ ११३ ॥

ऋजवः सरला अपि अरीणां भीषणाः भयदायकाः एतेषां पाण्डवानां गुणाः शौर्यौ-दार्यादयः विजयात्परं जयोत्तरं सद्यः तत्कालं समुन्नेमुः वृद्धिं जग्मुः, धन्विनां गुणाः धनु-र्गुणाः अवनेमुः अवतीर्णा बभूवुः । एके उत्कर्षं प्राप्ताः अपरे अपकर्षं प्राप्ता इत्यर्थानुसंधा-नमापाततोऽत्र भवति ॥ ११४ ॥

द्रुपदराजकृतया वस्त्रालंकारादिभिः पूजया भूषिताः ते पाण्डवाः रणाङ्गणान्निवृत्य अशेषाणां जनकेनापि जन्यभावं पुत्रत्वमिति विरोधः मित्रत्वमिति परिहारः, उपेयुषा प्राप्तवता शौरिणा कृष्णेन समं द्रुपदनगरं समाविशन् प्रविविशुः ॥ ११५ ॥

अखिलेषु सहजेषु बन्धुषु मध्ये पार्थः अर्जुन एव युधि बलं शौर्यम् अर्थादर्जुनस्य श्रुतवत्याः राजसुतायाः द्रौपद्याः अधिकमीक्षणवृष्टेः सरागापाङ्गदर्शनवर्षणस्य अंशं प्रायशः अन्वभूत् । क इव, अर्जक एव आर्जकः धनादिसंपादक इव । यथा कश्चित् विभागसमये धनभूम्यादिसंपादकः अधिकं श्रमांशं प्राप्नोति तद्वत् इत्यर्थः ॥ ११६ ॥

राजा चासौ वृद्धश्च राजवृद्धः धृतराष्ट्रः 'लाक्षागृहान्मुक्तैः पाण्डवैः द्रुपदनगरे प्रकटी-भूय स्वयंवरे द्रौपदी लब्धा तस्मिन्समये प्रतिस्पर्धिनो राजानो जिताश्च' इत्येवं वृत्तान्तं श्रुत्वा क्षत्त्रा विदुरेण कृत्वा अनुजातैः कनिष्ठबन्धुभिः सह स्वसमीपमानीय अर्थाद्धर्मराजं कंस-भिदः श्रीकृष्णस्य धुरि अग्रभागे धर्मात्मजाय अर्धे राज्यार्धे भागात् विद्यमानत्वात् तस्य स्वत्वाद्धेतोः स्वनाम्नः धृतराष्ट्र इति नाम्ना अन्वर्थतां राष्ट्रपालकत्वं विभज्य समविभागं कृत्वा ददौ । अर्धराष्ट्रदानेन राष्ट्रपालकत्वं ददावित्यर्थः ॥ ११७ ॥

---

१ क. 'प्यतिमी' । २ क. ख. धन्वनाम् । ३ क. 'वसंस्तोपिता' । ४ ख. वन्यशे' । ५ क. 'वृष्टीरर्जकांश । ६ क. 'पनाय्य । ७ क. ख. 'भावाद' ।

तस्मिन्नाहितलक्षणे नरपतौ राज्याभिषिक्ते सति
स्वान्यक्षीणि दधुर्यदम्बु शिशिरं लिप्ताङ्के कुङ्कुमैः ।
रागं यद्विभराम्बभूवुरवहन्यद्वर्णिते बन्दिभि-
र्निष्पन्दत्वमतः स्वदृष्टिरिति तं पौरा विवव्रुः स्फुटम् ॥ ११८ ॥
दिगन्तरलुठत्कीर्तिरनन्तकविकुञ्जरः ।
प्राणैस्तुल्यं सरस्वत्याः प्राणैषीच्चम्पुभारतम् ॥ १ ॥

इत्यनन्तभट्टकविकृतौ चम्पूभारते द्वितीयः स्तवकः समाप्तः ॥ २ ॥

## ३ तृतीयः स्तबकः ।



पितृव्यवाचाऽथ पृथातनूजो हरिं पुरोधाय समं बलौघैः ।
परस्परस्नेहमिवैष मातुं प्रस्थं ययौ खाण्डवशब्दपूर्वम् ॥ १ ॥
तत्र वनीभवति वनीपकजनमनीषितपूरकपुरुकुलावनीपसुरसुरभि-

पौराः पुरवासिनो जनाः आहृतानि प्रसिद्धानि लक्षणानि सामुद्रिकोक्तसाम्राज्यादि-चिह्नानि, औदार्यदयालुत्वादयो गुणा वा यस्य तस्मिन्नरपतौ युधिष्ठिरे राज्ये राजकर्मणि अ-भिषिक्ते सति यत् यतः कारणात् स्वानि स्वकीयानि अक्षीणि शिशिरम् आनन्दजन्यशी-तम् अम्बु दधुः कुङ्कुमैः काश्मीरजन्मयुक्तचन्दनैः लिप्ताङ्के चर्चितशरीरे सति यतश्च रागं रक्तिमानम् अनुरागं च विभराम्बभूवुः दधुः । बन्दिभिः वर्णिते श्रुते सति यतश्च निष्प-न्दत्वं स्तब्धत्वम् अवहन् दधुः अतस्तं युधिष्ठिरं स्वदृष्टिरिति स्वनेत्रमिति स्फुटं विवव्रुः प्रकटीचक्रुः । यत्राभिषेकस्तत्राम्बु यत्र कुङ्कुमलेपस्तत्र रागः यस्य वर्णनं तस्य नेत्रे निष्प-न्दत्वं भवतीति कार्यकारणयोः सामानाधिकरण्यं लोके दृष्टमतो दृष्टित्वारोपो युक्त एवेति भावः ॥ ११८ ॥

इत्यनन्तभट्टकृतचम्पूभारतटीकायां द्वितीयस्तबकः समाप्तः ॥ २ ॥

पितृव्येति । अथ पृथापुत्रः एषः धर्मराजः पितृव्यस्य धृतराष्ट्रस्य वाचा आज्ञया हरिं श्रीकृष्णं पुरोधाय अग्रतः कृत्वा बलौघैः सेनासमूहैः समं यथा तथा परस्परस्नेहं भ्रातृपञ्चकस्यान्योन्यप्रीतिं मातुं परिमातुमिवेति फलोत्प्रेक्षा, खाण्डवशब्दः पूर्वो यस्य तं प्रस्थं खाण्डवप्रस्थमित्यर्थः । शब्दच्छलेन परिमाणविशेषं ययौ जगाम । यथा कश्चित्कंचित्पदार्थं परिमातुं प्रस्थादिमानस्थले गच्छति तद्वत् ॥ १ ॥

अवनं वनम् अभवत् तस्मिन् वनीभवति वनीपकजनमनीषितानां याचकजनम-नोरथानां पूरकाः पूर्णकर्तारो ये पुरुकुलावनीपाः पौरवभूपालाः तेषां सुरसुरभिगोष्ठेः

१ क. नृपसुते । २ ख. 'रभजन्य' । ३ क. ख. श्लोकोऽयं नास्ति । ४ क. ख. 'पूरुकु' ।

गोष्ठीगौष्ठीने देशे¹ प्रविश्य स्मरणमात्रनयनपात्रेण सकलशिल्पपारदृश्वकर्मणा विश्वकर्मणा² निर्मापितं कामनीयकविलोकनसुलभविस्मयभारगुरुतरानमरान्वोढुमक्षमतया क्षमातलमवलम्बमानैर्विमानैरिव कुरुविन्दमणिमन्दिरैरभ्रंलिहं जम्भरिपुनिदेशेन लम्भिततन्नामोपपदं हरिप्रस्थमधिष्ठिताय युधिष्ठिराय विनिवेद्य स्वपुरेऽपि सुषमामीदृशीं परीक्षितुमिव स्यन्दनेन यदुनन्दनेन प्रयये ॥ १ ॥

प्राणायमानमहिलानथ पाण्डुपुत्रान्
क्षोणाविमाननुजिघृक्षुरपारभूमा ।
एणाजिनेन घटितोद्गमनीयकृत्यो
वीणानिनादरसिको मुनिराविरासीत् ॥ २ ॥

---

कामधेनुसमूहस्य गौष्ठीने पूर्वं भूतं गोष्ठं तस्मिन्देशे 'गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम्' इत्यमरः । प्रविश्य स्मरणमात्रेण शिल्पानां प्रत्यक्षदर्शनेन सकलानां नयनपात्रेण कौशलानां पारदृश्वानि पारं दृष्टवन्ति कर्माणि यस्य तेन विश्वकर्मणा प्रयोज्यकर्त्रा निर्मापितम् उत्पादितं हरिप्रस्थम् इन्द्रप्रस्थम् अधिष्ठिताय युधिष्ठिराय विनिवेद्य समर्प्य स्वपुरेऽपि द्वारकायामपि ईदृशीम् इन्द्रप्रस्थतुल्यां सुषमां परमशोभां परीक्षितुं परीक्षां कर्तुमिवेत्युत्प्रेक्षा, द्वारकाहरिप्रस्थयोः विश्वकर्मकृतत्वादिति भावः । यदुनन्दनेन श्रीकृष्णेन स्यन्दनेन कृत्वा प्रयये प्रयाणं कृतम् । कीदृशं हरिप्रस्थं, कामनीयकस्य रमणीयतायाः विलोकनेन सुलभानां विस्मयानाम् आश्चर्याणां भारेण गुरुतरान् अमरान् देवान् वोढुं वहनं कर्तुम् अक्षमतया असमर्थतया क्षमातलं भूतलम् अवलम्बमानैः भूतले तिष्ठद्भिरित्यर्थः, विमानैरिवेत्युत्प्रेक्षा । कुरुविन्दमणीनां पद्मरागमणीनां मन्दिरैः अभ्रंलिहं गगनस्पृक् तथा जम्भरिपुनिदेशेन इन्द्राज्ञया लम्भितं प्रापितं तन्नाम इन्द्र इति नाम उपपदं पूर्वपदं यस्य तत् ॥ १ ॥

अथ इन्द्रप्रस्थाधिष्ठानानन्तरं -प्राणायमाना प्राणवदाचरन्ती महिला द्रौपदी स्त्री येषां तान् इमान् पाण्डवान् अनुजिघृक्षुः अनुग्रहं कर्तुमिच्छुः अपारः अनन्तः भूमा महत्त्वं यस्य सः एणाजिनेन मृगचर्मणा घटितं कृतम् उद्गमनीयकृत्यं धौतवस्त्रयुग्मकार्यं येन सः 'तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम्' इत्यमरः । यस्य धौतवस्त्रोत्तरीयवस्त्रस्थाने एणाजिनमेव वर्तत इत्यर्थः । वीणाया निनादे शब्दे रसिकः लुब्धः मुनिः नारदऋषिः क्षोणौ पृथिव्याम् आविरासीत् प्रत्यक्षो बभूव ॥ २ ॥

---

१ क. देशे स्मरणमात्रकृतसंनिधानेन सक° । २ क. ख. °दृश्वना वि° । ३ क. °वा स्वकर्मणेत्यधिकम् । ४ क. रामणीयकावलो° । ५ क. ख. क्षमातल° । ६ क. इन्द्रप्रस्थ° । ७ क. निवेद्य । ८ क. °रुदारभूमा । ९ क. °विनोदर° ।

तपोनिधेरागमनेन सद्यः सभा विभोः स्तब्धजनारवाऽपि।
वीणारवानुद्रुतभृङ्गमालाकोलाहलैर्घोषितदिङ्मुखाऽभूत् ॥ ३ ॥

दृष्ट्वा नृपो देवमुनिं विनीतो
मौलिस्रजां धूलिमधूलिवृन्दैः।
सपङ्कमाधाय तमङ्घ्रियुग्मे
विपङ्कमात्मानमयं व्यतानीत् ॥ ४ ॥

मेध्यां वृसीमधिगतस्य विरिञ्चिसूनो-
रास्थाय सन्निधिमुदारमुदां कुरूणाम्।
तस्याद्भुतागमनहेतुपरिच्छिदायां
चित्तानि दूरपथवर्तनतामवापुः ॥ ५ ॥

निकुञ्चिते तेन धृता निजाङ्के विपञ्चिका मौनमवाप्य तस्थौ।
पाञ्चालिकावन्दनवादशैलीमाधुर्यमाकर्ण्य विलज्जितेव ॥ ६ ॥

---

तपोनिधेः नारदऋषेः आगमनेन सद्यः तत्काले विभो राज्ञः सभा, स्तब्धः जनारवो लोकशब्दो यस्यां तथाभूताऽपि वीणारवम् अनुद्रुता वीणाशब्दमाधुर्यम् अनुलक्ष्य आगता या भृङ्गमाला तस्याः कोलाहलैः कलकलैः घोषितानि शब्दयुक्तकृतानि दिङ्मुखानि दिक्प्रदेशा यस्यास्तथाभूता अभूत्। अनेन कल्पवृक्षपुष्पमकरन्दमपहाय भ्रमरागमनकथनेन वीणाशब्दमाधुर्यातिशयो द्योत्यते ॥ ३ ॥

विनीतः नम्रः अयं नृपः धर्मराजः देवमुनिं दृष्ट्वा मौलिस्रजां मुकुटसंबन्धिपुष्पमालानां धूलिमधूलीनां परागमकरन्दानां वृन्दैः तं नारदम् अङ्घ्रियुग्मे सपङ्कं सकर्दमं विधाय कृत्वा आत्मानं विपङ्कं विगतकर्दमं व्यतानीत् अकरोत्, इत्याश्चर्यम्। अङ्घ्रियुग्मे मस्तकस्थापनपूर्वकं प्रणम्य आत्मानं विगतपापमकरोदिति नाश्चर्यमिति भावः ॥ ४ ॥

मेध्यां पवित्रां वृसीं तृणमयासनम् अधिगतस्य प्राप्तस्य तृणासने उपविष्टस्येत्यर्थः, विरिञ्चिसूनोः ब्रह्मपुत्रस्य नारदस्य संनिधिम् आस्थाय आसाद्य उदारा महती मुत् हर्षो येषां तेषां कुरूणां पाण्डवानां चित्तानि तस्य नारदस्य अद्भुतागमने यो हेतुः कारणं तस्य परिच्छिदायाम् इयत्तया नियमने दूरपथे वर्तते तानि दूरपथवर्तनानि तेषां भावस्तत्ता ताम् अवापुः। एतदर्थमयमागत इति मनसि निश्चयो नाभूदिति भावः ॥ ५ ॥

तेन नारदेन निकुञ्चिते संकुचिते निजाङ्के स्वोत्सङ्गे धृता विपञ्चिका वीणा मौनम् अवाप्य शब्दं विसृज्येत्यर्थः, तस्थौ। तां निःशब्दवीणामुत्प्रेक्षसे, पाञ्चालिकायाः द्रौपद्याः वन्दनवादशैल्या अभिवन्दनसंबन्धिवाग्रीतेः माधुर्यम् आकर्ण्य द्रौपदीकण्ठमाधुर्यं श्रुत्वेत्यर्थः, विलज्जितेव लज्जां प्राप्तेव। पाण्डवान् प्रति किंचिद्वक्तव्यमस्तीति वीणावादनं तेन त्यक्तमिति भावः ॥ ६ ॥

---

१ क. तदङ्घ्रि युग्मम्।

राज्ञाऽमुना समुचितेषु सभाजनेषु
पात्रैश्च पाणिविधृतैश्चपलैश्च[1] वेत्रैः ।
निर्वर्तितेषु रभसेन निवर्तितेषु
स्मित्वा मिथो गिरमभाषत धातृसूनुः ॥ ७ ॥
लाक्षागृहाद्यदच्यावि साक्षादिव रतिः प्रिया ।
यद्व्यवाहि च युष्माभिस्तद्द्वयं हि सतां मुदे ॥ ८ ॥
स्वतो भातमतीनां वः कुतो वाऽन्यानुशासनम् ।
मौनं तु सुहृदाख्येये दूनं वक्तारमावहेत्[2] ॥ ९ ॥
अष्टमी किल शिखावधूरियं
भाति याजमखवेदिबर्हिषः ।
यूयमभ्रसरिता वृतान्वयाः
पावनः खलु भवत्समागमः ॥ १० ॥

---

अमुना राज्ञा धर्मराजेन समुचितेषु योग्येषु सभाजनेषु पाणिविधृतैः करधृतैः पात्रैः गन्धपुष्पादिपूजापदार्थभाजनैः चपलैः वेत्रैश्च क्रमेण निर्वर्तितेषु पूजया सुखितेषु, रभसेन वेगेन निवर्तितेषु अपसारितेषु च सत्सु धातृसूनुः नारदः स्मित्वा ईषद्धास्यं कृत्वा मिथो रहसि गिरम् अभाषत । द्वाभ्यां चकाराभ्यां योग्येष्वपि पात्रवेत्रजन्यसंतोषापसारणसाहित्यं द्योत्यते ॥ ७ ॥

हे पाण्डवाः! युष्माभिः लाक्षागृहात् अच्यावि गृहदाहात्पूर्वं निर्गतम् इति यत्, साक्षात् रतिरिव प्रिया व्यवाहि व्यूढा इति यत्, तत् द्वयं सतां मुदे हि हर्षायैव । अनेन असतां दुर्योधनादीनां दुःखाय जातमिति ध्वन्यते ॥ ८ ॥

स्वतः परोपदेशादिकारणं विना स्वात्मनैव भाता स्फुरद्रूपा मतिर्येषां तेषां वः युष्माकम् अन्यानुशासनम् अन्यशिक्षा कुतः, कुतोऽपि नेत्यर्थः । तर्हि केनापि शिक्षावचनं नोक्तव्यमिति चेदत्राह—मौनमिति । सुहृदे मित्राय सुहृदा मित्रेण वा वक्तव्येऽर्थे मौनं तु वक्तारं दूनं दुःखसंतप्तमावहेत्कुर्यात् । अतो मित्रेण स्वतो भातमतीनां स्वसंतापपरिहाराय वक्तव्यमित्यर्थः ॥ ९ ॥

इयं वधूः जाया द्रौपदी याजस्य याजर्षेः मखवेदेः यज्ञकुण्डसंबन्धिनः बर्हिषः अग्नेः 'बर्हिः शुष्मा कृष्णवर्त्मा' इत्यमरः । अष्टमी शिखा किल ज्वालेव भाति । सप्तार्चिरग्निरस्ति इयं तदुत्पत्तिप्रभापावनत्वादिधर्मेण तस्याष्टमी अर्चिः किमित्युत्प्रेक्षा । यूयं भवन्तः अभ्रसरिता भागीरथ्या वृतः स्वीकृतः अन्वयो वंशो येषां तथाभूताः भवन्तः । भागीरथ्याः पौरववंशजशन्तनुभार्यत्वात् वृतान्वय इत्युक्तम् । अतः तया साकं भवतां समागमः पावनः खलु पवित्र एव । अग्निभागीरथ्योः पावनत्वात् तत्संबन्धतया युष्माकं समागमः पवित्र एवेति भावः ॥ १० ॥

---

१ क. प्रचलैश्च । २ क. 'मादिशेत् ।

जायया च पतिभिश्च कदाचि-
ज्जायते स्म न हि दम्पतिशब्दः ।
अद्भुतस्य खलु तस्य जगत्या-
मर्थतामनुभवन्ति भवन्तः ॥ ११ ॥

एकस्मै स्पृहयालूनामिष्टाय सुधियामपि ।
करस्थमेव ब्रुवते कलहं निधनावधिम् ॥ १२ ॥

सुन्दोपसुन्दौ सहजावभीकौ
सुरेष्विव क्वापि सुराङ्गनायाम् ।
अन्योन्यमाहत्य पुरा यमस्य
मनोभवेषोरिव लक्ष्यमास्ताम् ॥ १३ ॥

तत्सौभ्रात्रशरव्यस्य द्वैधीकरणकेलये ।
भवतां मारचापेषू भवतां मा वधूकृते ॥ १४ ॥

इति रहस्यं तपस्विनिदेशं शुभोदर्कं तर्कयन्तस्ते कौन्तेयास्तस्यैव समक्षमसिधारासगन्धां सन्धामिमामाबवन्धुः ॥ २ ॥

---

जायया एकभार्यया पतिभिः बहुपतिभिश्च दम्पतिशब्दः जाया च पतयश्चेति विग्रहेण एकजायाबहुपतिवाचकदम्पतिशब्दः कदाचित् न हि जायते स्म नैव जातः तदर्थस्य लोके अभावात् नोत्पद्यते स्म । अद्भुतस्य लोकविलक्षणत्वादाश्चर्यकारकस्य तस्य जाया च पतयश्चेति विग्रहविशिष्टस्य दम्पतिशब्दस्य अर्थताम् अभिधेयतां जगत्यां लोके भवन्तः अनुभवन्ति ॥ ११ ॥

एकजायायाः अनेकपतित्वमनर्थमूलमित्याह—**एकस्मै इति** । सुधियां विचारवतामपि एकस्मै इष्टाय प्रियपदार्थाय स्पृहयालूनां स्पृहां कुर्वतां प्राणिनां निधनावधिं मरणान्तं कलहं करस्थं हस्ते विद्यमानं सुलभमित्यर्थः, ब्रुवते वदन्ति ॥ १२ ॥

एतद्विषये इतिहासमाह—**सुन्दोपसुन्दाविति** । पुरा सहजौ सोदर्यबन्धू सुन्दोपसुन्दौ एतन्नामकावसुरौ सुरेष्विव क्वापि कदाचित्सुराङ्गनायां तिलोत्तमानाम्न्यां देवाङ्गनायाम् अभीकौ निर्भयौ, कामुकौ च तौ सन्तौ 'कम्रः कामयिताऽभीकः' इत्यमरः । अन्योन्यम् आहत्य गदाभ्यां ताडयित्वा मनोभवेषोरिव मदनबाणस्येव यमस्य लक्ष्यं वेध्यम् आस्तां, मृतावित्यर्थः ॥ १३ ॥

तत्तस्मात् वधूकृते एकस्त्रीविषयार्थं मारस्य मदनस्य चापेषू धनुर्बाणौ भवतां युष्माकं शोभनभ्रातॄणां भावः सौभ्रात्रं सुबन्धुत्वं तदेव शरव्यं लक्ष्यं तस्य द्वैधीकरणं भेदनं तदेव केलिः क्रीडा तस्यै केलिं कर्तुमित्यर्थः, मा भवतां न भवेताम् । एकस्त्रीकृतः युष्माकं परस्परप्रीतिभङ्गो मा भूदिति भावः ॥ १४ ॥

इति रहस्यं रहसि भवं तपस्विनो नारदस्य निदेशम् आज्ञां शुभः उदर्कः भाविफलं यस्य तथाविधं तर्कयन्तः बुद्ध्या विचारयन्तः ते कौन्तेयाः तस्यैव नारदस्यैव समक्षं

एते वयं चातका इव जीवनमयं वर्षमेकैकमवलम्ब्य प्रियया सममनया सुखेन वत्स्यामस्तथाभूतेष्वस्मासु यो मिथुनकृतोपवेशे देशे दृशाऽपि प्रविशेत्सोऽयं वृजिनं विहातुमजिनं परिधाय सुकृतसार्थसमर्थापकतीर्थपरिपुष्टास्वष्टासु दिक्षु तत्त्रिगुणसंख्याकान् पक्षान्प्रक्षिपेदिति ॥ ३ ॥

राजा निदेशकृदभूदिति धातृसूनो-
रन्तर्मुदो निरवधेरिदमास चिह्नम् ।
यत्तस्य पाणिरकरोन्मृदुकण्ठगीते-
र्वीणागुणे विवशरिङ्खणमङ्गुलीनाम् ॥ १५ ॥

तस्मिन्नभःसरणिमुत्पतिते मुनीन्द्रे
सा तेषु पञ्चसु समं ववृते मृगाक्षी ।
सान्क्रन्दनेषु विटपिष्विव दानलक्ष्मी-
र्मनोभवेषु जयसिद्धिरिवाशुगेषु ॥ १६ ॥

---

तीक्ष्णत्वेन असिधारया[1] सगन्धां समानाम् इमां वक्ष्यमाणां संधां प्रतिज्ञाम् आवबन्धुः चक्रुः ॥ २ ॥

एते वयं चातकपक्षिण इव जीवनमयं जीविकारूपम् एकैकं वर्षं संवत्सरम् अवलम्ब्य स्वीकृत्य, पक्षिपक्षे जीवनमयम् उदकमयं वर्षं वृष्टिं संवत्सरं च अवलम्ब्य अनया प्रियया समं सुखेन वत्स्यामः । अस्मासु तथाभूतेषु तेन नियमेन वर्तमानेषु सत्सु पञ्चानां मध्ये यः मिथुनेन स्त्रीपुंसाभ्यां कृत उपवेशः स्थितिर्यस्मिन् तस्मिन् देशे दृशाऽपि प्रविशेत् चक्षुषाऽपि ईक्षेत सोऽयं वृजिनं नियमोल्लङ्घनपापं विहातुं क्षालयितुम् अजिनं कृष्णाजिनं परिधाय सुकृतसार्थस्य पुण्यसमूहस्य समर्थापकानि संपादकानि यानि तीर्थानि तैः परिपुष्टासु युक्तासु अष्टसु दिक्षु तासां दिशां त्रिगुणा संख्या येषां तान् चतुर्विंशतिसंख्याकान् पक्षान् एकवर्षमित्यर्थः, प्रक्षिपेत् तत्पापक्षयार्थम् एकवर्षं तीर्थाटनं कुर्यादित्यर्थः । भारतीयादिपर्वणि द्वादशवर्षाणि प्रक्षिपेदिति नियमोऽस्ति एकवर्षमिति कुत उक्तमिदं चिन्तनीयम् ॥ ३ ॥

राजा निदेशकृत् आज्ञानुवर्ती अभूदिति हेतोः धातृसूनोः अन्तः मनसि निरवधेर्निर्मर्यादायाः मुदः हर्षस्य इदम् उत्तरार्धोक्तं चिह्नं ज्ञापकम् आस अभूत् । आसेति भौवादिकस्य लिटि रूपम् । तस्य नारदस्य पाणिः वीणायाः गुणे तन्तौ अङ्गुलीनां मृद्व्याः कण्ठगीतेः विवशं विसंवादि रिङ्खणं वादनार्थम् इतस्ततो गमनम् अकरोत् इति यत् । हर्षातिशयेन गीतिवादनयोरनुसंधानाभावादिति भावः ॥ १५ ॥

तस्मिन्मुनीन्द्रे नारदे नभःसरणिम् आकाशमार्गम् उत्पतिते उड्डीय गते सति सा मृगाक्षी द्रौपदी पञ्चसु तेषु पाण्डुपुत्रेषु समं यथा तथा ववृते । समवर्तने दृष्टान्तद्वयमाह—सांक्रन्दनेष्विति । संक्रन्दनस्य इन्द्रस्य इमे सांक्रन्दनाः तेषु विटपेषु पञ्चसु कल्पवृ-

---

१ क. 'मृष्यध्वं' । २ क. 'ख्यान्पक्षान्क्षपयेदिति ।

विप्रः कश्चन तत्र जातु अथ भुजावुद्धृत्य चोरैर्हृता
गावो मे निखिला हतोऽस्मि विधिना वत्सोऽपि नो शिष्यते।
राजन् राज्यमिदं विमुञ्च वसुधां शास्मीति सर्वानिमान्
किंवा ह्रासयसीति रोषकटुवाग्द्वारं ययौ भूपतेः॥ १७॥
दृष्ट्वा तं मधुरस्मितोऽथ विजयः कृत्वाऽऽसनादुत्थितिं
नत्वाऽङ्घ्रौ समवेक्ष्य भृत्यमिह मां ब्रह्मन्सहस्व क्षणम्।
गावस्ते स्वयमाव्रजेयुरधुनेत्याश्वास्य दस्यून्पुरः
प्राविक्षन्मनसा ततस्तु नृपतेः शस्त्राय गेहं स्वयम्॥ १८॥
तत्र तेन जगृहे तरस्विना चक्षुषा नृपतिरङ्गनासखः।
पाणिना च सशरं शरासनं पूर्तये सपदि विप्रवासयोः॥ १९॥
विनिर्गतोऽसौ विशिखानिव स्वकान्
विमुक्तजीवान्विरचय्य तस्करान्।

---

क्षेषु दानलक्ष्मीरिव। मनोभवस्य इमे मानोभवाः तेषु आशुगेषु पञ्चसु बाणेषु जयसिद्धिरिव॥ १६॥

नारदस्य पुरतः कृतप्रतिज्ञायाः पालनप्रकारं निरूपयति—**विप्र इति**। तत्र इन्द्रप्रस्थे जातु कदाचित् कश्चन विप्रः भुजौ उद्धृत्य 'मे निखिलाः गावः चोरैः हृताः नीताः। विधिना दुर्दैवेन हतोऽस्मि मारितोऽस्मि। यतः वत्सोऽपि नो शिष्यते नो अवशिष्टो भवति। हे राजन्! इदं राज्यं विमुञ्च त्यज। अहं वसुधां शास्मि दुष्टनिग्रहादिना पालयामि। इति उक्त्वा 'सर्वान् नृपान् किंवा ह्रासयसि राज्यत्यागेन स्वल्पसंपत्तीन् करोषि' तव प्रजापालने सामर्थ्याभावात् व्यर्थं परराज्यापहारं करोषीति भावः। इति रोषेण कटुः परुषा वाक् यस्य तथाभूतः सन् भूपतेः द्वारं ययौ जगाम॥ १७॥

अथ विप्राक्रोशानन्तरं मधुरं सुन्दरं स्मितम् ईषत् हास्यं यस्य सः विजयः अर्जुनः आसनादुत्थितिम् उत्थानं कृत्वा अङ्घ्रौ नत्वा 'हे ब्रह्मन्! इह स्थले मां भृत्यं दासं समवेक्ष्य मयि दासभावं मत्वेत्यर्थः, क्षणं सहस्व। अधुना ते गावः स्वयम् आव्रजेयुः आगमिष्यन्तीत्यर्थः' इति वचनेन आश्वास्य पुरः आदौ दस्यून् प्रति मनसा प्राविक्षत् प्रवेशं कृतवान्। ततोऽनन्तरं शस्त्राय शस्त्रमानेतुं नृपतेः धर्मराजस्य गेहं प्राविक्षत्॥ १८॥

तत्र गृहे तरस्विना वेगवता, अनेन गन्तव्यस्थलविचारशून्यता द्योत्यते। तेन अर्जुनेन चक्षुषा करणेन अङ्गनायाः सखा सुहृत् द्रौपदीसहित इत्यर्थः, जगृहे गृहीतः दृष्ट इत्यर्थः। चेत्यपरं पाणिना सशरं शरासनं धनुः जगृहे। उभयत्र हेतुमाह—पूर्तय इति। सपदि एकसमयावच्छेदेन विप्रवासयोः विप्रवासस्य प्रतिज्ञाततीर्थयात्रार्थं देशान्तरप्रवासस्य पूर्तये पूर्त्यर्थं, गोभिः विप्रवासस्य विप्रगृहस्य पूर्त्यर्थं च॥ १९॥

तद्गृहात् विनिर्गतः असौ अर्जुनः स्वकान् स्वकीयान् विशिखान् बाणानिव तस्करान्

---

१ क. ख. सर्वान्नृपान् किंवा ह्रासं'।

नितान्तवेगामिव गोपरम्परां
निवर्तयामास शुचं द्विजन्मनः ॥ २० ॥
प्रयाणनम्रे तदनु स्वमौलौ पार्थस्य जज्ञे नियमाभिषेकः ।
प्रागेव तीर्थोपगमात्पवित्रैर्बाष्पैर्नरेन्द्रस्य वियोगभीरोः ॥ २१ ॥

स धीरधीरत्युच्छ्रितेन कृच्छ्रेण राज्ञो गृहीताभ्यनुज्ञो वल्कलं घनं कल्कलङ्घनाय परिधाय मलयानिल इव मनुष्यधर्मणा राजन्वतीं काष्ठां प्रतिष्ठमानस्तपःप्रसादितस्य भगवतो भवानीवल्लभस्य साक्षात्कृपामिव भगीरथरथानुसारिणीं तरङ्गिणीमुपगम्य तत्र पवित्रासु वीचिषु सायंतननियमाय ऋचोऽघमर्षणीर्जपन्मज्जनमकार्षीत् ॥ ४ ॥

नालीकात्कुवलयसंक्रमे स्खलित्वा
मग्नाऽधः पयसि रमेव तत्र काचित् ।
तं दृष्ट्वा भुजगसुता मिथो रिरंसुः
संतुष्टा हृदयमिवानयत्स्वगेहम् ॥ २२ ॥

---

विमुक्ता जीवा मौर्वी यैस्तान्, अथ च गतप्राणान् विरचय्य कृत्वा निन्तातः वेगो यस्य तां द्विजन्मनः विप्रस्य गोपरंपरां गोसमूहमिव नितान्तवेगां शुचं शोकं निवर्तयामास । क्रमेण अपनीतवान् अपहृतवांश्चेत्यर्थः ॥ २० ॥

तदनु तदनन्तरं वियोगभीरोः वियोगो योगाभावस्तत्र भीरुर्भयशीलः तस्य नरेन्द्रस्य नराणाम् इन्द्रः मनुष्यश्रेष्ठः तस्य धर्मराजस्य पवित्रैः पूतैः वाष्पैः नेत्रोदकैः पार्थस्य पृथाया अयं पार्थः अर्जुनः “ तस्येदम् ” इत्यण् । तीर्थोपगमात् तीर्थेषु उपगमः तस्मात् गङ्गादिषूपगमात् प्रागेव पूर्वमेव प्रयाणनम्रः प्रयाणाय नम्रः तस्मिन् स्वमौलौ स्वस्य मौलिः तस्मिन् स्वकीयमूर्धनि नियमाभिषेकः नित्यनियमाय स्नानं जज्ञे ॥ २१ ॥

धीरधीः सोऽर्जुनः अत्युच्छ्रितेन महता कृच्छ्रेण राज्ञः गृहीता अभ्यनुज्ञा आज्ञा येन तथाभूतः सन् कल्कस्य एकान्ते द्रौपद्या सहासीनधर्मराजदर्शनजन्यपापस्य लङ्घनाय दूरीकरणाय घनं निविडं वल्कलं वृक्षत्वचं परिधाय मलयानिल इव दाक्षिणात्यवायुरिव मनुष्यधर्मणा कुबेरेण राजन्वतीं सुराजपरिपालितां काष्ठां दिशम् उत्तरदिशमित्यर्थः, प्रतिष्ठमानः प्रस्थानं कुर्वन् तपसा प्रसादितस्य भगवतो भवानीवल्लभस्य शिवस्य साक्षात् प्रत्यक्षं मूर्तिमतीं कृपामिव भगीरथस्य राज्ञः रथानुसारिणीं रथमनुलक्ष्य गमनकर्त्रीं तरङ्गिणीं नदीं भागीरथीमित्यर्थः, उपगम्य तत्र तत्स्थले पवित्रासु भागीरथ्याः वीचिषु सायंतननियमाय सायंकालीननियमं कर्तुम् अघमर्षणीः ऋचः जपन् मज्जनं निमज्जनम् अकार्षीत् ॥ ४ ॥

तत्र भागीरथ्यां काचित् भुजगसुता उलूपीनाम्नी नागकन्या तम् अर्जुनं दृष्ट्वा संतुष्टा,

---

१ क. राज्ञा कृताभ्य° । २ क. घनाघलङ्घ° । ३ क. पथानुसा° । ४ संबन्धातिशयोक्तिसंकीर्णा गम्योत्प्रेक्षाऽलंकारोऽत्र ।

प्रहृष्य हृदे तत्रैषा मनुष्यं फणिनां रतैः ।
संतर्पयितुमुत्सेहे कन्दर्पसममर्जुनम् ॥ २३ ॥
भोगाय तस्या भुजगेन्द्रपुत्र्याः
फूत्कार एव स्फुटसीत्क्रियाऽऽसीत् ।
कस्तूरिकाङ्कोऽजनि कण्ठकान्ति
फणामणिः पल्लवशेखरोऽभूत् ॥ २४ ॥
पाण्योर्ज्यामर्शकाठिण्यं तस्य तत्कुचमर्दने ।
तस्याश्च तन्मुखास्वादे फलायाभूद्द्विजिह्वता ॥ २५ ॥
सुखाच्चक्षुःश्रवस्तन्व्याः सुरते मीलनं दृशोः ।
चक्रे भणितवैदग्ध्यां तस्य काननकौमुदीम् ॥ २६ ॥

---

अत एव मिथः एकान्ते रिरंसुः रन्तुमिच्छुः सती हृदयमिव मन इव गेहम् आनयत् आनीतवती । यथाऽऽदौ मनस्यानीतवती तथा गृहेऽप्यानयदित्यर्थः । भुजगसुतामुत्प्रेक्षते, सायंकाले नालीकात् कमलात् सकाशात् कुवलये चन्द्रविकासिकमले यः संक्रमः उड्डीय गमनं तस्मिन्कर्मणि स्खलित्वा अधःपयसि मग्ना निमग्ना रमेव लक्ष्मीरिव । एतेन तस्याः लोकविलक्षणं सौन्दर्यं द्योत्यते ॥ २२ ॥

तत्र स्वगृहे एषा भुजगसुता हृदि मनसि प्रहृष्य महानन्दं प्राप्य मदनसदृशं मनुष्यम् अर्जुनं फणिनां रतैः मदनोत्सवैः संतर्पयितुं संतुष्टं कर्तुम् उत्सेहे उत्कण्ठिता बभूव॥२३॥

तस्याः भुजगेन्द्रपुत्र्याः स्वभावसिद्धफूत्कार एव भोगाय अर्जुनस्य सुखं दातुं स्फुटा सीत्क्रिया सीत्कारः आसीत् । तथा कण्ठसंबन्धिकृष्णकान्तिः कस्तूरिकाङ्कः कस्तूरीलेपः अजनि जातः । फणासंबन्धिशोणमणिः पल्लवशेखरः पल्लवावतंसः अभूत् । तस्याः शरीरे स्वतःसिद्धवस्तुवृन्दमस्य सुखाय जातमिति भावः ॥ २४ ॥

तस्य अर्जुनस्य हस्तयोः ज्यामर्शेन बाणप्रक्षेपसमये मौर्वीस्पर्शेन यत्काठिण्यं तत्तस्याः कुचयोः मर्दनकर्मणि फलाय उपयोगाय अभूत् । तथा तस्याः नागकन्यायाः द्विजिह्वता तस्य मुखास्वादे तद्ग्रहणकर्मणि फलाय अभूत् ॥ २५ ॥

चक्षुःश्रवस्तन्व्याः नागकन्यायाः सुरते सुखात् हेतोः दृशोः नेत्रयोः मीलनं कृतं तत् तस्य अर्जुनस्य भणितवैदग्ध्यां रतिकूजितचातुर्ये काननकौमुदीम् अरण्यसंबन्धिचन्द्रज्योत्स्नां चक्रे । तस्याश्चक्षुःश्रवस्त्वात् नेत्रमीलने भणितश्रवणप्रतिबन्धात् अरण्यचन्द्रिकेव निष्फला जातेत्यर्थः । अत्र चक्षुःश्रवस्तन्व्याः इति साभिप्रायविशेष्यसत्वात् परिकराङ्कुरालङ्कारः ॥ २६ ॥

---

१ क॰ °मारेभे । २ क. ख. °नैल्यम् । ३ क. ख. मणित° । ४ क. °वैदग्ध्यम् । ५ अत्रानयनेन मनःसदनयोरौपम्यस्य गम्यत्वात्केवलप्रकृतास्पदा तुल्ययोगिता । ६ ‘ साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः ’ इतिलक्षणात् ।

श्लाघाकम्पात्प्रियरतेः शिरसोऽन्तःपथादधः ।
च्युतो मणिरिवैरावान्सुषुवे तनयस्तया ॥ २७ ॥

इत्येकिकां स रजनीमपनीय तत्र
श्वासैः समं स्वकुलसंभवपृष्ठमित्रैः ।
मुक्तस्तया तटगतोऽनुचरान्द्विजाती-
नन्तर्वतोऽद्भुतरसैरतनोत्स्ववृत्त्या ॥ २८ ॥

उलूपिकाया रतिदंशनैस्तैरुन्मस्तकं मोहमिवापनेतुम् ।
उदग्रवीर्यौषधिजन्मभूमिमुमागुरुं शैलमयं प्रपेदे ॥ २९ ॥

फालस्य पञ्चविशिखे पदयोः कृतान्ते
हासस्य दानवपुरेष्ववलोकनस्य ।
शम्बायुधे पशुपतेरपदानपद्यं
गायन्ति सिद्धमिथुनान्यश्रृणोत्स तस्मिन् ॥ ३० ॥

---

तया नागकन्यया इरावान् एतन्नामकः पुत्रः सुषुवे प्रसूतः । तमुत्प्रेक्षते, प्रियस्य अर्जुनस्य रतेः श्लाघया कम्पो यस्य तस्मात् शिरसः सकाशात् अन्तःपथात् शरीरान्तर्वर्तिमार्गात् अधः च्युतः भ्रष्टः मणिरिव फणारत्नमिव ॥ २७ ॥

सः अर्जुनः तत्र नागकन्यागृहे इति उक्तवृत्तान्तेन एकिकाम् एकां रजनीम् अपनीय यापयित्वा तया स्वकुले संभवः उत्पत्तिर्येषां तेषां नागानां पृष्ठस्य पृष्ठभागस्य मित्रैः तत्सदृशैः दीर्घैरित्यर्थः । 'दर्वीकरो दीर्घपृष्ठः' इत्यमरः । श्वासैः विरहदुःखजन्यदीर्घश्वासैः समं मुक्तः ततः तटगतः सन् स्ववृत्त्या एकरात्रोदकवासरूपस्वचरित्रेण ये अद्भुतरसाः तैः अनुचरान्द्विजातीन् ब्राह्मणान् अन्तर्वतः सगर्भान् अतनोत् चकार, अद्भुतरसविशिष्टान् चकारेत्यर्थः ॥ २८ ॥

अयम् अर्जुनः उलूपिकायाः एतन्नामकनागकन्यायाः तैः प्रसिद्धैः रत्यां दंशनैः दन्तक्षतैः उन्मस्तकम् उदयप्राप्तं मोहं मूर्च्छामपनेतुमिवेति फलोत्प्रेक्षा । उदग्रं महद्वीर्यं सामर्थ्यं यासु तासाम् ओषधीनां जन्मभूमिम् उत्पत्तिस्थानम् उमाया गुरुं पितरं हिमवन्तं शैलं प्रपेदे ॥ २९ ॥

तस्मिन्हिमाचले सोऽर्जुनः सिद्धानां देवविशेषाणां मिथुनानि स्त्रीपुरुषद्वन्द्वानि यत्पशुपतेः शिवस्य भालाद्यवयवकर्तृकस्य अपदानस्य पूर्ववृत्तकर्मणः पद्यं प्रबन्धं गायन्ति तत् अश्रृणोत् । 'अपदानं कर्मवृत्तम्' इत्यमरः । कस्यावयवस्य कस्मिन्नपदानकर्म तदाह—**फालस्येत्यादिना** । फालस्य ललाटस्य, पञ्चविशिखे मदने ललाटस्थाग्न्यात्मकतृतीयनेत्रेण मदनो दग्धः । तथा पदयोः, कृतान्ते यमधर्मे स्वभक्तमार्कण्डेयजीवात्मानं नेतुमागतस्य शिवेन पादप्रहारः कृतः । तथा हासस्य, दानवानां पुरेषु त्रिपुरेषु पृथिव्यात्मकरथादियुद्धीयमहासामग्रीं कृत्वा गतेन शिवेन त्रिपुरात्मकं रिपुं तुच्छं दृष्ट्वा अट्टहासः कृतः । तेनैव

---

१ ख. भालस्य ।

तत्र तत्र स तस्य हिमाचलस्य [1] खुरपुटविनिमयविन्यासचन्द्रकितैरवतारपथैरपि रोमन्थफेनशकलतारकितैः प्रतीरनमेरुतलोपवेशैरप्यनुमेयहरवृषभस्वैरविहारासु कटकसरसीषु वृजिनानि विशोध्य वनमदावलकलभविदलिततरलसरलद्रुमप्रवालपरिमलसुरभिलेनोपत्यकावर्त्मना दिवि भुवि भरणकुशलाभ्यां महेन्द्राभ्यां परिगृहीतां हरितमवजगाहे ॥ ५ ॥

पम्फुल्यमाननवकेतकपांसुगर्भैः
पर्यन्तनिर्झरजलैः कलिताभिषेकः।
पार्थः स तत्र जनकाभिधयेव हृष्टः
पादे चिरं परिचचार गिरिं महेन्द्रम् ॥ ३१ ॥

---

तद्वासिधैर्यादिनाशो जातः। तथा अवलोकनस्य दर्शनस्य, शम्बायुधे वज्रायुधे इन्द्रे कदाचित् शिवदर्शनार्थम् इन्द्रः कैलासं गतः। तत्र द्वारि रूपान्तरेण स्थितं शिवमवमत्यान्तर्गच्छन्निन्द्रस्तेन निषिद्धः। ततस्तं हन्तुं वज्रमुद्यतवान्। ततः शिवेनावलोकनेनैव सर्वावयवेषु स्तब्धः कृतः ॥ ३० ॥

अर्जुनः हिमाचलस्य तत्र तत्र तासु तासु कटकसरसीषु नितम्बसरोवरेषु वृजिनानि पापानि विशोध्य क्षालयित्वा वनमदावलकलभैः वनगजशिशुभिः विदलिताः भग्नाः तरलानां चञ्चलानां सरलद्रुमाणां ये प्रवालाः पल्लवाः तेषां परिमलैः सुगन्धैः सुरभिलेन सुगन्धिना उपत्यकावर्त्मना अद्रिसमीपभूमिमार्गेण महेन्द्राभ्यां मघवन्महेन्द्राचलाभ्यां परिगृहीतां स्वीकृतां हरितं दिशं प्राचीदिशमित्यर्थः, अवजगाहे प्रविवेश। कथंभूतासु कटकसरसीषु, खुरपुटानां विनिमयेन ये विन्यासाः—एकं पादमग्रे स्थापयित्वा पूर्वस्थापितान्यपादमुच्चाल्य तदग्रे स्थापनं तद्रूपाः—तैः चन्द्रकितैः संजातमयूरबर्हचन्द्रकसदृशचिह्नैः संजातचन्द्रसदृशचिह्नैर्वा अवतारपथैः अभ्यन्तरगमनमार्गैरपि, तथा रोमन्थफेनशकलैः चर्वितचर्वणसंबन्धिफेनखण्डैः कृत्वा तारकितैः संजाततारकैः प्रतीरनमेरूणां तटसंबन्धिनमेरुवृक्षाणां तलेषु उपवेशैरपि अनुमेयाः हरवृषभस्य स्वैरविहाराः स्वच्छन्दक्रीडाः यासु। कथंभूताभ्यां महेन्द्राभ्यां, दिवि स्वर्गे भुवि च भरणयोः क्रमेण पालनधारणयोः कुशलाभ्याम् ॥ ५ ॥

तत्र तस्यां दिशि सः पार्थः जनकस्य पितुरिन्द्रस्य अभिधया नाम्ना हृष्टः सन्निव महेन्द्रं गिरिं पादे चरणे प्रत्यन्तपर्वते चिरं परिचचार पूजयामास, परितो बभ्राम च। कीदृशः पार्थः, पम्फुल्यमानानि भृशं विकसन्ति यानि नवानि केतकानि केतकीपुष्पाणि तेषां पांसवः परागाः गर्भे येषां तैः पर्यन्ते प्रान्तभागे निर्झरजलैः कलिताभिषेकः कृतस्नानः ॥ ३१ ॥

---

१ क. तत्र तस्य। २ क. खरेत्यधिकम्। ३ क. तरलेति नास्ति। ४ क. संफुल्य°। ५ क. फलिता°।

[ ¹निजनगरनिरीतो वासविर्दिक्षु सर्वा-
स्वपि परिणयहेतौ क्वापि यात्रामुहूर्ते ।
जनकपरिगृहीता सा दिगित्येव तस्यां
कथमपि न स जातां कन्यकां पर्यणैषीत् ॥ ]
जलधितटपदव्या झर्झरैश्चीरशब्दै-
रवमयमनुकुर्वन्राजतालीवनानाम् ।
रतिपतिरथकारेणाद्रिणा लाञ्छितायां
दिशि विविधतटिन्यां दत्तचक्षुः प्रतस्थे ॥ ३२ ॥
[ ²अक्ष्णां प्रचारादतिवर्तमानमालोकमालोकमसौ पयोधिम् ।
तटेन गच्छँस्तरसोपलेभे चोलीहरिद्रासुरभीन्समीरान् ॥ ]
शैलो गर्भे शिशुरिव भुवः शासनाद्यस्य शेते
वातापिं यो जठरदहने वर्तयामास हव्यम् ।

---

अयम् अर्जुनः रतिपतेः मदनस्य रथे मलयानिलं करोति, तथाभूतेन अद्रिणा मलयाचलेनेत्यर्थः, लाञ्छितायां युक्तायां दिशि दक्षिणस्यां दिशीत्यर्थः, दत्तचक्षुः तां दिशमवलोकयन् सन्नित्यर्थः, जलधितटपदव्या समुद्रतीरमार्गेण प्रतस्थे । 'मलयमरुदायोधनरथः' इति सौन्दर्यलहर्यां श्रीमदाचार्योक्तेः मलयानिलस्य मदनरथत्वं तदुत्पत्तिस्थानत्वान्मलयाद्रेर्मदनरथकारकत्वम् । कथंभूतायां दिशि, विविधा अनेकप्रकारास्तटिन्यो नद्यो यस्यां तस्याम् । किं कुर्वन्, झर्झरैरिति चीरशब्दानुकरणं, चीरशब्दैः वल्कलशब्दैः राजतालीवनानां महातालवृक्षवनानां रवं शब्दम् अनुकुर्वन्सन् ॥ ३२ ॥

इन्द्रसूनुः अर्जुनः तस्य तापसस्य तपस्विनो ऋषेः आवासं वासस्थानं दिशम् अभियौ जगाम । तस्य कस्य, यस्य तापसस्य शासनात् आज्ञाहेतोः शैलः विन्ध्य-

---

१ क. ख. श्लोकोऽयमत्राधिकः । तट्टीका चेयम्—

निजेति । वासवस्येन्द्रस्यापत्यं वासविः सोऽर्जुनः सर्वासु चतसृषु दिक्षु परिणयानां विवाहानां हेतौ अत एव क्वापि कस्मिंश्चित् अनिर्वाच्यशुभदायिनीत्यर्थः, यात्रामुहूर्ते प्रयाणलग्ने निजनगरात्स्वीयादिन्द्रप्रस्थात् निरीतः प्रस्थितः सन्नपि सा दिक् प्राची जनकेनेन्द्रेण स्वपित्रा परिगृहीता ऊढेति हेतोः तस्यां प्राच्यां कथमपि केनापि प्रकारेण जातां कन्यकां न पर्यणैषीत् नोढवान्, स्वसृभावादिति भावः । परिपूर्वान्नयतेः कर्तरि लुङ् । अत्र दैविकस्य कलत्रालाभस्य स्वसृत्वहेतुकत्वोक्तेर्हेतूत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ।

२ क. श्लोकोऽयमत्राधिकः । तट्टीका चेयम्—

अक्ष्णामिति । असावर्जुनोऽक्ष्णां प्रचारादतिवर्तमानं दृष्टिपथमतिक्रम्य तिष्ठन्तं पयोधिं समुद्रमालोकमालोकं दृष्ट्वा दृष्ट्वा, आभीक्ष्ण्ये णमुले द्विर्भावः । आश्चर्यादिति भावः । तटेन समुद्रतीरमार्गेणेत्यर्थः, तरसा वेगेन गच्छन् सन् चोलीनां चोलदेश्याङ्गनानां संबन्धिनीभिर्हरिद्राभिर्मुखकुचादिलिप्ताभिः सुरभीन् सुगन्धान्समीरान्वायूनुपलेभे लब्धवान्, चोलदेशं प्रापेत्यर्थः । चोलदेशस्त्रीणां प्रायेण हरिद्रालेप इति प्रसिद्धः ।

क. कल्पयामास ।

क्षोणीनग्नंकरणमहिमा कोपलेशो यदीय-
स्तस्यावासं दिशमभिययौ तापसस्येन्द्रसूनुः ॥ ३३ ॥
धृत्वा फलेषु सलिलानि कवेरजायाः
साम्यं परीक्षितुमिवाभ्रसरिद्गुणौघैः।
अभ्रंलिहैर्निविडितां तटनारिकेलै-
रालोक्य चोलवसुधामयमभ्यनन्दत् ॥ ३४ ॥
[ कालेन संगततमां कटुतामवेत्य
स्वर्गौकसामथ सुधारसनिस्पृहाणाम्।
अभ्रंलिहः फलवतस्तटनारिकेला-
न्सह्यात्मजासलिलवैवधिकानमंस्त ॥ ]
वाराशिवासजडमात्मवपुर्विशोष-
मानेतुमातपभरात्तटमुत्तरेण।

---

पर्वतः भुवः गर्भे शिशुरिव शेते निश्चेष्टस्तिष्ठति। यथा स्त्रीगर्भे शिशुस्तद्वदयं भूगर्भे तिष्ठतीत्यर्थः। तथा यः जठराग्नौ वातापिं दानवं हव्यं वर्तयामास चकार, वातापिदानवं भक्षयित्वा जीर्णं चकारेत्यर्थः। यदीयः यत्संबन्धी कोपलेशः नग्नं वस्त्ररहितं करोत्यनेन नग्नंकरणः क्षोण्याः पृथिव्याः नग्नंकरणः महिमा यस्य सः। पृथिव्याः सागराम्बरत्वात् दुष्टासुररक्षकसमुद्रपानेन पृथिवीवस्त्ररहिता जाता। एवं च हरिहराद्यकार्यकर्मकारिणोऽगस्त्यऋषेरावासस्थानत्वेन दक्षिणदिशः पूज्यत्वं गम्यते ॥ ३३ ॥

अयम् अर्जुनः कवेरजायाः कावेर्याः सलिलानि फलेषु नारिकेलेषु धृत्वा अभ्रसरितः स्वर्गङ्गायाः गुणौघैः माधुर्यादिगुणसमूहैः साम्यं परीक्षितुमिव अभ्रंलिहैः अत्युच्चत्वादाकाशस्पृग्भिः कावेरीतटसंबन्धिनारिकेलवृक्षैः निविडितां व्याप्तां चोलवसुधां चोलदेशसंबन्धिभूमिम् आलोक्य अभ्यनन्दत अतुष्यत्। यथा कश्चित्स्ववस्तुपरीक्षितुम् उत्तमवस्तुसमीपं गच्छति तद्वन्नारिकेलवृक्षाः कावेरीजलं गृहीत्वा स्वर्गङ्गाजलसमीपं गच्छन्ति किमित्युत्प्रेक्षा। अनेन नारिकेलानामत्युच्चत्वं द्योत्यते ॥ ३४ ॥

अथ पार्थः पाण्डुदेशानां राजा पाण्ड्यः तेन गुप्तां नगरीं विवेश। नगरीमुत्प्रेक्षते,

---

१ क॰ पाठान्तरवहुलोऽयं श्लोकोऽत्राधिकः। तट्टीका चेयम्—
कालेनेति। कालेन चिरेण संगततमाम् अत्यन्तसंजातां कटुतां काटवमवेत्य संभाव्य। अथ सुधायां कटुत्वसंभावनानन्तरं सुधाया अमृतस्य रसे माधुर्ये सुधारसे, अमृतरस इति वा निस्पृहाणां स्वर्गौकसां देवानामभ्रंलिहः फलवतस्तटनारिकेलान् सह्यात्मजासलिलस्य कावेरीजलस्य वैवधिकान्वार्तावहान् 'वार्तावहो वैवधिकः' इत्यमरः। अमंस्त तर्कितवान्। चिरपर्युषितमधुराणि कटूनि भवन्तीति प्रसिद्धिः। उत्प्रेक्षालंकारोऽत्र।

२ क. ख. 'वाराशि। ३ वातापिहरणवाराशिपानयोर्भङ्ग्यन्तरेण कथनात्पर्यायोक्तमलंकारोऽत्र 'पर्यायोक्तं यदन्यस्य वचो भङ्ग्यन्तराश्रयम्' इति लक्षणात्।

लंकामिवागतवतीं निजपौरवर्जं
पार्थो विवेश नगरीमथ पाण्ड्यगुप्ताम् ॥ ३५ ॥
[ मणलूरपुरे संपद्गुणलूनालकामदे ।
जनदृष्टिकृतानन्दो जगाम कुरुकुञ्जरः ॥ ]
तत्र चित्राङ्गदा तेन व्यूढा राजकुमारिका ।
दर्शने दौहृदार्तौ च द्वयोरासीदनङ्गदा ॥ ३६ ॥
एलालवङ्गतरुपिप्पलिकापटीर-
ताम्बूलिकाक्रमुकदम्पतिभावरम्याम् ।
उद्यानभूमिमुपगम्य तया स पार्थः
सुख्यन्पितुः पदममन्यत बल्वजेभ्यः ॥ ३७ ॥
दिवसे शुभंयुगुणकोरकिते
दयितं हृदि स्थितमिवार्तिमती ।
अवतार्य सा भुवि कुमारमभा-
दथ बभ्रुवाहन इति प्रथितम् ॥ ३८ ॥

वारां जलानां राशिः समुद्रः तस्मिन्वासेन जडं क्लिन्नम् आत्मनः वपुः विशेषेण शोषशुष्कताम् आनेतुम् आतपभरात् द्योतातिशयात् तटमुत्तरेण समुद्रस्योत्तरतटे, उत्तरेणेति एनवन्तम् । निजैः स्वकीयैः पौरैः पुरवासिभिः राक्षसैः वर्जं रहितं यथा तथा आगतवतीम् लङ्कामिव । अनयोत्प्रेक्षया नगर्याः सकलवस्तुसमृद्धत्वं दुष्टजनरहितत्वं च द्योत्यते ॥ ३५ ॥

तत्र नगर्यां तेन अर्जुनेन चित्राङ्गदानाम्नी राज्ञः पाण्ड्यस्य कुमारिका व्यूढा परिणीता, सा दर्शने दौहृदार्तौ गर्भपीडायां च द्वयोः कर्मणोः अनङ्गदा आसीत् । तत्र दर्शने मदनदा, दौहृदार्तौ अङ्गदभूषणरहिता । किंच चित्राङ्गदाऽपि अन्वर्थकनाम्न्यपि द्वयोः कर्मणोरनङ्गदाऽऽसीदिति चित्राङ्गदात्र्यपि कर्मद्वये अङ्गदात्री न भवतीति चाकूतम् ॥ ३६ ॥

सः पार्थः तया चित्राङ्गदया सह उद्यानभूमिम् उपगम्य गत्वा सुख्यन् सुखं प्राप्नुवन् पितुः पदम् इन्द्रपदं बल्वजेभ्यः तृणविशेषेभ्यः अमन्यत । 'पुंसि भूम्नि तु बल्वजाः' इत्यमरः । इन्द्रपदं तृणतुल्यं तृणतुच्छममन्यतेत्यर्थः । कीदृशीमुद्यानभूमिम्, एलालवङ्गवृक्षयोः पिप्पलिकाचन्दनवृक्षयोः ताम्बूलिकापूगवृक्षयोश्च दम्पतिभावेन जायापतित्वेन रम्यां मनोहराम् । अन्योऽपि अन्येषां दाम्पत्यसुखं दृष्ट्वा अहमपि तथाऽस्मीति स्वनिष्ठसुखमनुभवति ॥ ३७ ॥

अथ आर्तिमती गर्भपीडावती सा चित्राङ्गदा शुभंयवः शुभान्विताः ये गुणाः शुभतिथिवारनक्षत्रादयः तैः कोरकिते युक्ते इत्यर्थः, दिवसे हृदि स्थितं दयितम् अर्जुनमिवेत्यु-

१ क. श्लोकोऽयमधिकोऽत्र । तट्टीका चेयम्—
मणलूरेति । कुरुकुञ्जरोऽर्जुनः संपदां गुणैर्धनकनकरत्नादिभिर्लूनो निरस्तोऽलकायाः कुबेरपुरस्य मदः—समृद्धिकृतः—येन तस्मिन्मणलूरपुरे जनदृष्टिभ्यः कृत आनन्दो येन तथोक्तः सन् जगाम संचचार । अत्र पुरस्यालकातिशायिसमृद्ध्या विशेषगत्यार्जुनसंचारहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ।
२ क. °मधादथ ।

[ असावहंपूर्विकया प्रशंसतां श्रुतोदयं शोभनमीश्वरार्थिनाम्।
दुदौ तथा दक्षिणदेशवासिनां तमेव दायादमुदारतल्लजः ॥]

इति[2] तत्र दिनानि कानिचिदुषित्वा प्रयामीति भाषितस्य पक्ष्मावलम्बिबाष्पमेवोत्तरयन्तीं प्रेयसीं रहसि दृढालिङ्गनतरङ्गितवल्कलोत्तरीयमर्मरसहाध्यायिसीत्कारं[3] पुलकझर्झरे कपोले[4] परिचुम्ब्य तस्याः कथंचिदुदञ्चितानुमतिर्निर्गत्य रक्षोयोधिभिरिक्ष्वाकुपतिसेनाध्यक्षैरुत्पाटितानां मलयदर्दुरमहेन्द्रपादानां मूलशिलातलपरिदृश्यमानकठिनतरतत्कराङ्गुलिनखरेखाव्यावर्तितकुलिशभयोच्चालितशैलसंस्थानबुद्धिभिः संनिवेशावर्तैः स्थपुटितामटवीं विलङ्घ्य पुत्रीन्यक्काररुषा पुलस्त्यान्वयस्य पुरीमुन्मूलयितुं प्रसारितेन भुवो भुजेनेव सेतुना कृतसीमन्तमुदन्वन्तमभजत ॥ ६ ॥

---

त्प्रेक्षा। बभ्रुवाहन इति प्रथितं प्रसिद्धं कुमारं भुवि अवतार्य अभात् अशोभत। अन्योऽपि हृदयस्थं भारं भुवि अवतार्य सुखोदयेन शोभते ॥ ३८ ॥

इत्यनेन प्रकारेण तत्र नगरे कतिचिद्दिनानि उषित्वा वसतिं कृत्वा 'अहं प्रयामि प्रयाणं करोमि' इति भाषितस्य पक्ष्मसु अवलम्बितं बाष्पमेव भावि विरहजन्यदुःखाश्रु एव उत्तरयन्तीम् उत्तरं कुर्वतीम् उत्तरमदत्त्वा दुःखाद्रुदतीमित्यर्थः, प्रेयसीं चित्राङ्गदां रहसि दृढालिङ्गनेन तरङ्गितं संजातवलिकं यत् वल्कलरूपमुत्तरीयं तस्य यो मर्मरः शब्दस्तस्य सहाध्यायी सीत्कारो यस्मिन्कर्मणि यथा भवति तथा–यथा सहाध्यायिनौ सहैव गच्छतः तद्वत् मर्मरसीत्कारौ–पुलकैः झर्झरे नतोन्नते कपोले गल्लदेशे परिचुम्ब्य तस्याः कथंचित् अतिसंकटेन उदञ्चिता उत्पन्ना अनुमतिः प्रयाणानुमोदनं यस्य तथाभूतः सन् निर्गत्य अटवीम् अरण्यं विलङ्घ्य सेतुना कृतः सीमन्तः विभागो यस्य तम् उदन्वन्तं दक्षिणसमुद्रमभजत असेवत, प्रापेत्यर्थः। कथंभूतामटवीम्, रक्षोयोधिभिः राक्षसैः सह युद्धकर्तृभिः इक्ष्वाकुपतेः श्रीरामचन्द्रस्य सेनाध्यक्षैः सेनापतिभिः हनुमन्नलनीलादिः प्लवङ्गैः सेत्वर्थम् उत्पाटितानां मलयदुर्दरमहेन्द्रशैलानां ये पादाः प्रत्यन्तपर्वताः तेषां मूलशिलातलेषु परिदृश्यमानाभिः कठिनतराः ये तेषां प्लवङ्गानां कराङ्गुलिनखाः तेषां

---

१ क. अत्राधिकोऽयं श्लोकः। तट्टीका चेयम्—

असाविति। उदारतल्लजो दातृषु प्रशस्तोऽसावर्जुनः 'मतल्लिका मचर्चिकाप्रकाण्डमुद्घतल्लजौ प्रशस्तवाचकान्यमूनि' इत्यमरः। अहं पूर्वमहं पूर्वमिति बुद्ध्या अहंपूर्विकया शोभनं शुभकरं सुतस्य बभ्रुवाहनस्योदयमुत्पत्तिं प्रशंसतां स्तुवताम्। किंचेश्वरं स्वेषां राजानमर्थयन्ति याचन्तीति ईश्वरार्थिनां दक्षिणदेशवासिनां जनानां तेभ्य इत्यर्थः, शेषत्वविवक्षया षष्ठी। तं दायादं सुतं बभ्रुवाहनं ददावेवेति योज्यम्। निसर्गवदान्यानां न किमप्यदेयमिति भावः। अत्रोदारतल्लज इति विशेषणस्य प्राणेभ्योऽपि प्रियत्वेनादेयस्यापि पुत्रस्य दानकरणाभिप्रायगर्भत्वात्परिकरालंकारः। वंशस्थवृत्तम्।

२ क. इति स तत्र कानिचिद्दिनान्युषित्वा। ३ क. सीत्कृतिम्। ४ क. कपोलतले। ५ क. 'मानकराङ्गु'। ६ क. 'निकार'।

समीक्ष्य सेतुं रघुवीरनिर्मितं स चित्रभीत्तीकृतधीर्धनञ्जयः ।
दिनेशवंशस्य तपोविचारणे चिरावकाशं वितताार चेतसे ॥ ३९ ॥

अब्धौ वानरपातिताचलशिलाभङ्गाभिघातैश्चिरा-
दक्ष्णान्धैः कुणिभिः करेण च पदा खञ्जैः पयोमानुषैः ।
वीचीवेदिषु कीर्त्यमानमनघं वृत्तं रघूणां प्रभोः
श्लाघं श्लाघमसौ तटेन हरितं प्राचेतसीमभ्यगात् ॥ ४० ॥

गोकर्णमेत्य स कुलाद्रिसुताप्रियस्य पुष्पाणि मूर्ध्नि निदधे पुरुहूतसूनुः ।
आगामिनां निजशरासनताडनानामत्रावकाश इति सूचयतेव दोष्णा॥४१॥

---

रेखाभिः व्यावर्तिता निवर्तिता कुलिशाद्भयेन उच्चालितानां द्रावितानां शैलानां संस्थानं वसतिस्थानमिति बुद्धिः द्रष्टृबुद्धिर्येषु तैः सन्निवेशावटैः स्थितिगर्तैः स्थपुटितां नतोन्नताम् । कीदृशेन सेतुना, पुत्र्याः सीताकन्यायाः न्यक्कारेण रावणकृततिरस्कारेण या रुट् क्रोधः तेन पुलस्त्यान्वयस्य रावणस्य पुरीं लङ्काम् उन्मूलयितुम् उत्पाट्य नाशयितुं भुवा पृथिव्या प्रसारितेन भुजेनेव, इत्युत्प्रेक्षा ॥ ६ ॥

सः धनञ्जयः अर्जुनः रघुवीरेण रामचन्द्रेण निर्मित सेतुं चित्रे आश्चर्ये आलेख्ये च विषये भित्तीकृता धीः बुद्धिः येन तथाभूतः सन् चित्रशब्दस्यार्थान्तरमवलम्ब्य 'सति कुड्ये चित्रम्' इति न्यायाद्भित्तिस्थाने धीः कृता, तेन बुद्धौ महदाश्चर्यं बभूवेति द्योत्यते । दिनेशवंशस्य सूर्यवंशस्य तपसः विचारणे विषये चेतसे चिरावकाशं बहुकालावधिं वितताार ददौ । 'सूर्यवंशीयपुरुषैः कीदृशं कियत् पुण्यं कृतं येन तत्संभवेन रामचन्द्रेणाद्भुतातिमहान्ति सेतुबन्धनादिकर्माणि कृतानि' इति बहुकालं विचारं कृतवानित्यर्थः॥ ३९॥

असौ अर्जुनः अब्धौ वानरैः पातिताः त्यक्ताः ये सेतुरचनार्थम् अचलाः पर्वताः तेषां शिलाभङ्गाद्धेतोः ये अभिघाताः शिलाखण्डानां प्रहाराः तैः कृत्वाऽचिरात् बहुकालम् अक्ष्णा अन्धैः करेण कुणिभिः अग्रहस्तरहितैः 'कुकरे कुणिः' इत्यमरः । पदा चरणेन खञ्जैः स्खलद्गतिकैश्च पयोमानुषैः जलमनुष्यैः वीच्यः तरङ्गा एव वेदयः परिष्कृतभूमयः तासु कीर्त्यमानम् अनघं निर्दोषं रघूणां प्रभोः श्रीरामचन्द्रस्य वृत्तं सेतुबन्धनरावणहननादिकं चरितं श्लाघं श्लाघं श्लाघित्वा श्लाघित्वा तटेन समुद्रतीरेण प्राचेतसीं वारुणीं हरितं दिशं प्रतीचीमित्यर्थः, अभ्यगात् जगाम ॥ ४० ॥

सः पुरुहूतस्य इन्द्रस्य सूनुः अर्जुनः गोकर्णं क्षेत्रम् एत्य दोष्णा स्वभुजेन कुलाद्रिसुतायाः पार्वत्याः प्रियस्य शिवस्य मूर्ध्नि मस्तके पुष्पाणि निदधे । कथंभूतेन दोष्णा, 'आगामिनाम् इन्द्रकीलपर्वते तपःसमये युद्धप्रसङ्गे भाविनां निजशरासनस्य स्वधनुषः ताडनानाम् अत्र अस्मिन् मस्तकस्थाने अवकाशः' इति सूचयतेवेत्युत्प्रेक्षा ॥ ४१ ॥

---

१ क. विततान चेतसि । २ क. ख. वीचीवीथिषु । ३ काव्यलिङ्गमालंकारोऽत्र 'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम्' इति लक्षणात् ।

पापापनोदे फलितेऽर्जुनस्य प्रागेव सेतोरवलोकनेन ।
प्रभासतीर्थे नियमावगाहः पश्चात्सुभद्रागमहेतुरासीत् ॥ ४२ ॥
पापापनुत्त्यै परिकल्पितो यः प्रभासतीर्थे प्रथितेऽभिषेकः ।
सेतुं दृशा स्पृष्टवतोऽस्य सोऽसौ साध्यं विना जागरितो बभूव ४३॥
गोपृष्ठलग्नं कुलशैलकन्यासहायमन्तः सततं दधानः ।
आश्चर्यमैक्षिष्ट तमेव देवं गोकर्णवासं कुरुराजसूनुः ॥ ४४ ॥
ततो घनाविर्भवनाद्भियेव तत्रामलं मानसमस्य भेजे ।
कर्णान्तरक्रौञ्चपथेन शोभायशोमरालो यदुकन्यकायाः॥४५॥
स्मृतिपथस्थितयाऽपि सुभद्रया जनसमक्षमिवासितुमात्तभीः ।
द्विजकुलानि स तत्र समत्यजत्सहचराणि रतीशवशंवदः ॥ ४६ ॥

---

अर्जुनस्य सेतोः अवलोकनेन प्रागेव पापापनोदे पापनाशे फलिते सिद्धे सति पश्चात् प्रभासतीर्थे नियमावगाहः नियमपूर्वकस्नानं सुभद्रागमस्य कल्याणप्राप्तेः, सुभद्रायाः कृष्णभगिन्याः प्राप्तेश्च हेतुः कारणम् आसीत् । सेतोरवलोकनेन सर्वपापे गते प्रभासतीर्थे स्नानेन पुण्यप्राप्तिरभूदिति युक्तमेव ॥ ४२ ॥

युक्तार्थमेव भङ्ग्यन्तरेणाह—**पापेति** । पापापनुत्त्यै पापनाशार्थं परिकल्पितः यः प्रथिते प्रसिद्धे प्रभासतीर्थे अभिषेकः स्नानं सोऽसौ अभिषेकः दृशा सेतुं स्पृष्टवतः दृष्टवतः अस्य अर्जुनस्य साध्यं विना जागरिता जागरणं बभूव । यदर्थं जागरणं कृतं तत् साध्यं न जातं यथा तथा सेतुदर्शनेन पापे गते प्रभासतीर्थे स्नानं व्यर्थमभूदित्यर्थः । अत्र सदृशयोः वाक्यार्थयोः यत्तच्छब्दाभ्यामैक्यारोपात् निदर्शनालङ्कारः । तदुक्तम् 'वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना' इति ॥ ४३ ॥

गोपृष्ठे वृषभपृष्ठे लग्नं स्थितं कुलशैलकन्यायाः पार्वत्याः सहायं शिवम् अन्तःकरणे सततं दधानः कुरुराजसूनुः अर्जुनः तमेव देवं शिवं गोः वृषभस्य कर्णे वासो यस्य तथाभूतम् ऐक्षिष्ट दृष्टवान् । इदमाश्चर्यं, गोकर्णक्षेत्रे वासो यस्येत्याश्चर्यपरिहारः ॥ ४४ ॥

ततः तत्र प्रभासतीर्थे यदुकन्यकायाः सुभद्रायाः शोभायाः सौन्दर्यस्य यश एव शुभ्रत्वात् मरालः हंसः घनाविर्भवनात् प्रावृट्कालप्रादुर्भावात् भिया भयेनेव कर्णेन्द्रियस्याकाशत्वात् कर्णान्तरमेव कर्णबिलमध्यावकाश एव क्रौञ्चपथ आकाशमार्गः तेन अमलं स्वच्छम् अस्य अर्जुनस्य मानसं मनः, सरोवरविशेषं च भेजे । प्रावृट्काले हंसाः पृथिव्यां न तिष्ठन्तीति प्रसिद्धिः ॥ ४५ ॥

रतीशस्य कामस्य वशंवदः अधीनः सः अर्जुनः सहचराणि द्विजकुलानि ब्राह्मणसंघान् तत्र प्रभासे समत्यजत् । किंभूतः सः, स्मृतिपथे स्थितयाऽपि स्मरणविषयतां प्राप्तयाऽपि सुभद्रया सह जनसमक्षम् आसितुं वस्तुम् आत्तभीः गृहीतलोकापवादभय इव, इत्युत्प्रेक्षा ।

---

१ क. ४४-४३-४२ स्थानीयश्लोका. ४२-४३-४४ स्थाने । २ क. °माभिषेकः । ३ क. प्रथितो° । ४ क. दृष्टवतो° ।

पयसा परिपूरितौ घटौ परिपश्यन्पथि पाकशासनिः।
कमलाक्षकनीयसीकुचौ कलयामास करस्थिताविव॥ ४७॥

तदानीं खलु—

चक्राङ्गीमदपश्यतोहरचलच्छम्पासमुन्मेषणैः
पुष्पत्केतकगन्धसिन्धुविलुठत्पुष्पन्धयान्धीकृतैः।
मेदस्वीकृतकेकिनीकलरवैर्मेघंकराशामुखैः
पान्थानामपमृत्युभिः कतिपयैः प्रादुर्बभूवे दिनैः॥ ४८॥

कालाम्बुदालिनलिकात्क्षणदीप्तिवर्त्या
संधुक्षितात्सपदि सध्वनिनिःसरद्भिः।
वर्षाश्मसीसगुलिकानिकरैः कठोरै-
र्घर्माभियातिमवधीद्घनकालयोधः॥ ४९॥

---

यथा लोकापवादभयात् जनसमक्षं साक्षाद्भ्वा सह नावसत्, तथाऽन्तःकरणस्थितयाऽपि तया सह वस्तुं लज्जमान इव स्वसहचरब्राह्मणान् त्यक्तवान्॥ ४६॥

पाकशासनिः इन्द्रपुत्रोऽर्जुनः द्विजविसर्जनं कृत्वा प्रभासक्षेत्रात् रैवतकपर्वतं प्रति गमनसमये पथि मार्गे पयसा उदकेन परिपूरितौ घटौ परिपश्यन् सन् कमलाक्षस्य श्रीकृष्णस्य कनीयस्याः कनिष्ठभगिन्याः सुभद्रायाः कुचौ करस्थिताविव कलयामास निश्चितवान्। 'शुभशकुनेनावश्यं सुभद्राप्राप्तिर्भविष्यति' इति निश्चितवानिति भावः॥ ४७॥

तदानीं वर्षारम्भे, खल्विति वाक्यालङ्कारे। कतिपयैः दिनैः प्रादुर्बभूवे प्रादुर्भूतम्। कथंभूतैः दिनैः, चक्राङ्गीनां चक्रवाकीनां मदस्य गर्वस्य पश्यतोहराः पश्यतः सतः हरणकर्तारश्चोरविशेषाः येषु, एवंभूतानि चलन्तीनां शम्पानां विद्युतां समुन्मेषणानि आविर्भवनानि येषु, तैः। तथा पुष्पतां विकसतां केतकानां केतकीपुष्पाणां गन्धसिन्धौ सुगन्धसमुद्रे विलुठद्भिः पुष्पन्धयैः भ्रमरैः अन्धीकृतैः। सर्वतो विचरतां भ्रमराणां कृष्णत्वात् तद्योगेन दिनानामन्धत्वम्, यथा चक्षुर्हीना मलिना दृश्यन्ते तद्वद्दिनानीति भावः। यद्वा दिनान्धत्वेन दिनगतप्राणिनामन्धत्वं लक्ष्यते। तथा मेदोभिः मांसैः स्वीकृताः पुष्टा इत्यर्थः, केकिनीनां मयूरीणां कलरवाः अव्यक्तमधुरशब्दाः येषु, तैः। तथा मेघंकराणि मेघोत्पादकानि आशामुखानि दिक्प्रारम्भाः येषु, तैः। पान्थानां स्त्रीविधुराध्वगानाम् अपमृत्युभिः मारकैः॥ ४८॥

घनकालः प्रावृट्काल एव योधः, क्षणदीप्तिः विद्युदेव वर्तिः अग्निमुखवर्तिः, तथा संधुक्षिताद्दीपितात्कालाम्बुदालिः कृष्णमेघश्रेणिरेव नलिकः महाराष्ट्रभाषया 'बन्दुक' संज्ञकः तस्मात्सपदि संधुक्षणसमये सध्वनि सशब्दं यथा तथा निस्सरद्भिः बहिर्गच्छद्भिः कठोरैः वर्षाश्मानः करका एव सीसगुलिकानां निकराः समूहाः तैः घर्माभियातिं ग्रीष्मर्तुशत्रुम् ऊष्माणं, शत्रुं वा अवधीत्। अन्योऽपि योद्धा नलिकात्मकाग्नियन्त्रेण शत्रुं हन्ति॥ ४९॥

---

१ ख. पुष्यत्के। २ क. 'कले'। ३ फलोत्प्रेक्षालंकारोऽत्र।

माध्वीलिहा विरुरुचे मलिनीकृताग्रा
कान्तारसीम्नि नवकेतकबर्हरेखा ।
दग्ध्वाञ्चले स्मरभिया दयिताजनेन
संप्रेषिता पथिकभर्तृषु पत्रिकेव ॥ ५० ॥

अर्जुनेषु सकलेषु विकासिष्वद्रिसीम्नि धृततादृशशब्दः ।
एक एव विशुशोष विशेषादेतदम्बुभृदनेहसि चित्रम् ॥ ५१ ॥

वियत्यशेषासु विदिक्षु दिक्षु वियोगशिल्पीन्द्रविनिर्मितायाः ।
तस्या मृगाक्ष्याश्च तडित्ततेश्च धनञ्जयः संविविदे न भेदम् ॥५२॥

मन्मथे ज्वलति वासवसूनुर्मानसे परिणये यदुपुत्र्याः ।
लाजवापमिव कर्तुमुपेन्द्रं तत्सगर्भ्यमथ चित्तमनैषीत् ॥ ५३ ॥

---

कान्तारसीम्नि दुर्गममार्गप्रान्तभागे माध्वीलिहा भ्रमरेण मलिनीकृतं स्वस्थित्या कृष्णीकृतम् अग्रं यस्याः सा नवानां केतकबर्हाणां केतकपत्राणां लेखा पङ्क्तिः विरुरुचे विशेषेण शुशुभे । तामुत्प्रेक्षते, दयिताजनेन स्मरभिया किंचित् अञ्चले अग्रे दग्ध्वा पथिकभर्तृषु संप्रेषिता पत्रिकेव । दयिताजनेन पतीन् प्रति स्मरपीडानिवेदनार्थं पूर्वं लिखिता, ततः स्मरो ज्ञास्यतीति तद्भिया किंचिदञ्चले दग्ध्वा दहनसमये पतीन्प्रत्यस्मत्पीडाज्ञानं न स्यादिति बुद्ध्याऽग्निशान्तिं कृत्वा प्रेषिता दग्धाग्रा पत्रिकेव । अनयोत्प्रेक्षया दग्धपत्रनिरीक्षणवत् तादृशकेतकपत्रनिरीक्षणेन तद्भर्तॄणां विरहतापातिशयो द्योत्यते ॥ ५० ॥

अम्बुभृदनेहसि अम्बुभृतां मेघानाम् अनेहाः कालः तस्मिन् प्रावृट्काले अद्रेः रैवतकपर्वतस्य सीम्नि सीमायां सकलेषु अर्जुनेषु विकासिषु विकसनशीलेषु सत्सु धृतः तादृशशब्दः अर्जुन इति नाम येन स एक एव विशेषात् विशुशोष शुष्कोऽभूत् । एतच्चित्रम् आश्चर्यं, पर्जन्यकालेऽर्जुनवृक्षा विकासिनोऽभवन् पार्थोऽर्जुनः सुभद्राविरहेण शुष्कोऽभूदित्याश्चर्यपरिहारः ॥ ५१ ॥

धनञ्जयः अर्जुनः वियति आकाशे अशेषासु सकलासु विदिक्षु आग्नेय्यादिषु दिक्षु प्राच्यादिषु च वियोगः सुभद्राविरह एव शिल्पीन्द्रः चित्रकारः तेन विनिर्मितायाः उत्पादितायाः तस्याः मृगाक्ष्याः सुभद्रायाः तडितां विद्युतां ततेश्च भेदं न संविविदे न ज्ञातवान् । गौरवर्णेन कान्तिमत्वेन क्षणिकत्वेन च साम्यात्तद्भेदाग्रहणं अनेन विरहातिशयो द्योत्यते ॥ ५२ ॥

अथ वासवसूनुः मानसे मनःकल्पिते यदुपुत्र्याः सुभद्रायाः परिणये विवाहे मन्मथे मदनाग्नौ ज्वलति सति लाजवापं वरहस्ते लाजहविःप्रक्षेपं कर्तुमिव तस्याः सगर्भ्यं बन्धुम् उपेन्द्रं कृष्णं चित्तम् अनैषीत् आनीतवान् । सभद्राप्राप्तिः कृष्णसाहाय्यं विना न भविष्यतीति तत्स्मरणं कृतवानित्यर्थः ॥ ५३ ॥

---

१ क. मान्मथे । २ अत्र अर्जुने विकासरूपकार्यानुत्पादाद्विशेषोक्तिः श्लेषमूला । ३ अत्र सामान्यालंकारः 'सामान्यं गुणसाम्येन विशेषो नोपलक्ष्यते' इति लक्षणात् ।

अणुमात्रमिदं सहेत वोढुं नहि विश्वंभरमद्य मामितीव ।
मनसोऽप्यवरुह्य तस्य दृष्टेः पुरतः प्रादुरभूत्पुमान्पुराणः ॥ ५४ ॥
स्वस्वचेष्टाकथानद्या द्वितीयर्तुगुणज्ञया ।
न बभूवे तयोस्तत्र नयनानन्दिनोर्मिथः ॥ ५५ ॥
विजयो मधुरस्मितस्य भावं विदुषस्तस्य मतेन भिक्षुवेषः ।
कुसुमास्त्रभयादिवातिगूढः कुहरे रैवतकस्य तिष्ठति स्म ॥ ५६ ॥
कथं सुभद्राकमनीयतायाः कल्पेत नुत्यै कविरुन्नतोऽपि ।
चतुर्थमप्याश्रममस्य येन तां साधनीभूय दिदृक्षते स्म ॥ ५७ ॥
तदात्व एवाद्रितटात्पतिः श्रियः परिप्लवं तं प्रकृते शुभागमे ।
यदाशये ते शय एव तद्भवेदिति ब्रुवन्द्वारवतीं पुनर्ययौ ॥ ५८ ॥
तदनन्तरमहस्करमदतस्करमहो महान्मस्करी रैवतकगिरेरुपस्कु:

---

स्मृतमात्रः श्रीकृष्णः प्रादुरभूदित्यत्र हेतुं परिकल्पयति—अणुमात्रमिति । पुराणः पुमान् अनादिः श्रीकृष्णः 'अणुमात्रं परमाणुप्रमाणम् इदं मनः अद्य विश्वंभरं विश्वधारकं मां वोढुं मत्कर्मकवहनं कर्तुं नहि सहेत न समर्थं भवेत्' इतीव हेतोः तस्य मनसोऽपि अवरुह्य अवतीर्य दृष्टेः पुरतः प्रादुरभूत् प्रकटोऽभूत् ॥ ५४ ॥

तत्र मिथः परस्परं नयनानन्दिनोः नयनसुखदायिनोः तयोः कृष्णार्जुनयोः स्वस्वचेष्टानां स्वस्वचरित्राणां कथैव नदीतया द्वितीयर्तोः ग्रीष्मर्तोः गुणस्य जलशोषकरणरूपगुणस्य ज्ञया ज्ञात्र्या न बभूवे न जातम् । कथानदी शुष्का न जाता परस्परस्वस्वचरित्रकथनं न समाप्तमिति यावत् । अनेन स्नेहातिशयो द्योत्यते ॥ ५५ ॥

मधुरस्मितस्य अर्जुनकृतसुन्दरस्मितस्य भावम् अभिप्रायं विदुषः ज्ञातुः तस्य कृष्णस्य मतेन भिक्षोः संन्यासिनः वेष इव वेषो यस्य सः विजयः अर्जुनः कुसुमास्त्रस्य मदनस्य भयादिव रैवतकस्य कुहरे गुहायाम् अतिगूढः अतिगुप्तः सन् तिष्ठति स्म तस्थौ ॥ ५६ ॥

उन्नतोऽपि महानपि कविः सभद्राकमनीयतायाः सुभद्रासौन्दर्यस्य नुत्यै स्तवनं कर्तुं कथं कल्पेत समर्थो भवेत् अपि तु नैव भवेत् । येन कारणेन चतुर्थम् आश्रमं संन्यासाश्रममपि 'आश्रमोऽस्त्री' इत्यमरः । अस्य अर्जुनस्य साधनीभूय सहायीभूय तां द्रष्टुमिच्छति स्म । अतिनिःस्पृहं तत्रापि नपुंसकमपि तां द्रष्टुमिच्छति स्म किं पुनर्नरो युवा विषयीति भावः ॥ ५७ ॥

तदात्वे एव तदानीमेव श्रियः पतिः श्रीकृष्णः प्रकृते वर्तमाने सुभद्राप्राप्तिरूपे शुभागमे परिप्लवं चञ्चलं संदिग्धम् इति यावत्, तम् अर्जुनम् 'ते आशये मनसि यत् वर्तते तत् शये हस्ते एव करगतमेव भवेत्' इति ब्रुवन् सन् पुनः अद्रितटात् द्वारवतीं ययौ जगाम॥५८॥

तदनन्तरं रैवतकगुहावासानन्तरम् 'अहस्करमदस्य सूर्यगर्वस्य तस्करम् अपहारकं महः

---

१ क. ऽप्यवरुह्य । २ क. स्वस्य चे° । ३ ख. °महत° । ४ क. ख. °महा महा° । ५ क. °कं गिरिमु° ।

रुते तस्य नमस्करणमस्माकं श्रेयस्करणमिति पुरोधोजनबोधनात्कुतूहलिना हलिना नगरमानीयमानं बहिरपि ज्वलता विरहानलज्वालेनेव काषायवाससाऽवगुण्ठितवपुषं सव्यसाचिशब्दमत्सरेण स्मरवीरेण प्रवासरन्ध्रमन्विष्य पन्नगपाण्ड्ययदुकुमारिकाणां कृते पृथक्पृथगीरितां त्रिशरकाण्डीमिव त्रिदण्डीं बिभ्राणं निजपल्लवकोमलिमनिर्जयशोकादिव शुष्केण पटीरतरुणा पादुकीभूय परिचर्यमाणपादयुगलं तं भावनाभिक्षुं संभ्रमेण वन्द्यमानेषु यदुवृन्देषु मुकुन्दोऽपि सविनयमुपागतश्चेतःपूरणावशेषैः स्वसोदरीप्रेमरसैरिव तीर्थजलैः [६] पिचण्डिलं कमण्डलुं तदीयपाणेरादाय 'भगवन्नित इत इति' राजभवनमुपनीय कन्यान्तःपुरे निवेशयामास ॥ ७ ॥

मार्गे शरत्रयममुष्य कृते विमुच्य
शेषं द्वयं पुनरिवोज्झितुमात्तलोभः।

---

तेजो यस्य सः महान् मस्करी संन्यासी रैवतकगिरेः उपस्कुरुते रैवतकगिरिम् अलंकुरुते तस्य संन्यासिनः नमस्करणम् अस्माकं श्रेयस्करणं श्रेयःसाधनम् ' इति पुरोधोजनबोधनात् उपाध्यायजनवचनात् हेतोः कुतूहलिना कौतुकवता हलिना बलरामेण नगरं द्वारकानगरीम् आनीयमानं भावनाभिक्षुं कपटसंन्यासिनम् अर्जुनं यदुवृन्देषु यादवसमुदायेषु संभ्रमेण त्वरया वन्द्यमानेषु सत्सु मुकुन्दोऽपि कृष्णोऽपि सविनयं यथा तथा उपागतः सन् चेतःपूरणात् अवशेषैः स्वचित्तपरिपूरणे जाते सति अवशिष्टैः स्वसोदर्याः स्वभगिन्याः प्रेमरसैरिवेत्युत्प्रेक्षा, तीर्थजलैः पिचण्डिलं पूर्णमित्यर्थः, कमण्डलुं तदीयपाणेः भिक्षुकरात् आदाय स्वहस्ते गृहीत्वा 'हे भगवन्! इत इत इति अस्मिन् अस्मिन् देशे आगन्तव्यम्' इति उक्त्वा राजभवनं राजगृहम् उपनीय कन्यान्तःपुरे कन्यावासगृहे निवेशयामास। कीदृशं भिक्षुम्, अन्तरिव अन्तःकरणे इव बहिरपि ज्वलता सुभद्रायाः विरहानलस्य ज्वालेनेव काषायवाससा रक्तद्रव्यविशेषरञ्जितवस्त्रेण अवगुण्ठितवपुषं वेष्टितदेहम्। तथा स्मरवीरेण कर्त्रा सव्यसाचिशब्देन स्वस्य सव्यसाचिनाम तदेवैतस्य भिक्षोरपि तेन भिक्षौ मत्सरः तदुत्कर्षासहनं तेन करणेन प्रवास एव रन्ध्रं शत्रोरपकर्षसमयम् अन्विष्य मृगित्वा पन्नगपाण्ड्ययदूनां याः कुमारिकाः उलूपीचित्राङ्गदासुभद्राः तासां कृते पृथक् पृथक् ईरितां मुक्तां त्रयाणां शरकाण्डानां बाणदण्डानां समाहारः त्रिशरकाण्डी तामिव, कन्यात्रयार्थमुक्तं बाणत्रितयमिवेत्यर्थः, त्रिदण्डीं बिभ्राणं धारयन्तम्। तथा निजपल्लवस्य कोमलिम्नः मृदुत्वस्य निर्जयेन शोकादिव शुष्केण पटीरतरुणा चन्दनवृक्षेण पादुकीभूय परिचर्यमाणं सेव्यमानं पादयुगलं यस्य तम् ॥ ७ ॥

तदनु कन्यान्तःपुरवासानन्तरं स्मरः शुश्रूषितुं भिक्षोः सेवां कर्तुं सोदराभ्यां रामकृ-

---

१ क. °मन्वीक्ष्य २ क. पृथगीरिताम्। ३ क. °दारुणा। ४ ख. °युगं तं कुहनाभिक्षुम्। ५ क. °णावशिष्टैः। ६ ख. पूरितमित्यधिकम्। ७ क. इत इत एहि इति। ८ कन्यकान्तः°।

शुश्रूषितुं तदनु सोदरचोदिताया-
स्तन्व्याः स्मरो नयनमेव शरं व्यतानीत् ॥ ५९ ॥

वपुषा मधुरेण सुभ्रुवा धनुषा चित्तभुवा च तर्जितः ।
तपसेव दिने दिने तनोस्तनिमानं जगृहे स मस्करी ॥ ६० ॥

प्रतिनिःश्वसिते दीर्घे पाणिना नासिकां स्पृशन् ।
भावयामास पार्थोऽयं प्राणायामसमापनम् ॥ ६१ ॥

प्रणवोच्चरणे पुरः प्रसर्पत्प्रबभासे यतिनस्तदाधरोष्ठम् ।
मुहुरग्रगतावनीन्द्रपुत्रीमुखमास्वादयितुं किलोज्जिहानम् ॥६२॥

कन्याकरे मृद्नति पादपद्मं पुष्यन्ति गात्रे पुलकाङ्कुराणि ।
हरे हरे माधव माधवेति हरिस्मृतेरन्यथयाञ्चकार ॥ ६३ ॥

---

ष्णाभ्यां चोदितायाः प्रेरितायाः तन्व्याः सुभद्रायाः नयनमेव शरं व्यतानीत् मुक्तवान् । कथंभूतः स्मरः, अमुष्य भिक्षोः कृते मार्गे शरत्रयं विमुच्य पञ्चसु बाणेषु मध्ये शेषं द्वयं शरद्वयं पुनः उज्झितुं मोक्तुम् आत्तलोभ इव संजातलोभ इवेत्युत्प्रेक्षा। अन्योऽपि धानुष्कः स्वबाणैर्लक्ष्यवेधेन जये प्राप्ते लोभात्पुनरपि बाणं मुञ्चति ॥ ५९ ॥

चित्तभुवा मदनेन कर्त्रा सुभद्रायाः मधुरेण सुन्दरेण वपुषा, सुभ्रुवा सुभ्रूरूपेण धनुषा च करणेन तर्जितः भर्त्सितः सः मस्करी संन्यासी तपसेव तपोहेतुनेव दिने दिने तनोः तनिमानं कृशत्वं जगृहे स्वीचकार । कृशत्वे मदनपीडा हेतुः न तपोहेतुरित्यहेतोर्हेतुत्व-कल्पनात् हेतूत्प्रेक्षा ॥ ६० ॥

अयं पार्थः मदनपीडया दीर्घे निःश्वसिते निःश्वसितमिति प्रतिनिःश्वसितं तस्मिन् सति वीप्सायामव्ययीभावः । "तृतीयासप्तम्योर्बहुलम्" इति विकल्पात्सप्तम्या अम-भावः । पाणिना नासिकां स्पृशन् सन् प्राणायामसमापनं प्राणायामं प्राणस्य दैर्घ्यं, प्राणा-यामं च भावयामास ज्ञापयामास । अत्र स्वमर्मगुप्तये क्रियया परवञ्चनात् युक्त्यलङ्कारः । तदुक्तम् 'युक्तिः परातिसंधानं क्रियया मर्मगुप्तये' इति ॥ ६१ ॥

तदा कन्याशुश्रूषासमये प्रणवस्य ओंकारस्य उच्चारणे पुरः प्रसर्पत् प्रणवावयववर्णयोः ओंकारमकारयोः ओष्ठ्यत्वात् अग्रे गच्छत् यतिनः अधरोष्ठं प्रबभासे अत्यन्तं शुशुभे । अत्रोष्ठशब्दस्य नपुंसकत्वं कोशान्तरादवगन्तव्यम् । कीदृशम् अधरोष्ठम्, अग्रगतायाः अवनीन्द्रपुत्र्याः सुभद्रायाः मुखम् आस्वादयितुं चुम्बनक्रियया आस्वादं गृहीतुं मुहुः पुनः पुनः उज्जिहानम् उद्योगं कुर्वदिवेत्युत्प्रेक्षा ॥ ६२ ॥

यतिः कन्याकरे सुभद्राहस्ते पादपद्मं मृद्नति पादमर्दनं कुर्वति सति गात्रे शरीरे पुष्यन्ति पुलकाङ्कुराणि हरे हरे! माधव! माधवेति हरिनामोच्चारणं कृत्वा हरिस्मृतेः हरिस्मृतिहेतुदर्शनात् अन्यथयाञ्चकार हेत्वन्तरजनितानि चकार । इमानि पुलकाङ्कुराणि

---

१ क. सुभ्रुवो । २ क. 'मुवश्च । ३ क. प्रसर्पत्प्र' । ४ क. 'रोष्ठः । ५ क. 'हानः ।

एकदा निर्वर्त्य प्रत्यवसानकृत्यं प्रतिक्षणमिक्षुचापक्षुरप्रसंधुक्षणेन समन्तात्पतितैः सत्त्वगुणशकलैरिव स्वेदबिन्दुभिर्व्याकीर्णां चामूरवीं त्वचमध्यास्य विश्राम्यन्तं तं[1] धवित्रेण वीजयन्ती सुभद्रा तैस्तैरिङ्गितैस्तस्य यतित्वे संशय्य तत्त्वजिज्ञासया सविनयमनुरहसि व्यजिज्ञपत् ॥ ८ ॥

तपस्विन्नद्य मे प्रीतिस्तवाभ्यागमसंभवा।
कन्यामौनावकीर्णित्वे कल्पशाखाशिखायते ॥ ६४ ॥
यदवः खलु पुण्यराशयो यतिनामिन्द्र तवाङ्घ्रिसंगमे।
शिरसान्यदवाप्यते रजो मनसान्यत्परिवर्ज्यते च यैः ॥ ६५ ॥
भगवन्निखिलं विबुध्यसे परमार्थं वद भावि मे शुभम्।
प्रयता यतयो भवद्विधाः प्रणिधानेन हि दिव्यचक्षुषः ॥ ६६ ॥

---

न शृङ्गारसात्त्विकभावजन्यानि अपि तु शान्तरससात्त्विकभावजन्यानीति हेत्वन्तरं प्रदर्शयामासेत्यर्थः ॥ ६३ ॥

एकदा प्रत्यवसानकृत्यं भोजनकृत्यं निर्वर्त्य कृत्वा प्रतिक्षणम् इक्षुचापस्य मदनस्य क्षुरप्रैरतितीक्ष्णैर्वितस्तिप्रमाणैश्च बाणविशेषैः संधुक्षणेन तक्षणेन समन्तात्पतितैः सत्त्वगुणस्य शकलैरिव स्वेदबिन्दुभिर्व्याकीर्णां चामूरवीं चमूरुसंज्ञकमृगविशेषसंबन्धिनीं त्वचम् अध्यास्य अधिष्ठाय विश्राम्यन्तं तं यतिं धवित्रेण मृगचर्मरचितव्यजनेन वीजयन्ती सुभद्रा तैस्तैः दीर्घनिःश्वासादिभिः इङ्गितैः चेष्टाभिः यतित्वे संशय्य तस्य यतित्वस्य तत्त्वजिज्ञासया याथार्थ्यज्ञानेच्छया अनु पश्चात् रहसि सविनयं व्यजिज्ञपत् विज्ञापयामास ॥ ८ ॥

'हे तपस्विन्! अद्य तव अभ्यागमात् संभवः उत्पत्तिर्यस्याः सा मे प्रीतिः कन्यायाः मौनस्य परपुरुषेण सह भाषणवर्जनरूपमौनव्रतस्य अवकीर्णित्वे क्षतव्रतत्वे मौनव्रतत्यागविषये इति यावत् 'अवकीर्णी क्षतव्रतः' इत्यमरः। कल्पशाखाशिखायते कल्पवृक्षाग्रमञ्जरीवदाचरति, यथा कल्पवृक्षाग्रमञ्जरी काङ्क्षितपदार्थबाहुल्यं करोति तथा प्रीतिः मौनव्रतभ्रंशबाहुल्यं करोति, प्रीतिर्मां वादयतीत्यर्थः ॥ ६४ ॥

हे यतिनाम् इन्द्र श्रेष्ठ! इदानीम् अमी यदवः यादवाः पुण्यराशयः सन्ति खलु। यैः यदुभिः तव अङ्घ्रिसंगमे शिरसा अन्यत् रजः धूलिः अवाप्यते मनसा अन्यत् रजः रजोगुणः पापमिति यावत् परिवर्ज्यते च। शिरसा नमनेन येषां मनसा विक्षेपकारि रजोगुणस्त्यज्यते इति भावः ॥ ६५ ॥

हे भगवन्! त्वम् अखिलं विबुध्यसे जानासि। अतः भावि भविष्यत् मे शुभं परमार्थं सत्यं वद ब्रूहि। परमः अर्थो यस्मिन्निति शुभविशेषणं वा। यतः भवद्विधाः त्वत्प्रकाराः प्रयताः पूताः, योगिनो वा यतयः प्रणिधानेन समाधिना दिव्यचक्षुषः अलौकिकत्रैकालिकज्ञानवन्तः सन्ति' ॥ ६६ ॥

---

१ क. कुहनासंन्यासिनमित्यधिकम्। २ क. ख. इदानीममी इत्यधिकम्। ३ क. °सेवनात्। ४ क. शिरसैकमवाप्य यद्रजो।

अवकर्ण्य तदेष मीलितः क्षणमक्ष्णोः प्रतिवाचमाददे ।
बहुना किमयि स्वकैर्गुणैर्विजयं प्राप्स्यसि योषितां कुले ॥ ६७ ॥
पादाङ्गुष्ठनखं यस्ते भाले कुर्याद्विशेषकम् ।
स नरोऽपि स्मरेणार्तः सद्यः स्यादामिषं दृशोः ॥ ६८ ॥

इति सा तस्य वक्रिमस्पृशा वचसा श्रवसा च निपीतपूर्वैस्तैस्तैर्लक्षणैश्च सोऽयं यतिः संक्रन्दननन्दन इति निश्चयमणिं हृदयपेटकपुटे निधाय 'भगवन् भवदभिहितयोर्विजयनरशब्दयोः क्रमेण धर्मिपरता विशेषनामता च तव कृपया भविता' इति तस्मै व्रीडतरलनयनं वदनमवनमयन्ती तस्थे ॥ ९ ॥

एषः कपटयतिः तत् सुभद्रावचनम् अवकर्ण्य क्षणम् अक्ष्णोः मीलितः सन् कृताक्षिमीलनः सन्नित्यर्थः, प्रतिवाचं तदुत्तरम् आददे स्वीचकार, उवाचेत्यर्थः। 'अयि कन्ये ! बहुना भाषणेन किं किं प्रयोजनमस्ति । त्वं योषितां स्त्रीणां कुले समूहमध्ये स्वकैः गुणैः सौन्दर्यादिभिः विजयं सर्वोत्कर्षं प्राप्स्यसि । विजयम् अर्जुनं प्राप्स्यसीति गूढाभिप्रायः ॥ ६७ ॥

यः नतिसमये स्वस्य पादाङ्गुष्ठनखं ते भाले विशेषकं कुर्यात् स नरोऽपि मनुष्योऽपि स्मरेण आर्तः सन् सद्यः दृशोः आमिषं भोग्यं वस्तु स्यात्, दृग्विषयो भवेदित्यर्थः । 'आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि' इति केशवः । अन्यत्र तु 'पूर्वं धर्मपुत्रौ विष्ण्वंशभूतौ जितेन्द्रियौ नरनारायणौ गन्धमादने तपस्यमानौ दृष्ट्वा तद्विघ्नार्थमिन्द्रप्रेषितकामरम्भाद्यप्सरोगर्वनाशार्थं नरेणैव स्वोर्वश्यप्सरां निर्माय तद्गर्वो हृतः' इति देवीभागवते उक्तत्वात्स मुख्यो नरः सोऽपि कामार्तस्त्वदृग्गोचरो भवेत्' । तत्रैवाप्सरोवरदानेन विषयभोगार्थमेव गृहीतावतारस्य मम नरशब्दवाच्यस्यार्जुनस्य का कथेति गूढोऽभिप्रायोऽपिना द्योतितः ॥ ६८ ॥

सा सुभद्रा इति उक्तप्रकारेण वक्रिमाणम् अर्थान्तरकोडीकाररूपवक्रतां स्पृशति तथाभूतेन वचसा श्रवसा श्रवणेन्द्रियेण निपीतपूर्वैः सादरं श्रुतैः तैस्तैः प्रसिद्धैः लक्षणैः सव्यदक्षिणप्रकोष्ठज्याघातकिणादिचिह्नैश्च 'सोऽयं सङ्क्रन्दननन्दनः इन्द्रपुत्रोऽर्जुनः' इति निश्चय एव मणिः तं हृदयपेटकपुटे हृन्मञ्जूषायां निधाय, महार्हमणिं मञ्जूषायामिव निश्चयं हृदये स्थापयित्वेत्यर्थः । 'हे भगवन्! भवता अभिहितयोः उक्तयोः विजयनरशब्दयोः क्रमेण विजयशब्दस्य धर्मिपरता धर्मिवाचकत्वं नरशब्दस्य विशेषनामता मनुष्यविशेषनरसंज्ञकता च तव कृपया भविता भविष्यति' इति उक्त्वा व्रीडेन तरले चञ्चले नयने यस्मिन् तद्वदनम् अवनमयन्ती सती तस्मै कपटयतये तस्थे । तस्मै स्वाशयं प्रकाशयामासेत्यर्थः । "प्रकाशनस्थेयाख्ययोश्च" इति तिष्ठतेरात्मनेपदम् । तस्मै इति "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" इति संप्रदानत्वम् ॥ ९ ॥

१ क. ख. फाले । २ क. विश्रुतपूर्वैः । ३ क. चेति नास्ति । ४ क. ख. यतिरिति नास्ति । ५ क. पेटिकापुटे । ६ क. ख. क्रमेणेति नास्ति । ७ क. चेत्यधिकम् । ८ ख. मपरता च । ९ ख. भवेत् । १० क. तरलतर । ११ क. नमन्ती ।

यमेवमुद्दिश्य तवोक्तिभङ्गी स एष दासोऽस्म्यनुकम्पनीयः।
इति प्रकाश्य क्षणमर्जुनत्वं चुचुम्ब तां चोरयतिः कपोले ॥ ६९ ॥

स्वेदाम्बुपूरभरिते सुदृशस्तु तस्याः
क्षेत्रे स्वकिंशुकशिलीमुखसीरकृष्टे।
पुष्पास्त्रकर्षकवरः पुलकच्छलेन
शृङ्गारबीजनिकरान्निबिडानवाप्सीत् ॥ ७० ॥

तस्यामेव वधूमिमां स रजनौ सद्योऽनुकूलां रहः
पाणौकृत्य विलोकितोत्सवभरो द्वाभ्यां हरिभ्यामपि।
पौरेषूभयथा जनेष्ववलतां प्राप्तेषु पार्थस्तया
जाग्रत्सारथिविद्यया सह रथारूढः पुरान्निर्ययौ ॥ ७१ ॥

आकर्ण्येदं जृम्भितानां यदूनां
पार्थोद्देशात्क्रोधनत्वस्य जातेः।
म्लानिं दातुं माधवो माधवोऽभू-
द्यत्रायत्ता कौरवी सा समृद्धिः ॥ ७२ ॥

---

'यम् उद्दिश्य एवम् उक्तप्रकारा तव उक्तिभङ्गी सः एषः अहम् अनुकम्पनीयः कृपाविषयः दासः अस्मि' इति उक्त्वा क्षणम् अर्जुनत्वं प्रकाश्य प्रकटीकृत्य चोरयतिः कपटयतिः तां सुभद्रां कपोले चुचुम्ब ॥ ६९ ॥

पुष्पास्त्रः मदन एव कर्षकवरः कृषीवलश्रेष्ठः स्वस्य किंशुकशिलीमुख एव पलाशपुष्पबाण एव सीरः लाङ्गलं तेन कृष्टे स्वेदाम्बुपूरेण भरिते व्याप्ते तस्याः सुदृशः सुभद्रायाः क्षेत्रे देहे केदारे च पुलकानां छलेन कपटेन निबिडान् शृङ्गाररसस्य बीजानां निकरान् अवाप्सीत्। अन्योऽपि कर्षकः लाङ्गलकृष्टे जलपूर्णे क्षेत्रे सस्यबीजानां वापं करोति ॥ ७० ॥

सः पार्थः यस्याम् अर्जुनत्वप्रकटनं तस्यामेव रजनौ अनुकूलाम् इमां वधूं सुभद्रां रहः एकान्ते सद्यः पाणौकृत्य विवाह्य जाग्रती स्फुरद्रूपा सारथिविद्या सारथ्यं यस्याः तया सुभद्रया सह रथारूढः सन् पुरात् निर्ययौ निर्जगाम। कथंभूतः पार्थः, द्वाभ्यां हरिभ्यां कृष्णमहेन्द्राभ्यामपि विलोकितः विवाहस्य उत्सवभरो यस्य सः। कृष्णेन स्वभक्तस्य इन्द्रेण स्वसुतस्य विवाहोत्सवो हर्षात् दृष्ट इत्यर्थः। केषु सत्सु, पौरेषु जनेषु उभयथा उभयप्रकारेण अबलानां बलरामरहितानाम्, अर्जुनजये सामर्थ्यरहितानां च भावः अवलता तां प्राप्तेषु सत्सु ॥ ७१ ॥

इदम् आकर्ण्य पार्थोद्देशात् पार्थमुद्दिश्येत्यर्थः। जृम्भितानां युद्धोद्योगवतां यदूनां क्रोधनानां कोपिनां भावः क्रोधनत्वं तस्य जातेः सामान्यस्य क्रोधस्येत्यर्थः, जातिलतायाश्च म्लानिं दातुं माधवः श्रीकृष्णः माधवः लक्ष्मीपतिः—समर्थ इति यावत्, वसन्तश्च अभूत्। वसन्ते हि जातिलता म्लाना भवन्ति, वर्षासु प्रफुल्ला भवन्तीति प्रसिद्धम्। यत्र श्रीकृष्णे

---

१ क. ख. °स्तदाऽस्याः।

रणोत्साहे शान्ते यदुजडिमकीर्तिध्वजलतां
मुहुः स्मारं स्मारं कपटयतितां वलितकुचम् ।
हसन्त्याः प्रेयस्या दशनरुचिमित्रीकृतयशाः
शताङ्गेनाविक्षत्सुरपतितनूजो निजपुरीम् ॥ ७३ ॥

ततो मुहूर्ते सकलाभिनन्द्ये कुरूद्वहानां कुशलोदयाय ।
सुतं सुभद्रा सुषुवेऽभिमन्युं प्रवीरसूस्तातमिव प्रवीरम् ॥ ७४ ॥

पाञ्चालपुत्री च पतिव्रतानां प्रधानभावे कृतपट्टबन्धा ।
पञ्चापि सद्यः प्रतिभूरिव स्वान्पतीन् पितॄणामनृणानकार्षीत् ॥७५॥

अथ तेषां तादृशं पुत्रोत्सवमाकर्ण्य ऋतुर्वसन्तसामन्तो राजन्यसंबन्धितया हर्षादिव समाजगाम । तदानीं भगवान् पवमानस्तु भीमस्य सुतोत्पत्तिनिमित्ताशौचवत्तया लोकस्पर्शाय संकुचन्निव कतिचन दिनानि मलयं विहाय पदमेकमपि न चचाल ॥ १० ॥

---

सा कौरवी कुरुवंशोत्पन्नपाण्डवीया समृद्धिः आयत्ता अधीना, यत्र वसन्ते च कुरवाणां कुरवकवृक्षाणाम् इयं ववयोरभेदात् कौरवी सा समृद्धिः पुष्पादिबाहुल्यम् अधीना । यादवाः कृष्णवचनप्रौढया शान्ता अभूवन्निति भावः ॥ ७२ ॥

रणोत्साहे शान्ते सति यदूनां जडिम्नः बुद्धिमान्द्यस्य कीर्तेर्ध्वजलतां ध्वजवत् सर्वेषां सूचिकां कपटयतितां मुहुः पुनः पुनः स्मारं स्मारं स्मृत्वा स्मृत्वा वलितौ चञ्चलौ कुचौ यस्मिन् कर्मणि यथा भवति तथा हसन्त्याः प्रेयस्याः सुभद्रायाः दशनानां रुचेः कान्तेः निर्मलतया शुभ्रतया च मित्रीकृतं यशो येन सः सुरपतितनूजः अर्जुनः शताङ्गेन रथेन पुरीम् इन्द्रप्रस्थनगरीम् अविक्षत्प्रविष्टवान् ॥ ७३ ॥

ततः सुभद्रा सकलानाम् अभिनन्द्ये अभिनन्दनीये मुहूर्ते शुभसमये कुरूद्वहानां कुरुवंशश्रेष्ठानां धर्मादीनां कुशलोदयाय कल्याणोदयार्थम् अभिमन्युसंज्ञं सुतं सुषुवे । का कमिव, प्रवीरसूः महाशूरप्रसूः कुन्ती प्रवीरं महावीरं तातं जनकम् अर्जुनमिव ॥ ७४ ॥

पतिव्रतानां मध्ये प्रधानभावे प्राधान्ये मुख्यत्वे कृतः पट्टबन्धो यस्याः सा । अधिकारार्थमभिषेके हि पट्टबन्धः क्रियते । ऋष्यादिभिः पतिव्रतासु मुख्योक्तेति भावः । पाञ्चालपुत्री द्रौपदी च । चकारः सुभद्रासमुच्चयार्थः । पञ्चापि स्वान्पतीन् पितॄणाम् अनृणान् पितृऋणरहितान् अकार्षीत् । पत्न्यां पुत्रोत्पादनेन पितृऋणान्मुक्तो भवतीति श्रुतिस्मृतिपुराणादौ प्रसिद्धिः ॥ ७५ ॥

अथ तेषां पाण्डवानां तादृशम् अत्युत्कृष्टतया अनिर्वाच्यं पुत्रोत्सवम् आकर्ण्य सामन्तः ऋतुमण्डलस्य माण्डलिको राजा वसन्तः ऋतुः राजसंबन्धितया—अहम् ऋतूनां राजा धर्मराजस्तु सार्वभौमः--एवं च राजसंबन्धेन हर्षादिव समाजगाम । तदानीं वसन्तागमनसमये भगवान् पवमानः वायुस्तु भीमस्य स्वपुत्रस्य सुतोत्पत्तिनिमित्ता या आशौचवत्ता

---

१ क. 'सः सा । २ ख. 'न्तः सामन्तराजसं' । ३ क. ' पुत्रोत्पत्ति' ।

एतेन खल्वकरुणेन तपागमेन
जीवातुरद्य मम देशत एव दूरात् ।
उत्सारितो मधुरितीव रुषा वनान्ते
तत्स्वागतं परभृतो न समाचचार ॥ ७६ ॥
शिरीषपङ्क्तिः कुरुकामिनीनां शरीरवल्ल्या सह मार्दवेन ।
उपस्थिताऽभूदुपमा तदानीं तपःस्थितानां सुलभं हि सर्वम् ॥ ७७ ॥
कुरुकेलिवनेषु मल्लिकाकुसुमेषु भ्रमरावली बभौ ।
ऋतुना मधुगन्धगुप्तये जतुनाऽग्रे निहितेव मुद्रणा ॥ ७८ ॥
शुभसौरभसंभृतानि भूमौ शुचिभूतान्यपि यानि पाटलानि ।
कलयेयुरतीव चित्रभावं क्षणपीतानि दृशा कथं न तानि ॥ ७९ ॥

---

जननाशौचवत्ता तया लोकानां स्पर्शाय संकुचन्निव लोकानां मत्स्पर्शो मा भूदिति मनसि संकुचन्निव कतिचन दिनानि मलयपर्वतं विहाय एकमपि पदं न चचाल, सदा मलयसंबन्धेनावर्ततेत्यर्थः ॥ १० ॥

'अकरुणेन निष्कृपेण, करुणवृक्षपुष्परहितेन ' करुणस्तु रसे वृक्षे कृपायां करुणा मता' इति विश्वः । तपागमेन ग्रीष्मागमेन अद्य मम जीवातुः जीवनदाता मधुः वसन्तः देशतः दूरादेव उत्सारितः निष्कासितः' इति मनस्यानीय रुषेव क्रोधेनेव वनान्ते वनमध्ये तस्य ग्रीष्मस्य स्वागतं वाचा सत्कारं परभृतः कोकिलः न समाचचार । ग्रीष्मे कोकिलः शब्दं न करोतीति प्रसिद्धिः, तत्र रुषेति हेतूत्प्रेक्षा ॥ ७६ ॥

तदानीं ग्रीष्मर्तौ शिरीषपङ्क्तिः शिरीषकुसुमपङ्क्तिः कुरुकामिनीनां सुभद्राद्रौपद्यादीनां शरीरवल्ल्या सह मार्दवेन उपमा सादृश्यम् उपस्थिता उदिता अभूत् । इतः प्राक् नासीत् इदानीं मिलितेति भावः । तदेव तपःस्थितशब्देनार्थान्तरक्रोडीकारादर्थान्तरन्यासेन द्रढयति—हि यतः तपःस्थितानां ग्रीष्मे स्थितानां तपस्विनां च सर्वं सुलभम् ॥ ७७ ॥

कुरूणां केलिवनेषु उद्यानेषु मल्लिकाकुसुमेषु भ्रमरावली बभौ शुशुभे । तामुत्प्रेक्षते—ऋतुनेति । ऋतुना प्रकृतत्वाद्ग्रीष्मेण मधुगन्धयोः मकरन्दसुगन्धयोः गुप्तये रक्षणाय अग्रे कुसुमाग्रे जतुना लाक्षया कृत्वा निहिता स्थापिता मुद्रणेव भाषायाम् 'लाखोले' इतिशब्दवाच्यमिव । यथा कोशगृहद्वारशृङ्खलोपरि लाक्षालेपरूपमुद्रणा क्रियते तथा कुसुमोपरि कृता किमित्यर्थः ॥ ७८ ॥

भूमौ शुभसौरभेण उत्तमसुगन्धेन संभृतानि शुचिभूतानि शुभ्राण्यपि यानि श्वेतरक्तवर्णानीति विरोधः, शुचौ आषाढे भूतानि जातानि पाटलानि पाटलावृक्षपुष्पाणीति विरोधपरिहारः । दृशा नेत्रेण क्षणं पीतानि सादरमवलोकितानि तानि चित्रभावम् आश्चर्यं कथं न कलयेयुः दद्युः, अपि तु आश्चर्यं दद्युरेव । किंच, यानि शुभ्राणि पाटलानि पीतानि तानि चित्रभावं कर्बुरत्वं कथं न कलयेयुः धारयेयुः, अपि तु कर्बुरत्वं धारयेयुरेव ॥ ७९ ॥

---

१ क. ख. °वलिर्बभौ । २ क. मुद्रिका ।

सीमन्तविद्युदवतंसशिरीषचापं
केश्यं घनोऽयमिति कैः सुदृशां न जज्ञे ।
तस्याध एव [1]निटिले सततं यदासी-
त्तत्तादृशी सलिलशीकरदुर्दिनश्रीः ॥ ८० ॥

उग्रैः करैरुष्णरुचेः समन्तादूष्मायमाणाऽखिलदिङ्मुखस्य ।
आगन्तुमह्नः [2]संविधे स्वकाले ह्यनीश्वरेवापससर्प रात्रिः ॥ ८१ ॥

वर्षास्वियं त्वरितमस्मदुपान्तभूमे-
रुन्मूलनं कलयतीति रुषाऽवलीढैः ।
तीरद्रुमैः स्वनिकटादपसारितेव
मध्यं जगाम सरितां सलिलस्य वेणी ॥ ८२ ॥

देशे देशे जडिमकुरङ्गास्तेजोभल्लैर्दिनकरभिल्लैः ।
धावं धावं प्रहरति राज्ञां धारागेहं शरणमवापुः ॥ ८३ ॥

अङ्गाङ्गसङ्गासहने तपर्ताव[3]न्योन्यमेवाभिमुखा युवानः ।
वाचाऽपि केचिन्मनसाऽपि केचिद्दृशाऽपि केचिद्दृढमालिलिङ्गुः ॥ ८४ ॥

---

सुदृशां सुन्दरीणां कैश्यं केशसमूहः अयं घनः मेघः इति कैः न जज्ञे न ज्ञातम्, अपि तु सर्वैर्ज्ञातम् । यत् यस्मात्कारणात् तस्य कैश्यस्य अधः अधोभागे निटिले ललाटे एव सा चासौ तादृशी च तत्तादृशी अतिमहतीत्यर्थः, सलिलानां शीकरकणाः यस्मिंस्तस्य दुर्दिनस्य मेघच्छन्नाकाशदिनस्य श्रीः शोभा सततं निरन्तरम् आसीत् । कीदृशं कैश्यं, सीमन्त एव विद्युत् यस्मिन् तत् । तथा अवतंसशिरीषाणि अवतंसीकृतशिरीषकुसुमान्येव चापं यस्मिन् तत् ॥ ८० ॥

उष्णरुचेः सूर्यस्य उष्णैः करैः किरणैः समन्तात् ऊष्मायमाणानि ऊष्माणम् उद्वमन्ति अखिलदिङ्मुखानि यस्मिन् तस्य अह्नः दिवसस्य समीपं भागं स्वकाले अहस्त्रिंशद्घटिकावसानरूपस्वसमये आगन्तुम् अनीश्वरेव असमर्थेव रात्रिः अपससर्प किंचित् किंचित् स्वपश्चाद्भागे जगाम । ग्रीष्मे हि रात्रिर्लघ्वी भवति तत्कारणमुत्प्रेक्षितम् ॥ ८१ ॥

सरितां नदीनां सलिलस्य वेणी प्रवाहः मध्यं पात्रमध्यभागं जगाम । कीदृशी सलिलस्य वेणी, 'इयं वेणी वर्षासु प्रावृट्काले अस्माकम् उपान्तभूमेः समीपभूमेः उन्मूलनं त्वरितं कलयति करोति' इतिहेतोः रुषा क्रोधेन अवलीढैः युक्तैः तीरद्रुमैः तीरस्थवृक्षैः अपसारितेव स्वसकाशात्परितः क्षिप्तेवेत्युत्प्रेक्षा ॥ ८२ ॥

देशे देशे जडिमकुरङ्गाः शैत्यमृगाः' दिनकर एव भिल्लः किरातः तस्मिन् तेजोभल्लैः उष्णकिरणबाणैः धावं धावं धावित्वा धावित्वा प्रहरति सति राज्ञां धारागेहं जलमन्दिरं शरणम् अवापुः । अन्येऽपि दुर्जनेन पीड्यमाना राजगृहं प्रति गच्छन्ति ॥ ८३ ॥

युवतयश्च युवानश्च युवानः "पुमान् स्त्रिया" इत्येकशेषः । तरुणस्त्रीपुरुषाः तपर्तौ ग्रीष्मर्तौ

---

१ क. निटले । २ क. ख. सविधम् । ३ क. ख. ऽप्यनीं । ४ ख. मुखम् ।

एवं पचेलिमां हेलिमयूखकठोरकेलिं तस्य तनयायै निवेदितुकामाभिरिव रामाभिर्निरन्तरोपान्तौ दृगध्वनि वसन्तौ वसन्तरतिकान्ताविव जयन्तजनकानन्तरजकौन्तेयौ परिपाटलहंसपाददुरवगाहवनजातसनाथे पाथसि रोधसि च विहारैस्तेषां दिनानामौपयिकमातिथ्यमापादयितुं भगवतीं तामेव सरितमापतताम्॥ ११॥

कल्लोलवेगकपटेन कलिन्दपुत्र्या
पादं प्रति प्रससृपे परमस्य पुंसः।
तिष्ठन्ति मे पुनरिह त्रिजगत्पवित्राः
सख्यः कतीति समवेक्षितुकामयेव॥ ८५॥
तस्या जलेषु तरुणाम्बुदजातिवैरि-
ष्वावर्तजालमनयोरुभयोरतानीत्।

---

अङ्गानां स्वाङ्गानाम् अङ्गैः पराङ्गैः संगस्य असहने सति अभिमुखाः अन्योन्यस्य संमुखाः सन्त एव केचित् युवानः वाचाऽपि अन्योन्यं दृढं यथा तथा आलिलिङ्गुः, केचित् दृशा दर्शनेनापि आलिलिङ्गुः, केचित् मनसाऽपि मनःकल्पनयाऽपि आलिलिङ्गुः॥ ८४॥

एवंरीत्या पचेलिमां पक्वां पूर्णामित्यर्थः, हेलिमयूखानां सूर्यकिरणानां कठोरकेलिं परुषक्रीडां तस्य रवेस्तनयायै यमुनायै निवेदयितुकामाभिरिव रामाभिः सुन्दरीभिः निरन्तरोपान्तौ निबिडितसमन्ताद्भागौ दृगध्वनि वसन्तौ दृग्गोचरे वसन्तौ वसन्तमदनाविवेत्युत्प्रेक्षा। जयन्तजनकस्य इन्द्रस्य अनन्तरजः कनिष्ठबन्धुः उपेन्द्रः कृष्णः, कौन्तेयः अर्जुनश्च तौ परिपाटलाः समन्तात् श्वेतरक्तवर्णाः ये हंसपादाः हंसचरणाः, सूर्यकिरणाश्च तैः दुरवगाहानि दुष्प्रवेशानि वनेषु उदकेषु जातानि उत्पन्नानि अम्भोजानि तैः सनाथे युक्ते पाथसि यमुनाजले, अन्यत्र वनजातानि वनसमूहाः तैः सनाथे रोधसि यमुनातीरे च विहारैः जलक्रीडावनक्रीडाभिः तेषां ग्रीष्मीयाणां दिनानाम् औपयिकं युक्तम् आतिथ्यम् आपादयितुं कर्तुं भगवतीं तामेव सरितं यमुनाम् आपतताम् अगच्छताम्। तस्मिन् ऋतौ कृष्णार्जुनौ स्त्रीभिः सह जलक्रीडां वनक्रीडां च कर्तुं यमुनां गतावित्यर्थः॥ ११॥

कलिन्दपुत्र्या यमुनया कल्लोलवेगस्य महालहरीवेगस्य कपटेन छलेन परमस्य पुंसः श्रीकृष्णस्य पादं प्रति प्रससृपे गतम्। कथंभूतया, 'इह पादे पुनः त्रिजगत्पवित्राः मे सख्यः भागीरथीतुल्याः कति तिष्ठन्ति' इति मनस्यानीय ताः संद्रष्टुं कामो यस्याः तयेवेत्युत्प्रेक्षा। एतत्पादात् मम सखी एका निर्गता तत्तुल्या अन्यास्तत्र कति सन्ति ताः द्रष्टव्या इतीच्छयेव यमुनया पादं प्रति प्रससृपे इत्यर्थः॥ ८५॥

तरुणाम्बुदानां सजलमेघानां जातस्य समूहस्य वैरिषु प्रतिभटेषु श्यामतया तत्तुल्येषु तस्याः यमुनायाः जलेषु आवर्तानाम् अम्भोभ्रमाणां जालं समूहः उभयोः अनयोः कृ-

---

१ क. °खकठोरिमकेलिं, ख. °खकेलिम्। २ क. °जाल°। ३ क. ख. समवीक्षितु°। ४ क. °योर्व्यतानीत्।

वीचीकराग्रविनिवर्तितरामसीर-
व्यावल्गनोपजनितव्रणगर्तशङ्काम् ॥ ८६ ॥
मुरारिनारीमुखपद्मपङ्क्तिर्जवेन योद्धुं जलदुर्गपद्मैः ।
तीरेऽवतस्थे तिलकापदेशात्कृत्वा पुरः खेटकमण्डलानि ॥ ८७ ॥
तासां विलासगमनं समवेक्ष्य तत्र
लाल्यत्वहेतुरपि गर्हितचेतनायाः ।
वेगात्तिरोभवनविघ्नतया मराल्या
गर्ह्या बभूव नितरां गतिमन्दिमश्रीः ॥ ८८ ॥

शनैः शनैस्तासु सरितमवगाहमानासु कासांचिदीर्ष्ययैव नितम्बबिम्बानि निजावकाशदानावलम्बितोन्नतिभिरम्बुभिः पुलिनानि निचोलयाञ्चक्रुः ॥ १२ ॥

अपरासामसूययेव नाभिकुहराणि जलच्चूषणादावर्तकुलजवावलेपमवलुम्पन् ॥ १३ ॥

---

ष्णार्जुनयोः वीच्य एव कराः तेषां अग्रैः विनिवारितानि यानि रामसीरस्य बलरामस्य व्यावल्गनानि स्वविदारणार्थचापल्यकर्माणि तैः उपजनिताः ये व्रणगर्ताः तेषां शङ्काम् अतानीत् ददौ । 'बलरामेण गोपीभिः सह पर्वते क्रीडता जलक्रीडार्थमाहूता यमुना यदा तत्र नागता तदा सा सीरिणाकृष्टा' इति श्रीमद्भागवते कथानकम् ॥ ८६ ॥

मुरारेः नारीमुखपद्मानां पङ्क्तिः जलदुर्गे वर्तमानैः पद्मैः सह जवेन योद्धुं तीरे अवतस्थे । किं कृत्वा, तिलकापदेशात् भालस्थतिलककपटात् खेटानां मण्डलानि समूहान्पुरः कृत्वा अग्रतः कृत्वा नेमे तिलकाः अपि तु स्वत्राणार्थं मुखपद्मैः खेटकान्यग्रतः कृतानीत्यर्थात्कैतवापह्नुत्यलंकारः ॥ ८७ ॥

तत्र यमुनायां तासां कृष्णपत्नीनां विलासगमनं समवेक्ष्य लज्जितचेतनायाः लज्जितमनसः मराल्याः हंस्याः लाल्यत्वस्य लालनीयतायाः हेतुरपि कारणमपि गतेः गमनस्य मन्दिम्नः मन्दतायाः श्रीः शोभा वेगात् तिरोभवनस्य वेगेन गत्वा निलीय स्थितेः विघ्नतया प्रतिबन्धकतया गर्ह्या तदानीं निन्द्या बभूव । अस्माकं गतिमन्दिमा न स्याच्चेत्तर्हि द्रुतं गत्वा निलयनं भवेत्, अतो निलयने गतिमन्दिमा प्रतिबन्धकतया निन्दार्हो जात इति भावः ॥ ८८ ॥

तासु कृष्णस्त्रीषु शनैः शनैः सरितमवगाहमानासु सतीषु कासांचित् नितम्बबिम्बा ईर्ष्येयेव विशालतया पुलिनेन सह स्वसाम्येर्ष्ययेव निजस्य स्वस्य अवकाशदानेन अवलम्बिता धृता उन्नतिः उच्चता यैः तैः अम्बुभिः पुलिनानि निचोलयाञ्चक्रुः आच्छादयामासुः ॥ १२ ॥

अपरासां स्त्रीणां नाभिकुहराणि नाभिविलानि असूययेव स्वसादृश्येर्ष्ययेव जलच्चूषणात् जलपानात् आवर्तकुलजवस्य आवर्तसमूहवेगस्य अवलेपं गर्वम् अवलुम्पन् चिच्छिदुः ॥ १३ ॥

---

१ क. ख. 'वारित' । २ क. ख. लज्जितचे' । ३ क. ख. 'र्ष्ययेव । ४ क. 'वर्तजवावलेपमवालुम्पन् । ५ ' कैतवापह्नुतिर्यत्र व्याजाद्यैर्निह्नुतेः पदैः ' इतिलक्षणात् ।

इतरासां क्रुधेव कुचयुगलानि क्षोभणात्कोकनदकोशान्विदलयांमासुः ॥ १४ ॥

वक्षोजकुम्भनिवहाद्वनिताजनानां
ग्रीष्मर्तुना विनिहितं ग्रहराजपुत्री ।
तापं पितुः स्वमहरत्तरलोर्मिहस्तै-
रन्यं न याति हि विभूतिरपत्यभाजाम् ॥ ८९ ॥

सुरनायकानुजमनोवशीकृतौ
सुदृशो मुखैर्निपुणतां यथा ययुः ।
सरसीरुहैर्न नलिनीलतास्तथा
सकचान्यमूनि विकचानि तानि यत् ॥ ९० ॥

यमस्वसुः संनिधिमेत्य रात्रौ स्वकान्तिचोरं सुदृशामुरोजः ।
नालाग्रशूले नलिनं निवेश्य ववल्ग हर्षादिव वारिमध्ये ॥ ९१ ॥

व्यात्युक्षिकायां विपुलेक्षणासु वर्षन्नखद्योतवलक्षमम्भः ।
सखीमुदारां सरितस्तु तस्याः करोऽप्यसावीदिव कंसहन्तुः ॥९२॥

---

इतरासां कुचयुगलानि क्रुधेव स्वसाम्यधारणहेतुकक्रोधेनेव क्षोभणात्क्षोभजन्यताडनात् कोकनदानां रक्तोत्पलानां कोशान् विदलयामासुः ॥ १४ ॥

ग्रहराजस्य सूर्यस्य पुत्री यमुना वनिताजनानां वक्षोजकुम्भनिवहात् कुचकुम्भसमूहात् सकाशात् ग्रीष्मर्तुना विनिहितं पितुः जनकस्य रवेः तापरूपं स्वं धनं तरलोर्मय एव हस्ताः तैः अहरत् जग्राह । हि यतः अपत्यभाजां पुत्रदुहितृमतां विभूतिः संपत्तिः अन्यं स्वसन्ततेरपरं जनं न याति । पुत्रादिः पितुः स्वम् अन्येन गृहीतं चेत्तस्माद्बलेन गृह्णाति, किं पुनः राजपुत्रीति भावः ॥ ८९ ॥

सुदृशः सुन्दर्यः मुखैः सुरनायकानुजस्य उपेन्द्रस्य कृष्णस्य मनसः वशीकृतौ स्वाधीनीकरणविषये निपुणतां पटुतां यथा ययुः प्रापुः, तथा नलिनीलताः सरसीरुहैः कमलैः निपुणतां न ययुः । यत् यस्मात्कारणात् अमूनि मुखानि सकचानि सकेशानि, तानि कमलानि विकचानि केशरहितानि, प्रफुल्लानि च वर्तन्ते । मुखकमलयोः साहश्येऽपि सकेशानां यथा शोभा तथा विकेशानां नास्तीत्युक्तिभङ्गिः ॥ ९० ॥

सुदृशाम् उरोजः स्तनः यमस्वसुः यमुनायाः सन्निधिं सामीप्यम् एत्य प्राप्य मुकुलीभावात् रात्रौ स्वकान्तेः स्वशोभायाः चोरं नलिनं कमलं वारिमध्ये नालाग्रमेव शूलं तस्मिन्निवेश्य आरोप्य हर्षादिव ववल्ग ननर्त । अन्योऽपि कस्यचिदाश्रयं कृत्वा चौर्यकर्मरतस्य स्वबलेन शासनं कृत्वा हर्षान्नृत्यति ॥ ९१ ॥

कंसहन्तुः कृष्णस्य करोऽतिव्यात्युक्षिकायां परस्पराङ्गेषु जलप्रक्षेपक्रीडायां विपुलेक्षणासु सुन्दरीषु नखानां द्योतेन कान्त्या वलक्षं शुभ्रम् अम्भः वर्षन् सन् तु पुनः तस्याः

---

१ क. 'कलशाः क्षोभणात्कनकको' । २ क. 'याचकुः । ३ ख. यमः स्वसुः ।

उल्लासभाजा हरिणा प्रियायाः कह्लारमाल्ये कलिते कबर्याम् ।
अस्रैरसूयाहसितैश्च चित्रमुत्तंसितं वक्त्रमभूत्सपत्न्याः ॥ ९३ ॥
ग्लहं निमग्नग्रहणेषु कल्पयन्स्वयंग्रहाश्लेषसुखं यदूद्वहः ।
सवर्णवर्ष्मा सलिले तडित्तनूः सुखादगृह्णात्सुदृशस्तु ता न तम् ॥ ९४ ॥
फूत्कृतैः क्वचिदधस्स्थितिचिह्नं बुद्बुदं हरिरुदस्य निमग्नः ।
वञ्चयन्प्रतिवधूं क्वचिदूरुस्तम्भमम्बुषु चुचुम्ब वराङ्ग्याः ॥ ९५ ॥
क्रीडती मण्डलीभूय कृष्णयोरप्सु यौवते ।
तटिन्यास्तटयोः प्रान्ते ताटङ्के इव रेजतुः ॥ ९६ ॥

इति चिरं विहृत्य प्रतीरमुत्तीर्णाभिर्जलमेलनव्रीडादिव संकुचितात्मभिः कुचैरानमिताभिस्तदङ्गसंगमशर्माणि मर्मरगिरा संस्तुत्य पवनचञ्चलैरञ्चलैः श्लाघमानानीव वसनानि वसितवतीभिः कायकान्तिकन-

---

सरितः यमुनायाः उदारां महतीं सखीं भागीरथीम् असावीदिव प्रासूत किम् । पुरा पादः प्रासूत इदानीं तत्करोऽपि प्रासूत किमित्यपिशब्दार्थः ॥ ९२ ॥

उल्लासभाजा आनन्दभाजा हरिणा कृष्णेन प्रियायाः कबर्यां केशपाशे कह्लाराणां सुगन्धिकमलविशेषाणां माल्ये मालायां कलिते स्थापिते सति सपत्न्याः वक्त्रम् अस्रैः दुःखाश्रुभिः, असूयया ईर्ष्यया हसितैश्च उत्तंसितम् अवतंसयुक्तम् अभूत् । इदं चित्रम्, यस्याः कबर्यां मालाप्रक्षेपः तद्वक्त्रेणोत्तंसितेन भाव्यम् अत्र तु अन्यस्याः मुखमुत्तंसितमिति चित्रं; उत्तंसितं युक्तमित्यर्थेन तत्परिहारः ॥ ९३ ॥

सवर्णं यमुनाजलेन समानवर्णं वर्ष्म शरीरं यस्य सः यदूद्वहः कृष्णः निमग्नानां ग्रहणेषु स्वयंग्रहेण आत्मना ग्रहणेन यत् आश्लेषसुखं तद्रूपं ग्लहं पणं कल्पयन् सन् सलिले कृष्णजले तडिदिव गौरी तनुर्यासां ताः सुखात् अनायासेन अगृह्णात्, ताः सुदृशस्तु तं कृष्णं नागृह्णन् । सलिलकृष्णशरीरयोः एकवर्णत्वेन भेदेनाज्ञानान्न ग्रहणमिति भावः॥९४॥

अम्बुषु निमग्नः हरिः क्वचिद्देशे फूत्कृतैः स्वस्य अधःस्थितेः चिह्नं ज्ञापकं बुद्बुदम् उदस्य जलोपरिगतं कृत्वा वधूं प्रति वञ्चयन्, क्वचिदन्यदेशे वराङ्ग्याः सुन्दर्याः ऊरुस्तम्भं चुचुम्ब ॥ ९५ ॥

तटिन्याः यमुनायाः तटयोः तीरयोः प्रान्ते अप्सु उदकेषु मण्डलीभूय क्रीडती कृष्णयोः कृष्णार्जुनयोः यौवते युवतीनां वृन्दे ताटङ्के इव यमुनायाः कर्णभूषणे इव रेजतुः ॥ ९६ ॥

इति अनेन प्रकारेण चिरं विहृत्य क्रीडित्वा प्रतीरम् उत्तीर्णाभिः गताभिः सह तटाटवीं पर्यटतोः तयोः कृष्णार्जुनयोः अग्रे दिशि दिशि कशितः कृशीकृतः शिशिरेतरः उष्णः अभीशुप्रकाशः किरणप्रकाशो येन सः जनदृशां कोशीकरणस्य कुड्मलीकरणस्य

---

१ क. ॰ह्लालिङ्गसुखम् । २ ख. ॰वधूः । ३ क. ॰सङ्गसंगतश॰ । ४ क. ॰नानि निव॰ । ५ क. कनकेति नास्ति । ६ असंगत्यलंकारोऽत्र ‘ विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसंगतिः ’ इति लक्षणात् । सा च श्लेषमूला । ७ मीलितालंकारोऽत्र ‘ मीलितं यदि सादृश्याद्भेद एव न लक्ष्यते ’ इति लक्षणात् ।

कलताकोरकाणीव कनकाभरणानि कामनीयकपुनरुक्तिमात्रस्य पात्रयन्तीभिर्वधूटीभिः सह तदाटवीं पर्यटतोस्तयोरग्रे दिशि दिशि कंशितशिशिरेतराभीशुप्रकाशो जनदृशां कोशीकरणदेशिकः कोऽपि महसां राशिराविरासीत् ॥ १५ ॥

उन्मिष्योन्मिष्य यत्नात्परिचलितयथापूर्वशक्त्याऽथ दृष्ट्या
तन्मध्ये वीक्ष्य कंचित्पुरुषमनुदितच्छायहस्तातपत्रम् ।
अक्ष्णा ज्ञातेयमोतोर्विदधतमनयोः प्रश्रयाश्चर्यदत्त-
द्वैराज्यादाकुलाऽभूद्यदुकुरुवरयोस्तत्क्षणं चित्तसीमा ॥ १७ ॥
मुखे तिरोवेपथुभिर्वयःकृतैर्मुकुन्दवध्वः कृतसूचना इव ।
द्विजातिवृद्धस्य पथोऽस्य पार्श्वयोर्द्विधाऽपसस्रुः सहसाऽतिभीरवः १८

---

देशिकः गुरुः शिक्षकः कोऽपि अनिर्णीतः महसां तेजसां राशिः आविरासीत् प्रादुर्बभूव । कथंभूताभिः वधूटीभिः, जलस्य डलयोरभेदात् जडस्य मूर्खस्य च मेलनेन संगमेन व्रीडादिव संकुचितः आत्मा स्वरूपं येषां तैः कुचैः आनमिताभिः नम्रीकृताभिः । तथा तासाम् अङ्गसंगमस्य शर्माणि सुखानि मर्मरगिरा स्वशब्दरूपवाण्या संस्तुत्य पवनेन चञ्चलैः अञ्चलैः प्रान्तभागैः श्लाघमानानीव वसनानि वस्त्राणि वसितवतीभिः । अन्याऽपि प्रियपदार्थं संस्तुत्य शिरश्चालनेन श्लाघते । तथा कायकान्तिः स्वशरीरकान्तिरेव लता तस्याः कोरकाणीव कुड्मलानीव कनकाभरणानि कामनीयकस्य स्वलावण्यस्य यत्पुनरुक्तिमात्रं तस्य पात्रयन्तीभिः पात्रं कुर्वतीभिः । अधिकार्थस्याप्रतिपादनात्पुनरुक्तिर्यथा व्यर्था तथा स्वलावण्यशोभाधिकशोभाया अकरणात् भूषणानि व्यर्थानि कुर्वतीभिरिति भावः ॥ १५ ॥

अथ यत्नात् उन्मिष्योन्मिष्य नेत्रे उन्मील्योन्मील्य परिचलिता यथापूर्वं शक्तिर्यस्याः तया दृष्ट्या तन्मध्ये तेजोराशिमध्ये कंचित् पुरुषं वीक्ष्य अनयोः यदुकुरुवरयोः यदुकुलकुरुकुलश्रेष्ठयोः कृष्णार्जुनयोः चित्तसीमा द्वयोः राज्ञोः पालनशासनादिकर्म द्वैराज्यं प्रश्रयविनयः आश्चर्यं च ताभ्यां संप्रदानाभ्यां दत्तं यत् द्वैराज्यं तस्माद्धेतोः तत्क्षणमाकुला व्यग्रा अभूत् । यस्मिन् ग्रामे राजद्वयाधिकारः तत्स्थानामेककालावच्छेदेनोभयाज्ञापालने आकुलता भवति । कथंभूतं पुरुषं, न उदिता नोत्पन्ना छाया यस्य तथाभूतम् । हस्ते आतपत्रं छत्रं यस्य तम् । आतपत्रस्याधः पुरुषतेजसा उपरि सूर्यतेजसा छायाभावः । तथा अक्ष्णा नेत्रेण ओतोः मार्जारस्य ज्ञातेयम् एककुलतां मार्जारत्वं विदधतं धारयन्तम् । अग्निनेत्राणां मार्जारनेत्रसादृश्यादियमुक्तिः ॥ १७ ॥

मुकुन्दवध्वः वयसा वार्धक्येन कृतैः द्विजातिवृद्धस्य मुखे तिरोवेपथुभिः तिर्यक्कम्पैः कृता सूचना यासां ता इव अस्य वृद्धस्य पथः मार्गात् पार्श्वयोः सहसा तत्क्षणे द्विधा अपसस्रुः । अपसर्पणहेतुगर्भं विशेषणं, यतो भीरवः भयशीलाः ॥ १८ ॥

---

१ क. इवेति नास्ति । २ क. कृशित' । ३ ख. 'कारदे' । ४ क. 'लब्धाद्वै' ।

ताभ्यां ततस्तस्य पदोः पुरस्तादपङ्कमात्मानमहो विधातुम् ।
स्पृष्टान्युदञ्चद्घनघर्मतोयैरष्टाभिरङ्गैरवनीरजांसि ॥ ९९ ॥
परस्परासङ्गफलप्रदित्सया स्वजन्मतारैन्दववासराविव ।
उपस्थितौ तावुपसृत्य संभ्रमात्तदाशिषोऽनन्तरमेवमब्रवीत् ॥ १०० ॥

क्षुत्प्रपीडयति मामयि वीरौ
कुक्षिमेत्य चकितेव युवाभ्याम् ।
याच्यते तदशनं बहु भोक्तुं
यस्य तृप्यति पुराऽतिथिरेषः ॥ १०१ ॥

इत्थं स्वदक्षिणकरं पुरतः प्रसार्य
तस्यार्दतो वचनपार्ष्ण्यनुधाविवेगा ।
ताभ्यां तथेति भणितिस्तु समाललम्बे
सत्स्वर्थना फलमदौह्रदमेव सूते ॥ १०२ ॥

---

ततः ताभ्यां कृष्णार्जुनाभ्यामात्मानमपङ्कं विधातुं कर्तुं तस्य वृद्धविप्रस्य पदोः चरणयोः पुरस्तात् अग्रभागे उदञ्चन्ति आविर्भवन्ति घनानि निबिडानि घर्मतोयानि येषु तैः अष्टाभिः अङ्गैः करचरणहृदयादिभिः अवन्याः भूमेः रजांसि स्पृष्टानि। अहो आश्चर्यं, घर्मजलरजोमेलनेन पङ्कोत्पत्तिर्भवति अपरपङ्कस्वीकारेण पूर्वपङ्कलेपप्रक्षालनमाश्चर्यकारकम् । अत्र विचित्रालंकारः । तदुक्तम् ' विचित्रं तत्प्रयत्नश्चेद्विपरीतः फलेच्छया ' इति । अपङ्कमपापमित्यर्थादाश्चर्यपरिहारः । विप्राय साष्टाङ्गनमनं चक्रुरिति भावः ॥ ९९ ॥

परस्परयोः आसङ्गः संगतिः तस्याः फलम् अन्नं तस्य प्रदित्सा दातुमिच्छा तया उपस्थितौ प्राप्तौ स्वजन्मतारैन्दववासरौ स्वजन्मनक्षत्रेन्दुवासराविवेत्युत्प्रेक्षा। तौ कृष्णार्जुनौ संभ्रमात् अतित्वरया उपसृत्य समीपं गत्वा वृद्धब्राह्मणः तदा आशिषः आशीर्वादस्य अनन्तरं पश्चात् एवं वक्ष्यमाणमब्रवीत् । ' अध्वान्नवह्निभयसन्मतिवस्त्रसौख्यदुःखानि मासि जनिभे रविवासरादौ ' इति मुहूर्तचिन्तामणौ जन्मनक्षत्रवारसंगतिफलानि॥१००॥

' अयि वीरौ ! अनेन याचितदानसामर्थ्यं द्योत्यते। युवाभ्यां सकाशाच्चकितेव भीतेव क्षुत् कुक्षिं मदुदरमेत्य मां प्रपीडयति। तत् तस्मात् बहु अशनं भक्ष्यं भोक्तुं याच्यते । यस्य येन अशनेन एषः मद्रूपः अतिथिः पुरा तृप्यति तृप्तिं यास्यति '। " यावत्पुरानिपातयोर्लट् " इति भविष्यति लट् । यस्येति शेषे षष्ठी ॥ १०१ ॥

स्वस्य दक्षिणकरं पुरतः प्रसार्य इत्थमुक्तप्रकारेण अर्दतः याचमानस्य तस्य वृद्धब्राह्मणस्य वचनपार्ष्णेः वचनपृष्ठभागस्य अनुधावी पश्चाद्गमनकर्ता वेगो यस्याः सा 'तथेति तथा भवेत्' इति भणितिः उक्तिः ताभ्यां कृष्णार्जुनाभ्यां समाललम्बे स्वीकृता ।कोऽयं किं याचते इत्यादिविचारमकृत्वा याचनानन्तरमेव तथेत्युक्तमिति भावः । इममर्थमर्थान्तरन्यासेन

---

१ क. 'द्घुघ' । २ क. 'त्स मा' । ३ ख. याचते। ४ क. फणिति' । ५ अत्र क्षुत्पीडाया अशनयाच्ञाहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् । तच्चोत्प्रेक्षासंसृष्टम् ।

अथ मुदा कथितात्मयथातथाभावो भगवान्बृहद्भानुर्दन्तपटीजवनिकान्तर्नटीभवत्स्मितयोर्देवकीपृथासुतयोर्धुरि गिरिदरीवसतिधुरीणविभावरीचरसरीसृपदिविषदीशमेदुरीकृतदुरीहिततताण्डवस्य खाण्डवस्य जगत्कण्ठेगडुत्वं चं तत्परिरक्षणदक्षस्य ऋभुक्षणस्तक्षके पक्षपातं च निवेद्य युवयोः कटाक्षबलेन क्षणाद्दिधक्षामीति स्वयमपेक्ष्यं विशेषमाचचक्षे ॥ १६ ॥

भ्रूसंज्ञया यदुपतेः पुरुहूतसूनुः
संतुष्यतोऽथ जगृहे स तनूनपातः।
तूणौ च गाण्डिवसखौ तुरगांश्च शुभ्रान्
कान्तं रथं च नटता कपिकेतनेन ॥ १०३ ॥

मरुन्मनोमार्गणवैनतेयपृग्जयाँस्तैरिव कीर्तिशावैः।
चतुर्भिरश्वैः समुपास्यमानं सफाल्गुनस्तं रथमारुरोह ॥ १०४ ॥

---

द्रढयति—सत्स्विति। सत्सु उत्तमजनेषु अर्थना याच्या अदौर्हृदमेव दौहृदलक्षणरहितमेव फलं सूते ददातीत्यर्थः। उत्तमजनेषु प्रार्थना फलदाने पूर्वस्नेहदानादि नापेक्षते इति भावः ॥ १०२ ॥

अथ दानप्रतिज्ञानन्तरं मुदा हर्षेण कथितः आत्मनः यथातथाभावः अहमग्निरिति याथातथ्यं येन सः भगवान् बृहद्भानुः अग्निः दन्तपटी ओष्ठः स एव जवनिका तिरस्करिणी तस्याः अन्तः अभ्यन्तरे नटीभवत् स्मितं ययोः। यथा जवनिकान्तः नटः तथा ओष्ठान्तर्हास्यं वर्तते इत्यर्थः। देवकीपृथासुतयोः धुरि अग्रभागे 'गिरेः दरीषु गुहासु वसतौ धुरीणाः निपुणाः ये विभावरीचराः राक्षसाः सरीसृपाः सर्पाः दिविषदीशाः दैत्येन्द्राश्च तैः मेदुरीकृतं बहुलीकृतं दुरीहिततताण्डवं दुश्चेष्टितनाट्यं यस्मिन् तस्य खाण्डवस्य एतत्संज्ञकवनस्य जगतः कण्ठेगडुत्वं महागुलिकारूपरोगविशेषत्वं, स रोगः गलग्रहेण यथा नाशकरः तथेदं खाण्डवं जगन्नाशकमित्यर्थः। तस्य खाण्डवस्य रक्षणे दक्षस्य चतुरस्य ऋभुक्षणः इन्द्रस्य तक्षके तत्रस्थे नागे पक्षपातं च निवेद्य युवयोः कटाक्षबलेन कृपावलोकनबलेन क्षणाद्दिधक्षामि दग्धुमिच्छामि' इति स्वयम् अपेक्ष्य विशेषं याचितभक्ष्यविशेषम् आचचक्षे कथितवान् ॥ १६ ॥

अथ सः पुरुहूतसूनुः अर्जुनः यदुपतेः कृष्णस्य भ्रूसंज्ञया भ्रुवा कृतया संज्ञया संतुष्यतः सतनूनपातः अग्नेः सकाशात् गाण्डिवसखौ गाण्डिवधनुःसहितौ तूणौ अक्षयशरौ इषुधी शुभ्रान् तुरगांश्च नटता नृत्यता कपिकेतनेन कपियुक्तध्वजेन उपलक्षितं रथं च जगृहे ॥ १०३ ॥

सः फाल्गुनः उत्तरफल्गुन्यां जातः अर्जुनः मरुन्मनोमार्गणवैनतेयानां वेगविषये

---

१ क. ख. 'तथभावो। २ क. 'यवनिकान्तर्नटस्मि'। ३ ख. खाण्डवस्येति नास्ति। ४ क. ख. चेति नास्ति। ५ क. ख. च विनिवेद्य। ६ क. ख. 'मपेक्षितवि'। ७ क. 'यास्तैरिव। ८ अत्र सामान्येन विशेषसर्मथनरूपोऽर्थान्तरन्यासः।

दशमुखनगरे पुराऽनुभूतं दहनहठात्करणं पुनर्दिदृक्षुः ।
उपगत इव मारुतिः स साक्षादुदलसदस्य रथाग्रकेतनाङ्कम्[1] ॥ १०५ ॥

तद्भुजावनुधावन्त्या संग्रामेषु जयश्रियः ।
जङ्घाद्वयधियं तूणौ[2] जनयामासतुस्तदा ॥ १०६ ॥

पवनसखदृशोर्मुदं वितन्वन्
पटुतरटंकृतिकम्पिताटवीकः ।
कुटिलमतनुत[3]ासकृत्कराभ्यां
गुणमपि[4] दण्डमिवास्य गाण्डिवस्य ॥ १०७ ॥

अथ गरुडवलीमुखध्वजाभ्या-
मनुमतिमेत्य स संननाह हर्षात् ।
बलरिपुमणिनीलमुत्प्रवालं
वनमशितुं वडवास्यभूरिवाग्निः ॥ १०८ ॥

शोणरुचा शिखयाऽतिमहत्या बाणपुरावृतिवासनयेव ।
चण्डतर[5]स्य वनस्य समन्तात्कुण्डलनं[6] कलयन्ववृधेऽग्निः ॥ १०९ ॥

---

पृथक् जयेन एकैकस्य पृथक् जयेन आप्तैः प्राप्तैः कीर्तैः शावैः अर्भकैरिव शुभ्रैरित्यर्थः, चतुर्भिः अश्वैः समुपास्यमानं युक्तं तं रथमारुरोह ॥ १०४ ॥

पुरा दशमुखनगरे लङ्कायामनुभूतं दहनस्य अग्नेः हठात्करणं बलात्कारं पुनः दिदृक्षुः खाण्डवे द्रष्टुमिच्छुः अतः उपागतः प्राप्तः साक्षात् मारुतिरिव हनूमानिव अस्य अर्जुनस्य रथाग्रे केतनाङ्कः ध्वजचिह्नमुदलसत् उल्ललास । अङ्के मारुतेरुत्प्रेक्षा । 'ध्वजाग्रे कृत्रिमः कपिर्विश्वकर्मणा कृतः तत्रैव कार्यवशेन मारुतेरावेशः' इति भारततात्पर्यम् ॥ १०५ ॥

तदा गमनसमये तूणौ इषुधी तस्य अर्जुनस्य भुजौ अनुधावन्त्याः तद्भुजयोः पश्चाद्धावन्त्या इत्यर्थः, संग्रामेषु जयश्रियः जङ्घाद्वयस्य धियं बुद्धिं जनयामासतुः ॥ १०६ ॥

पटुतरा महत्तरा या टंकृतिः धनुषो ज्याशब्दः तया कम्पिता अटवी अरण्यं येन सः एष अर्जुनः पवनसखस्य अग्नेः दृशोः नेत्रयोः मुदं हर्षं वितन्वन्कुर्वन् सन् गाण्डिवस्य धनुषः दण्डमिव गुणमपि मौर्वीमपि कराभ्याम् असकृत् पुनः पुनः कुटिलं वक्रं यथा तथा अतनुत चकार । दण्डस्य सज्जीकरणेन गुणस्याकर्षणेन कुटिलत्वम् ॥ १०७ ॥

अथ सः अग्निः गरुडः वलीमुखः वानरश्च तौ ध्वजयोर्ययोस्ताभ्यां कृष्णार्जुनाभ्यां सकाशात् अनुमतिम् अनुमोदनमेत्य प्राप्य हर्षात् वनम् अशितुं भक्षितुं सन्ननाह सन्नद्धो बभूव । कीदृशं वनं, बलरिपुमणिवत् इन्द्रनीलमणिवत् नीलं श्यामम् । तथा उत्प्रवालम् उद्गतपल्लवम् । क इव, वडवायाः आस्ये मुखे भवति स वडवास्यभूः अग्निरिव वडवाग्निरिव । स यथा इन्द्रनीलमणिवन्नीलमुत्प्रवालमुद्गतविद्रुमं वनं जलम् अशितुं सन्नद्धो भवति तद्वदित्यर्थः ॥ १०८ ॥

अग्निः बाणपुरस्य बाणासुरनगरस्य आवृतेर्वेष्टनस्य वासनयेव संस्कारजन्यस्वभावेनेव

---

१ क. ख. 'नाङ्कः । २ क. तूण्यौ । ३ क. 'तार्जुनः क' । ४ क. 'मिव दण्डमथास्य । ५ क. 'तरोऽस्य । ६ क. 'लनाम् ।

प्रथमं पावकषिङ्गे परिरभ्य गृहीतपल्लवोष्ठपुटे ।
उपकण्ठे वनराजेरुदगादाकुलकपोतनादततिः ॥ ११० ॥

क्रमेण प्रबलीभवतो भगवतः पवमानसखस्य तमालादिषु केषुचिद्द्रुमेषु पत्त्रोच्चयायमानैर्धूमैः किंशुकादिषु केषुचित् [3] स्तवकायमानैर्ज्वालाकन्दलैस्तिलकादिषु केषुचित् पङ्क्तिमफलबीजायमानैः स्फुलिङ्गैर्हरिचन्दनादिषु केषुचिद्वल्कलायमानैरालोकैर्नीडवत्सु केषुचित् परस्परपक्षिपक्षताडनरटनायमानैः प्रोद्यच्चटचटात्कारैश्च सर्वतः परीतमपि तद्वनं [8] यथापुरमवतस्थे ॥ १७ ॥

हुताशनपरित्रासादुच्चलन्त्या वनश्रियः ।
कबरीव श्लथा वेगात्काऽपि धूम्या खमानशे ॥ १११ ॥

---

अतिमहत्या, शोणा रक्ता रुक् कान्तिर्यस्याः तया शिखया ज्वालया चण्डतरस्य अतिरौद्रस्य वनस्य समन्तात्कुण्डलनं वेष्टनं कलयन् सन् ववृधे । अन्योऽपि अभ्यासजन्यस्वभावानुसारेण कर्म करोति ॥ १०९ ॥

पावक एव षिङ्गः विटः तस्मिन् प्रथमं परिरभ्य संवेष्ट्य आलिङ्ग्य च गृहीतः पल्लव एव आरक्तत्वात् ओष्ठपुटो येन तस्मिन् सति वनराजेः पनपङ्क्तेः उपकण्ठे समीपभागे, कण्ठसमीपे च आकुलानां संभ्रमवतां कपोतानां पारावतानां नादततिः शब्दसमूहः उदगात् ओविर्बभूव । विटेन प्रियायाः आलिङ्गनेन ओष्ठपुटग्रहणे च कृते सति रसावेशेन कण्ठात् कपोतशब्दसदृशशब्द आविर्भवति ॥ ११० ॥

क्रमेण प्रवलीभवतः भगवतः पवमानसखस्य अग्नेः तमालादिषु केषुचित् द्रुमेषु पत्त्रोच्चयायमानैः श्यामत्वेन पत्त्रराशिवदाचरद्भिः धूमैः किंशुकादिषु पलाशादिषु केषुचित् वृक्षेषु स्तवकायमानैः आरक्तत्वेन पुष्पगुच्छवदाचरद्भिः ज्वालाकन्दलैः ज्वालासमूहैः तिलकादिषु केषुचित् द्रुमेषु पक्तिमबीजायमानैः पीतलघुगुलिकासदृशात्पक्वफलबीजवदाचरद्भिः स्फुलिङ्गैः हरिचन्दनादिषु केषुचिद्द्रुमेषु पीतत्वेन सर्वतो वेष्टनेन च वल्कलवदाचरद्भिः आलोकैः प्रकाशैः नीडवत्सु पक्ष्यावासस्थानवत्सु केषुचिद् द्रुमेषु परस्परं पक्षिपक्षताडनानां रटनायमानैः शब्दवदाचरद्भिः प्रोद्यद्भिः आविर्भवद्भिः चटचटात्कारैश्च कृत्वा सर्वतः परीतमपि अग्निना व्याप्तमपि तद्वनं यथापुरं यथापूर्वम् अवतस्थे वर्तते स्म ॥ १७ ॥

हुताशनपरित्रासात् अग्निभयात् वेगात् उच्चलन्त्याः उर्ध्वं गच्छन्त्याः वनश्रियः वनलक्ष्म्याः श्लथा शिथिला कबरीव केशसन्निवेश इव काऽपि धूम्या धूमसमूहः खम् आकाशमानशे व्याप्नोति स्म ॥ १११ ॥

---

१ क ख. °कण्ठम् । २ क. °त्तरपु पर्णोच्चया° । ३ क. द्रुमेष्वित्यधिकम् । ४ क. पचेलिमफ° । ५ क. °चिद्विटपिषु व° । ६ क. ख. °प्लोषचटच्चटत्का° । ७ क. परितः। ८ क. ख. मूहुर्तमित्यधिकम् । ९ अत्राप्रस्तुतमनोहरविटकामिनीसंभोगव्यापारप्रतीतेः समासोक्तिरलंकारः—'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्' इति लक्षणात् । १० अत्र वनस्य पूर्वरूपानुवृत्तेः पूर्वरूपालंकारः ।

वलयं धूमरेखाया वर्त्मनि द्युसदां बभौ ।
भाविनः शरकूटस्य परितो मानसूत्रवत् ॥ ११२ ॥

अस्यैव गाण्डिवभृतो भुवि 'हे जन त्वं
मल्लं तृणाय मरुतामपि मन्यमानम् ।
बाह्वोर्बलं पठ पठेति वदन्निवाग्निः
स्फोटारवं स झटिति स्फुटयांम्बभूव ॥ ११३ ॥

स्वपार्श्वयुग्मज्वलदग्निकन्दला
वनान्तभाजोऽजगरा महत्तराः ।
निशातवज्रक्षतिनिःसृतासृजां
दशामयत्नाज्जगृहुर्महीभृताम् ॥ ११४ ॥

तत्र निकुरम्बाणि स्तम्बेरमाणामामूलमनलार्चिरवलम्बितदन्तमुसलानि प्रेमपरवशतया वशासु वितरितुं स्वसृक्भागविन्यस्तजग्धार्धसल्लकीपल्लवकवलानीव क्षणमलक्ष्यन्त ॥ १८ ॥

---

धूमरेखायाः वलयं मण्डलं द्युसदां देवानां वर्त्मनि आकाशे बभौ । किमिव, परितः आसमन्तात् भाविनः इन्द्रेण सह समरे भविष्यतः शरकूटस्य बाणसमूहस्य मानसूत्रवत्परिमाणसूत्रमिव । यथा कश्चित्परिमाणार्थमादौ सूत्रन्यासं करोति तद्वत् ॥ ११२ ॥

सः अग्निः 'हे जन! त्वं भुवि मरुतां देवानां मध्ये मल्लं श्रेष्ठम् इन्द्रमपि तृणायमन्यमानं तृणमिव तुच्छं मन्वानम् अस्य गाण्डीवभृतः अर्जुनस्यैव बाह्वोर्बलं पठ पठ' इति वदन्निव झटिति शीघ्रं स्फोटारवं वेण्वादेर्विदारणशब्दं स्फुटयाम्बभूव प्रकटीचकार । पठ पठ इति विदारणशब्दे इयमुत्प्रेक्षा ॥ ११३ ॥

स्वपार्श्वयोर्युग्मे ज्वलन्तः अग्निकन्दला अग्निसमूहाः येषां ते वनान्तभाजः वनमध्यवर्तिनः महत्तराः अजगराः निशातं तीक्ष्णं यत् वज्रं तस्य क्षतिभ्यो महाव्रणेभ्यः निःसृतं बहिर्निर्गतम् असृक् येषां ते महीभृतानां पर्वतानां दशाम् अवस्थाम् अयत्नात् यत्नं विना जगृहुः स्वीचक्रुः ॥ ११४ ॥

तत्र वने आमूलं मूलपर्यन्तम् अनलार्चिभिः अग्निज्वालाभिः अवलम्बितानि धृतानि दन्तमुसलानि येषां तानि स्तम्बेरमाणां गजानां निकुरम्बाणि वृन्दानि प्रेमपरवशतया स्नेहाधीनतया वशासु करिणीषु वितरितुं दातुं स्वेषां सृक्कभागेषु विन्यस्ताः स्थापिता अर्धं जग्धाः भक्षिताः जग्धार्धाः, राजदन्तादित्वात्परनिपातः । सल्लकीपल्लवानां कवलाः ग्रासाः येषां तानीव क्षणं क्षणमात्रम् अलक्ष्यन्त अदृश्यन्त । जनैरिति शेषः । सल्लकीपल्लवानामतिरक्तत्वात्पल्लवानां सृक्कभागस्थापनस्य करिस्वभावाच्चेयमुत्प्रेक्षा ॥ १८ ॥

---

१ क. द्योसदाम् । २ क. भो । ३ ख. °मानः । ४ क. ° याञ्चकार । ५ क. °तनिःस्रुतासृ° । ६ क. ख. निकुरुम्बाणि । ७ ख. भागेति नास्ति । ८ अत्रासंभवनिबन्धनरूपा निदर्शना ।

सविधज्वलनोष्मवीचिभिः सपदि म्लानकपित्थशाखिनाम् ।
परिपाकसिताः फलव्रजाः प्रबभुः स्फोटकबुद्बुदा इव ॥ ११५ ॥

निशि केवलं तमसि [1]दीप्रतनुं निजजातिमौषधितरुं निखिलम् ।
इतरे विजेतुमिव ते तरवो दिवसेऽपि जज्वलुरतीवतराम् ॥ ११६ ॥

दृप्तदानवनिशाचरवर्गस्तत्र गाण्डिवभृता निहतोऽपि ।
तन्निषङ्गयुगबाणगणानां संख्यया प्रतिभटत्वमकार्षीत् ॥ ११७ ॥

ज्वालतापभरकुण्डलिताङ्गीः क्ष्वेडसारघृतसेचनमृद्वीः ।
सर्पपुङ्गवततीरतिहृष्टः शष्कुलीरिव चचर्व कृशानुः ॥ ११८ ॥

तावत्तक्षकरक्षणाय सहसा शक्रोऽधिरुह्य द्विपं
वज्रं न्यस्य तदीयमूर्ध्नि मरुतां संनाहयन्वाहिनीम् ।
ब्रह्माण्डप्रतिरोधनेन विमुखैर्धूमैरिवारण्यजै-
रातस्तार नभस्तलं जलधरै[2]राबद्धघोरारवैः ॥ ११९ ॥

---

सविधे समीपभागे ज्वलनस्य अग्नेः ऊष्मणां वीचिभिः सपदि तत्काले म्लानानां कपित्थशाखिनां परितः पाकेन पचनेन सिताः शुभ्राः फलानां व्रजाः समूहाः स्फोटकबुद्बुदा इव जलबुद्बुदाकारस्फोटका इव प्रबभुः । कपित्थवृक्षाणां फलानि अग्निसंपर्कजतद्वृक्षस्फोटका इव बभूवुरित्यर्थः ॥ ११५ ॥

निशि तमसि केवलं दीप्रा दीप्तियुक्ता तनुर्यस्यास्तां निजजातिं स्वज्ञातिं निखिलं सकलम् औषधितरुं विजेतुमिव, इतरे तेभ्योऽन्ये ते तमालपलाशादयः तरवः दिवसेऽपि अतीवतरां जज्वलुः दीप्रतनवो बभूवुः । यथाकश्चित् रात्रौ तमसि दीपिकया गच्छन्तं स्वज्ञातिं जेतुम् अहोरात्रं दीपिकया गच्छति तद्वत् ॥ ११६ ॥

तत्र वने गाण्डीवभृता अर्जुनेन निहतोऽपि मारितोऽपि दृप्तानां दानवनिशाचराणां वर्गः समूहः तस्य अर्जुनस्य निषङ्गयोः तूणीरयोः युगस्य बाणगणानां संख्यया प्रतिभटत्वं प्रतिस्पर्धिभटत्वम् अकार्षीत् कृतवान् । यथा मल्लानां प्रतिमल्लाः बलेन भवन्ति तथेमे मृतदैत्यराक्षसाः अर्जुनबाणगणानां संख्यया प्रतिभटत्वं चक्रुः न तु बलेन । असंख्यबाणैरसंख्या हताः इत्यसंख्यत्वेन, कोटिबाणैः कोटिर्हता इति संख्यया वा प्रतिभटत्वं स्वीकृतमित्यर्थः ॥ ११७ ॥

कृशानुः अग्निः अतिहृष्टः सन् ज्वालतापभरेण ज्वालोष्मातिशयेन कुण्डलितानि अङ्गानि यासां ताः क्ष्वेडसार एव घृतं तस्य सेचनेन मृद्वीः सर्पपुंगवानां सर्पश्रेष्ठानां ततीः पङ्क्तीः शष्कुलीरिव भाषायाम् 'कोडबळी' इति 'जिलीबी' इति च प्रसिद्धपदार्थानिव चचर्व भक्षयामास ॥ ११८ ॥

यावदग्निः वनदाहे प्रवृत्तः तावत् शक्रः इन्द्रः तक्षकस्य नागस्य रक्षणाय सहसा अक-

---

१ ख. दीप्ततनुम् । २ क. 'राब्ध' । ३ प्रत्यनीकालंकारोऽत्र 'प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः' इति लक्षणात् ।

ततस्तैरनेकैर्नाकौकसामनीकैर्मत्सरेण तदुपरि निपात्यमानादिग्भित्ति-शिखराणामिव वेगादापततां वारिधौ वाडवहव्यवाडपि कवलितोऽयम स्माभिरितीव विद्युतः प्रकाश्य गर्जितेन तर्जयतामिव पर्जन्यानामासार-सर्वाभिसारेण निर्वापिते वने मनाक् श्यामायमाने सति शोणायमानलो-चनेन कपिकेतनेन तत्प्रतिचिकीर्षया शरकदम्बैरम्बरे निरवलम्बमाक-लितां शरशालां छत्रीकृत्य पुनरपि समुन्नीयमाननिजकेतुरुषर्बुधो भग-वानुद्दिदीपे ॥ १९ ॥

तत्रान्तरे प्रोषितवल्लभतया प्रेम्णा कुमारमश्वसेनं निगीर्य दहनार्चि-रुष्णासहिष्णुतया पुनरपि निर्वर्त्य दिवं प्रयान्तीमिर्घनधाराभिरिव पन्नग-कन्यकाभिः सह वनादुत्पतन्तीं तक्षककुटुम्बिनीमविलम्बितमेव श्वेत-वाहनः शांतमुखेन रसनायामिव ग्रीवायामपि द्विधा विदलिताञ्चक्रे॥२०॥

---

स्मात् द्विपम् ऐरावतम् अधिरुह्य तदीये ऐरावतीये मूर्ध्नि वज्रं न्यस्य मरुतां देवानां वाहिनीं सेनां सन्नाहयन्सन्नद्धां कुर्वन् जलधरैः मेघैः नभस्तलम् आतस्तार आच्छादयामास। कथं-भूतैः जलधरैः, आवद्धः आरब्धः घोरारवो यैस्तैः। तथा ब्रह्माण्डप्रतिरोधनेन ब्रह्माण्डो-ध्वर्कटाहप्रतिबन्धेन विमुखैः पश्चान्निवृत्य आगतैः अरण्यजैः धूमैरिवेत्युत्प्रेक्षा ॥ ११९ ॥

ततः तैः अनेकैः बहुभिः नाकौकसां देवानाम् अनीकैः सैन्यैः मत्सरेण तदुपरि अर्जु-नोपरि निपात्यमानानां दिश एव भित्तयः तासां शिखराणामिव वेगात् आपतताम् अधः आगच्छताम् 'वारिधौ समुद्रे जलग्रहणसमये अयं वाडवहव्यवाडपि वडवाग्निरपि अस्माभिः कवलित धृतः इतरेषां का कथा' इति सूचयितुमिव विद्युतः प्रकाश्य दर्शयित्वा गर्जितेन तर्जयतां धिक्कुर्वतामिव पर्जन्यानां मेघानाम् आसाराणां धारासंपातानां सर्वाभिसारेण सहैव सर्वागमनेन निर्वापिते वने मनाक् ईषत् श्यामायमाने कृष्णीभवति सति शोणाय-माने शोणीभवन्ती लोचने यस्य तेन कपिकेतनेन अर्जुनेन तत्परिचिकीर्षया तस्य प्रति-क्रियाकरणेच्छया शरकदम्बैः वाणसमूहैः कृत्वा अम्बरे आकाशे निरवलम्बं यथा तथा आकलितां कृतां शरशालां वाणगृहं छत्रीकृत्य पुनरपि समुन्नीयमानः समुच्छ्रीयमाणः निजकेतुः धूमो येन सः भगवा न् उषर्बुधः अग्निः उद्दिदीपे प्रजज्वाल ॥ १९ ॥

तत्रान्तरे पुनरुद्दीपनसमये श्वेतवाहनः अर्जुनः प्रोषितः देशान्तरं प्रति गतः वल्लभः पतिः तक्षको यस्याः तस्याः भावस्तत्ता तया प्रेम्णा कुमारम् अश्वसेनं निगीर्य मुखमध्ये कृत्वा पन्नगकन्याभिः सह वनादुत्पतन्तीं तक्षककुटुम्बिनीं भार्याम् अविलम्बितमेव शीघ्रमेव शातमुखेन तीक्ष्णाग्रेण शिलीमुखेन वाणेन रसनायामिव जिह्वायामिव ग्रीवाया-मपि द्विधा विदलितां भिन्नां चक्रे। यथा सर्पजातीयतया ब्रह्मणा जिह्वा द्विधा विदलिता

---

१ ख. अनेकैरिति नास्ति। २ ख. वाहोऽपि। ३ क. वनाग्नौ । ४ क. शरेति नास्ति। ५ क. ख. निवृत्त्य। ६ क. शितमुखेन शिलीमुखेन, ख. शिलीमुखेन। ७ ख. अपीति नास्ति। ८ क. विदलयाञ्चक्रे ।

नभसि कृते शरकूटे न पपाताशुगविनुन्नमम्बुमुचाम्।
तस्मिन् खाण्डववह्नौ तक्षकपत्न्याः कवन्धमेव परम्॥ १२०॥

अथ स कुपितः स्वयं कौशिकोऽपि चकितचकितं वि[१]यति विहितोपसरणं नवजननीशोकदयनीयं हृतवालं तमहिबालं परिगृह्य लालनया परितोषमनैषीत्॥ २१॥

सुतं तमभ्येत्य सुरैरशेषैः क्रुध्यन्नथायुध्यत घोरमिन्द्रः।
चक्रे स दावस्य च तक्षकस्य यदग्निमत्तां यदनग्निमत्ताम्॥१२१॥

वनस्य तस्योपरि केवलं तदा
सहस्रनेत्रस्य च सव्यसाचिनः।
निषङ्गनीडोत्पतितानि पत्रिणां
कुलानि कोलाहलकेलिमादधुः॥ १२२॥

---

तथा पार्थेन ग्रीवाऽपि द्विधा विदलितेत्यर्थः। सा पार्थेन हतेति भावः। कथंभूताभिः पन्नगकन्याभिः, दहनस्य अग्नेः अर्चिषां ज्वालानाम् उष्णस्य असहिष्णुतया पुनरपि निवृत्त्य दिवम् आकाशं प्रयान्तीभिः घनानां धाराभिरिवेत्युत्प्रेक्षा॥ २०॥

नभसि शरकूटे बाणसमूहात्मके मण्डपे कृते सति तस्मिन् खाण्डववह्नौ आशुगेन वायुना विनुन्नं प्रेरितम् अम्बुमुचां मेघानां कवन्धम् उदकं न पपात, परं केवलम् आशुगविनुन्नं बाणच्छिन्नं तक्षकपत्न्याः कवन्धं मस्तकरहितं शरीरं पपात॥ १२०॥

अथ सः कौशिकोऽपि इन्द्रोऽपि नकुलोऽपि च चकितादपि चकितम् अतिभीतमित्यर्थः, वियति आकाशे विहितं कृतम् उपसरणम् आगमनं येन तं नवेन जननीशोकेन दयनीयं दयापात्रं हृतवालं छिन्नपुच्छं तम् अहिवालं सर्पार्भकं परिगृह्य लालनया परितोषं अनैषीत् नीतवान्। इन्द्रोऽपि अहिवालं शत्रुं वृत्रासुरपुत्रं संतोषम् अनैषीदित्यप्यर्थं द्योतयितुमपिशब्दः। 'सर्पे वृत्रासुरेऽप्यहिः' इति यादवः। 'कौशिको नकुले व्यालग्राहे गुग्गुलशक्रयोः' इति विश्वः॥ २१॥

अथ इन्द्रः क्रुध्यन् सन् अशेषैः सुरैः सह तं सुतं पुत्रम् अर्जुनम् अभ्येत्य घोरं यथा-तथा अयुध्यत। पुत्रेण सह युद्धे कारणमाह—चक्रे इति। यत् यस्मात्कारणात् सः अर्जुनः दावस्य वनस्य अग्निमत्ताम् अग्नियुक्ततां चक्रे। यच्चतश्च तक्षकस्य अनग्निमत्तां भार्याहननात् गृह्याग्निराहित्यं चक्रे॥ १२१॥

तदा युद्धसमये तस्य वनस्य उपरि ऊर्ध्वभागे केवलं सहस्रनेत्रस्य इन्द्रस्य, सव्यसाचिनः अर्जुनस्य च निषङ्गा एव नीडानि आवासस्थानानि तेभ्यः उत्पतितानि बहिर्गतानि पत्रिणां बाणानां पक्षिणां च कुलानि वृन्दानि कोलाहलकेलिं कलकलशब्दक्रीडाम् आदधुः चक्रुः। न तु वृक्षनीडोत्पतितपत्रिणां कुलानि, तेषां नाशादिति भावः॥ १२२॥

---

१ ख. विनयवि°। २ अत्रोभयोः कवन्धयोः प्रसक्तस्य पतनस्य तक्षकपत्नीकबन्ध एव नियमनात्परिसंख्यालंकारः। स च कबन्ध शब्द श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति तयोरङ्गाङ्गि भावेन संकरः। ३ अत्र वाक्यार्थहेतुकं काव्यलिङ्गम्।

शरान्विपाठानपि पारदृश्वनः
श्रुतेर्विधायाशु विमुञ्चतस्ततः ।
कुरूद्वहात्साध्वसरोगिणो हरे-
रभूद्भिषग्दूरतरापसर्पणम् ॥ १२३ ॥

जयन्तमेकं युधि सोढुमक्षमे
जयन्तमन्यं सुतमीक्षितुं गते ।
पुरीं बलद्वेषिणि घोषकैतवा-
ज्जहास शङ्खद्वितयं च कृष्णयोः ॥ १२४ ॥

ततः कृशानोर्विपरीतवर्ण-
स्वनामवाच्यादिव भीतभीतम् ।
मयं वने दैत्यमयं ररक्ष
स चक्रपाणेरिव शक्रसूनुः ॥ १२५ ॥

क्षेत्रमप्यधिपतिं कुरुपूर्वं
संश्रितौ सपदि दैवबलेन ।
चर्वितुः सकलखाण्डवमग्ने-
स्तक्षकावभजतां विघसत्वम् ॥ १२६ ॥

---

विपाठानपि स्थूलानपि अध्ययनरहितानपि च शरान् आशु शीघ्रं श्रुतेः कर्णस्य वेदस्य च पारदृश्वनः पारं दृष्टवतः विधाय कृत्वा ततस्ततः तस्मिन् तस्मिन्देशे विमुञ्चतः कुरूद्वहात् अर्जुनात् सकाशात् साध्वसं भयमेव रोगः तद्वतः हरेः इन्द्रस्य दूरतरं यत् अपसर्पणं पलायनमेव भिषक् वैद्यः--रोगहर्तृ अभवत् । इन्द्रोऽर्जुनभयेन पलायनं चक्रे इत्यर्थः ॥ १२३ ॥

युधि जयन्तं पराभवन्तम् एकं सुतम् अर्जुनं सोढुम् अक्षमे असमर्थे बलद्वेषिणि इन्द्रे अन्यं जयन्तम् एतन्नामकं सुतम् ईक्षितुं पुरीम् अमरावतीं गते सति कृष्णयोः कृष्णार्जुनयोः शङ्खद्वितयं पाञ्चजन्यदेवदत्तनामकं शङ्खद्वयं घोषकैतवात् शब्दकपटात् जहास हास्यं चकार । युद्धादिन्द्रेण पलायने कृते सति जयलाभात् हर्षेण कृष्णार्जुनौ शङ्खौ प्रदध्मतुरिति भावः ॥ १२४ ॥

ततः सोऽयं शक्रसूनुः अर्जुनः वने विपरीतौ वर्णौ अक्षरे यस्य तच्च तत्स्वनाम मय इति नाम तद्विपरीताक्षरं कृतं चेत् यम इति भवति तस्य वाच्यात् अभिधेयात् साक्षात् कृतान्तादिव कृशानोः अग्नेः सकाशात् भीतादपि भीतम् अतिभीतं मयं दैत्यं ररक्ष रक्षितवान् । कस्मादिव, चक्रपाणेरिव । यथा हन्तुमुद्यतान्मयो रक्षितः तथाऽग्नेरपि रक्षित इति भावः ॥ १२५ ॥

कुरुपूर्वं कुरुशब्दपूर्वं क्षेत्रम् अधिपतिमपि कुरुपूर्वं कुर्वधिपतिं कुरूणामधिपतिम् अर्जुनं

---

१ क. °तरप्रसर्पणम् । २ क. °पतिः ।

अथ स्मित्वा तुन्दं परिमृशति मन्दायितगतौ
समापृच्छ्य प्रीत्या त्रिदिवमुपयाते हुतवहे ।
रथाभ्यां मौनिभ्यां घनसलिलसेकेन महता
विजेत्रौ तौ कृष्णौ विविशतुरुपान्तं नरपतेः ॥ १२७ ॥
इत्यनन्तभट्टकविकृते चम्पूभारते तृतीयः स्तवकः ॥ ३ ॥

## ४ चतुर्थः स्तबकः ।

याते ततो निजपुरीं यदुवंशकेतौ
राज्ञे मयो मणिसभां रचयाम्बभूव ।
यस्यां रुचं समवलोक्य शुचाऽधुनाऽपि
जीवं गतागतजुषं वहते सुधर्मा ॥ १ ॥
तामधिष्ठास्नुमागत्य तं मखं कर्तुमन्वशात् ।
विपञ्चीरवसारज्ञो नृपं चीरवसां वरः ॥ २ ॥

---

च सपदि दैववलेन संश्रितौ आश्रितौ तक्षकौ तक्षकसंज्ञकनागः, दैत्यानां तक्षकः तक्षा मयासुरश्च तौ सकलखाण्डवचर्वितुः भक्षयितुः अग्नेः विघसत्वं भोजनशेषत्वम् अभजतां स्वीचक्रतुः । खाण्डववनदाहादेतौ द्वावेवावशिष्टाविति भावः ॥ १२६ ॥

अथ विजयित्रौ विजयशीलौ कृष्णौ कृष्णार्जुनौ स्मित्वा ईषद्धास्यं कृत्वा तुन्दम् उदरं परिमृशति अतिपूर्णत्वात् हस्तेन परितः स्पृशति, तथाऽतिभक्षणेन शरीरजाड्यात् मन्दायिता गतिर्यस्य तस्मिन् हुतवहे अग्नौ प्रीत्या समापृच्छय 'युष्मत्कृपया कार्यं जातं स्वस्थानं गच्छामि' इति पृष्ट्वा त्रिदिवं स्वर्गम् उपयाते गते सति महता घनः निबिडः घनानां मेघानां वा यः सलिलसेकः तेन कृत्वा मौनिभ्यां गन्तव्यभूतलस्य सपङ्कत्वात् निःशब्दाभ्यां रथाभ्यां नरपतेः धर्मराजस्य उपान्तं समीपदेशं विविशतुः जग्मतुः॥१२७॥

इति श्रीकविधुरीणानन्तभट्टकृतश्रीमच्चम्पूभारतटीकायां श्रीखण्डोपाह्ववाजी-रायात्मजनारायणकृतायां तृतीयः स्तवकः ॥ ३ ॥

---

यदुवंशकेतौ श्रीकृष्णे निजपुरीं द्वारकां याते सति ततः मयो दैत्यः राज्ञे युधिष्ठिरार्थं मणिसभां रत्नमयीं सभां रचयाम्बभूव निर्ममे । यस्याः समायाः रुचं शोभां कान्तिं वा समवलोक्य सुधर्मा देवसभा शुचा शोकेन अधुनाऽपि गतागते गमनागमने जुषते सेवतेऽसौ गतागतजुट् तं जीवं प्राणं बृहस्पतिं च वहते । अन्यस्या अपि परोत्कर्षासहनजन्यशोकेन प्राणानां गमनागमनं भवति ॥ १ ॥

विपञ्च्या वीणायाः रवस्य शब्दस्य सार जानाति सः, चीराणि वल्कलानि वसते परिदधते ते चीरवसः मुनयः तेषां मध्ये वरः श्रेष्ठः नारदः तां सभाम् अधिष्ठास्नुम् अधिष्ठातारं तं नृपं धर्मराजम् आगत्य मखं राजसूययज्ञं कर्तुम् अन्वशात् आज्ञापयामास ॥ २ ॥

---

१ ख. °मभियाते । २ क. °मभ्येत्य ।

ततो दूताहूतः पुरुहूतानुजो निरन्तरायमेव महान्तं सप्ततन्तुमाहर्तुम-नसः कौन्तेयस्योपान्ते रहसि मुहूर्तं संमन्त्र्योत्साहप्रभावाभ्यां मूर्तो मन्त्र इव तत्प्रहिताभ्यां गन्धवहसुधान्धोधिपनन्दनाभ्यामनुसंधीयमानग-मनो नदीतटाकैर्द्विमातृकतया स्वपालयितारमनुकुर्वतो विविधान्यदुर्ल-भवसुधान्यसमेधितवसुधान्मागधानवगाह्य विशृङ्खलंहर्षितगिरिव्रजमपि शृङ्खलाखेदितमहीभृत्कुलं जराघटितदेहमपि देदीप्यमानबलसंपदमाशा-जेतारमपि परार्थापहारजागरितारं मागधमपि विगीतव्यापारं द्वैमातुरं महारथं पृथ्वीनाथमेत्य प्रधनं ननाथ ॥ १ ॥

---

ततः नारदानुशासनानन्तरं धर्मराजेन दूतैः कृत्वा आहूतः पुरुहूतानुजः श्रीकृष्णः निरन्तरायमेव निर्विघ्नमेव महान्तं सप्ततन्तुं राजसूययज्ञम् आहर्तुं कर्तुं मनो यस्य तस्य कौन्तेयस्य धर्मराजस्य उपान्ते समीपे रहसि मुहूर्तं संमन्त्र्य उत्साहप्रभावाभ्यां उत्साहश-क्तिप्रभुशक्तिभ्यां मूर्तो मूर्तिमान् मन्त्र इव मन्त्रशक्तिरिव तेन युधिष्ठिरेण प्रहिताभ्यां प्रेरिताभ्यां गन्धवहसुधान्धोधिपयोः वाय्विन्द्रयोः नन्दनाभ्यां भीमार्जुनाभ्यां अनुसंधीय-मानं पश्चाद्गमनेनानुलक्ष्यमाणं गमनं यस्य तथाभूतः सन् मगधान् देशान् अवगाह्य प्रवि-श्य द्वयोः बृहद्रथपत्न्योः द्विमात्रोः अपत्यं पुमान् द्वैमातुरः तं पुत्रप्रदम् 'ऋषिदत्तं फलं राज्ञा द्विधा कृत्वा द्वयोः पत्न्योः दत्तं तेन ताभ्यां द्वे शकले जाते ते अचेतनत्वात् बहिः क्षिप्ते जराराक्षस्या संधिते' इति भागवतीयेतिहासः । महारथं महावीरं पृथिवीनाथं राजानं जरा-सन्धम् एत्य प्रधनं युद्धं ननाथ ययाचे । कथंभूतान् मागधान्, नद्यश्च तटाकाः सरांसि च तैः स्वपयोभिः पोषितत्वात् या द्विमातृकता, यद्वा तैरेव नदीमातृकाः वृष्ट्या देवमातृकाश्च तेन द्विमातृकता तया स्वपालयितारं राजानं जरासन्धम् अनुकुर्वत इव तथा विविधानि अन्येषां दुर्लभानि यानि वसुधान्यानि हव्यधान्यानि तैः समेधिता सम्यक् वृद्धिं प्राप्ता वसुधा येषां तान् । कथंभूतं पृथिवीनाथं, विशृङ्खलः शृङ्खलारहितः अत एव हर्षितः गिरि-व्रजः गिरिसमुदायो येन तमपि शृङ्खलाभिः खेदितं महीभृत्कुलं पर्वतसमूहो येन तमि-ति विरोधः, विशृङ्खलं निष्प्रतिबन्धं यथा तथा हर्षितं गिरिव्रजं नगरं येन तं शृङ्खलाखेदि-तराजसमूहमिति परिहारः । तथा जरया वार्धकेन घटिता युक्ता तनुर्यस्य तमपि देदीप्य-माना देहबलसंपत् यस्य तमिति विरोधः, जरानाम्न्या राक्षस्या घटिता कृतसंधाना तनु-र्यस्येति परिहारः । तथा आशायाः जेतारमपि परार्थापहारे परद्रव्यापहारे जागरितारं साव-धानमिति विरोधः, आशाजेतारं दिग्जेतारमिति परिहारः । तथा मागधमपि विगीतः गीतेन रहितः व्यापारो यस्य तमिति विरोधः, मागधं मगधदेशानां राजानं विगीतः निन्द्यः परोपद्रवबहुलः व्यापारो यस्य तमिति परिहारः ॥ १ ॥

---

१ क. 'मुपहर्तुं' । २ क. ख. 'मन्त्र्य साक्षादुत्सा' । ३ क. मगधानवगाह्य, ख. मगधानभिगम्य । ४ क. 'लामोदितगि' । ५ क. 'नबलसंपन्नमा', ख. 'नदेहबलसंपद' । ६ क. जरासंधमित्यधिकम् । ७ ख. 'थमुपेत्य ।

तत्क्षणमंतितिक्षुतया त्वमष्टादशकृत्वो दृष्टापजयोऽस्ययं पुनरितरः किशोर इति कृष्णावुभावप्यवधीर्य हिडिम्बकुटुम्बशोकोदयादारभ्य प्रवीरजनकर्णिकामौक्तिकायमानभुजकीर्तेरात्मनः संमुखीनं दृढतरपरिकरबन्धं जरासन्धं समीरकुमारः पञ्चदशादिनानि नियुध्यैषां तृतीयभागसंख्यानपदाभिधेयेन सह घटयाम्बभूव ॥ २ ॥

हते तस्मिंस्त्रयो दीप्रा हरिप्रस्थमुपाययुः ।
आगामिनि मखे हव्यमादित्सव इवाग्नयः ॥ ३ ॥

कृष्णे गते यदुपुरीं क्षितिपानुजानां
जित्वा दिशः प्रतिनिवृत्तवतां चतुर्णाम् ।
कोशे ममुः परमसिप्रवरा गृहीता
दोष्णोर्बलेन महता न तु हेमपुञ्जाः ॥ ४ ॥

उपायनत्वेन नृपाय सर्वैर्दत्तेषु वित्तेष्वखिलेषु भूपैः ।
पार्थस्य पुर्याः क्षितिरेव भेजे वसुन्धरावाचकवाच्यभावम् ॥ ५ ॥

---

तत्क्षणं युद्धयाच्ञासमय एव अतितिक्षुतया रूपान्तरेण युद्धयाच्ञासहनेन 'त्वम् अष्टादशकृत्वः अष्टादशवारान्दृष्टः अपजयो यस्य तथाभूतोऽसि । अयमितरः पुनः, अयमन्यस्तु किशोरः अल्पवया बालोऽस्ति' इति स्वसाम्याभावप्रदर्शकवचनेन उभावपि कृष्णौ कृष्णार्जुनौ अवधीर्य तिरस्कृत्य हिडिम्बकुटुम्बस्य शोकोदयादारभ्य हिडिम्बराक्षसहननात् आरभ्य प्रवीरजनानां कर्णिकामौक्तिकायमाना कर्णभूषणमौक्तिकवदाचरन्ती भुजकीर्तिर्यस्य तस्य आत्मनः स्वस्य संमुखीनम् अभिमुखीभूय तिष्ठन्तं दृढतरः परिकरबन्धः वस्त्रेण कटिबन्धादिर्यस्य तं जरासन्धं समीरकुमारः भीमः पञ्चदशदिनानि नियुध्य बाहुयुद्धं कृत्वा एषां पञ्चदशदिनानां यः तृतीयभागः पञ्च, तेषां संख्यानपदं पञ्चत्वम् ' संख्येये ह्यादश त्रिषु ' इत्यमरात् पञ्चशब्दस्य संख्येयवाचकत्वं पञ्चत्वस्य संख्यावाचकत्वं तस्य अभिधेयेन अर्थेन मरणेन सह घटयाम्बभूव युयोज, जघानेत्यर्थः ॥ २ ॥

तस्मिन् जरासन्धे हते सति दीप्राः दीप्तिमन्तः त्रयः कृष्णार्जुनभीमाः आगामिनि भविष्यति मखे राजसूये हव्यं होमद्रव्यम् आदित्सवः अग्नयः आहवनीयदक्षिणाग्निगार्हपत्यनामानो वह्नय इव हरिप्रस्थम् इन्द्रप्रस्थम् उपाययुः आजग्मुः।अग्नयोऽपि दीप्राः त्रयश्च॥ ३॥

**कृष्ण इति ।** कृष्णे यदुपुरीं द्वारकां प्रति गते सति दिशः चतुर्दिशः जित्वा प्रतिनिवृत्तवतां प्रतिनिवृत्य आगतानां चतुर्णां क्षितिपस्य धर्मराजस्य अनुजानां भीमादीनां कनिष्ठबन्धूनां महता दोष्णोर्बाह्वोर्बलेन गृहीता असिप्रवराः खड्गश्रेष्ठाः परं केवलं कोशे खड्गपिधाने भाण्डारगृहे च ममुः । हेमपुञ्जास्तु न ममुः, हेमपुञ्जा अपि बाहुबलेन गृहीताः ॥ ४ ॥

**उपायनत्वेनेति ।** सर्वैः भूपैः अखिलेषु वित्तेषु नृपाय धर्मराजाय उपायनत्वेन

---

१ क. °मतितितिक्षया । २ क. °म्बवककु° । ३ क.भुजेति नास्ति । ४ ख. जरासन्धमिति नास्ति । ५ क. गन्धवहनन्दनः । ६ क. ख. °ध्य तेषाम् । ७ क. ख. °भागपरिसं° । ८ क. योजयामास ।

नरदेवमगाज्जये प्रतीच्या
नकुलेनेव वसूनि विस्मृतानि ।
दधदानकदुन्दुभिस्वनैर्द्यां
दलयन्नानकदुन्दुभेः कुमारः ॥ ६ ॥
हरिणा स ततः कृताभ्यनुज्ञो
हविरादातुमिवागतेन साक्षात् ।
क्रमविद्भिरथर्त्विजां समाजैः
क्रतुमाहर्तुमुपक्रमं प्रचक्रे ॥ ७ ॥
प्राग्वंशेऽप्युत्तमे तिष्ठन् प्राग्वंशं पुनराविशत् ।
कुरीरशिरसा पत्न्या कुरुवीरः स दीक्षितः ॥ ८ ॥
आप्सातुमिच्छुरनलो हविरत्र रुच्य-
मानीलधूमकुलनिर्गलनापदेशात् ।
जग्धान्पुरा जतुनिकेतनभित्तिखण्डा-
न्कुक्षिस्थितानिव ववाम गुरूनजीर्णान् ॥ ९ ॥

---

दत्तेषु सत्सु पार्थस्य धर्मराजस्य पुर्याः इन्द्रप्रस्थनगर्याः क्षितिरेव वसुन्धरावाचकस्य वसुन्धराशब्दस्य वाच्यभावं वसुधारणरूपाभिधेयत्वं भेजे दध्रे । यावत्पृथिवीस्थं द्रव्यम् उपायनत्वेनेन्द्रप्रस्थे आगतमित्यर्थः ॥ ५ ॥

**नरदेवमिति** । आनकदुन्दुभेः वसुदेवस्य कुमारः पुत्रः श्रीकृष्णः प्रतीच्याः दिशः जये नकुलेन विस्मृतानीव वसूनि द्रव्याणि दधत् आनकानां पटहानां दुन्दुभीनां च निःस्वनैः द्यां दलयन् भिन्दन् सन् नरदेवं धर्मराजम् अगात् अगमत् ॥ ६ ॥

ततः हविः साक्षात् प्रत्यक्षम् आदातुमिव आगतेन हरिणा कृष्णेन कृता अभ्यनुज्ञा 'यज्ञः क्रियताम्' इति आज्ञा यस्य सः धर्मराजः अथ क्रमविद्भिः यज्ञसंबन्धिकर्मक्रमज्ञातृभिः ऋत्विजां समाजैः समूहैः सह क्रतुं राजसूययज्ञम् आहर्तुम् कर्तुम् उपक्रमं प्रारम्भं यज्ञपूर्वाङ्गं प्रचक्रे कृतवान् ॥ ७ ॥

**प्राग्वंश इति** । दीक्षितः संजातयज्ञदीक्षः सः कुरुवीरः धर्मराजः कुरीरं यज्ञियं माङ्गलिकवस्तु शिरसि यस्याः तया पत्न्या द्रौपद्या सह उत्तमे प्राग्वंशे प्राचीने वंशे कुले तिष्ठन्नपि पुनः प्राग्वंशं आविशत् इति विरोधः, प्राग्वंशं यज्ञियहविर्गेहात् प्राग्गृहमिति परिहारः ॥ ८ ॥

अनलः अग्निः अत्र यज्ञे रुच्यं माधुर्यादिगुणविशिष्टं हविः आप्सातुं भक्षितुम् इच्छुः सन् आनीलं यत् धूमकुलं धूमसमूहः तस्य निर्गलनं स्वस्माद्बहिर्गमनं तस्य अपदेशात् कपटात् पुरा जग्धान् भक्षितान् गुरून् महतः, गुरुत्वगुणविशिष्टांश्च अतः अजीर्णान् कुक्षौ

---

१ क. 'नैव । २ क. विस्तृतानि । ३ क. क्रमवेद्दिपुरोधसां समूहैः । ४ क. आघ्रातुमि' । ५ क. 'गंमना' ।

तत्र प्रवर्ग्यजनितं दिवि धूमचक्र-
माल्लक्ष्यते स्म विबुधान् प्रति पावकेन ।
आनाकदुर्वहहविर्द्रविणेन वेगा-
दाह्वानपत्रवलयं किल नीयमानम् ॥ १० ॥
मेदस्विनं विपुलखाण्डवभक्षणेन
देहं निजं चलयितुं शिखिनोऽक्षमस्य ।
उद्गम्य संज्वलितुमुत्तरवेदिकाया-
मालम्बनाय किल यूपवरोऽन्तिकेऽभूत् ॥ ११ ॥
बिम्बेन सङ्गं बिसपुष्पबन्धोर्नाथः कलानां न यथा विदध्यात् ।
तथैव देवास्ततृपुस्तदानीमत्यद्भुतानां हविषामशेषात् ॥ १२ ॥
सर्वेषु वर्णेष्वपि दातुरस्मात्संप्राप्तवत्स्वर्थमजातशत्रोः ।
नवर्ण एकस्तु कदाऽपि लेभे नार्थं क्रतूनामिह सार्वभौमे ॥ १३ ॥

---

स्थितान् जतुनिकेतनस्य लाक्षागृहस्य भित्तिखण्डानिव। ववाम वमति स्म नायं धूमसमूहः किंतु अजीर्णलाक्षागृहभित्तिखण्डाः किमित्यपह्नुतिगर्भोत्प्रेक्षा । अन्येनापि भक्षितं गुर्वन्नमजीर्णं भवति ॥ ९ ॥

तत्र यज्ञे प्रवर्ग्येण यज्ञीयकर्मविशेषेण जनितं धूमचक्रं धूममण्डलं दिवि आकाशे आलक्ष्यते स्म लोकैर्दृश्यते स्म। कथंभूतं धूमचक्रम्, आनाकं स्वर्गपर्यन्तं दुर्वहं वोढुमशक्यं हविर्द्रविणं यस्य तेन पावकेन अग्निना विबुधान् देवान् प्रति वेगात् नीयमानम् आह्वानपत्राणां वलयं किल कोश इवेत्युत्प्रेक्षा । अन्योऽपि बहूनि पत्राणि वस्त्रकोशे संबध्य नयति ॥ १० ॥

विपुलस्य खाण्डवस्य भक्षणेन मेदस्विनं मांसलं पुष्टमित्यर्थः, निजं देहं चलयितुम् अक्षमस्य असमर्थस्य शिखिनः अग्नेः उद्गम्य उत्थाय संज्वलयितुम्। आलम्बनाय किल आलम्बनार्थमिव उत्तरवेदिकायाम् अन्तिके समीपे यूपवरः यज्ञीयपशुबन्धनार्थं निखातकाष्ठदण्डश्रेष्ठः । अन्योऽपि मांसलः उत्थातुम् असमर्थो दण्डमालम्बते ॥ ११ ॥

तदानीम् अशेषाः देवाः अत्यद्भुतानां हविषाम् अत्यद्भुतैः हविर्भिः होमद्रव्यैः घृतादिभिस्तथैव तेन प्रकारेणैव ततृपुः तृप्ता बभूवुः । कलानां नाथः चन्द्रः बिसपुष्पबन्धोः कमलबन्धोः सूर्यस्य बिम्बेन मण्डलेन सङ्गं यथा येन प्रकारेण न विदध्यात्। अयं भावः— 'देवाः अमृतमयस्य चन्द्रस्य कृष्णपक्षे नित्यमेकैकां कलां भक्षयन्ति । ततः सर्वकलाक्षये अमावास्याचन्द्रस्य सूर्यस्य बिम्बेन सङ्गो भवति । पुनश्च तुष्टा देवाः शुक्लपक्षे कलावृद्धिं कुर्वन्ति' इति पौराणिकाः । तथा च राजसूययज्ञसंबन्धिरुच्यहविर्भक्षणेनातितृप्तैः देवैः क्षुदभावात् कलानामभक्षितत्वेन संपूर्णचन्द्रस्य सत्वात् पूर्णिमायाः संभवेन अमावास्याकालिकसूर्यबिम्बसंगश्चन्द्रस्य न बभूवेति ॥ १२ ॥

इह अस्मिन् क्रतूनां सार्वभौमे श्रेष्ठे राजसूये अस्मात् दातुः अजातशत्रोः धर्मराजात्

---

१ क. 'षां विशेषैः ।

तत्र नानाजनपदमेदिनीवल्लभमल्लमुकुटमणिकिरणपल्लविते यज्ञवाटे त्रिपथापृथातनूजाभ्यां नियुक्तो वैमात्रेयैर्भ्रातृभिर्जतुभवनवनसवनेषु पृथक्पृथगाराधिततया स्वेनाप्यातिथ्याय निमन्त्र्यमाणेन वीतिहोत्रेणेव ज्वलता हेमपात्रेण परिष्क्रियमाणपाणितलः सहदेवो निखिलभक्तजनकृत्यनिर्वाहभारेण निभृतावयवं सभ्यलोकलोचनपक्ष्मयुग्मपङ्क्तिपरस्परवैमुख्यवदान्यरूपकोमलिमानं महर्षिजनवलयमध्यमहेन्द्रनीलरत्नं चिरत्नं पुमांसं समासाद्य प्रथममर्घ्येण परिपूजयाञ्चक्रे ॥ ३ ॥

तावत्प्रकोपात्तरलाधरस्य प्रतिक्षितीशानभयानकस्य ।
वेदीभुवं तत्र विहाय वह्निश्चेदीशितुश्चित्तमिवाविवेश ॥ १४ ॥

---

सर्वेष्वपि वर्णेषु ब्राह्मणादिषु अक्षरेषु च अर्थं द्रव्यम् अभिधेयं च संप्राप्तवत्सु सत्सु एकः नवर्णस्तु कदाऽपि अर्थं न भेजे न प्राप । इदमद्भुतमित्यर्थः । अयं भावः, येन येन यद्यत् याचितं नृपेण तस्य तस्य तत्तद्दत्तम् कस्यापि कदापि नास्तीति नोक्तमतो निषेधार्थकाव्ययनवर्णस्यार्थो न मिलित इति ॥ १३ ॥

तत्र यज्ञोत्सवे नानाजनपदानां ये मेदिनीवल्लभमल्लाः भूपालश्रेष्ठाः तेषां मुकुटमणिकिरणैः पल्लविते संजातपल्लव इत्यर्थः, यज्ञवाटे यज्ञमण्डपे त्रिपथापृथातनूजाभ्यां भीष्मधर्मराजाभ्यां नियुक्तः आज्ञप्तः सहदेवः चिरत्नं पुमांसं पुराणपुरुषं श्रीकृष्णं समासाद्य समीपमागत्य प्रथमम् अर्घ्येण अर्घ्यविशिष्टविधिना परिपूजयाञ्चक्रे । कथंभूतः सहदेवः, वैमात्रेयैः एकस्मिन् पितरि सति भिन्नमातृजैः भ्रातृभिः भीमार्जुनधर्मराजैः जतुभवनवनसवनेषु लाक्षागृहखाण्डवयज्ञेषु पृथक् पृथक् आराधिततया स्वेनापि आतिथ्याय आतिथ्यं कर्तुं निमन्त्र्यमाणेन वीतिहोत्रेणेव वह्निनेव ज्वलता देदीप्यमानेन हेमपात्रेण सुवर्णमयपूजासाहित्यभाजनेन परिष्क्रियमाणं भूष्यमाणं पाणितलं यस्य सः । कथंभूतं चिरत्नं पुमांसं, निखिलानां भक्तजनानां कृत्यस्य योगक्षेमस्य निर्वाहभारेणेव संपादनभारेणेव निभृतावयवं नम्रावयवम् । अन्योऽपि भारेण नम्रावयवो भवति । तथा सभ्यलोकलोचनानां पक्ष्मयुग्मपङ्क्त्योः परस्परवैमुख्यस्य अन्योन्यस्मादपसरणस्य वदान्यः दानशौण्डरूपः कोमलिमा आकारसौन्दर्यं यस्य तम् । सभ्याः निर्निमेषविकसितनयनाः सन्तो यं पश्यन्तीत्यर्थः । तथा महर्षिजनानां वलयस्य मण्डलस्य कटकस्य च मध्यं मध्यभागस्थं महेन्द्रनीलरत्नम् इन्द्रनीलमणिम् ॥ ३ ॥

यावत् कृष्णपूजां करोति तावत् तत्र सभामण्डपे वह्निः वेदीभुवं विहाय त्यक्त्वा प्रकोपाद्धेतोः तरलः चञ्चलः अधरो यस्य तस्य प्रतिक्षितीशानां शत्रुराजानां भयानकस्य भयंकरस्य चेदीशितुः चैद्यस्य चित्तं प्रति आविवेशेव, चित्ते कोपाग्निः प्रादुर्भूदित्यर्थः ॥ १४ ॥

---

१ क. त्रिपथगा° । २ क. °यामन्त्र्यमा° । ३ क. °निर्वहणभारेणेव, ख. °भारेणेव । ४ क. युगल° । ५ क. चिरन्तनम् ।

सदसि न विकृतो यदच्युतोऽभूत्स तु परुषाक्षरमण्डलेन शत्रोः ।
वहिरवसदुपेत्य तच्छ्रवोभ्यां बहुतरकुण्डलनीलरत्नलक्ष्यात् ॥१५॥
अश्लीलवागिह समाप्तवती न वेति
संद्रष्टुकाममिव दानववैरिचक्रम् ।
कल्पान्ततिग्मकरकल्पमनल्पवेगं
कण्ठे बिभेद रणसीमनि दामघोषिम् ॥ १६ ॥

इति तस्य दुर्मतेरायुषा सह समापिते सवनकर्मणि निर्मितावभृथाप्लवनमुपदात्वेन दत्तपूर्वाणि वित्तान्युत्तमर्णानिव पुनर्द्विगुणमेव ग्राहितान्सर्वानुर्वीपतीन् प्रस्थापितवन्तं पौरवं तमनुज्ञाप्य चैद्यनिधनोत्सवेन सुदर्शनस्येव स्वपौरलोचनस्यापि नवास्रकणिकार्द्रतामनुभावयितुमना इव सनातनः पुमान्पुरीं पुरानुभूतकुशस्थलीनाम्नीं प्रतस्थे ॥ ४ ॥

---

स तु अच्युतः कृष्णः सदसि सभायां शत्रोः चैद्यस्य परुषाक्षराणां मण्डलेन समूहेन यत् यस्मात् विकृतकोपादिविकारवान् नाभूत् तत् तस्मात् बहुतराणि यानि कुण्डलसंबन्धिनीलरत्नानि तेषां लक्ष्यात् व्याजात् श्रवोभ्यां कर्णाभ्यां वहिः उपेत्य आगत्य अवसत् । ततः स्थितश्चेत्कर्णविलेनान्तःप्रविष्टपरुषाक्षरैः विकृतो भवेदेव यतो न विकृतो अतो कुण्डलनीलरत्नकपटात् वहिरेव अवसदित्यनुमितमित्यर्थः ॥ १५ ॥

रणसीमनि दानववैरिणः कृष्णस्य चक्रम् 'इह कण्ठे अश्लीलवाक् ग्राम्यवाणी समाप्तवती वर्तते न वा समाप्ता' इति संद्रष्टुकाममिव दामघोषिं दमघोषपुत्रं शिशुपालं कण्ठे विभेद द्विधा चकार । कथंभूतं चक्रम्, "ईष न्यूनः कल्पान्ततिग्मकरः कल्पान्ततिग्मकरकल्पं प्रलयकालिकसूर्यसदृशम् । तथा अनल्पवेगम् अतिजवम् । अनेन विशेषणेन यावदस्त्रं गृह्णाति तावत्कण्ठं विभेदेति व्यज्यते ॥ १६ ॥

इति अनेन प्रकारेण दुर्मतेः तस्य शिशुपालस्य आयुषा सह सवनकर्मणि यज्ञकर्मणि समापिते सति निर्मितं कृतम् अवभृथाप्लवनं यज्ञान्तस्नानं येन तं पौरवं धर्मराजम् अनुज्ञाप्य स्वस्मै गमने आज्ञां दापयित्वा चैद्यस्य निधनोत्सवेन सुदर्शनस्येव स्वस्य पौरजनानां द्वारकावासिजनानां लोचनस्यापि, जात्यभिप्रायेणैकवचनम् । नवास्रकणिकाभिः नवरक्तलवैः नवाश्रुलवैश्च आर्द्रताम् अनुभावयितुम् आर्द्रतायाः अनुभवं ग्राहयितुं मनो यस्य तथाभूत इव सनातनः पुमान् श्रीकृष्णः पुरा अनुभूतं कुशस्थलीति नाम यया तां पुरीं द्वारकामित्यर्थः, प्रतस्थे । कथंभूतं पौरवम्, उपदात्वेन उपायनत्वेन दत्तपूर्वाणि पूर्वदत्तानि वित्तानि वस्त्राश्वकुञ्जरभूषणादीनि उत्तमर्णानिव वृद्ध्यर्थं धनप्रयोक्तॄनिव पुनर्द्विगुणमेव ग्राहितान्सर्वान् उर्वीपतीन् नृपान् प्रस्थापितवन्तम् ॥ ४ ॥

---

१ ख. °रवि । २ क. ख. °प्तिमती न । ३ क. °कर्मणि दामघोषम् । ४ क. °पुरजनलोच°, ख. पौरजनस्यापि । ५ क. ख. °भवितुम° ।

अन्धभूपतनयोऽपि बलौघैर्हास्तिनं पुरमवाप्य विलक्षः ।
सौबलिं गिरमसौ बलवन्तं दुर्विचाररचनासु चचक्षे ॥ १७ ॥

अग्नेरपत्यमिति हेम यदाहुरेत-
न्मिथ्या न मातुल विरोधिमखेऽनुभूतम् ।
तत्स्मर्यमाणमखिलक्षितिपोपनीतं
नक्तंदिवं दहति चित्तमिदं यतो मे ॥ १८ ॥

वलगत्कुचं परिजहास सभावलोके
मां द्रौपदी मणिभुवि स्खलितं यदुच्चैः ।
तत्साधु जातमिति वक्तुमिव स्नुषां स्वां
मत्प्राणवायुरयमुत्क्रमणेच्छुरास्ते ॥ १९ ॥

ततः—अधुना युधि सेनाभिर्विधूनानो रसातलम् ।
निधाय निधनं तेषु निगृह्णीयामिमां शुचम् ॥ २० ॥

---

असौ अन्धभूपतनयोऽपि दुर्योधनोऽपि विलक्षः उद्विग्नः सन् बलौघैः सेनासमूहैः सह हास्तिनं पुरम् अवाप्य दुर्विचाररचनासु बलवन्तं बुद्धिबलवन्तं सौबलिं सुबलापुत्रं शकुनिं गिरं चचक्षे उवाच ॥ १७ ॥

पाण्डवसंपत्तिदर्शनेन मनसि संतापो जात इत्याह—अग्नेरिति । हे मातुल शकुने ! 'हेम सुवर्णम् अग्नेः अपत्यम्' इति यत् आहुः एतत् मिथ्या न मया विरोधिमखे शत्रुकृतयज्ञे अनुभूतम्'। श्रुतिरपि "अग्नेरपत्यं प्रथमं सुवर्णम्" इति। अनुभवं प्रकटयति—तदिति। यतः अखिलक्षितिपैः उपनीतम् आनीतं तत् हेम स्मर्यमाणं सत् इदं मे चित्तं नक्तंदिवम् अहर्निशं दहति, यतः चित्ते आनीतं सच्चित्तं दहति 'कारणगुणाः कार्ये उपसंक्रामन्ति' इतिन्यायाद्दाहशक्तिश्चापत्ये आगता। ततस्तदपत्यत्वं सवर्णस्य युक्तमिति भावः ॥ १८ ॥

द्रौपदी सभावलोके सभाचमत्कारदर्शने मणिभुवि रत्नमयभूमौ स्खलितं जले स्थलभ्रान्त्या पतितं माम् उच्चैः वल्गत्कुचं चलत्कुचं यथा तथा परिजहास' इति यत् तत् साधु जातमिति स्वां स्नुषां स्वपुत्रभीमभार्यां द्रौपदीं प्रतिवक्तुमिव अयं मत्प्राणवायुः उत्क्रमणेच्छुः ऊर्ध्वमार्गेण बहिर्गन्तुमिच्छुः आस्ते । द्रौपदीपरिहासस्मरणेन मत्प्राणा व्याकुलीभवतीति भावः ॥ १९ ॥

इदानीं स्वमतेन कर्तव्यमाह—अधुनेति । अधुना सेनाभिः धरातलं विधूनानः कम्पयिता अहं युधि युद्धे तेषु पाण्डवेषु निधनं मरणं निधाय स्थापयित्वा इमां तद्धामपरिहासस्मरणकृतां शुचं निगृह्णीयां नाशयेयम् ॥ २० ॥

---

१ क. विधुन्वानो धरातलम्, ख. विधुनानो धरातलम् । २ क. विधाय । ३ क. तेषाम् । ४ अत्र प्रसिध्यमानतापकत्वप्रतिपादकोत्तरवाक्यार्थेन हेम्नोऽग्निजन्यत्वसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गम् । तच्च मनोव्यथादाहयोः श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्याऽनुप्राणितम् ।

इति निगद्य व्रीडाव्यथानद्योः संगमे निमग्नमेनमभग्नकैतवबन्धो गान्धारपतिरुत्तारयितुमेवमुत्तरमादत्त ॥ ५ ॥

जय्यतां कथमुपैति तेऽर्जुनो वत्स यद्युधि भयात्पलायिताः ।
केवलं हरिमुखा न नामतो वेगतोऽपि मरुतोऽभवन्सुराः ॥ २१ ॥

अपि च—

तं वीक्षितुं जगति शक्नुयुरत्र के वा
भीमं प्रकोपधृतभीमगदाङ्कबाहुम् ।
एकैकमुष्टिहतये स्म भवन्ति नालं
यस्याहवे वकबृहद्रथभूहिडिम्बाः ॥ २२ ॥

ताभ्यामुपास्यमानस्य तपस्यातनुजन्मनः ।
व्यापादेऽपि प्रसक्तिः का विशेषान्मादृशां रणे ॥ २३ ॥

तथाप्यहं तु तव च तेषां परस्परस्य विभवे परिणयनपथाधिरोहिणि

---

अभग्नः अपराजितः कैतवबन्धः कपटस्वीकारो यस्य सः गान्धारपतिः इति निगद्य उक्त्वा व्रीडाव्यथानद्योः संगमे निमग्नम् एनं दुर्योधनम् उत्तारयितुं बहिर्निष्कासयितुम् एवं वक्ष्यमाणम् उत्तरं प्रतिवचनम् आदत्त उवाच इत्यर्थः ॥ ५ ॥

'हे वत्स बाल! अर्जुनः ते जय्यतां जेतुं शक्यतां कथमुपैति प्राप्नोति । यद्यस्मायुधि खाण्डववनदाहकालिकयुद्धे भयात् पलायिताः हरिमुखाः इन्द्रादयः सुराः केवलं नामतः मरुतः नाभवन् अपि तु वेगतोऽपि मरुतः अभवन्' 'मरुतौ पवनामरौ' इत्यमरः । वायुतुल्यवेगेन पलायिता इत्यर्थः । देवानामियमवस्था तत्र मनुष्याणां का कथेति भावः ॥ २१ ॥

प्रकोपेन धृता भीमा भयंकरा गदा अङ्कः चिह्नं यस्य तथाभूतः बाहुर्यस्य तं भीमं वीक्षितुम् अत्र अस्मिन् जगति के वा पुरुषाः शक्नुयुः शक्ता बभूवुः । यस्य भीमस्य एकैकमुष्टेः हतये प्रहाराय वकः वकासुर, बृहद्रथभूर्जरासन्धश्च हिडिम्बश्च एते अलं पर्याप्ताः न भवन्ति स्म न बभूवुः ॥ २२ ॥

ताभ्यां भीमार्जुनाभ्याम् उपास्यमानस्य सेव्यमानस्य तपस्यातनुजन्मनः धर्मराजस्य व्यापादे द्रोहचिन्तनेऽपि मादृशां मत्सदृशानां का प्रसक्तिः कः प्रसङ्गः । रणे तु विशेषात् का प्रसक्तिः नास्त्येवेत्यर्थः ॥ २३ ॥

तथाऽपि तज्जये ममाशक्ततायामपि अहं तु तव तेषां पाण्डवानां च परस्परस्य विभवे कोशरथतुरगादिसंपत्तौ परिणयनस्य—मम जये त्वया त्वत्कोशो मह्यं दातव्यः । तव जये

---

१ क. 'बन्धुः । २ क. ख. तपसस्त' । ३ क. 'तादृशाम् । ४ क. ख. तेषां च परस्परम् । ५ क. ख. परिपणनपदाधि' । ६ अत्रोत्तरवाक्यार्थहेतुकं काव्यलिङ्गम् । ७ युधिष्ठिरविशेषणद्वयस्य लोकैकाजय्यत्वाभिप्रायगर्भत्वात्परिकरोऽलंकारः । एवं द्रोहचिन्तनमात्रस्याप्यसंभवोक्त्या रणे प्रसक्त्यभावस्य कैमुतिकन्यायसिद्धत्वादर्थापत्तिश्च ।

क्षणादक्षममाणेन जगत्सामान्यतामक्षसंप्रदायेन तं पराजयघण्टापथे संचारयिष्यामि' ॥ ६ ॥

विचे हृते दरिद्रास्ते विसृष्टा बन्धुभिः स्वयम्।
विनाशं वा शुचा यायुर्विदेशं वाऽथ लज्जया ॥ २४ ॥

त्वं ततस्तु सुखमात्मसंयुतैः सोदरैः सदृशसंख्यकाः समाः।
नीरराशिहरिनीलमेखलां निःसपत्नमनुभुङ्क्ष्व मेदिनीम् ॥ २५ ॥

इत्थंकारं रहसि कल्पितकैतवदुरध्वे तावुभावप्यनुधावितुं दिव्यचक्षुषा तेनान्धेन वसुन्धराधिपतिना नवमणिमण्डपिकाप्रवेशोत्सवव्याजादाहूतः सानुजो धर्मात्मजः कुरुपत्तनमुपेत्य बन्धुतया प्रत्युद्गम्यमानो दुस्तरं भाविवनवासवर्षमेकैकमेकैकेन प्रणिपातपुण्येन सुप्रतरं करिष्यन्निव पितृव्यं द्वादशकृत्वः पदयोः प्राणंसीत् ॥ ७ ॥

---

मया मत्कोशस्तुभ्यं दातव्यः—इत्यादिरूपस्य ग्लहस्य पन्थानम् अधिरोहति आगच्छति यस्तथाभूते सति जगति सामान्यतां साधारणताम् अक्षममाणेन जगति सर्वाधिकेनेत्यर्थः, अक्षसंप्रदायेन अक्षक्रीडारीत्या तं धर्मराजं क्षणात्पराजयस्य घण्टापथे विस्तीर्णचत्वरे संचारयिष्यामि। अक्षक्रीडया धर्मं क्षणात्पराजयिष्य इति भावः ॥ ६ ॥

अनया रीत्या तेषां वित्ते हृते अस्माभिः अपहृते सति ते पांण्डवाः दरिद्राः अतः बन्धुभिः स्वजनैः विसृष्टाः त्यक्ताः सन्तः स्वयमेव शुचा वित्तादिशोकेन विनाशं मरणं यायुः गच्छेयुः, अथवा लज्जया विदेशं स्वजनरहितदेशं यायुः ॥ २४ ॥

ततः त्वं तु आत्मना संयुतैः सोदरैः बन्धुभिः सदृशी संख्या यासां ताः समाः वर्षाणि शतसंवत्सरानित्यर्थः। नीरराशयः समुद्रा एव हरिनीलाः इन्द्रनीलमणयः तद्रूपा मेखला काञ्चिर्यस्यास्तां मेदिनीं भुवं निःसपत्नं यथा तथा सुखम् अनुभुङ्क्ष्व उपभुङ्क्ष्व' ॥ २५ ॥

इत्थंकारम् अनेन प्रकारेण रहसि कल्पिते कैतवदुरध्वे अक्षक्रीडायां पणदुर्मार्गे तावुभावपि शकुनिदुर्योधनावपि अनुधावितुं पश्चाच्छीघ्रं गमनं कर्तुं दिव्यचक्षुषा वस्तुतः अन्धेन तेन धरापतिना धृतराष्ट्रेण नवमण्डपिकायां प्रवेशोत्सवस्य व्याजात् आहूतः सानुजः भीमादिबन्धुभिः सहितः धर्मात्मजः कुरुपत्तनं हास्तिनपुरम् उपेत्य बन्धुतया दुर्योधनादिबन्धुसमूहैः प्रत्युद्गम्यमानः संमुखं गम्यमानः सन् पितृव्यं धृतराष्ट्रं पदयोः द्वादशकृत्वः द्वादशवारं प्राणंसीत् नमनम् अकार्षीत्। किं कुर्वन्निव, दुस्तरं भावि एकैकं वनवासवर्षम् एकैकप्रणिपातस्य एकैकनमस्कारस्य पुण्येन सुप्रतरं सुखेन तरितुं शक्यं करिष्यन्निव ॥ ७ ॥

---

१ ख. इतीत्यधिकम्। २ क. ख. कल्पिते कै°। ३ क. धर्मजः, ख. धर्मानुजः। ४ ख. °मेकैकप्रणि°। ५ विकल्पालंकारोऽत्र 'विरोधे तुल्यबलयोर्विकल्पालंकृतिर्मता' इति लक्षणात्।

अवभृथाम्बुकणैरिव नूतनैरधिगतामथ मौक्तिकजालकैः ।
स्वकबरीं द्रुपदस्य सुताऽपि सा सुबलजापदयोः समनीनमत् ॥ २६ ॥
अनुजाभिरनामयानुयुक्तेरभिनन्द्य क्रतुलाभलालनाभिः ।
सदनाय ससर्ज तं विनीतं स धृताकारनिगूहनो महीपः ॥ २७ ॥

तावन्मदीयतनुभेदिभटान्तहेतु-
वैरं मिथः प्रभविता कुरुभूभुजां श्वः ।
इत्यन्तराहितशुचेव दिशि प्रतीच्यां
मन्दायमानमहसा रविणा निपेते ॥ २८ ॥

दिग्धे संतमसैः सान्द्रैर्दिशापदिशचत्वरे ।
सर्वाः प्रजास्तदा राज्ञः समारुक्षन्दृशा तुलाम् ॥ २९ ॥
मनुजावलीनयनवर्त्मने पुनर्मघवादिदेवममभावगोचराः ।
ककुभो विभेजुरमृतांशुभानवः क्षणमेव तं प्रथमशैलरोहिणः ॥ ३० ॥

---

अथ सा द्रुपदसुताऽपि स्वस्य कबरीं वेणीकृतकेशसमूहं सुबलजायाः गान्धार्याः पदयोः समनीनमत् नतामचीकरत् । कथंभूतां कबरीं, नूतनैः अवभृथस्य यज्ञान्तस्नानस्य अम्बुकणैः उदकबिन्दुभिरिव जालकस्य पामरजना न पश्येयुरिति राजपत्न्याः आच्छादकजालस्य मौक्तिकैः अधिगतां प्राप्तां युक्तामित्यर्थः ॥ २६ ॥

धृतम् आकारस्य कोपमत्सरादिजन्यदेहविकारस्य निगूहनं गोपनं येन सः महीपः धृतराष्ट्रः विनीतं नम्रं तं धर्मराजम् अनामयानुयुक्तेः आरोग्यप्रश्नस्य अनुजाभिः कनिष्ठभगिनीभिः अनामयप्रश्नानन्तरं कृताभिरित्यर्थः, क्रतुलाभस्य राजसूयलाभस्य लालनाभिः स्तुतिभिः कृत्वा अभिनन्द्य आनन्दयित्वा सदनाय सदनं प्रति गन्तुं ससर्ज मुमोच । आज्ञापयामासेत्यर्थः ॥ २७ ॥

यावत् सदनाय विसृष्टः तावत् तस्मिन्समये 'मम सूर्यस्येयं मदीया या तनुः तस्याः भेदिनां भटानां योधानाम् अन्ते हेतुः कारणं वैरं कुरुभूभुजां कौरवपाण्डवानां मिथः परस्परं श्वः प्रभविता प्रभविष्यति' इति अन्तः मनसि आहितया स्थापितया शुचेव शोकेनेवेत्युत्प्रेक्षा । मन्दायमानं महः तेजो यस्य तेन रविणा प्रतीच्यां दिशि निपेते निपतितम् । अन्योऽपि शरीरनाशचिन्तया हीनकान्तिः सन् भूमौ निपतति ॥ २८ ॥

दिशापदिशचत्वरे दिग्विदिशाम् अङ्गणे सान्द्रैः सन्तमसैः सर्वतो विद्यमानतमोभिः दिग्धे लिप्ते सति तदा सर्वाः प्रजाः दृशा नेत्रेण राज्ञः तुलां साम्यं समारुक्षन् प्रापुः । राजवत् प्रजा अन्धा बभूवुरित्यर्थः ॥ २९ ॥

तं क्षणमेव तस्मिन् क्षणे एव प्रथमशैलम् उदयाचलं रोहन्ते तथाभूताः अमृतांशोः

---

१ क. ख. जालकमौक्तिकैः । २ क. 'नीयत । ३ ख. ताः । ४ अत्र धावल्यगुणानमिति मौक्तिकेष्ववभृथाम्बुबिन्दुत्वोत्प्रेक्षा ।

अथोपकार्यामधितिष्ठतोऽस्य संदर्शनायानिशमापतद्भिः ।
अशेषपौरैरतिबालमित्रैरशोषि किंचिन्न तया रजन्या ॥ ३१ ॥
धर्मजन्मा ततः कर्म निर्मायाहर्मुखोचितम् ।
सभां स भासुरां पौरैर्भूयः प्रापाक्षवेदिभिः ॥ ३२ ॥

तत्र चित्रीयमाणेष्वनल्पचारिमजल्पाकेषु सभाशिल्पेषु दृशं परिकल्पयतः प्रज्ञादृशः निकषा मूर्ते तृतीयगुण इव दिविषदृषभनीलदृषदासने निषीदतोऽमुष्य कुरुकुलप्रदीपस्य प्रतीपं निविशमानः शकुनिः स्थानाद्भ्रंशयितुं साक्षात्कृतसंनिधिरमध्यमवर्णया तदीयाभिख्यया वाच्य इव ग्रहविशेषः प्रासङ्गिकेन पथा दुरोदरविहारेऽवतारमचिरादभिरोचयामास ॥ ८ ॥

---

चन्द्रस्य भानवः किरणाः पुनः मनुजावलीनयनवर्त्मने मनुष्यनेत्राणां मार्गं कर्तुं मघवादिदेवानां ममभावगोचराः ममत्वविषयाः ककुभः पूर्वादिदिशः विभेजुः ॥ ३० ॥

उपकार्यां राजगृहमधितिष्ठतः प्राप्तवतोऽस्य राज्ञः पृथक्त्वेन दर्शनाय अनिशं निरन्तरम् आपतद्भिः इतस्ततः आगच्छद्भिः अतिबालमित्रैः अशेषपौरैः समस्तपुरवासिभिः तया रजन्या किंचित् नाशोषि नावशिष्टं, भावे लुङ् । रात्रौ पौरसन्मानपरेण राज्ञा निद्रावकाशो न लब्ध इति भावः ॥ ३१ ॥

ततः प्रातःकाले सः धर्मजन्मा अहर्मुखे प्रातःकाले उचितं कर्म स्नानसन्ध्यावन्दनादि निर्माय कृत्वा अक्षवेदिभिः द्यूतकोविदैः पौरैः भासुरां शोभमानां सभां भूयः पुनः प्राप ॥ ३२ ॥

तत्र सभायां चित्रीयमाणेषु आश्चर्यं कुर्वत्सु अनल्पानां चारिम्णचारुत्वानां जल्पाकेषु वाचालेषु बहुसौन्दर्यं दर्शयत्सु इति यावत्, सभायाः शिल्पेषु सभानिर्माणकर्तृशिल्पिजनकौशलेषु दृशं परिकल्पयतः ददतः प्रज्ञादृशः धृतराष्ट्रस्य निकषा समीपे मूर्ते तृतीयगुणे इव तमोगुणे इव दिविषदृषभनीलदृषदासने इन्द्रनीलरत्नासने निषीदतः आसीनस्य अमुष्य कुरुकुलप्रदीपस्य धर्मराजस्य प्रतीपं यथा तथा निविशमानः आसीनः शकुनिः प्रासङ्गिकेन प्रस्तुतकर्तव्यपर्यवसितोक्तिकौशलेन पथा दुरोदरविहारे द्यूतक्रीडायाम् अवतारं कर्तव्यतामित्यर्थः, अचिरात् शीघ्रम् अभिरोचयामास रुचिमुत्पादयामास । कथंभूतः शकुनिः, स्थानात् सार्वभौमपदात् भ्रंशयितुं साक्षात् प्रत्यक्षं कृतसन्निधिः समीपमागतः न विद्यते मध्यमवर्णो यस्यां तया तदीयाख्यया शकुनिनाम्ना वाच्यः ग्रहविशेष इव शनिरिवेत्यर्थः, शकुनिरितिनाम्नि मध्यमकुवर्णत्यागे शनिरित्यवशिष्यते । पदात् भ्रंशयितुं साक्षात् शनिः प्रातिकूल्येन स्थितः किमित्युत्प्रेक्षा ॥ ८ ॥

---

१ क. 'बाल्य' । २ क. भूपैश्चापाक्षवेदिभिः । ३ क. ख. 'चतुरिम' । ४ क. ख. 'दृशम् । ५ ख. गुण इव तृतीये । ६ क. 'धिरिक्तम' ७ क. 'रमाभि' । ८ अत्रोभयत्र प्राप्तस्य शेषीभवनस्य पौरमात्रे नियमनात्परिसंख्याऽलंकारः—'परिसंख्या निषिध्यैकमेकस्मिन्वस्तुयन्त्रणम्' इति लक्षणात् ।

अथ सदसि महत्यामाज्ञयाऽसौ नियत्या
सुमतिमपि विमुह्य द्यूतमार्गे प्रवृत्तम् ।
बहुषु जनपदेषु प्राप्तवत्सु ग्लहत्वं
सपदि सुबलसूनुर्धर्मसूनुं विजिग्ये ॥ ३३ ॥

एकेन यत्सुबलभूर्युगपद्ग्रहीतु-
मक्षेण सर्वविषयान्नृपतेरशक्नोत् ।
अस्मात्परं जगति वाच्यतयाऽभ्युपेत्य
तिष्ठेत किं नु परमाद्भुतवाचकाय ॥ ३४ ॥

प्रतिदेवनमेवमेव भूषाः
प्रचुरान् रत्नमयांश्च हेमकोशान् ।
सहजान् सह जाययाऽस्य जित्वा
स तु गान्धारपतिर्जगर्ज हर्षात् ॥ ३५ ॥

तत्रान्तरे–

घटीचेटी नोऽभूद्बहुपतिवधूटी द्रुपदजा
वराकीं तामत्रानय परिषदीत्यग्रजगिरम् ।

---

अथ महत्यां सदसि सभायाम् असौ सुबलसूनुः शकुनिः सुमतिमपि नियत्याः दैवस्य आज्ञया कृत्वा विमुह्य मोहं प्राप्य द्यूतमार्गे प्रवृत्तं धर्मसूनुं बहुषु जनपदेषु देशेषु ग्लहत्वं पणत्वं प्राप्नुवत्सु सत्सु सपदि ग्लहत्वकाले एव विजिग्ये जयति स्मेत्यर्थः । ग्लहगतपदार्थ-देशादीन् धर्मराजात् जग्राहेति भावः ॥ ३३ ॥

सुबलभूः शकुनिः एकेन अक्षेण पाशकेन इन्द्रियेण च नृपतेः सर्वविषयान् देशान् शब्दस्पर्शादींश्च युगपत् एककालावच्छेदेन ग्रहीतुम् अशक्नोत् शक्तो बभूवेति यावत्, अस्मात् एकेनाक्षेण सर्वविषयग्रहणात् परम् अन्यत् जगति परमम् अद्भुतवाचकाय लोकविलक्षणसंज्ञायै वाच्यतया अर्थतया अभ्युपेत्य स्वीकृत्य तिष्ठेत किं नु नैव तिष्ठेते-त्यर्थः । एकेनाक्षेण इन्द्रियेण श्रोत्रादिना एकस्य विषयस्य शब्दादेर्ग्रहणं लोके विद्यते, अत्र तु एकेनाक्षेण सर्वविषयाणां यौगपद्येन ग्रहणं दृष्टमिति श्लेषेणाद्भुतत्वं परिकल्प्य अस्मादन्या लोकेऽद्भुता संज्ञा तदर्थश्च अस्ति किमितिप्रश्नव्याजेन नास्तीत्यर्थवैचित्र्यं प्रतिपाद्यते ॥ ३४ ॥

प्रतिदेवनं प्रतिक्रीडायामेव एकया क्रीडया सर्वदेशवदेव अस्य धर्मराजस्य भूषाः कटककुण्डलादिभूषणानि प्रचुरान् बहून् रत्नमयान्हेमकोशांश्च जायया द्रौपद्या सह सह-जान् भीमादिबन्धूंश्च जित्वा सः गान्धारपतिः शकुनिस्तु हर्षात् जगर्ज जितं जितमिति उच्चैः शब्दं चकार ॥ ३५ ॥

तत्रान्तरे तस्मिन्समये 'बहूनां पतीनां वधूटी युवतिः जायेत्यर्थः, द्रुपदजा नः अस्माकं

---

१ क. ख. चाज्ञया । २ क. प्राप्नुवत्सु । ३ क. ख. °चयाश्च । ४ क. °राशीन् । ५ ख. तत्रान्त-रेति नास्ति ।

हरन्द्वैतेयीकः सुबलतनयासूनुषु जवा-
त्समुत्तस्थौ साक्षाद्धरणिमवतीर्णो यम इव ॥ ३६ ॥
दृष्ट्वा भिया सदसि धावनमाचरन्त्याः
कैश्ये चकार स कराङ्गुलिमानताङ्ग्याः ।
वक्षोरुहेषु च महीपपुरन्ध्रिवर्गा
नासाग्रसीम्नि सुधियश्च नदीसुताद्याः ॥ ३७ ॥

तत्र स दुर्मेधा बलवदाकर्षणभयोद्भिदुराणि स्वेदपृषन्तीव भूषामुक्ताफलानि धारयन्त्याश्चिकुरभारात्करतलनिष्पीडननिर्गलितां कालिमधारामिव निर्भरकुवलयगर्भकमाल्यरसझरीमश्रुभिः सह वर्षन्त्यास्तस्याः पातिव्रत्यलक्ष्मीनिवासस्फटिकप्राकारमिव दुकूलमप्यपहर्तुं प्रावर्तत ॥९॥

ताद्दक्षे समुपस्थिते परिभवे सभ्येषु वाचंयमे-
ष्वाध्यायत्सु विधेर्बलं स्वदयितेष्वन्येष्वशक्तेष्वपि ।

---

घटीचेटी घटेन जलानयनकर्त्री दासी अभूत्। वराकीं दीनां तां द्रौपदीम् अत्र अस्यां परिषदि सभायाम् आनय' इति अग्रजस्य ज्येष्ठबन्धोः दुर्योधनस्य गिरम् आज्ञावचनं हरन् गृह्णन् सुबलतनयासूनुषु गान्धारीपुत्रेषु द्वैतीयीकः द्वितीयः दुःशासनः जवात् समुत्तस्थौ उदतिष्ठत् । क इव, धरणिं पृथिवीम् अवतीर्णः आगतः साक्षात् यम इवेत्युत्प्रेक्षा ॥ ३६ ॥

बलादाकृष्य नयनार्थमागतं दुःशासनं दृष्ट्वा भिया भीत्या सदसि सभायां धावनं पलायनम् आचरन्त्याः कुर्वन्त्या आनताङ्ग्याः कुचादिभारेण नतावयवायाः द्रौपद्याः कैश्ये केशसमूहे दुःशासनः कराङ्गुलिं हस्ताङ्गुलिं चकार। कराङ्गुलिभिः केशपाशे जग्राहेत्यर्थः। तथा महीपानां राज्ञां पुरन्ध्रिवर्गाः वधूसमूहाः वक्षोरुहेषु कुचेषु कराङ्गुलिं चक्रुः दुःखादङ्गुलिभिः हृदयताडनं चक्रुः । तथा नदीसुताद्याः भीष्माद्याः सुधियः ज्ञातारः नासाग्रसीम्नि नासाग्रे अङ्गुलिं चक्रुः 'समीचीनं न जातं कोऽयं दैवयोगः' इति चिन्तया नासाग्रे कराङ्गुलिं चक्रुः ॥ ३७ ॥

तत्र सभायां दुर्मेधाः दुर्बुद्धिः दुःशासनः तस्याः द्रौपद्याः पातिव्रत्यलक्ष्म्याः निवासस्य स्थितिस्थलस्य स्फटिकप्राकारमिव दुकूलमपि सूक्ष्मश्वेतपरिधानवस्त्रमपि अपहर्तुं प्रावर्तत । कथंभूतायाः तस्याः, बलवतः आकर्षणात् यत् भयं तस्मात् उद्भिदुराणि बहिर्निर्गच्छन्ति स्वेदपृषन्तीव घर्मबिन्दव इवेत्युत्प्रेक्षा। भूषामुक्ताफलानि धारयन्त्याः । तथा चिकुरभारात् केशसमूहात् सकाशात् करतलनिष्पीडनेन निर्गलिताम् अधः क्षरितां कालिम्नः श्यामतायाः धारामिव निर्भरं निबिडं यत्कुवलयगर्भकमाल्यं नीलोत्पलानां केशमध्यस्थमाला तस्याः रसझरीम् अश्रुभिः नेत्रोदकैः सह वर्षन्त्याः ॥ ९ ॥

ताद्दक्षे ताद्दशे अनिर्वाच्ये परिभवे समुपस्थिते सति सभ्येषु भीष्मद्रोणादिषु वाचं-

---

१ क. ख. द्वैतीयीकः । २ क. °दवनिम° । ३ क. भयेति नास्ति । ४ क. भूषाजालकमु° । ५ क. °प्याहर्तुम्। ६ दीपकालंकारोऽत्र ।

निश्चित्यार्थिमतां गतिं यदुपतिं नीव्यां करौ कुर्वती
सा चक्रन्द तमुच्चकैर्यदुपते त्रायस्व हा मामिति ॥ ३८ ॥
तस्याः सभायां ह्रियमाणवस्त्रात्तन्व्या नितम्बात्सहसाऽऽविरासीत्।
कंसारिकारुण्यपयःपयोधेः कल्लोलमालेव दुकूलपङ्क्तिः ॥ ३९ ॥
हृते हृते वासमि हृद्यरूपं वासोऽन्तरं यद्ववृधे वराङ्ग्याः।
नरस्य तेनैव न कस्य तत्र चित्तस्य नव्योऽजनि चित्रकूटः ॥ ४० ॥
अदृश्यस्यापहारेऽपि वर्धितानेकवाससः।
अम्बरप्रायता तस्या मध्यस्योभयथाऽप्यभूत् ॥ ४१ ॥
चैलानि कर्षन्निरमन्धसूनुस्तस्यास्तु नग्नंकरणः स नाभूत्।
श्रमात्स्खलित्वा धरणौ पतन्सन्दन्तावलेरेव जनव्रजानाम् ॥ ४२ ॥

---

यमेषु मौनिषु सत्सु, स्वदयितेषु भीमादिषु विधेः दैवस्य बलम् आध्यायत्सु चिन्तयत्सु सत्सु, अन्येषु उक्तव्यतिरिक्तेषु जनेषु अशक्तेषु तस्याः आपन्निवारणे असमर्थेषु सत्स्वपि सा द्रौपदी नीव्यां परिधानवस्त्रे करौ कुर्वती स्थापयन्ती सती यदुपतिं श्रीकृष्णम् आर्तिमतां पीडितानां गतिं पीडानिवारकं निश्चित्य, 'हे कृष्ण ! भो यदुपते मां त्रायस्व रक्ष' इति उच्चकैः उच्चस्वरेण चक्रन्द आर्तशब्दं चकार। एतत्समये एतदापन्निवारकः श्रीकृष्णं विनाऽन्यो नास्तीति निश्चित्य लज्जारक्षणार्थं तमुच्चकः आजुहावेत्यर्थः ॥ ३८ ॥

सभायां तस्याः तन्व्याः कृशाङ्ग्याः द्रौपद्याः ह्रियमाणवस्त्रात् नितम्बात् कटिपश्चाद्भागात् दुकूलपङ्क्तिः सूक्ष्मशुभ्रवस्त्रसमूहः सहसा अकस्मात् आविरासीत् प्रादुर्बभूव। शुभ्रतयाऽनन्ततया च वस्त्रपङ्क्तिमुत्प्रेक्षते, कंसारेः श्रीकृष्णस्य यः कारुण्यपयःपयोधिः कृपाक्षीरसमुद्रः तस्य कल्लोलमालेव महालहरीपरंपरेव ॥ ३९ ॥

वराङ्ग्याः सुन्दर्याः वाससि वस्त्रे हृते सति हृद्यरूपं मनोहरं वासोन्तरम् अन्यत् वासः ववृधे वृद्धिं प्राप। इति यत्, तेनैव वासोन्तरवर्धनेनैव तत्र सभायां कस्य नरस्य चित्तस्य नव्यः नूतनः चित्रकूटः आश्चर्यराशिः तन्नामा पर्वतश्च न अजनि न जातः, अपि तु सर्वस्य जातः। प्राचीन एकश्चित्रकूटो वर्तते अयमपरो जात इत्यर्थान्तरं श्लेषेण ॥ ४० ॥

अदृश्यस्य अतिसूक्ष्मस्य अपहारेऽपि वस्त्राणामपहारे सत्यपि वर्धितानि वृद्धिं प्रापितानि अनेकवासांसि येन तस्य तस्याः द्रौपद्याः मध्यस्य मध्यभागस्य उभयथाऽपि उभयप्रकारेणापि अम्बरप्रायता प्रायेण बाहुल्येन अम्बरे अम्बरप्रायः तत्ता बहुवस्त्रोत्पत्तेः वस्त्ररूपता सूक्ष्मत्वादाकाशरूपता च अभूदित्यर्थः ॥ ४१ ॥

अन्धसूनुः दुःशासनस्तु तस्याः द्रौपद्याः चैलानि वस्त्राणि कर्षन् अपहरन् सन् अनग्ना नग्ना वस्त्ररहिता क्रियते अनेन सः नग्नंकरणः "आढ्यसुभगस्थूलपलितनग्नान्ध–" इति करणे ख्युन् प्रत्ययः। नग्नीकरणोत्पादनं नाभूत्। श्रीकृष्णकृपया वस्त्रप्रादुर्भावेन द्रौपद्याः नग्नीकर-

---

१ क. तदोच्चकैरिह हरे। २ ख. तस्याम्। ३ क. ख. चित्रपूरः। ४ ख. तस्य। ५ क. चेलानि। ६ मध्यादृश्यत्ववस्त्रप्राचुर्ययोर्विशेषणगत्या अम्बरप्रायत्वं प्रति हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम्।

अथ तथाभूतपरुषयोषाभिषङ्गरोषकलुषेण पृषदश्वजनुषा परिषदि भीषणमेवं बभाषे ॥ १० ॥—

उरसि स्खलदूष्मलं मृगाक्ष्याः समिताविस्रमिदं यथाऽहमक्ष्णा ।
द्विषतः कचकर्षणोऽप्यमुष्या रसनेनानुभवेयमेवमेव ॥ ४३ ॥

किंच सरसीव विचलत्कबन्धबन्धुरे समराजिरे तामरसच्छदानीव शतमपि विमतानेतान्हेमन्त इवाहं धार्तराष्ट्रशब्दशेषां महागदापत्तिं गमयिष्यामीति ॥ ११ ॥

तत्र सुत्राम्णः पुत्रोऽप्येवं प्रतिजज्ञे ॥ १२ ॥—

उत्सेकात्कृतहस्ततालममुना गान्धारपुत्रीभुवा
राधासूनुरसौ जहास सदसि ग्राम्यं ब्रुवन् यत्नतः ।
यस्यां जात्वपि देहिनोऽभ्युदितता नैवाभिनिर्मुक्तता
स्यातां द्वे अपि गाण्डिवो मम तु तां निद्राममुं नेष्यति ॥ ४४ ॥

---

णाभावाद्वस्त्रापहारश्रमेण स्खलनं प्राप्य भूमौ पतन् दुःशासनः जनान् हासयामास । हासा-द्दन्तवाससोरोष्ठयोर्विवृतत्वेन दन्तावलेर्नग्नीकरणसमर्थोऽभूदित्यर्थः ॥ ४२ ॥

अथ तथाभूतः तेन प्रकारेण जातः परुषः कठिनः यो योषाभिषङ्गः भार्यापराभवः तस्मात् यो रोषः तेन कलुषः आविलः तेन पृषदश्वजनुषा वायुपुत्रेण भीमेन परिषदि सभायाम् एवं वक्ष्यमाणं वचनं बभाषे उक्तम् ॥ १० ॥—

'अहं समितौ सभायाम् उरसि स्खलत् यत्तत् ऊष्मलं दुःखजत्वादुष्णं मृगाक्ष्याः द्रौपद्याः अस्रं नेत्राश्रु अक्ष्णा नेत्रेण अनुभवामि पश्यामि । एवमेव अमुष्याः कचकर्षिणः केशाकर्षणकर्तुः द्विषतः शत्रोः दुःशासनस्यापि उरसि स्खलत् बहिः पतत् ऊष्मलम् अस्रं रक्तं समितौ युद्धे रसनेन रसनेन्द्रियेण अनुभवेयम् आस्वादयेयम् ॥ ४३ ॥

किंच, हेमन्त इव अहं सरसीव सरोवरे इव विलसद्भिः कबन्धैः जलैः मस्तकरहितदेहैश्च बन्धुरे व्याप्ते समराजिरे रणाङ्गणे तामरसस्य कमलस्य छदानीव पत्राणीव शतमपि एतान्विमतान् शत्रून् दुर्योधनादीन् धार्तराष्ट्राणां हंसानां धृतराष्ट्रपुत्राणां च शब्दः वाचकः नामेति यावत्, शेषो यस्याः सकाशात् तां महागदस्य महारोगस्य महागदायाश्च आपत्तिं तत्कृतविपत्तिं गमयिष्यामि । रणाङ्गणे दुःशासनस्य हृदयं भित्त्वा रक्तं पास्यामि, दुर्योधनादिशतबन्धून् हनिष्यामि च' इति प्रतिज्ञां चक्रे इति भावः ॥ ११ ॥

तत्र सुत्राम्णः इन्द्रस्य पुत्रो ऽप्येवं वक्ष्यमाणं प्रतिजज्ञे प्रतिज्ञां चक्रे ॥ १२ ॥—

'असौ राधासूनुः कर्णः सदसि उत्सेकात् गर्वात् यत्नतः ग्राम्यम् अश्लीलं भाषणं ब्रुवन् अमुना गान्धारपुत्रीभुवा दुर्योधनेन सह कृतः हस्ततालो हस्तताडनं यस्मिन्कर्मणि यथा तथा जहास । मम गाण्डीवस्तु अमुं कर्णं यस्यां निद्रायां जात्वपि कदाचिदपि अभ्युदितता

---

१ क. ख. कर्षिणो । २ क. चेत्यधिकम् । ३ क. ख. छदानिव । ४ क. ख. यत्ततः । ५ अत्र द्रौपदीजनदन्तावल्योः प्रसक्तस्य नग्नीकरणस्य जनदन्तावल्यामेव नियमनात्परिसंख्यालंकारः ।

इति तयोस्तादृशेन वीरवादेन 'सुखमिहास्वेति करास्फालितदर्शिते निजसक्थिन्येव तव मृत्युः स्यादिति सुयोधनं प्रति याज्ञसेन्याः शापेन भयात्तगन्धाभ्यामन्धदम्पतिभ्यां यथापुरं राज्यं प्रत्यर्प्य हरिप्रस्थं प्रति स्थापितो युधिष्ठिरः पुनरपि कृतमन्त्रैरमित्रैराहूतमात्रोऽयमर्धपथाद्विधिना गलहस्तिकया निवर्तित इव तामेव सभां प्रत्यावर्तत ॥ १३ ॥

भूताभिविष्ट इव बोधवतां वरोऽपि
भूयोऽपि धर्मतनयः सह सौबलेन।
आधत्त देवनविहारमनार्यजुष्ट-
माद्यक्षरं विजहदेव पणोऽपि सोऽभूत् ॥ ४५ ॥

कितवे शकुनौ वशंवदात्किरति स्वेन करेण पाशकान्।
विजयेन सदा पुरस्कृतोऽप्यभवत्तेन स पृष्ठतः कृतः ॥ ४६ ॥

---

अभिनिर्मुक्तता च द्वे अपि एतद्दोषद्वयमपि न स्यातां तां निद्रां दीर्घनिद्रां मरणमिति यावत्, नेष्यति' अमुमपराधकारिणं कर्णं रणाङ्गणे हनिष्यामीति प्रतिज्ञां चक्रे इति भावः। ययोः सुप्तयोः सूर्योऽस्तमेति उदेति च तौ क्रमात् अभिनिर्मुक्ततादोषवान् अभ्युदिततादोषवांश्च भवतः' सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च। अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमम्' इत्यमरः ॥ ४४ ॥

इति तयोः भीमार्जुनयोः तादृशेन वीरवादेन 'युष्मच्छासनेऽहं शक्तः' इतिवादेन 'सुखं यथा तथा इह आस्व निषीद' इति उक्त्वा 'करास्फालनेन हस्तताडनेन दर्शिते सक्थिन्नि ऊरावेव तव मृत्युः स्यात्' इति सुयोधनं प्रति याज्ञसेन्याः द्रौपद्याः शापेन च यद्भयं तेन आत्तगन्धाभ्यां पराभूताभ्याम् अन्धदम्पतिभ्यां गान्धारीधृतराष्ट्राभ्यां यथापुरं यथापूर्वं राज्यं प्रत्यर्प्य हरिप्रस्थम् इन्द्रप्रस्थं प्रति प्रस्थापितो युधिष्ठिरः पुनरपि कृतमन्त्रैः अमित्रैः शकुनि-कर्णदुर्योधनादिभिः शत्रुभिः आहूतमात्रः अयं युधिष्ठिरः अर्धपथात् अर्धमार्गात् विधिना दुर्दैवेन गलहस्तिकया अर्धचन्द्राकाराग्रहस्तगलप्रहारेण निवर्तित इवेत्युत्प्रेक्षा। तामेव सभां प्रत्यावर्तत पुनरागच्छत् ॥ १३ ॥

बोधवतां ज्ञानिनां मध्ये वरोऽपि धर्मतनयः भूताभिविष्ट इव पिशाचप्रविष्ट इव सन् सौबलेन शकुनिना सह भूयोऽपि अनार्यैः नीचैः जुष्टं सेवितं देवनविहारं पाशकक्रीडाम् आदत्त जग्राह। सः देवनविहारः आद्यक्षरं प्रथमाक्षरं विजहत् त्यजत् सन् पणोऽपि अभूत् 'अस्यां क्रीडायां यस्य पराजयः तेन द्वादश वर्षाणि वनवासः कर्तव्यः' इति पणोऽभूदित्यर्थः ॥ ४५ ॥

कितवे द्यूतकृति शकुनौ स्वेन करेण वशंवदान् अनुकूलान् पाशकान् किरति क्षिपति

---

१ क. अयीत्यधिकम्। २ क. 'स्फालननिद'। ३ क. ख. निजेति नास्ति। ४ क. खं. चेत्यधिकम्। ५ क. विनिवं। ६ क. ख. 'माद्याक्ष'। ७ क. यः। ८ अत्र कर्णनिधनस्य भङ्ग्यन्तरेण कथनात्पर्यायोक्तमलंकारः 'पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम्' इति लक्षणात्।

उत्थायाथ क्षितीन्द्रः क्षणमपि धरणौ स्थातुमस्यां न युक्तं
प्रत्यर्थिस्वीकृतायामिति सह सहजैः सत्यसन्धः सजानिः ।
पाणौ देवुर्निधाय प्रसुवमतितरामन्तरुत्तप्यमानां
पद्भ्यां प्रापद्वनानि व्यथितहृदमुचत्पौरलोकस्तु दृग्भ्याम् ॥४७॥

कान्तारवर्त्मनि मृगाः पुरतो निषण्णाः
शान्ताकृतेः सधनुषोऽपि निषङ्गिणोऽपि ।
उत्थाय तस्य पटुमर्मरचारु चीरं
रोमन्थलोलचिबुकेन मुखेन जघ्नुः ॥ ४८ ॥

परागपूर्णे पथि तस्य पादरेखाघटस्य प्रतिमा मनोज्ञाः ।
भक्त्योपनीता वनदेवताभिः पाद्योदकुम्भा इव जाग्रति स्म ॥४९॥

---

सति विजयेन सदा पुरस्कृतोऽपि अग्रतः कृतोऽपि सः धर्मराजः तेन विजयेन पृष्ठतः कृतः अभवत् इदमद्भुतं, विजयेन अर्जुनेन पुरस्कृतोऽपि विजयेन पृष्ठतः कृतः पराजितोऽभूदित्यर्थः ॥ ४६ ॥

अथ पराजयानन्तरं सत्यसन्धः सत्यप्रतिज्ञः क्षितीन्द्रः धर्मराजः 'प्रत्यर्थिभिः स्वीकृतायाम् अस्यां धरणौ क्षणमपि स्थातुं न युक्तम्' इति मनस्यानीय उत्थाय अन्तः अन्तःकरणे अतितराम् उत्तप्यमानां दुःखेन तप्तां प्रसुवं मातरं कुन्तीं देवुः देवरस्य विदुरस्य पाणौ हस्ते विधाय तत्समीपे स्थापयित्वेत्यर्थः, सजानिः जायया द्रौपद्या सहितः सन् सहजैः बन्धुभिः सह पद्भ्यां वनानि अरण्यानि प्रापत् । व्यथितहृत् दुःखमनाः पौरलोकस्तु दृग्भ्यां वनानि जलानि अमुचदत्यजत् । यद्यपि प्रसुवमित्यत्र "ओः सुपि" इति यणा भाव्यं तथापि प्रकृष्टं सूतेऽसौ प्रसूरिति, सूतेऽसौ सूः प्रकृष्टा सूः प्रसूरिति च विग्रहे प्रशब्दस्य कर्षतेरन्वयेन सूतिं प्रत्यन्वयाभावात् गतित्वाभावेन 'गतिकारकेतरपूर्वपदस्य यण् नेष्यते' इति भाष्यकारेष्ट्या यणभावः 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञा' इति नियमात् ॥ ४७ ॥

कान्तारवर्त्मनि अरण्यदुर्गममार्गे सधनुषोऽपि धनुर्विशिष्टस्यापि निषङ्गिणोऽपि तूणीरविशिष्टस्यापि शान्ताकृतेः तस्य धर्मराजस्य पुरतः निषण्णाः आसीनाः मृगाः उत्थाय पटुमर्मरैः मनोहरवस्त्रशब्दैः चारु चीरं वल्कलं रोमन्थे चर्वितस्य तृणादेः आकृष्य पुनश्चर्वणे लोलं चञ्चलं चुबुकम् अधोभागो यस्य तेन मुखेन जघ्नुः आघ्राणं चक्रुः । शान्ताकृतिं दृष्ट्वा निःशङ्कान्तःकरणतया मृगाः विश्वासेन वल्कलमाजघ्रुरित्यर्थः ॥ ४८ ॥

परागैः धूलिभिः पूर्णे पथि मनोज्ञाः मनोहराः तस्य धर्मराजस्य पादरेखात्मकघटस्य प्रतिमाः घटाकाररेखा मुद्राः वनदेवताभिः भक्त्या उपनीताः पाद्यार्थं पादप्रक्षालनार्थम्

---

१ क. 'स्यामयु' । २ क. ख. 'क्षत्तुर्नि' । ३ ख. सीमनि । ४ क. ख. जिघ्रुः । ५ अत्र शान्ताकृतित्वस्य विशेषणगत्या चुम्बनहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् ।

क्रमेण ते [1] विलङ्घ्य विविधानि विपिनानि [2] जह्नुमुनिकर्णशष्कुलीपथव-
शेन [3] शिक्षितैर्गतिविशेषैरिव गंभीरैरावर्तैरुपासकजनादाहृतानि [4] संसार-
चक्राणीव दर्शयन्तीं कोकनदवदनोदितैरिव [5] कोककुटुम्बिनीकूजितैः [6] [7]
कुमारस्य देवव्रतस्य कुशलमिव पृच्छन्तीं भागीरथीं पुरस्कृत्य [8] तां
निशीथिनीं पश्चाच्चक्रुः ॥ १४ ॥

अपरेद्युरतिमात्रबुभुक्षितानुयात्रिकसत्रिजनपरित्राणाय पवित्रैः स्तो-
त्रैः प्रसेदुषा चित्रभानुना दत्तमक्षय्यमन्नपात्रमादाय [9] कलत्रे
निदधुः ॥ १५ ॥

वनं ततः काम्यकमेत्य तेषु वसत्सु भीमस्तु नियोद्धुकामम् ।
किर्मीरमुग्रं कुणपाशनेन्द्रं क्षिप्रं तदाहारदशामनैषीत् ॥ ५० ॥

---

उदकुम्भा इव उदकपूर्णघटा इव जाग्रति स्म तिष्ठन्ति स्म । स्वस्थानवनमागतस्य महासाध्वोर्धर्मराजस्य पादप्रक्षालनार्थमानीता उदकुम्भा इवेत्युत्प्रेक्षा ॥ ४९ ॥

ते पाण्डवाः विविधानि विपिनानि क्रमेण उल्लङ्घ्य भागीरथीं पुरस्कृत्य अग्रतः कृत्वा तत्र तत्तीरे तां निशीथिनीं रात्रिं पश्चाच्चक्रुः यापयामासुः । कथंभूतां भागीरथीं, जह्नुमुनेः जह्नुसंज्ञकराजर्षेः कर्णशष्कुलीपथवशेन कर्णविलमार्गेण बहिर्निर्गमनवशतया शिक्षितैः अभ्यस्तैः गतिविशेषैरिव गभीरैः आवर्तैः अम्भोभ्रमैः कृत्वा उपासकजनात् आहृतानि आनीतानि संसारचक्रानीव दर्शयन्तीम् । तथा कोकनदानि रक्तोत्पलान्येव वदनानि तैः उदितैः उक्तैरिव कोककुटुम्बिनीनां कूजितैः कुमारस्य पुत्रस्य देवव्रतस्य भीष्मस्य कुशलं पृच्छन्तीमिव । अत्र 'भगीरथरथानुगमनमाचरन्त्याः मार्गे जह्नुराजप्रवृत्तयज्ञवेदीं प्लावयन्त्याः तपोबलेन पीतायाः भागीरथ्याः भगीरथयाच्ञाप्रसन्नेन तेन कर्णविलमार्गेण मोचनं कृतम्' इति कथाऽनुसंधेया ॥ १४ ॥

अपरेद्युः द्वितीयदिवसे अतिमात्रं बुभुक्षितानाम् अनुयात्रिकाणाम् अनुयायिनां सत्रिजनानां यज्ञसंबन्धिऋत्विगादिजनानां परित्राणाय रक्षणाय पवित्रैः स्तोत्रैः स्तुतिभिः प्रसेदुषा प्रसन्नेन चित्रभानुना सूर्येण दत्तम् अक्षय्यं भक्ष्यपदार्थप्रसवितृ अन्नपात्रम् आदाय कलत्रे भार्यायां द्रौपद्यां निदधुः स्थापयामासुः ॥ १५ ॥

ततः तेषु पाण्डवेषु काम्यकं वनम् एत्य वसत्सु सत्सु भीमस्तु नियोद्धुकामं बाहुयुद्धकरणेच्छावन्तम् उग्रं किर्मीरनामानं कुणपाशनानां शवभक्षकाणां राक्षसानाम् इन्द्रं नायकं क्षिप्रं शीघ्रं तस्य राक्षसस्य आहारदशां भक्ष्यदशां शवावस्थामित्यर्थः, अनैषीत् नीतवान् । तं जघानेति भावः ॥ ५० ॥

---

१ क. सजानयः इत्यधिकम् । २ ख. वनानि । ३ ख. 'लिकापथेन । ४ ख. गम्भीरैः । ५ क. 'पासिकजनताहृ' । ६ ख. 'नोदीरितैरि' । ७ क. 'कुटुम्बकूजित' । ८ क. ख. तत्रेत्यधिकम् । ९ क. ते इत्यधिकम् ।

ततश्चरन्द्वैतवने स सार्धं वध्वा कदध्वन्यलसतामबुद्ध्वा ।
मूलानि सर्वस्य शुभस्य भूपो मूलानि जग्राह मुनीन्द्रसङ्घात् ॥ ५१ ॥
तत्राथ ते सत्यवतीसुतस्य पादारविन्दात्प्रविसृत्वरीभिः ।
नखप्रभाभिर्नवपुष्पपङ्क्तिं जटालतानां जनयाम्बभूवुः ॥ ५२ ॥
तस्मिन्कवौ तापसयूथनाथे स्वातीमिवाजग्मुषि वासभूमिम् ।
तेषामतिक्षामतया युतानां शुचाऽक्षिदेशेष्वतिवृष्टिरासीत् ॥ ५३ ॥
प्रसृमरतनुभासा प्रावृषेण्यान्स मेघान्
दिशि दिशि विदधानो दीर्घदर्शी तदानीम् ।
कुरव इति महान्तं शब्दमाविभ्रतोऽपि
स्ववचननिपुणिम्ना तानशोकानकार्षीत् ॥ ५४ ॥
अस्मात्प्रति श्रुतिरिति प्रतिपद्य विद्या-
मालिङ्ग्य धर्मतनयेन विसृज्यमानः ।

---

ततः कदध्वनि दुर्मार्गे अलसतां श्रमजन्यालस्यम् अबुद्ध्वा अज्ञात्वा वध्वा द्रौपद्या सार्धं द्वैतवने चरन् गच्छन् सः भूपः धर्मराजः मुनीन्द्रसङ्घात् सर्वस्य शुभस्य पुण्यस्य मूलानि कारणानि, मूलानि वृक्षाणां वल्लीनां च भक्ष्यमूलानि जग्राह । अतिथित्वेन प्राप्ताय दत्तानि मूलानि जग्राहेति भावः ॥ ५१ ॥

अथ तत्र द्वैतवने ते पाण्डवाः सत्यवतीसुतस्य व्यासस्य पादारविन्दात् प्रविसृत्वरीभिः प्रसरणशीलाभिः नखप्रभाभिः कृत्वा जटालतानां नवां नूतनां पुष्पपङ्क्तिं जनयाम्बभूवुः उत्पादयामासुः । नमने व्यासचरणयोर्मस्तकं स्थापयामासुरिति भावः ॥ ५२ ॥

तापसयूथनाथे तस्मिन्कवौ पुराणादिकर्तरि व्यासे शुक्रे च स्वातीं स्वातीनक्षत्रमिव वासभूमिं निवासस्थानम् आजग्मुषि आगतवति सति अतिक्षामतया अतिकार्श्येन दुर्भिक्षेण च युतानां तेषां पाण्डवानां शुचा शोकेन अक्षिदेशेषु अतिवृष्टिः आसीत् । आपन्निवारकम् आप्तजनं दृष्ट्वा शोकेन रुरुदुरित्यर्थः । शुक्रे स्वातीनक्षत्रमागतवति अतिवृष्टिर्भवतीति ज्योतिर्ग्रन्थे प्रसिद्धम् ॥ ५३ ॥

तदानीं दीर्घदर्शी भविष्यज्ज्ञः व्यासः प्रसृमरया प्रसरणशीलया तनुभासा श्यामया शरीरकान्त्या दिशि दिशि प्रावृषेण्यान् प्रावृट्कालिकान् सजलानित्यर्थः, मेघान् विदधानः कुर्वाणः सः व्यासः कुरुराजवाचक कुरववृक्षवाचककुरव इति महान्तं शब्दं संज्ञाम् आविभ्रतोऽपि तान् पाण्डवान् स्ववचननिपुणिम्ना कौशलेन अशोकान् शोकरहितान् अशोकवृक्षांश्च अकार्षीत् । वृक्षपक्षे आश्चर्यम् ॥ ५४ ॥

पार्थः अर्जुनः अस्मात् व्यासात् प्रतिश्रुतिरिति एतत्संज्ञां विद्यां विधानसहितमन्त्रं प्रतिपद्य प्राप्य धर्मतनयेन आलिङ्ग्य विसृज्यमानः आज्ञप्तः सन्नित्यर्थः, कृपाजलधेः शंभोः

---

१ ख. चिरम् । २ क. ख. पङ्क्तिर्जं । ३ क. 'तीमथाज' । ४ क. तस्मात् । ५ अत्र पर्यायोक्तिरूपकालंकारौ ।

पार्थो हिमाचलमगात्परमास्त्रमाप्तुं
शम्भोः कृपाजलनिधेश्चरणार्चनाभिः ॥ ५५ ॥
यस्मिन्हिमानीभृति यक्षवृन्द-
मङ्गेषु सर्वेष्वपि मञ्जुलेषु ।
नखम्पचोष्णं नलिनेक्षणाना-
मुरोजमेवातितरामुपास्ते ॥ ५६ ॥
यो वत्सतामेत्य वसुन्धराया निपीतरत्नावलिकान्तिपूरान् ।
मनःशिलावप्रझरीमिषेण दरीमुखैरुद्गिरतीव तृप्त्या ॥ ५७ ॥
आरोहतस्तं तरसा समीरकिशोरकः स्वेदजलाणुराजिम् ।
निपीय तस्याननपद्ममाध्वीद्विरेफभावं प्रकटीचकार ॥ ५८ ॥
शिवाख्ययोरेकतनुत्वकारणं त्रिलोकपित्रोर्महसोस्तपोवनम् ।
मिथोऽर्च्यमानं मिथुनैस्तपस्विनां तथेच्छुभिस्तत्र ननाम पाण्डवः ५९

चरणयोः अर्चनाभिः पूजाद्युपासनाभिः परमास्त्रं पाशुपतास्त्रम् आप्तुं प्राप्तुं हिमाचलम् अगात् अगमत् ॥ ५५ ॥

हिमानीभृति हिमसंहतिधारके यस्मिन्हिमाचले यक्षाणां वृन्दं नलिनेक्षणानां सुन्दरस्त्रीणां सर्वेष्वपि अङ्गेषु अवयवेषु मञ्जुलेषु सुन्दरेषु सत्सु नखम्पचं नखपाचकम् उष्णं यस्मिंस्तम् उरोजमेव स्तनमेव अतितराम् उपास्ते सेवते। पर्वते शैत्यबाहुल्यात् स्वभावतः स्त्रीणां कुचाधारहृदयेषु उष्णतासत्वात्तान्येव भेजुरिति भावः ॥ ५६ ॥

यः हिमालयः वसुंधरायाः पृथिव्याः वत्सताम् एत्य प्राप्य निपीतान् रत्नावलीनां कान्तिपूरान् तृप्त्या अतितृप्त्या मनःशिलायाः वप्रस्य तटस्य झरीमिषेण निर्झरमिषेण दरीमुखैः गुहामुखैः उद्गिरतीव वमतीव । अन्योऽपि पायसादिपदार्थातिभक्षणेन वमति । 'पृथुराजेन यदा गोरूपा पृथिवी दुग्धा तदा पर्वतैः हिमालयं वत्सं कृत्वा रत्नानि दुग्धानि' इति पुराणेतिहासोऽनुसंधेयः ॥ ५७ ॥

समीरकिशोरकः मन्दवायुः तं हिमालयं तरसा वेगेन आरोहतः उर्ध्वं गच्छतः तस्य अर्जुनस्य स्वेदजलानाम् अणुराजिं कणिकासमूहं निपीय प्राश्य आननपद्मस्य मुखकमलस्य माध्व्याः मकरन्दस्य द्विरेफभावं भृङ्गत्वं प्रकटीचकार । समीरभृङ्गः मुखकमलस्य स्वेदमकरन्दं पपादित्यर्थः । मन्दवायुः स्वेदमपजहारेति भावः । यथा भ्रमरपदे द्विरेफत्वं तथा समीरकिशोरपदेऽप्यस्तीति द्विरेफत्वं मन्दवायोरिति कवेरभिप्रायः ॥ ५८ ॥

पाण्डवः अर्जुनः तत्र हिमालये तपोवनं ननाम । कीदृशं तपोवनं, शिवश्च शिवा च शिवौ आख्ये नाम्नी ययोस्तयोः त्रिलोकस्य पित्रोः मातापित्रोः महसोः उमामहेश्वरयोरि-

१ क. निपीय । २ क. तृप्तः । ३ क. ख. माध्वीम् । ४ अत्र हेत्वलंकारः 'हेतोर्हेतुमता साध वर्णनं हेतुरुच्यते' इति लक्षणात् । ५ अत्र नखम्पचौष्ण्यस्य विशेषणगत्या कुचसेवनहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । ६ हेत्वलंकारोऽत्र ।

तत्र दर्भदलमुष्टिमाहरन्संनिधास्यदृषभोपदामिव ।
चित्तमीशपदयोः समादधत्तमुमारभत दुश्चरं तपः ॥ ६० ॥
चतुरस्तपस्थितिविशेषविधौ
चरणं विधातुमखिलेन निजम् ।
स जुगुप्समान इव शत्रुजिते
प्रपदेन तिष्ठति भुवः स्म तले ॥ ६१ ॥
भानौ ललाटंतपभानुजाले प्रविष्टदृष्टिं परितस्तमग्निः ।
भूयोऽपि भोक्तुं विपिनं दिशेति प्रेम्णोपरुन्धन्निव दृश्यते स्म ॥ ६२ ॥
फलपत्रजलानिलाशनानि प्रविहाय क्रमशस्तपस्यतोऽस्य ।
विषयेषु न लोलतां प्रपेदे विजयस्याक्षगणः कराग्र एव ॥ ६३ ॥
तपोविधौ स पावकेन सर्वदिक्षुवासवि-
स्तदा बभूव वेष्टितो धनञ्जयत्वबान्धवात् ।

---

त्यर्थः, एकतनुत्वस्य कारणम् । तथा मिथः स्त्रीपुरुषयोर्मध्ये परस्परं तथेच्छुभिः उमामहेश्वरवत् एकतनुत्वमिच्छद्भिः तपस्विनां मिथुनैः स्त्रीपुरुषैः अर्च्यमानं सेव्यमानम् । विशेषणाभ्यां वनस्य महासिद्धिस्थानत्वमुच्यते ॥ ५९ ॥

तत्र वने संनिधास्यन् संनिधिं प्राप्स्यन् यः ऋषभः हरवृषभः तदर्थम् उपदामिव उपायनमिव दर्भदलमुष्टिमम् आहरन् गृह्णन् अर्जुनः चित्तम् ईशस्य पदयोः समादधन् सन् दुश्चरं तपः तप्तुं कर्तुमित्यर्थः, आरभत ॥ ६० ॥

तपःस्थितेः विशेषविधौ विशेषाचरणे चतुरः कुशलः सः अर्जुनः शत्रुजिते भुवः तले अखिलेन सर्वांशेन निजं चरणं विधातुं स्थापयितुं जुगुप्समान इव तद्विषयकतिरस्कारं कुर्वन्निव, प्रपदेन पादाग्रेण तिष्ठति स्म । भूतले पादाग्रेण तिष्ठन् तपश्चकारेति भावः॥६१॥

ललाटंतपं ललाटतापकं भानुजालं किरणसमूहो यस्य तस्मिन् भानौ सूर्ये प्रविष्टदृष्टिं स्थापितचक्षुषं तम् अर्जुनं परितः तस्यासमन्तात् भागे अग्निः 'भूयोऽपि पुनरपि विपिनं खाण्डववनं भोक्तुं दिश देहि, इति वदन् प्रेम्णा स्नेहेन उपरुन्धन् गतिरोधपूर्वकाग्रहं कुर्वन्निव दृश्यते स्म ददृशे, लोकैरिति शेषः । अनयोत्प्रेक्षया पञ्चाग्नितपश्चर्यां चकारेति द्योत्यते ॥ ६२ ॥

फलपत्रजलानिलानाम् अशनानि देहनिर्वाहार्थं भक्षणानि क्रमशः प्रविहाय उत्तरोत्तरभक्ष्यस्वीकारपूर्वकपूर्वत्यागं कृत्वा तपस्यतः तपः कुर्वतः अस्य विजयस्य अर्जुनस्य अक्षगणः इन्द्रियवर्गः रुद्राक्षसमूहश्च विषयेषु शब्दस्पर्शादिषु लोलतां सतृष्णतां न प्रपेदे न प्राप, अपि तु कराग्रे एव लोलतां चञ्चलतां प्रपेदे । विषयेषु निरिच्छः सन् अक्षमालया मन्त्रजपं चकारेति भावः ॥ ६३ ॥

सः वासविः अर्जुनः तदा तपोविधौ पञ्चाग्नितपोविधाने पावकेन अग्निना धनञ्जयत्वेन

---

१ ख. निधा° । २ क. ख. श्लोकोऽयं ६५ अनन्तरं दृश्यते । ३ क. ख. पर्णज° । ४ क. गुणः ।

अजीजनत्तमङ्गराजमङ्ग वैरिणं भवा-
नितीव रोषितो दिनेश एव चक्षुरक्षिपत् ॥ ६४ ॥
पाराशरीप्रापितमन्त्रभागैराराधयन् शंकरमन्तरङ्गे ।
सप्तापि चर्षीस्तपसा विजेतुं सप्तत्वमाप स्वयमेक एव ॥ ६५ ॥
तत्तादृशेन तपसा तरुणेन्दुमौलिं
कुर्वन्कृपापरवशं तनयो मघोनः ।
पादाग्रमेव धरणौ प्रविधाय तस्था-
वुद्यम्य बाहुमुपरीव फलानि लिप्सुः ॥ ६६ ॥
निरुध्य वायुं निभृतं तपस्यतः
शिरःसमुत्था दशदिग्विसृत्वरी ।
नटत्स्फुलिङ्गा नवधूमसन्ततिः
स्फुटीचकारास्य धनञ्जयाभिधाम् ॥ ६७ ॥

---

यद्वान्धवं बन्धुत्वं स्वजनत्वमिति यावत्, तस्मात् वेष्टितः बभूवेति गम्योत्प्रेक्षा, बभूव किमित्यर्थः । अङ्ग हे भो ! 'भवान् वैरिणं मच्छत्रुं तम् अङ्गराजं कर्णम् अजीजनत् उत्पादितवान्' इति हेतोरिव रोषितः रोषं प्राप्तः सन् दिनेशे एव सूर्य एव चक्षुः अ-क्षिपत् । अन्योऽपि शत्रुपितरं सरोषं पश्यति ॥ ६४ ॥

पाराशरिणा व्यासेन प्रापितैः उपदिष्टैः मन्त्रभागैः अन्तरङ्गे अन्तःकरणे शंकरम् आ-राधयन् सः अर्जुनः स्वयम् एक एव सन् तपसा सप्तापि ऋषीन् वसिष्ठादीन् विजेतुं सप्तत्वं सप्तसंख्याविशिष्टयम् आपेत्याश्चर्यं, सप्तिभिः जटाभिः सहितः सप्तः तत्त्वमिति तत्परिहारः ' सप्ताः सप्ताश्वजुनारुणकिरणनिभाः पातु विभ्रत्रिनेत्रः ' इत्यत्र सप्तपदस्य जटावाचकत्वं दृश्यते ॥ ६५ ॥

मघोनः इन्द्रस्य तनयः पुत्रः अर्जुनः तत्तादृशेन अतिदुष्करेणेत्यर्थः, तपसा तरुणेन्दु-मौलिं शिवं कृपापरवशं कृपाधीनं तन्वन् कुर्वन् सन् फलानि उपरितनफलानि लिप्सुरिव ग्रहीतुमिच्छुरिव उपरि ऊर्ध्वदेशे बाहुम् उद्यम्य धरणौ पादाग्रमेव प्रविधाय कृत्वा तस्थौ । अन्योऽपि उच्चदेशस्थफलानि ग्रहीतुं पादाग्रेण तिष्ठन् बाहुमुत्क्षिपति ॥ ६६ ॥

वायुं प्राणवायुं निरुध्य निभृतम् अत्यन्तं तपस्यतः अस्य अर्जुनस्य शिरसः सकाशात् समुत्थिता दशदिक्षु विसृत्वरी प्रसरणशीला, नटन्तः इतस्ततो गच्छन्तः स्फुलिङ्गाः यस्यां सा नवा धूमसन्ततिः धूमपरंपरा धनञ्जय इति अभिधां नाम स्फुटीचकार अन्वर्थो चकार ॥ ६७ ॥

---

१ क. ख. तन्वन्द° । २ क. 'दयाप' । ३ क. ख. प्रणिधाय । ४ ख. तस्थौ प्रोद्यम्य । ५ उत्प्रे-क्षासंश्लिष्टोऽत्र विरोधाभासः ।

तस्याथ नारदमुखात्तपसः प्रभावं
श्रुत्वा हरस्त्रिजगतामधिपो दयालुः।
देव्या दृशा सदसि सूचिततद्दिदृक्षो-
र्दित्सन्नभीष्टमपि लुब्धकतामयासीत्॥ ६८॥
हेरम्बगण्डमदपङ्कविशेषकाङ्कौ
स्कन्दौपवाह्यशिखिपिच्छविलासचूडौ।
भूषानदीतटतरुच्छदकॢप्तवस्त्रौ
कोदण्डिनौ व्यरुचतां कुहनाकिरातौ॥ ६९॥
शबरत्वजुषो वरस्य पुंसः शशिखण्डान्नु शकारसंविधानम्।
भजति स्म तदा शिखण्डभावं भगवन्मस्तकभूषणं यदेषः॥ ७०॥

तदानीमेव रजतगिरिशिखरान्निर्गच्छन्तौ किमेतदिति सांशयिकैरपि तदनुसरणोचितवेषविरचनाकुलैः प्रमथकुलैः परिवार्यमाणौ समुच्चलि-

---

अथ सदसि सभायां नारदमुखात् तस्य अर्जुनस्य तपसः प्रभावं सामर्थ्यं श्रुत्वा दयालुः देव्या पार्वत्या दृशा नेत्रव्यापारेण सूचिता तस्य अर्जुनस्य दिदृक्षा दर्शनेच्छा यस्य सः हरः अभीष्टं तन्मनोगतं फलं दित्सन्नपि दातुमिच्छन्नपि लुब्धकतां लोभवत्तां किरातत्वं च अयासीत् प्रापत्॥ ६८॥

किरातवेषधारणं स्वनिकटस्थपदार्थैः सुलभं जातमित्याह—हेरम्बेति। हेरम्बस्य गजाननस्य गण्डयोर्मदपङ्कः तस्य विशेषकः तिलकः अङ्कः चिह्नं ययोस्तौ, स्कन्दस्य औपवाह्यशिखी वाहनमयूरः तस्य पिच्छैः बर्हैः विलासचूडे लीलाकिरीटौ, ययोस्तौ भूषानद्याः शिरोभूषणनद्याः भागीरथ्याः तटरुहाणां तीरस्थवृक्षाणां छदैः पत्रैः कॢप्तानि कृतानि वस्त्राणि याभ्यां तौ, कोदण्डिनौ धनुर्धरौ कुहनाकिरातौ किराती च किरातश्च किरातौ, कुहनया मायया किरातौ व्यरुचतामशोभेताम्॥ ६९॥

शबरत्वं जुषते भजतेऽसौ शबरत्वजुट् तस्य वरस्य श्रेष्ठस्य पुंसः शिवस्य शशिखण्डात् पदात् शकारसंविधानं नु शकारयोगः किमु। कुत एतदितिचेत् तदा शबरत्वधारणसमये भगवतः शिवस्य मस्तकभूषण एव शशिखण्डः शिखण्डभावम् अवशिष्टशिखण्डत्वं भजते धारयति। अयं भावः। सदाशिवस्य वरपुरुषस्वरूपम् आसीत्। तदा मस्तके शशिखण्ड आसीत्। यदा शबररूपं तदा मस्तके शिखण्डो मयूरपिच्छमासीत्। तस्मात् बवयोरभेदात् वरपुरुषेण भगवता यदा शबरत्वं स्वीकृतं तदा मस्तकभूषणशशिखण्डात् वरपदस्य शकारयोगेन शबर इति संज्ञा जाता मस्तकभूषणस्य अवशिष्टशिखण्ड इति संज्ञा जातेति॥ ७०॥

तदानीमेव किरातरूपधारणसमये एव रजतगिरिशिखरात् कैलासशिखरात् निर्ग-

---

१ क. °कौ तौ। २ क. °कृतावचूडौ। ३ क. °धुनी°। ४ क. °जुषः परस्य। ५ ख. संनिधानम्। ६ क. वेषरचनानुकूलैः। ७ ख. पारिषद°। ८ अत्र वाच्यवाचकयोरभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितोऽनुमानालंकारः।

तलाङ्गूलमितस्ततो धावद्भिर्दूरचारश्रमविदारितवदनलम्बायमानरसनाग्रपातिनीभिः सृणिकाकणिकाभिर्वनपद्धतिं शुद्धतरीं कुर्वद्भिर्द्रुततरश्वसितकम्पमानावयवैस्तेषु तेषु वनगुल्मिषु श्वापदानन्विष्यान्विष्य हुंकारमाचरद्भिर्विश्वनिगमविश्वकद्रुभिरविमुच्यमानपार्श्वभागौ दीपकमृगायमाणनिजहरिणशावकानुधाव्यमानपार्श्वभागौ प्रशमिततुहिनगिरिजडिमोद्वेगेन भाविनि पदे पदे वनदेवताभिरर्घ्यमाणसुरतरुप्रसूनास्तरणेन हिमवतः कटकपथेन सविलासं संचरमाणौ कावेतावदृष्टपूर्वौ वनमस्मदीयमाक्रमेत इति रोषकषायिततया निवारयितुकामैरपि तेजोविशेषप्रतिहतोत्साहैरारण्यैरन्यैः शबरयुवभिः केवलमालोक्यमानौ जटावल्लरीमूलमुकुलीभवदञ्जलिभिस्तपस्विपुङ्गवैर्नभसि विमानवेगं निरुध्य हर्षाश्रुभिः सममभिवृष्यमाणजयशब्दौ तौ जगदादिमौ दम्पती सविनयमुपासीनस्य शुनासीरसुतस्य तपोवनसीमानं शनैः शनैरासीदताम् ॥१६॥

---

च्छन्तौ किमेतदिति सांशयिकैरपि किरातरूपमवलोक्य किमर्थमेतत्कृतम् इमा अस्मत्प्रभू वा न वेत्यादिसांशयिकैः संशयाविष्टैरपि तयोः अनुसरणे सेवार्थं पश्चाद्गमनविषये उचितवेषविरचनायाम् आकुलैः व्यग्रैः प्रमथकुलैः प्रमथगणसमूहैः परिवार्यमाणौ तौ जगतः आदिमौ कारणभूतौ दम्पती उमामहेश्वरौ सविनयम् उपासीनस्य उपासनां कुर्वतः शुनासीरसुतस्य अर्जुनस्य तपोवनसीमानं शनैः शनैः आसीदतां प्रापतुः । कथंभूतौ दम्पती, समुच्चलितानि लाङ्गूलानि पुच्छानि यस्मिन्कर्मणि यथा तथा इतस्ततो धावद्भिः, दूरचारेण दूरगमनेन यः श्रमः तेन विदारितेषु प्रसारितेषु वदनेषु लम्बमाना रसनाः जिह्वाः तासाम् अग्रेभ्यः पतन्ति तच्छीलाभिः सृणिकानां लालानां कणिकाभिः बिन्दुभिः वनपद्धतिं वनमार्गं शुद्धतरीं कुर्वद्भिः, द्रुततरेण श्वसितेन कम्पमानाः अवयवाः येषां तैः, तेषु तेषु वनगुल्मिषु वनगुल्मविशिष्टस्थलेषु श्वापदान् शशमृगादीन् अन्विष्यान्विष्य मृगित्वा मृगित्वा हुंकारम् आचरद्भिः कुर्वद्भिः, विश्वनिगमाः समस्तवेदा एव विश्वकद्रवः मृगयाकुशलश्वानः तैः अविमुच्यमानाः युक्ताः पार्श्वभागाः ययोस्तौ । तथा दीपकमृगः दीपकं वदने गृहीत्वा गमनकर्ता लघुपशुस्तद्वदाचरन् यः निजहरिणशावकः तेन अनुधाव्यमानः पार्श्वभागः ययोस्तौ । तथा प्रशमितः तुहिनगिरेः हिमाचलस्य जडिम्नः शैत्यात् उद्वेगो भयं येन तेन वेगेन अर्थात् वनदेवतासंबन्धिनेति ज्ञेयं, भाविनि पदे पदे पदनिक्षेपस्य स्थले स्थले वनदेवताभिः अर्घ्यमाणं विरच्यमानं सुरतरुप्रसूनानां कल्पवृक्षपुष्पाणाम्

---

१ क. ख. लम्बमान° । २ क. ख. °नाग्रनिपा° । ३ ख. °तरीमिव° । ४ क. °द्रुततर° । ५ क. ख. °गुल्मेषु । ६ ख. °दान्यन्विष्या° । ७ क. °शावकपार्ष्णिभागानुधावनौ° । ८ क °प्रश-…वेगेन एतद्वाक्यमास्तरणेन इत्युत्तरं वर्तते । ९ क. गिरीति नास्ति । १० क. ख. °प्रसवास्त° । ११ क. तौ कदाचिदप्यदृष्ट° । १२ क. °क्रमेते । १३ क. °विशेषेण । १४ क. ख. °त्साहैरन्यैः । १५ क. ख °मवलोक्य° ।१६ क. °मूलपल्लवमु° । १७ क. °मरुद्भिश्चाभिवर्ष्यमा° । १८ क. सविनयमु° ।

तत्र खलु—

आपादलम्बिजटमातपमात्रभक्ष्य-
मूर्ध्वीभवद्भुजमुदारतपःकृशाङ्गम् ।
दृष्ट्याऽनुगृह्य कुरुवीरमुनीन्द्रमेनं
त्रेधा बभूव सुतवत्सलता भवान्याः ॥ ७१ ॥

क्षोदयन्नपि महीं खुरपातैः कोऽपि कोपकुटिलो वनकोलः ।
घोरघूत्करणघोणमुपागात्कुक्षिमाश्रमभुवः कुरुसूनोः ॥ ७२ ॥

तं वीक्ष्य रौद्रवपुषं मृगशावकेषु
त्रासाद्विशत्सु कटिलम्बितवल्कभागान् ।
पर्याकुले कलकलैरपि पक्षिजाले
पार्थो निवृत्य नियमाज्जगृहे शरासम् ॥ ७३ ॥

---

आस्तरं यस्मिन् तेन हिमवतः कटकपथेन सविलासं यथा तथा संचरमाणौ। तथा 'कौ एतौ पूर्वं दृष्टौ दृष्टपूर्वौ तथा न भवतः अदृष्टपूर्वौ अस्मदीयं वनम् आक्रमत :' इति मनस्यानीय रोषकषायिततया कोपकलुषिततया निवारयितुकामैरपि तेजोविशेषेण प्रतिहतः उत्साहः निवारणोद्योगो येषां तैः अन्यैः शवरयुवभिः तरुणशवरैः केवलम् आलोक्यमानौ । तथा जटावल्ल्याः जटालतायाः मूले मुकुलीभवन्तः कुड्मलीभवन्तः अञ्जलयो येषां तैः तपस्विनां तपसा स्वर्गप्राप्तानां सिद्धानां पुञ्जैः समूहैः नभसि विमानवेगं निरुध्य हर्षाश्रुभिः समम् अभिवृष्यमाणाः विकीर्यमाणाः जय इति शब्दाः ययोस्तौ ॥ १६ ॥

तत्र खलु आपादं पादपर्यन्तं लम्बन्ते आपादलम्बिन्यः जटाः यस्य तम्, आतपमात्रं सूर्यकिरणमात्रं भक्षयति तथाभूतम्, सूर्ये दृष्टिं निधायोष्णसहमित्यर्थः। ऊर्ध्वीभवन् भुजो यस्य तम्, उदारेण महता तपसा कृशाङ्गं कुरुषु वीरं मुनीन्द्रं राजर्षिश्रेष्ठम् एनम् अर्जुनं दृष्ट्या कृपादृष्ट्या अनुगृह्य अनुग्रहं कृत्वा कृपापात्रं कृत्वेत्यर्थः, भवान्याः सुतवत्सलता त्रेधा त्रिविधा बभूव। पूर्वं हेरम्बकार्तिकेयसुतयोर्भवान्याः वत्सलता द्वेधा आसीत्, इदानीमेतादृशमर्जुनं दृष्ट्वा सुतवदस्मिन्वत्सलता जातेति त्रेधा बभूवेत्यर्थः ॥ ७१ ॥

खुरपातैः पादाग्रताडनैः महीं क्षोदयन् चूर्णीकुर्वन् कोपेन कुटिलः रौद्रः कोऽपि वनकोलः वनवराहोऽपि, शवरसमुच्चयार्थमपिशब्दः । कुरुसूनोः अर्जुनस्य आश्रमभुवः कुक्षिम् अभ्यन्यतरभागं घोरं घूत्करणं यस्याः सा घोणा नासिका यन्मिन्कर्मणि यथा तथा उपागात् उपागमत् ॥ ७२ ॥

रौद्रं भयंकरं वपुः शरीरं यस्य तं वनवराहं वीक्ष्य मृगाणां शावकेषु कटेः सकाशात् लम्बितान् वल्कभागान् वल्कलभागान् प्रति विशत्सु प्रविशत्सु सत्सु, पक्षिजाले पक्षिसमूहेऽपि कलकलैः शब्दैः पर्याकुले संभ्रमाद्व्यग्रे सति, पार्थः नियमात् निवृत्य समाधेर्व्युत्थाय शरासं धनुः जगृहे स्वीकृतवान् ॥ ७३ ॥

---

१ क. भक्ष° । २ क. अथ ।

मुनिरेष यदाभ्ययाद्वराहं मुखरज्यालतिको जवाज्जिघांसुः।
शबरो दहशे तदाभिधावन् धनुराकृष्य सहानुयायिवर्गैः॥ ७४॥
मा मुञ्च बाणं मदनुद्रुतेऽस्मिन्नपेहि जाल्मेति किरातनेतुः।
वचः स लक्ष्यं मनसो न कुर्वन् वराहमस्त्रस्य चकार लक्ष्यम्॥७५॥

शिलीमुखाभ्यां शिवसव्यसाचिनोः
समुज्झिताभ्यां युगपत् किटेस्तदा।
समं विभज्यायुरभुज्यत क्षणं
सहोदराभ्यामिव पैतृकं धनम्॥ ७६॥

ततः कुपितोऽपि कुरुप्रवीरस्तपःशान्ततया नातिपरुषमुवाच॥ १७॥

अस्मिन्ममावसथमापतिते मया प्रा-
ग्लक्षीकृते शबर यत्प्रहृतं त्वया तत्।
शापस्य वाऽथ धनुषोऽसि वशे तथाऽपि
सोढं ममाद्य तपसा च भुजोष्मणा च॥ ७७॥

---

मुखरा सशब्दा ज्यालता यस्य सः एषः मुनिः अर्जुनः जिघांसुः हन्तुमिच्छुः सन् जवात् वराहं यदा अभ्ययात् अभिमुखमगच्छत् तदा धनुः आकृष्य अनुयायिवर्गैः सेवकसमूहैः सह अभिधावन् वराहाभिमुखं धावन् शबरः ददृशे दृष्टः, लोकैरिति शेषः॥७४॥

सः अर्जुनः 'मया अनुद्रुते अनुधाविते अस्मिन्वराहे बाणं मा मुञ्च। हे जाल्म! अविचारिन् मूर्ख अपेहि निवर्तस्व' इति किरातनेतुः शबरनायकस्य वचः मनसः लक्ष्यं न कुर्वन् सन् वराहम् अस्त्रस्य बाणस्य लक्ष्यं चकार। तद्वचस्यनादरं कृत्वा वराहे बाणं मुमोचेत्यर्थः॥ ७५॥

तदा युगपत् समुज्झिताभ्यां मुक्ताभ्यां शिवसव्यसाचिनोः शिवार्जुनयोः शिलीमुखाभ्यां बाणाभ्यां क्षणात् किटेः वराहस्य आयुः समं विभज्य अभुज्यत, भक्षितुम् अपहृतमित्यर्थः। काभ्यां किमिव, सोदराभ्यां सहोदर्यबन्धुभ्यां पैतृकं पितृसंपादितं धनमिव। यथा सोदराभ्यां पैतृकं धनं समं विभज्य भुज्यते तद्वत् उभयोर्बाणप्रहाराभ्यां वराहो मृत इति भावः॥ ७६॥

तदा प्रकुपितोऽपि कुरुप्रवीरः अर्जुनः तपःशान्ततया तपसाऽवलम्बितशान्त्या अतिपरुषम् अतिकठोरं नोवाच॥ १७॥

हे शबर! मम आवसथं स्थानम् आपतिते आयाते मया प्राक् पूर्वं लक्षीकृते अस्मिन्वराहे यत् यस्मात्त्वया प्रहृतं त्वया बाणप्रहारः कृत इत्यर्थः, तत्तस्मात्त्वं शापस्य, अथवा धनुषः वशे अधीनतायाम् असि। मम शापेन बाणप्रहरेण वा नाशार्होऽसीत्यर्थः। तथाऽपि अद्य मम तपसा भुजोष्मणा भुजप्रतापेन च सोढं शान्त्या तपसा असाम्यात् भुजोष्मणा च सोढमिति ज्ञेयम्॥ ७७॥

---

१ ख. तदानुधावन्। २ क. तनौ। ३ ख. अभुज्य तत्क्षणात्। ४ क. क्षणात्। ५ क. ख. परुषमेवमु॰। ६ ख. वशस्तथा।

इति तस्य मुनेरन्तर्दर्परसपरीवाहवेणीमिव वाणीमाकर्ण्य क्षोणीधरधन्वाऽपि सस्मितं प्रत्यभाणीत्॥ १८॥

मृदुबुद्धिरङ्गऽवचसैव लक्ष्यसे
मृगहिंसनं विपिनसीमनीदृशम्।
शतशः स्वधर्म इति पठ्यते बुधैः
शबरस्य वा वद तपोधनस्य वा॥ ७८॥

तत्स्वकुलाचारादप्रमाद्यते मह्यमयुक्तकारिणाऽपि [1]कियद्दूरं प्रकाश्यते तपसि [2]वाहावप्याहोपुरुषिका॥ १९॥

संदृश्यते खलु तपस्तव शुद्धमेत-
द्यज्जन्तुहिंसनविधौ दृढबद्धकच्छम्।
आस्तामिदं भुजबलं च मृगात्ययेऽस्मिन्
साहायकं यदुपजीवति मे शरस्य॥ ७९॥

ईदृशीं वचनरीतिमपास्यन्नेहि सान्त्वय कियानसि मे त्वम्।

---

इति तस्य मुनेः अन्तर्दर्परसस्य अभ्यन्तरीयगर्वरसस्य परिवाहानां स्रोतसां वेणीमिव सर्वस्रोतसां मेलनेन महाप्रवाहमिव वाणीम् आकर्ण्य क्षोणीधरः मेरुर्हिमालयो वा त्रिपुरदाहे धनुर्यस्य सः शंकरोऽपि सस्मितं प्रत्यभाणीत् प्रत्युत्तरमवोचत्॥ १८॥

अङ्ग हे मुने! वचसैव त्वदुक्तवचनेनैव त्वं मृदुबुद्धिः मन्दबुद्धिः लक्ष्यसे ज्ञायसे। कुत एतदिति चेत्, वनसीमनि ईदृशं मृगहिंसनं मृगयया वनपशुहिंसा स्वधर्म इति बुधैः शतशः शतवारं पठ्यते सः स्वधर्मः शबरस्य अथवा तपोधनस्य मुनेः वद ब्रूहि॥ ७८॥

तत्तस्मात् स्वकुलाचारात् अप्रमाद्यते सावधानतया भ्रंशं न प्राप्नुवते मह्यम् अयुक्तकारिणाऽपि त्वया तपसि वाहावपि आहोपुरुषिकाशापेन बाहुबलेन वा त्वन्नाशं कुर्यामिति गर्वेण आत्मनि संभावना कियद्दूरम् अति बहु प्रकाश्यते प्रकटीक्रियते। स्वाचारभ्रष्टेन बलहीनेन त्वया मदपकारः किंचिदपि कर्तुं न शक्य इति भावः॥ १९॥

कुत एतदिति चेत्तपसोऽशुद्धत्वाद्बाहुबलस्याल्पत्वाच्चेत्याह—**संदृश्यत** इति। एतत् तव तपः शुद्धं संदृश्यते अवलोक्यते खलु। यत् तपः जन्तूनां प्राणिनां हिंसनविधौ हिंसाकरणे दृढबद्धः कच्छो येन तत् सन्नद्धमित्यर्थः। इयं परिहासोक्तिः, हिंसापरत्वादशुद्धमित्यर्थः। इदम् अकिंचित्करं भुजबलं च आस्तां यतः अस्मिन् मृगात्यये वराहवधे मम शबरस्य साहायकं सहायत्वम् उपजीवति अवलम्बते॥ ७९॥

ईदृशीम् अस्मिन्ममावसथमापतिते इति पद्योक्तप्रकाशवचनरीतिम् अपास्यन् त्यजन् सन् एहि आगच्छ सान्त्वय ममापराधं क्षमस्वेत्यादिवचनेन मत्सान्त्वनं कुरु। त्वं मे कियानसि मत्पुरतोऽत्यल्पोऽसीत्यर्थः। अक्षिण मम नेत्रे किंचिदरुणिम्नि सति कोपेन

---

१ क. ख. त्वयेत्यधिकम्। २ क. इवेत्यधिकम्। ३ ख. ईदृशम्।

अक्ष्णि किंचिदरुणिम्नि जगत्यामन्तकोऽपि मदतीव बिभीयात् ॥८०॥

इति शंकरस्य न्यक्कारवादेन सातङ्कः कुरुशशाङ्कः पुनरपि गिरं काम-प्येवमङ्कुरयामास ॥ २० ॥

यस्माद्वनेचरकुलाधम जल्पसि त्व-
मेवं मनः पुलकयन्स्वजनस्य दृप्तः।
तस्मादसंशयमुपान्तजुषः किरात्या-
स्ताटङ्कमेव सहसे न कपोलमित्रम् ॥ ८१ ॥

तादृग्वचः श्रवणदाहि मुनेर्निशम्य
सर्वे गणा हृदि रुषा निजिघांसवोऽपि।
देव्या विलोक्य वदनं स्मितगर्भगण्डं
तूणार्धकृष्टविशिखेन करेण तस्थुः ॥ ८२ ॥

अथ भिल्लमल्लकुरुवल्लभावुभौ परिफुल्लभल्लकुलशल्यपल्लवैः।
स्थगितावलोकसरणिं दिवौकसां समरं भयंकरजवं वितेनतुः॥८३॥

---

रक्ततायां सत्यां जगत्यां जगति अन्तकोऽपि मत् मत्तः अतीव बिभीयात् भयं प्राप्नुयात्। अन्यस्य का वार्तेत्यर्थः ॥ ८० ॥

इति शंकरस्य न्यक्कारवादेन धिक्कारवचनेन सातङ्कः सन्त्रासः कुरुशशाङ्कः कुरुश्रेष्ठः पुन-रपि एवं वक्ष्यमाणप्रकारां कामपि गिरम् अङ्कुरयामास प्रकटीचकार ॥ २० ॥

हे वनेचरकुलाधम! यस्मात् दृप्तः गर्वितः त्वं स्वजनस्य मनः पुलकयन् सन् एवं वदसि तस्मात् उपान्तजुषः समीपवर्तिन्याः किरात्याः स्वस्त्रियाः कपोलस्य गल्लस्य मित्रं शोभा-करमित्यर्थः, ताटङ्कमेव कर्णभूषणमेव असंशयं निःसंशयं न सहसे। किरात्याः सौभाग्यं न सहसे इत्यर्थः अनेन भाषणेन त्वं मम वध्योऽसीति भावः ॥ ८१ ॥

सर्वे गणाः प्रमथादयः तादृक् उक्तप्रकारं श्रवणदाहि कर्णयोस्तापकरं मुनेः वचः निश-म्य श्रुत्वा हृदि मनसि रुषा रोषेण निजिघांसवोऽपि निहन्तुमिच्छवः सन्तोऽपि स्मितं गर्भे अन्तर्भागे ययोस्तौ गण्डौ यस्य तत् देव्याः पार्वत्याः वदनं विलोक्य तूणात् इषुधेः अर्धं यथा तथा कृष्टः आकृष्टः विशिखः बाणो येन तेन करेण तस्थुः तिष्ठन्ति स्म। देव्याः वदनान्तर्गतहास्येन रोषाभावं ज्ञात्वाऽयं वध्यो वा न वेति सन्देहादाज्ञां प्रतीक्षमाणाः अर्धाकृष्टविशिखेन करेण तस्थुरिति भावः ॥ ८२ ॥

अथ भिल्लमल्लः शबरश्रेष्ठः कुरुवल्लभः कुरुश्रेष्ठश्च उभौ भयंकरः जवो यस्य तं समरं संग्रामं वितेनतुः चक्रतुः। कथंभूतं समरं, परिफुल्लैः विकसितैः भल्लकुलानां स्थूलबाणस-

---

१ क. अहंकारवा°। २ °कुरुकुलश°। ३ अत्रान्तकस्यापि मल्लोचनशोणिम्नि भयोत्पत्तौ किमुत क्षीणसाराणां भवादृशामिति अर्थान्तरस्य कैमुत्येन सिद्धेरर्थापत्तिरलंकारः। एवं लोचनारुण्यमात्रे-णान्तकत्रासरूपवाक्यार्थस्य सान्त्ववादकरणं प्रति हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्। द्वयोरेक-वाचकानुप्रवेशसंकरः। ४ अत्र पुत्रवत्सलदेवीस्मेराननावलोकनस्य विशेषणगत्या गणानां बाणमोच-नौदासीन्यं प्रति हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम्।

श्लथसंधिगरुद्भिरेष बाणैः श्रवणालम्बिजपाक्षसूत्रघर्षात् ।
प्रमथेशमवाकिरत्स दिव्यं प्रतिमालिङ्गमिव प्रसूनपुञ्जैः ॥ ८४ ॥
सरुषीव हरे विकृष्टचापे सहसा शैलसुताऽपि जातशङ्का ।
मघवत्सुतमङ्गलाय देवी मनसा या त ईषुः श्रुतिं जजाप ॥ ८५ ॥
ससंभ्रमाकृष्टधनुर्गुणोऽपि शंभुः कृपाम्भोनिधिरिन्द्रसूनोः ।
संबद्धमात्रान्कतिचिच्च देहे चक्रेऽपराद्धान्कतिचिच्च बाणान् ॥ ८६ ॥
विगाह्य शंभुं विजयस्य बाणाः पुनः पदत्वं पुपुषुर्न दृष्ट्योः ।
नरादुदारादभिगम्य लुब्धं न मार्गणा यान्ति पुनः प्रकाशम् ॥ ८७ ॥

---

मूहानां शल्यपल्लवैः कृत्वा दिवौकसां देवानां स्थगिता आच्छादिता अवलोकसरणिः दर्शनमार्गो यस्मिन् तम् , अत्र दिवौकसामितिपदार्थस्य समासैकदेशावलोकपदार्थेन संवन्धेऽपि नित्यसापेक्षत्वात् समासः ॥ ८३ ॥

स एषः अर्जुनः श्रवणात् कर्णात् आलम्बते तत् श्रवणालम्बि यत् जपाक्षसूत्रं जपसाधनरुद्राक्षमाला तस्य घर्षात् घर्षणात् श्लथाः शिथिलाः संधयो येषां तथाभूताः गरुतः पत्राणि येषां तैः बाणैः प्रमथेशं शिवम् अवाकिरत् आच्छादयत् । कैः किमिव, यथा दिव्यम् अलौकिकं प्रतिमालिङ्गं तस्य प्रतिमारूपं लिङ्गं प्रसूनपुञ्जैः अवकिरति तद्वत् ॥ ८४

हरे सहसा सरुषीव सक्रोधे इव, बाणप्रहारगर्वोक्तिजन्यरोषाभावात् इवेत्युक्तिः । विकृष्टम् आकृष्टं चापं येन तस्मिन् सति देवी गौरी शैलसुताऽपि जाता शङ्का प्रहारसंशयो यस्यास्तथाभूता सती मघवत्सुतस्य अर्जुनस्य मङ्गलाय कल्याणाय मनसा न तु प्रकटं यातइषुश्रुतिं "या त इषुः शिवतमा" इति याजुषरुद्रसूक्तऋचं जजाप । तस्या अयमर्थः—हे रुद्र! ते इषुः धनुश्च सुखकारकं भवतां, लक्ष्याणि सुखीनि भवन्तु, तैरस्मान्सुखयेति । देव्यपि जातशङ्काऽभूत् किमन्ये वक्तव्या इत्यपि शब्दार्थः । यद्वा, शैलमघवतोः शत्रुत्वेन शत्रुसुताऽपि तत्पुत्रकल्याणार्थं श्रुतिं जजाप किं पुनरन्ये वक्तव्या इत्यर्थमपिशब्दः । सर्वेषां मङ्गलाशंसने सौजन्यं कारणम् ॥ ८५ ॥

कृपाम्भोनिधिः शंभुः ससंभ्रमं सत्वरं यथा तथा आकृष्टः धनुर्गुणो येन तादृशः सन्नपि इन्द्रसूनोः देहे कतिचित् बाणान् संबद्धमात्रान् स्पृष्टमात्रान् चक्रे । कतिचित् बाणान् अपराद्धान् लक्ष्यात् च्युतांश्चक्रे ॥ ८६ ॥

विजयस्य अर्जुनस्य बाणाः शंभुं विगाह्य प्रविश्य पुनः दृष्ट्योः नेत्रयोः पदं विषयत्वं न पुपुषुः दृग्गोचरा न बभूवुरित्यर्थः । शंभौ लीना बभूवुरिति भावः । एतदेव श्लेषोत्थापितार्थान्तरन्यासेन समर्थयति—नरादिति । मार्गणाः बाणाः याचकाश्च उदारात् महतः

---

१ क. बन्धग° । २ क. ख °त्तदीयम् । ३ क. सशरम् । ४ क. इषु श्रुतिम् । ५ क. ख. खलु । ६ अत्रोपमया बाणानां पुष्पमार्दवापादको भगवतः प्रभावातिशय इति ध्वननादलंकारेण वस्तुध्वनिः । ७ अत्र दयासमुद्रत्वस्य विशेषणगत्या शराणां स्पर्शमात्रलक्ष्यच्युतिकरणद्वयं प्रति हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ।

निःस्वे निषङ्गयुगुले नितराममर्षी
चापेन मूर्ध्नि गिरिशं पुर एव देव्याः ।
पार्ष्णिप्रमुक्तधरणिः प्रजहार वेगात्
कुर्वन् व्रणं स कुपितः शशिखण्डमित्रम् ॥ ८८ ॥
धनुषाऽभिहतात्समुत्थितैर्धरकन्यारमणस्य मस्तकात् ।
विपुलैरिव रक्तशीकरैर्विनिपेते मणिभिः फणाभृताम् ॥ ८९ ॥
देवस्य तस्य जगतां जनकस्य चित्ते
पार्थप्रहारजनुषः प्रमदाम्बुराशेः ।
भूषाधुनीतटभुवि द्विपवक्त्रबाल्य-
वप्रक्रियाभिरुदितः प्रमदः कणोऽभूत् ॥ ९० ॥

तत्र[3] स गाण्डीवदण्डोऽपि खाण्डवे तक्षकवधूवधसाधनतया चिरम-यमस्मत्कुलविरोधीति क्रोधनैस्तस्य जटावनकुटुम्बिभिः कुण्डलिभिर्भ-क्षित इव तत्क्षणं नालक्ष्यत ॥ २१ ॥

---

दातुश्च नरात् अर्जुनात् मनुष्याच्च उदारतरं विहायेत्यर्थः, लुब्धं लुब्धकं शबरं लोभिनं च अधिगम्य प्रकाशं प्रकटतां प्रसिद्धिं न यान्ति न प्राप्नुवन्ति ॥ ८७ ॥

पूर्वं कुपितः, निषङ्गयोः तूणीरयोः युगुले निःस्वे बाणैः रिक्ते सति नितराम् अमर्षी क्रोधनः पार्ष्णिभ्यां पादपश्चाद्भागाभ्यां प्रयुक्ता धरणिर्येन सः अर्जुनः देव्याः पुरः अग्र-भागे एव गिरिशं मूर्ध्नि चापेन वेगात् प्रजहार प्रहृतवान् । किं कुर्वन्, शशिखण्डस्य मित्रं सहचरं व्रणं कुर्वन् सन् । शिवः तं व्रणं शशिखण्डवत् भूषणत्वेन नित्यं दधारे-त्यर्थः ॥ ८८ ॥

धनुषा अभिहतात् ताडितात् धरकन्यारमणस्य शिवस्य मस्तकात् समुत्थितैः उत्पतद्भिः विपुलैः रक्तशीकरैरिव रक्तबिन्दुभिरिव फणाभृतां भूषानागानां मणिभिः फणासंबन्धि-लोहितरत्नैः निपेते पतितम् ॥ ८९ ॥

जगतां जनकस्य तस्य देवस्य शिवस्य चित्ते पार्थप्रहारात् जनुः उत्पत्तिर्यस्य तस्य प्रमदाम्बुराशेः हर्षसमुद्रस्य भूषाधुनी शिरोभूषणभूता भागीरथी तस्याः तटभुवि द्विपव-क्त्रस्य गजाननस्य बाल्ये वप्रक्रियाभिः तिर्यग्दन्तप्रहारैः उदित उत्पन्नः प्रमदः हर्षः कणः बिन्दुः अभूत् । शिवेन पार्थप्रहारजन्यहर्षसमुद्रस्य पुरतः स्वपुत्रगजाननबालक्रीडासंब-न्धिप्रहारजन्यहर्षः बिन्दुवदत्यल्पोऽमानीत्यर्थः ॥ ९० ॥

तत्र सः गाण्डीवदण्डोऽपि खाण्डवे तक्षकवध्वाः वधस्य साधनतया कारणतया चिरं बहुकालम् ' अयं गाण्डीवदण्डः अस्मत्कुलस्य विरोधी वैरी ' इति मनस्यानीय क्रोधनैः क्रोधविशिष्टैः तस्य शिवस्य जटावनकुटुम्बिभिः जटावनवासिभिः कुण्डलिभिः नागैः

---

१ क. ख. कुटिलम् । २ ख. नदीतट° । ३ क. तत्रेति नास्ति ।

ततोऽयं दैवविपर्ययः किममुष्य माया किमिति चिन्तापरतन्त्रेणापि धैर्यदत्तहस्तोत्साहेन 'तिष्ठ जडात्मन्नर्जुनमेवं निर्जित्य यशोऽर्जितुमिच्छसि' इति कृततर्जनेन सितवाहनेन वृषभवाहनं प्रति नियोद्धुमारेभे॥२२॥

परुषे मुनिमुष्टिताडने पतिते लुब्धकवामवक्षसि ।
शिथिला जगलुः किरातिकायाः सितगुञ्जामणिहारयष्टयः ॥ ९१ ॥
उपवासकृशे भृशं मुनेरुरसि स्वीकृतमुष्टिमार्दवः ।
प्रजहार हरोऽपि पीडनात् परिहर्तुं स्वमिवास्य हृद्गतम् ॥ ९२ ॥

इति परस्परमुष्टिप्रहारवृष्टिपरिमृष्टवनकुसुमपरागभस्माङ्गरागौ सरभसमेकेन बाहुना जटासु गृहीत्वाऽपरेण वलयितकण्ठनालौ तौ शवरतपोधनौ यदा महत्यामधित्यकायामापततां तदा झटिति घटितद्वारदरीयर्भ-

---

भक्षित इव तत्क्षणं तस्मिन्समये नालक्ष्यत नादृश्यत । गाण्डीवोऽपि शिवमस्तकलीनोऽभूदिति भावः ॥ २२ ॥

ततः शवरशरीरे शस्त्रलयानन्तरम् 'अयं शवरदेहे शस्त्रलयः मम दैवस्य विपर्ययः प्रतिकूलता किम् । अथवा अमुष्य शवरस्य माया किम्' इत्याकारिकायाः चिन्तायाः परतन्त्रेणापि इति चिन्ताक्रान्तेनापीत्यर्थः । धैर्येण दत्तः हस्तावलम्बो यस्य तथाभूतः उत्साहः युद्धोत्साहो यस्य तेन हे जडात्मन् ! मन्दबुद्धे शवर ! तिष्ठ एवं मायया अर्जुनं विनिर्जित्य यशः अर्जितुं संपादयितुम् इच्छसि इति काकुः, इतिवचनेन कृता तर्जना भर्त्सना येन तेन सितवाहनेन अर्जुनेन वृषभवाहनं प्रति शिवं प्रति नियोद्धुं बाहुयुद्धं कर्तुम् आरेभे आरब्धम् ॥ २१ ॥

परुषे कठिने मुनिमुष्टेः ताडने लुब्धकस्य शवरस्य वामवक्षसि वक्षसः वामभागे इत्यर्थः, पतिते सति किरातिकायाः तत्पत्न्याः शवर्याः सितानां शुभ्राणां गुञ्जामणीनां हारयष्टयः शिथिलाः सत्यः जगलुः गलन्ति स्म । शिववामाङ्गस्य पार्वतीत्वात् इति भावः ॥ ९१ ॥

हरोऽपि भृशम् उपवासैः कृशे मुनेः उरसि स्वीकृतं मुष्टिमार्दवं येन तथाभूतः सन् प्रजहार प्रहृतवान् । मुष्टिमार्दवस्वीकारे फलमुत्प्रेक्षते—पीडनादिति । अस्य मुनेः हृदि गतं विद्यमानं स्वम् आत्मानं पीडनात् पीडायाः परिहर्तुमिव रक्षितुमिव । ध्यानेन हृदि निरुद्धस्यात्मनः पीडा मा भूदिति मृदुमुष्टिना प्रहृतवान्किमिति भावः ॥ ९२ ॥

इति परस्परस्य मुष्टिप्रहारवृष्ट्या परिमृष्टो वनकुसुमपरागभस्माङ्गरागो ययोस्तौ सरभसं सवेगम् एकेन बाहुना जटासु गृहीत्वा परेण अन्येन बाहुना वलयितः वेष्टितः कण्ठनालो याभ्यां तौ शवरतपोधनौ महत्याम् अधित्यकायां हिमाचलोर्ध्वभूम्यां यदा आपततां तदा पतनसमये झटिति शीघ्रं घटितानि पिहितानि द्वाराणि यासां तासां दरीणां

---

१ क. किमुतामु° । २ क. ख. तिष्ठ तिष्ठ ज° । ३ क. ख. एवमर्जुनम् । ४ क. वृषवा° । ५ ख. ताडनात् । ६ क. बाहुनेत्यधिकम् । ७ क. ख. गलनालौ ।

निरुद्धमुनिमिथुननिबद्धहाहाकारस्तीरवनदूरोत्सर्पिवीचिवेगोत्पाटिताकृष्टमुनिजनपर्णशालासहस्रसुरस्रवन्तीपूरो दर्वीकरविभुकन्धराखर्वीकरणपटुतरभारोऽयमुर्वीधरपतिरासीत् ॥ २३ ॥

अवाङ्मुखत्वेन निपात्य शंभुना
समुज्झितोऽयं ददृशे विमोहितः ।
तवाद्य जामातरि मे दशामिमां
निवेदयेत्यद्रिमिव ब्रुवन् रहः ॥ ९३ ॥

पार्थस्य तस्य भुजयोः परमेश्वरोऽसौ
वीर्यं विलोक्य युधि विस्मयमानचेताः ।
चापव्रणे सुरनदीकणसेकशङ्का-
मप्युत्सृजन्मुहुरकम्पयदुत्तमाङ्गम् ॥ ९४ ॥

तथाविध एवासौ चिराद्दाचरितचेतनास्वागताचारः शनैः शनैरुत्थाय पुरतो घण्टाभरणघणघणत्कारसहचरेण कण्ठगर्जितेन कर्णयोः परिकल्पितसुधारससमोक्षे महोक्षे निषेदिवांसं भुजमूलप्रसारितगिरिजापाणि-

---

गुहानां गर्भे अन्तर्भागे निरुद्धैः सिद्धमुनिमिथुनैः निबद्धः आरब्धः हाहाकारो यस्मिन्सः, तीरवने दूरम् उत्सर्पिणीनां वीचीनां वेगेन पूर्वम् उत्पाटितं पश्चात् आकृष्टं मुनिजनानां पर्णशालासहस्रं येन तथाभूतः सुरस्रवन्त्याः भागीरथ्याः पूरो यस्मिन्सः, दर्वीकरविभोः शेषस्य कन्धरायाः खर्वीकरणे नीचीकरणे पटुतरः समर्थतरः भारो यस्य सः उर्वीधरपतिः हिमालय आसीत् ॥ २३ ॥

शंभुना अवाङ्मुखत्वेन अधोमुखत्वेन निपात्य पातयित्वा समुज्झितः त्यक्तः अत एव विमोहितः विशेषेण मूर्छितः अयम् अर्जुनः 'तव जामातरि शिवे अद्य मे इमां दशां प्राणावसानावस्थां निवेदय' इति अद्रिं हिमालयं रह एकान्ते ब्रुवन्निव ददृशे दृष्टः। पर्वते अवाङ्मुखत्वेन स्थितावियमुत्प्रेक्षा ॥ ९३ ॥

असौ परमेश्वरः युधि तस्य पार्थस्य भुजयोः वीर्यं सामर्थ्यं विलोक्य विस्मयमानचेताः सन् चापव्रणे चापप्रहारजातमस्तकक्षते सुरनद्याः भागीरथ्याः कणानां बिन्दूनां सेकस्य शङ्कां—क्षते शीतजलसेचनेनाधिका व्यथा भविष्यतीति—शङ्कामप्युत्सृजन् प्रमोदातिशयात् मनसि नानयन् सन् मुहुः उत्तमाङ्गं मूर्धानम् अकम्पयत्। शिरश्चालनेन पार्थस्य वीर्यं धैर्यं च श्लाघयामासेति भावः ॥ ९४ ॥

तथाविध एव अवाङ्मुखस्थित एव असौ अर्जुनः चिरात् बहुकालेन आचरितः कृतः चेतनायाः संज्ञायाः स्वागताचारः आगमनसत्कारो येन सः मूर्च्छापगमेन प्राप्तसंज्ञः सन्नि-

---

१ क. ख. मुनीति नास्ति । २ ख. निबद्धेति नास्ति । ३ ख. वण° । ४ वीचीवे° । ५ क. तरेति नास्ति । ६ ख. आपतितचेतनाचरितस्वा° । ७ क. ऽऽभरणेति नास्ति । ८ क. °घणात्कार° ख. °घणात्करण° । ९ क. परीति नास्ति ।

युगनखरेखाङ्कुरधोरणीद्विगुणीकृतहारमणिरमणीयवक्षसं पारिषद्गणाञ्जलिकमलवनमध्यराजहंसायमानं मार्दवभरितशार्दूलचर्मनिर्मितपल्ययंनमङ्कोपरिभागतिर्यगर्पितैकचरणपल्लवसंवाहनपरेण शिलादकुमारेण दर्पदुर्ललननिवारणाय मुखबन्धकशृङ्खले निरुध्य मुहुर्मुहुः करपुटास्फालितककुदशृङ्गेण भृङ्गिरिटिना च लक्ष्यमाणोभयपक्षभागं गाण्डीवताडनपरिपीटीतचूडाशशिनमाश्वासयितुमवतरद्भिरुडुनिकरैरिव कुसुमवर्षैरवकीर्यमाणं जटाभसितकुशचीरधारिभिस्तैरेव चतुर्भिराम्नायपुरुषैः परिपठ्यमानशतरुद्रीयबिरुदप्रबन्धमम्बरे सविधमवलम्बमानैस्तुम्बुरुप्रभृतिभिः सुरवैणिकैरुपवीण्यमाणभक्तजनरक्षणापदानप्रकरणं कर्णपूरीकृततमालमञ्जरीमधुझरीमिषेण कटाक्षात्साक्षात्कृपामिव वर्षन्तं प्रज्वलद्भिः परिष्कारपन्नगफणारत्नैर्नूत्नैः शरव्रणैमिवानुबध्यमानावयवमासन्नावतंसशशिकलागलितकिरणधारापातसीतासहिष्णुतयेव दन्तपटगर्भवर्तिना स्मितेन सूचितहृदयप्रसादं भगवन्तं महादेवमुद्वीक्ष्य पक्ष्मतटरुहनिमेषविटपिसमुत्पाटनपटुभिः प्रमोदाश्रुपूरैर्नदीमातृकायमाणपुलकप्ररोहः सविनयमुपसृत्य पादारविन्दयोः सहस्रकृत्वः प्राणंसीत् ॥२४॥

---

त्यर्थः, पुरतः भगवन्तं महादेवम् उद्वीक्ष्य पक्ष्मतटेषु रोहन्ति उद्भवन्ति ते पक्ष्मतटरुहाः तेषां निमेषविटपिनां निमेषवृक्षाणां समुत्पाटने पटुभिः प्रमोदाश्रूणां पूरैः नदीमातृकायमाणः नदीमातृकदेशवदाचरन् पुलकप्ररोहः रोमाञ्चोद्गमो यस्य सः निर्निमेषः आनन्दाश्रुपूर्णः सरोमाञ्चः सन्नित्यर्थः, सविनयम् उपसृत्य शिवसमीपं गत्वा पादारविन्दयोः सहस्रकृत्वः सहस्रवारं प्राणंसीत् साष्टाङ्गं प्रणनाम । कथंभूतं महादेवं, घण्टाभरणानां घणघणत्कारस्य सहचरेण सहायेन घण्टाशब्दयुक्तेनेत्यर्थः, कण्ठगर्जितेन कर्णयोः परिकल्पितः संपादितः सुधारसमोक्षो येन तस्मिन्महोक्षे महावृषभे निषेदिवांसम् आरूढम् । पुनः कथंभूतं महादेवं, भुजमूलयोः प्रसारितस्य गिरिजायाः पाणियुगस्य नखरेखाङ्कुराणां धोरणी वक्षसोऽधोभागादूर्ध्वक्रमेणावस्थितिशैली तया द्विगुणीकृताभिः हारमणिभिः अरुणरत्नैः रमणीयं वक्षो यस्य तम् । पुनः०, पारिषदगणानाम् अञ्जलय एव कमलवनं तस्य मध्ये शुभ्रत्वात् राजहंसायमानम् । पुनः०, मार्दवेन भरितं युक्तं यत् शार्दूलस्य व्याघ्रस्य चर्म तेन निर्मितं पल्ययनं वृषभपृष्ठास्तरणं येन तम् । पुनः०, अङ्कस्य उत्सङ्गस्य उपरिभागे तिर्यगपि तस्य तिर्यवस्थापितस्य एकचरणपल्लवस्य संवाहनपरेण मर्दनपरेण

---

१ क. युगलनखरा° । २ क. °यनपर्यङ्कोपरि, ख. °यनाङ्कोपरि । ३ ख. समुल्ललन । ४ क. बन्धनकनकशृङ्खलेन, ख. बन्धनकनक शृ° । ५ क. भृङ्गिणा । ६ क. °दण्डताडनपरिपीडित°, ख. °दण्डताडनपीडितं चूडा° । ७ क.ख. सुरतरुकुसुम° । ८ क. भस्म कु° । ९ ख. तुम्बरु° । १० क. झरीति नास्ति । ११ क. व्रणैरिवानुरज्य°, ख. व्रणैरिवानु° । १२ क. आसन्नेति नास्ति । १३ ख. °तांसितशशिकलापरिग° । १४ क. निमेषेति नास्ति । १५ क. पुलकाङ्कुरः ।

स्वामिन्मया जडधिया त्वयि देवदेवे
वाचा शरेण धनुषा दृढमुष्टिना च।
यत्ते चतुर्विधमकारि रणे तदागः
क्षन्तव्यमद्य भवता करुणार्णवेन ॥ ९५ ॥

इति विज्ञापयन्तमेनं पारिजातपल्लवतल्लजप्रतिमल्लस्य पाणिपल्लवस्य परामर्शनेन प्रमुषितरणवेदनाङ्गं प्लवङ्गकेतनमनङ्गशासनोऽप्येवमवादीत् ॥ २५ ॥

---

शिलादकुमारेण नन्दिकेश्वरेण दर्पेण यत् दुर्ललनं दुश्चेष्टितं तस्य निवारणाय मुखबन्धने कनकशृङ्खले निरुध्य वेगनिरोधं कृत्वा मुहुर्मुहुः करपुटेन आस्फालितं मृदु ताडितं ककुदस्य शृङ्गम् अग्रं येन तेन भृङ्गिरिटिना लक्ष्यमाणौ ध्रियमाणौ उभयपक्षभागौ उभयपार्श्वभागौ यस्य तम् । पुनः०, गाण्डीवदण्डताडनेन परिपीडितं व्यथितं चूडाशशिनम् आश्वासयितुम् अवतरद्भिः भूतलमागच्छद्भिः उडुनिकरैरिव नक्षत्रसमूहैरिव सुरतरुकुसुमानां कल्पवृक्षपुष्पाणां वर्षैः वृष्टिभिः अवकीर्यमाणम् आच्छाद्यमानम् । पुनः०, जटाभस्मकुशवल्कलधारिभिः तैः प्रसिद्धैरेव चतुर्भिः आम्नायपुरुषैः वेदपुरुषैः परिपठ्यमानः शतरुद्रीयसंज्ञकः प्रबन्धः यजुर्वेदस्थमहत्वप्रतिपादकग्रन्थो यस्य तम् । पुनः०, अम्बरे आकाशे सविधं समीपं यथा तथा अवलम्बमानैः अवस्थितैः तुम्बुरुनामा गन्धर्वः सः प्रभृतिः आदिर्येषां तैः सुरवैणिकैः देवगायकैः उपवीण्यमानानि वीणावादनेन सह गीयमाननिजभक्तजनरक्षणसंबन्धीनि अपदाप्रकरणानि वृत्तकर्मप्रकरणबन्धाः यस्य तम् । पुनः०, कर्णपूरीकृता कर्णावतंसीकृता या तमालमञ्जरी तस्याः मधुझरीमिषेण मकरन्दप्रवाहमिषेण कटाक्षात् साक्षात् मूर्तिमन्तीं कृपामिव वर्षन्तम् । पुनः०, प्रज्वलद्भिः देदीप्यमानैः परिष्कारपन्नगानां भूषानागानां फणारत्नैः फणासंबन्धिमाणिक्यैः नूत्नैः नूतनैः शरव्रणैरिव अनुबध्यमानाः खचिताः अवयवाः यस्य तम् । पुनः०, आसन्नायाः समीपवर्तिन्याः अवतंसशशिकलायाः सकाशात् गलिता या किरणधारा तस्याः पातेन स्वस्मिन्पतनेन यत् शीतं तस्य असहिष्णुतयेव असहनेनेव दन्तपटयोः दन्तवाससोः ओष्ठयोः गर्भे अन्तर्भागे वर्तिना स्मितेन सूचितः हृदयप्रसादो यस्य तम् ॥ २४ ॥

प्रणामानन्तरम् आदौ स्वापराधानां क्षमां प्रार्थयते—स्वामिन्निति । हे स्वामिन् प्रभो ! जडधिया मन्दबुद्धिना मया देवानां ब्रह्मादीनामपि देवे पूज्ये प्रथमं वाचा दुर्भाषणेन, ततः शरेण बाणप्रहारेण, ततः धनुषा मस्तके धनुर्दण्डताडनेन, ततः दृढमुष्टिना वक्षसि दृढमुष्टिप्रहारेण च इति चतुर्विधं ते तव यत् आगः अपराधः रणे संग्रामे अकारि तत् आगः अद्य करुणार्णवेन भवता क्षन्तव्यम् ॥ ९५ ॥

इति विज्ञापयन्तं पारिजातस्य कल्पवृक्षस्य यः पल्लवतल्लजः प्रशस्तपल्लवः तस्य प्रतिमल्लस्य प्रतिभटस्य पाणिपल्लवस्य परामर्शनेन स्पर्शनेन प्रमुषिता अपहृता रणवेदना यस्य

---

१ ख. देवदेव । २ क. ख. 'तलस्य । ३ क. ख. 'व्रणवे' ।

यथा तृतीयेन युधि प्रवीर तवापराधेन भवामि हृष्टः ।
तथा न भक्त्या तपसां विभूत्या तरुप्रसूनार्चनयाऽपि बह्व्या ॥ ९६ ॥
इति सुधामाधुरीधुरीणं वचनमभिधाय ॥ २७ ॥

तत्क्षणाद्धनुरिषूनपि तांस्तान्संनिधाप्य विभुरस्त्रमपि स्वम् ।
पाण्डवाय धनुराहतिरीतेः पारितोषिकमिव प्रदिदेश ॥ ९७ ॥

तस्याथ पाशुपतलाभदुरापदीप्ते-
रक्ष्णः समक्षमपरिप्लवपक्ष्मपङ्क्तेः ।
आश्चर्यवृत्तिरखिलैरनुगामिभिः स्वै-
रन्तर्दधे स भगवानमृतांशुमौलिः ॥ ९८ ॥

इत्यनन्तभट्टकृते श्रीमति चम्पूभारते चतुर्थः स्तवकः ।

---

तस्य तादृशम् अङ्गं यस्य तम् एनं प्लवङ्गकेतनं वानरध्वजम् अर्जुनम् अनङ्गशासनोऽपि एवं वक्ष्यमाणम् अवादीत् अवोचत् ॥ २५ ॥

हे प्रवीर ! युधि उक्तापराधेषु तृतीयेन धनुर्दण्डताडनेन तव अपराधेन हृष्टः संतुष्टः यथा भवामि तथा भक्त्या तरुप्रसूनैः अर्चनया पूजया कृत्वा बह्व्या महत्या तपसां विभुत्या समृद्ध्याऽपि हृष्टः न भवामि । त्वया वीरेण शस्त्राभावेऽपि धैर्येण कृत्वा मम मस्तके प्रहारः कृतः तज्जन्यसंतोषेण सर्वेऽपराधाः क्षान्ता इति भावः ॥ ९६ ॥

इति सुधामाधुर्याः धुरीणं भारवाहकम् अमृततुल्यमित्यर्थः, वचनमभिधाय उक्त्वा २७

विभुः सदाशिवः तत्क्षणात् पूर्वं गुप्तीकृतान् तान् तान् धनुः इषूनपि सन्निधाप्य सन्निधिं गमयित्वा पाण्डवाय अर्जुनाय स्वं स्वकीयम् अस्त्रं पाशुपतास्त्रमपि धनुषा आहतेः ताडनस्य रीतेः पारितोषिकमिव संतोषेण दीयमानं वेतनातिरिक्तदानमिव प्रदिदेश दत्तवान् ॥ ९७ ॥

अथ आश्चर्या आश्चर्यकारिणी वृत्तिः रूपान्तरेणागमनादिव्यापारो यस्य सः भगवान् अमृतांशुमौलिः शिवः पाशुपतस्य अस्त्रस्य लाभेन दुरापा इतरेषां दुर्लभा दीप्तिर्यस्य अपरिप्लवा निमेषाभावात् अचञ्चला पक्ष्मपङ्क्तिर्यस्य तस्य अर्जुनस्य अक्ष्णः समक्षम् अखिलैः अनुगामिभिः सेवकगणैः सह अन्तर्दधे गुप्तो बभूव । इति शिवम् ॥ ९८ ॥

इति श्रीमदनन्तभट्टकृतचम्पूभारतटीकायां श्रीखण्डोपाह्व-
नारायणसूरिविरचितायां चतुर्थः स्तवकः ॥ ४ ॥

---

१ क. तुष्टः । २ क. च । ३ ख. मधुरिमधु॰ । ४ ख. क्षणं ध॰ । ५ ख. ॰धाय । ६ क. अक्ष्णोः । ७ अत्रोत्प्रेक्षा व्यक्ता ।

## ५ पञ्चमः स्तवकः ।

अथ सविधतपोधनैः कृताशीरमरपतेर्धृतशासनः स पार्थः ।
रयजितपवनं समातलिः सन् रथमधिरुह्य मुदा दिवं प्रतस्थे ॥१॥
नाकमेत्य धनुरङ्कितदोष्णा नायको दिविषदामतिहृष्टः ।
नाम फाल्गुन इति ब्रुवता स्वं नन्दनेन जगृहे पदयुग्मे ॥ २ ॥
पाणिना परिमृशन्नमुमिन्द्रः पक्ष्मलीकृतजयन्तमहेर्ष्यः ।
आदरेण धुरि नाकिगणानामासनार्धमधिरोपयति स्म ॥ ३ ॥
सदसि वसति तस्मिन्सार्वभौमे कुरूणां
कपटशबरबाणैः कल्पितार्द्रव्रणेऽपि ।
निखिलसुरवधूनां नेत्रसंघाः समेता
निशितकुलिशकल्पा निर्दयं संनिपेतुः ॥ ४ ॥
आस्थानसीम्नि तनयाद्गिरिशेन युद्ध-
माकर्ण्य हर्षविकसन्मनसो मघोनः ।

---

अथ शिवप्रसादानन्तरं सविधतपोधनैः समीपस्थमुनिभिः कृताशीः दत्ताशीर्वादः अमरपतेः धृतं स्वीकृतं शासनम् आह्वानाज्ञा येन सः पार्थः अर्जुनः मातलिना इन्द्रसारथिना सहितः सन् रयेण वेगेन जितः पवनो येन तं रथम् अधिरुह्य मुदा दिवं स्वर्गं प्रतस्थे ॥१॥

नाकं स्वर्गम् एत्य फाल्गुन इति स्वनाम ब्रुवता नन्दनेन पुत्रेण अर्जुनेन अतिहृष्टः दिविषदां देवानां नायकः इन्द्रः धनुषा अङ्कितेन विशिष्टेन दोष्णा भुजेन हस्तेनेत्यर्थः, पदयुग्मे जगृहे गृहीतः। पदयुग्मं हस्तेन गृहीत्वा ननामेत्यर्थः ॥ २ ॥

इन्द्रः अमुम् अर्जुनं पाणिना परिमृशन् परिस्पृशन् सन् नाकिगणानां देवसमूहानां धुरि पुरतः आदरेण आसनार्धं स्वसिंहासनार्धभागम् अधिरोपयति स्म, आसनार्धे स्थापयामासेत्यर्थः । कथंभूतः इन्द्रः, पक्ष्मलीकृता स्वासनार्धस्थापनेन बहुलीकृता जयन्तस्य तन्नाम्नः स्वपुत्रस्य ईर्ष्या येन सः । स्वपत्न्यां जातम् माम् आसने कदापि नागृह्णात् इमं पारस्त्रैणेयं गृह्णातीतीर्ष्याबहुत्वे कारणम् ॥ ३ ॥

कपटशबरस्य शिवस्य बाणैः कल्पिताः कृताः आर्द्रव्रणाः आर्द्रक्षतानि यस्य तस्मिन्नपि कुरूणां कुरुवंशोत्पन्नानां राज्ञां मध्ये सार्वभौमे श्रेष्ठे तस्मिन्नर्जुने सदसि सभायां विशति सति निशितकुलिशकल्पाः तीक्ष्णवज्रतुल्याः समेताः सङ्घीभूताः निखिलसुरवधूनां नेत्रसङ्घाः कटाक्षसमूहाः निर्दयं यथा तथा सन्निपेतुः । अर्जुनस्य सौन्दर्याधिक्येन तरुणीजनमनोहरत्वात् तस्मिन्नप्सरसां कटाक्षा निपेतुरित्यर्थः ॥ ४ ॥

आस्थानसीमनि सभादेशे गिरिशेन सह युद्धं तनयात् पुत्रात् अर्जुनात् आकर्ण्य हर्षेण

---

१ अत्रेन्द्राज्ञास्वर्गगमनयोः हेतुहेतुमतोरुक्तेर्हेत्वलंकारः । २ लौकिकाचारवर्णनात्स्वभावोक्त्यलंकारोऽत्र ' स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम् ' इति लक्षणात् । ३ काव्यलिङ्गमलंकार । ४ अत्र स्वार्थपरैः परानुकूल्यविचारणाभावाद्विरूपघटनात्मको विषमालंकारभेदः ।

अङ्गेऽखिले प्रसरतां पुलकाङ्कुराणा-
मक्ष्णां सहस्रतयमेव बभूव विघ्नः ॥ ५ ॥
आज्ञया पितुरमर्त्यसमाजादग्रतः स्वनितमङ्गलवाद्यम्।
वारणेन्द्रमधिरोप्य जयन्तो वैजयन्तमनयद्विजयं तम् ॥ ६ ॥
आनतस्य पदयोरथ जिष्णोराशिषोऽनुपदमिन्द्रपुरन्ध्री।
पारिजातकुसुमस्थपरागैः फालसीमनि ललाम चकार ॥ ७ ॥
पुनः पुनस्तत्र पुलोमपुत्र्या जयन्तशङ्कां ददतः स्वकान्त्या।
नरस्य मौर्वीकिण एष दोष्णोर्नामग्रहेषु स्खलनं न्यरौत्सीत् ॥८॥
पितुरिवास्त्रकलां दिवि गायकात्पिकुलादृतकण्ठरवोदयः।
परिहृतामृतदिव्यजनावृतः परिशिशील स गीतकलामपि ॥ ९॥

---

विकसन्मनसः मघोनः इन्द्रस्य अखिले अङ्गे शरीरे प्रसरतां पुलकाङ्कुराणाम् अक्ष्णां नेत्राणां सहस्रतयमेव सहस्रनयनान्येव विघ्नः बभूव। अक्षिषु लोम्नामभावात्तत्र पुलकाङ्कुरप्रसरणाभाव इति भावः ॥ ५ ॥

जयन्तः इन्द्रपुत्रः पितुः इन्द्रस्य आज्ञया अग्रतः पुरतः स्वनितानि वादितानि मङ्गलवाद्यानि मृदङ्गतूर्यादीनि यस्य तं विजयम् अर्जुनं वारणेन्द्रम् ऐरावतम् अधिरोप्य वैजयन्तम् एतन्नामकप्रासादम् अनयत् नीतवान् ॥ ६ ॥

अथ इन्द्रपुरन्ध्री इन्द्राणी पदयोः आनतस्य जिष्णोः अर्जुनस्य फालसीमनि ललाटदेशे आशिषः आशीर्वादस्य अनुपदं पश्चात्पारिजातकुसुमस्य एतन्नामककल्पवृक्षपुष्पस्य परागैः रेणुभिः ललाम दृष्टिदोषनिवारणार्थं तिलकं चकार रूपपराक्रमादिगुणशालिनः पुत्रस्य दृष्टिदोषबाधा मा भूदिति परागतिलकं कृतवती। अयं स्त्रीजातिस्वभावः ॥ ७ ॥

तत्र स्वर्गलोके स्वकान्त्या पुनः पुनः जयन्तशङ्कां ददतः नरस्य अर्जुनस्य दोष्णोर्भुजयोः मौर्वीकिण एव मौर्वीताडनजन्यक्षतस्य किण एव पुलोमपुत्र्याः इन्द्राण्याः नामग्रहेषु आह्वानाद्यर्थं नामोच्चारणेषु स्खलनं व्यत्ययं न्यरौत्सीत् निवारितवान्। अर्जुनजयन्तयोः रूपतेजसोः साम्येन अर्जुनं प्रति जयन्तनाम्नाऽऽह्वानसमये हस्तयोर्ज्याघातचिह्नं दृष्ट्वा जयन्तनामग्रहणमुन्मुच्य अर्जुननामग्रहणं चकारेति भावः। नरस्येत्यनेनार्जुनस्य मानुषत्वेऽपि स्वकान्त्या देवत्वात्तैजसशरीरविशिष्टजयन्तस्य शङ्कोत्पादनेनालौकिककान्तिमत्त्वं व्यज्यते ॥ ८ ॥

सः अर्जुनः पितुः इन्द्रात्सकाशात् अस्त्रकलामिव दिविगायकात् चित्रसेनगन्धर्वात् सकाशात् गीतकलामपि गानविद्यामपि परिशिशील अभ्यस्तवान्। कथंभूतः, पिककुलैः कोकिलसमूहैः आदृतः कण्ठरवो यस्य सः। तथा, परिहृतं त्यक्तम् अमृतं यैस्तैः दिव्य-

---

१ क. ख. कुसुमस्य। २ क 'हृत'। ३ अत्र प्रकृतयोरस्त्रगीतविषयोरर्जुनकर्तृकाध्ययनधर्मेणौपम्यस्य गम्यत्वात्तुल्ययोगिताभेदः

तमुर्वशी तत्र कदाचिदेत्य स्वयं रहःकर्मणि भग्नकामा ।
अये पृथापत्य तवाभिधेव क्लीबत्वमेहीति शशाप कोपात् ॥ १० ॥
तद्बुद्ध्वा हरिरूचे तं शापोऽयं वत्स ते मुदे ।
चित्रसेनोक्तविद्यायाः सहकृत्वा भवेदिति ॥ ११ ॥

[1]कदाचिदस्त्र[2]विद्याशिक्षा[3]परिसमाप्तौ सुरसमक्षं गुरुदक्षिणात्वेन विपक्षकुलक्षपणं भिक्षमाणेन सहस्राक्षेण स्वमस्तकादाक्षिप्य शिरसि निक्षिप्तकिरीटोऽवलक्षाश्वोऽयं मातलिपरिकल्पितरथ्येन नन्दनवनमन्दपवनसंदीयमानकेतनस्पन्दनेन स्यन्दनेन निर्गत्य विलङ्घितदूरवियत्पथः पाथोनिधौ [5]गम्भीरनीरपूररक्षितरक्षःकुलकोलाहलनीचीकृत[6]वीचीरवरसातलकुहरमुखं निरुध्य रणप्रस्तावं वितस्तार ॥ १ ॥

---

जनैः देवैः आवृतः गायनश्रवणाथ वेष्टितः । अनेनामृतापेक्षया गीतौ माधुर्याधिक्यं द्योत्यते ॥ ९ ॥

तत्र स्वर्गलोके कदाचित् उर्वशी देवाङ्गना स्वयं तम् अर्जुनम् एत्य रहःकर्मणि सुरतकर्मणि भग्नकामा भग्नमनोरथा सती कोपात् ‘ अये पृथापत्य हे पृथापुत्र ! तव अभिधेव पृथापत्येतिनामेव—यथा पृथापत्येतिशब्दः नपुंसकं तथा तद्वाच्यस्त्वं क्लीवत्वं नपुंसकत्वम् एहि प्राप्नुहि’ इति शशाप शापं दत्तवती ॥ १० ॥

हरिः इन्द्रः तच्छापवचनं श्रुत्वा तम् अर्जुनम् इति वक्ष्यमाणम् ऊचे उक्तवान् । इति किं, हे वत्स ! अयं शापः चित्रसेनोक्तविद्यायाः गाननर्तनविद्यायाः सहकृत्वा सहायः तत्र उपयुक्तः सन्नित्यर्थः, ते मुदे हर्षाय भवेत् । पुरुषस्य गाननृत्यकर्माश्लाघ्यमिति भावः ॥११॥

कदाचित् अस्त्रशिक्षापरिसमाप्तौ सुराणां देवानां समक्षं गुरुदक्षिणात्वेन विपक्षकुलस्य निवातकवचादेः शत्रुकुलस्य क्षपणं वधं भिक्षमाणेन याचमानेन सहस्राक्षेण स्वमस्तकात् आक्षिप्य अपनीय शिरसि निक्षिप्तः स्थापितः किरीटो यस्य सोऽयं वलक्षाश्वः श्वेताश्वोऽर्जुनः मातलिना परिकल्पिताः योजिताः रथ्याः अश्वाः यस्य तेन नन्दनवनसंबन्धिना मन्दपवनेन संदीयमानं क्रियमाणमित्यर्थः, केतनस्पन्दनं ध्वजकम्पनं यस्य तेन स्यन्दनेन कृत्वा निर्गत्य विलङ्घितः दूरः वियत्पथः आकाशमार्गो येन तथाभूतः सन् पाथोनिधौ समुद्रे गम्भीरेण नीरपूरेण रक्षितस्य रक्षःकुलस्य कोलाहलैः कलकलरवैः नीचीकृतः अल्पीकृतः वीचीनां रवो यस्मिन् तत् रसातलकुहरस्य अधोलोकगमनबिलस्य मुखं निरुध्य रणप्रस्तावं युद्धप्रसङ्गं वितस्तार प्रकटीचकार ॥ १ ॥

---

१ क. अथेत्यधिकम् । २ क. विद्येति नास्ति । ३ क. परीति नास्ति । ४ क. गुरु° । ५ क. गम्भीरनीरपूररक्षितेति नास्ति । ६ क. वीचीरवम् । ७ अत्र विपक्षक्षपणे क. विवस्तरे । ८ गुरुदक्षिणात्वेन आरोपितस्येन्द्रसुखोपयोगाद्धनरूपगुरुदक्षिणायास्तत्रानुपयोगाच्च परिणामालंकारः ‘ परिणामः क्रियार्थश्चेद्विषयी विषयात्मना ’ इति लक्षणात् ।

तावदनाकर्णितपूर्वगाण्डीवविस्फारश्रवणादहंपूर्विकया युगपदभिषेण-नवतो दिविषदवध्यभावादध्यातमरणान् क्षिप्रैः क्षुरप्रैर्विश्राणितविवरा-दुरसः कृतप्रयाणैः प्राणैस्त्रिकोटिशो निवातकवचानपि प्रवातकवचानेव विरचय्य निवर्तमानोऽयं नभसि प्रमादादापतितेन पतङ्गपरिवेषेणेव स्फाटिकप्राकारेण परिगुप्तिमतो हिरण्यपुराद्विदितबन्धुजनवृत्तान्ततया रोषादभिगम्य कलहायमानान् कालकेयानपि कालगेहातिथीन् प्रथमं पाशुपतेन मन्त्रपूर्वं निमन्त्रयाञ्चक्रे ॥ २ ॥

अवायुनेयाः शरदभ्रपङ्क्तीरविद्यमानास्तमयाश्च ताराः ।
दैतेयसंहारभवाः स जिष्णुर्दिवि प्रतिष्ठापयति स्म कीर्तीः ॥ १२ ॥
हतरिपुं विनिवृत्तमवेक्ष्य तं हरिहयस्य सुरैः सह तुष्यतः ।
नयनवारिभिरङ्गमनाप्लुतं न ददृशे तिलमात्रमपि स्वकम् ॥ १३ ॥

---

यावत् रणप्रस्तावं चकार तावत् पूर्वम् आकर्णितः आकर्णितपूर्वः तथा न भवति यो गाण्डीवस्य विस्फारः ज्याटणत्कारः तस्य श्रवणात् अहंपूर्विकया अहं पूर्वमहं पूर्वमिति भाषणेन सह युगपत् अभिषेणनवतः शत्रून्प्रति धाष्टर्येन गमनं कुर्वतः दिविषद्भिः देवैः अवध्यभावात् वरप्रभावेन अवध्यत्वाद्धेतोः न ध्यातं मरणं यैस्तान् क्षिप्रैः शीघ्रगामिभिः क्षुरप्रैः क्षुरसदृशबाणैः विश्राणितं दत्तं विवरं निर्गमनमार्गो यस्मिंस्तस्मात् उरसः वक्षःस्थलात् कृतप्रयाणैः प्राणैः कृत्वा त्रिकोटिशः तिस्रः कोटीः निवातकवचानपि वातहीनकवचानपि तत्संज्ञकांश्च दैत्यान् प्रवातकवचानेव प्रकृष्टवातयुक्तकवचानेव विरचय्य कृत्वा गतप्राणान् कृत्वेत्यर्थः, निवर्तमानः अर्जुनः नभसि प्रमादेन अनवधानतया पतितेन सूर्यं त्यक्त्वाऽन्यत्र पतितेनेत्यर्थः, पतङ्गस्य सूर्यस्य परिवेषेण स्फाटिकप्राकारेण परिगुप्तिमतः परितः गोपनविशिष्टात् हिरण्यपुरात् विदितः ज्ञातः बन्धुजनानां निवातकवचानां निधनवृत्तान्तो यैस्तेषां भावः तत्ता तया रोषात् अभिगम्य बहिर्निर्गत्य कलहायमानान् युद्धं कुर्वाणान् कालकेयानपि एतत्संज्ञकदैत्यानपि कालगेहस्य यमगृहस्य अतिथीन् प्रथमं पाशुपतेन पाशुपतास्त्रमन्त्रोच्चारणेन मन्त्रपूर्वं निमन्त्रयाञ्चक्रे, पाशुपतास्त्रप्रयोगेण जघानेत्यर्थः ॥ २ ॥

सः जिष्णुः अर्जुनः दैतेयसंहारभवाः कीर्तीः दिवि स्वर्गे प्रतिष्ठापयति स्म । कीदृशीः कीर्तीः, वायुना नेयाः न भवन्ति तथाभूताः शरदभ्रपङ्क्तीः शरत्कालिकमेघपङ्क्तीः, तथा अविद्यमानः अस्तमयो यासां तथाभूताः ताराः तारकाः, शुभ्रतया । इत्यभेदाधिक्यरूपकम् ॥ १२ ॥

हताः रिपवः निवातकवचादयो येन तं, विनिवृत्तं महाकार्यं कृत्वा आगतं तम् अर्जुनम् अवेक्ष्य सुरैः देवैः सह तुष्यतः हरिहयस्य इन्द्रस्य नयनवारिभिः अनाप्लुतम् अक्षि-

---

१ क. °नयतः, ख. °णयतः । २ क. क्षिप्रम् । ३ क. निवर्तमानोऽयमिति नास्ति । ४ ख. नभसः । ५ क. प्रमादपतितेन । ६ क. ख. स्फटिक° । ७ क. प्रथममिति नास्ति ।

पुरि वज्रिणः सुरनुतिप्रसरत्पुलकावमग्नभुजचापकिणः ।
मनसे स पञ्चशरदोऽप्सरसां वसति स्म पञ्च शरदो विजयः ॥ १४ ॥
तस्य वृत्तमधिगम्य लोमशाद्धर्मजोऽपि मुदितः सहानुजैः ।
प्राप्ततीर्थमुनिसेवनः क्रमात्पावनं बदरिकावनं ययौ ॥ १५ ॥
तत्र ब्रह्मपरायणैर्मुनिजनैः संसेव्यमानान्तिकौ
सध्र्यञ्चौ यमिनौ निरीक्ष्य स नरं नारायणं चाख्यया ।
अङ्गेनानिशमन्तरेण महतीमेकां क्षमां संस्पृशन्
बाह्यैरष्टभिरङ्गकैरपि परां पस्पर्श पार्थः क्षमाम् ॥ १६ ॥
विलोकनैर्विश्रमशाखिभिस्तयोर्भवाध्वगानां परिधूनितश्रमः ।
निवासमालम्ब्य तपोवने तदा विवासदुःखाद्विरराम पार्थिवः ॥ १७ ॥

---

त्वं तिलमात्रमपि तिलप्रमाणमपि स्वकं स्वकीयम् अङ्गं न ददृशे न दृष्टम् । अङ्गस्य स्वकमिति विशेषणात् इन्द्रेण न दृष्टमित्यवगन्तव्यम् ॥ १३ ॥

सुराणां नतिभिः नमस्कारैः प्रसरत्सु पुलकेषु रोमाञ्चेषु अवमग्नौ निमग्नौ भुजयोः संबन्धिनौ चापकिणौ धनुर्गुणाघातजन्यव्रणकिणौ यस्य सः अप्सरसां मनसे पञ्चशरं मदनं ददातीति पञ्चशरदः सः विजयः अर्जुनः वज्रिणः पुरि अमरावत्यां पञ्च शरदः संवत्सरान्वसति स्म उवास । इन्द्रपुत्रत्वात् नारायणावतारत्वात् शौर्याद्यतिशायित्वाच्च सुराणां नतिः । एतेऽपि मां नमन्तीति हर्षेण, महतो लघवे नतिकरणे आयुर्नाशादिस्मरणात् लघुमल्पवयसं नरं मां देवा नमन्ति अतो मे का दशा भवेदिति भयेन वा पुलकोद्गमः ॥१४॥

लोमशात् ऋषेः तस्य अर्जुनस्य वृत्तं चरित्रम् अधिगम्य ज्ञात्वा अनुजैः सह मुदितः प्राप्तं तीर्थमुनीनां सेवनं येन सः धर्मराजोऽपि क्रमात्पावनं पवित्रं बदरिकावनं ययौ जगाम ॥ १५ ॥

सः पार्थः धर्मराजः तत्र वने ब्रह्मपरायणैः ब्रह्मनिष्ठैः मुनिगणैः संसेव्यमानः अन्तिकः समीपभागो ययोस्तौ सध्र्यञ्चौ सहचरौ यमिनौ योगिनौ आख्यया नाम्ना नरं नारायणं च निरीक्ष्य अन्तरेण अङ्गेन अन्तःकरणेनेत्यर्थः, महतीं क्षमां शान्तिम् अनिशं सर्वदा स्पृशन् धारयन् बाह्यैः अष्टभिः अङ्गकैरपि ' उरसा शिरसा दृष्ट्या–' इतिश्लोकोक्तैरवयवैरपि पराम् अन्यां क्षमां पृथिवीं पस्पर्श स्पृष्टवान् , साष्टाङ्गनमनं चकारेत्यर्थः ॥ १६ ॥

तदा भवाध्वगानां संसारमार्गगतानां विश्रामशाखिभिः विश्रान्तिप्रदवृक्षरूपैर्विलोकनैः नरनारायणकृपादर्शनैः परिधूनितः अपसारितः श्रमः क्लमो यस्य सः पार्थिवः युधिष्ठिरः तपोवने बदरिकावने निवासं स्थितिम् आलम्ब्य धृत्वा विवासदुःखात् प्रवासजन्यदुःखात् विरराम विरामं प्राप, प्रवासदुःखरहितो बभूवेत्यर्थः ॥ १७ ॥

---

१ क. गणैः । २ क. अव° । ३ क. क्रमः । ४ अत्र शत्रून्निहत्य प्रत्यागतार्जुनावलोकनोत्थहर्षस्य इन्द्राङ्गे तत्तादृगानन्दाश्रुसिक्तिहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । ५ हेत्वलंकारोऽत्र ।

एकदा तत्र स्नुषावत्सलतयेव मारुतेन पुरतो नीतमसासहिमटवीपर्यटनखेदसंपदामन्धङ्करणमलिकुलचेतसामासेचनकमक्ष्णां कमपि कह्लारमुकुलमादाय 'क लभ्येत पुनरेतादृशम्' इति कौतुकहर्षाभ्यां सूचिततर्षया पार्षत्या रहसि याचितः पार्षदश्विः क्षणं विचिन्त्य तद्विचिचीषया दिशमुदीचीं प्रतस्थे ॥ ३ ॥

क्षिप्रं विलङ्घ्य गिरिशैवलिनीवनानि
गच्छन्नसौ पथि ददर्श कपिं महान्तम्।
दृग्भ्यामवन्तमरिपत्तनदाहकाले
निद्रां भयादुपनतामिव कुम्भकर्णात् ॥ १८ ॥

[कपिकुञ्जरं सुकृतपुञ्जमञ्जना पवमानयोरचलमानमध्वनि।
विषयं दृशोरथ पुरो वृकोदरः स चकार साधु विहिताक्षिमीलनम् ॥]

अभीरसौ गभीरमभाणीच्च ॥ ४ ॥

---

एकदा तत्र बदरिकावने स्नुषायां द्रौपद्यां वत्सलतया अतिस्नेहेनेवेत्युत्प्रेक्षा, मारुतेन पुरतः अग्रभागे नीतं प्रापितं कमपि अदृष्टपूर्वं लोकोत्तरं कह्लारमुकुलं सौगन्धिककमलकुड्मलम् आदाय गृहीत्वा 'पुनरेतादृशं क कस्मिन्स्थले लभ्येत' इतिभाषणे यौ कौतुकहर्षौ ताभ्यां कृत्वा सूचितः ज्ञापितः तर्षः अभिलाषातिशयो यथा तया पार्षत्या द्रौपद्या रहसि एकान्ते याचितः 'एतादृशमन्यत्पुष्पमानीय दातव्यम्' इत्युक्तः पार्षदश्विः पृषदश्वा वायुः तत्पुत्रः भीमः क्षणं विचिन्त्य विचारं कृत्वा तस्य पुष्पस्य विचिचीषया गवेषणेच्छया उदीचीं दिशं प्रतस्थे जगाम। कथंभूतं कह्लारमुकुलं, अटवीपर्यटने अरण्यसंचारे या खेदसंपदः दुःखसमूहाः तासाम् असासहिम् असहिष्णुम्। तथा, अलिकुलस्य भ्रमरकुलस्य चेतसाम् अन्धानि क्रियन्ते अनेनेत्यन्धङ्करणम्, येन भ्रमरचेतांसि स्वत्यागं कृत्वाऽन्यत्र गन्तुमशक्तानि क्रियन्ते इत्यर्थः। तथा, अक्ष्णां नेत्राणाम् आसेचनकं मनोहरत्वात् तृप्त्यकारकम् ॥ ३॥

गिरिशैवलिनीवनानि पर्वतनदीवनानि क्षिप्रं शीघ्रं विलङ्घ्य गच्छन्नसौ भीमः पथि महान्तं कपिं वानरं ददर्श। कपिमुत्प्रेक्षते, अरिपत्तनस्य लङ्कानगर्याः दाहकाले भयात् दाहभयात् कुम्भकर्णात् उपनतां शरणागतां निद्रां दृग्भ्यां नेत्राभ्याम् अवन्तमिव रक्षन्तमिव। यथा कश्चित् शरणागतं द्वारं पिधाय गृहमध्ये रक्षति तद्वत् नेत्रपिधानं कृत्वाऽन्तरे रक्षन्तमिवेत्यर्थः ॥ १८ ॥

अभीः निर्भयः असौ भीमः गभीरं यथा तथा अभाणीत् अवोचत् ॥ ४ ॥

---

१ क. नीतमटवीपर्यटनखदसंपदामसासहिं°। २ क. पट्टण°। ३ क. श्लोकोऽयमधिकः। तट्टीका चेयम्—उक्तमेवार्थं भङ्गयन्तरेणाह—कपिकुञ्जरमिति। अथ दूरतो दर्शनानन्तरं स वृकोदरो भीमः अञ्जनापवमानयोः सुकृतपुञ्जं पुण्यराशिं साधु यथा तथा विहितम् अक्ष्णोर्मीलनं येन तं केवलं प्रत्यग्दृष्टथा श्रीरामध्यानपरमिति यावत्, अत एव अचलमानं निश्चलं, यद्वा अचलः मानः चित्तसमुन्नीतः यस्य तम्, अथवा अचलमानं पर्वतप्रमाणमिति वा, कपिकुञ्जरं हनुमन्तम् अध्वनि मार्गे पुरः पुरःप्रदेशे दृशोः नेत्रयोः विषयं चकार अपश्यदित्यर्थः।

कस्त्वं निरुध्य पदवीमविनीतबुद्धे
निद्रास्यपेहि न सहे गमने विलम्बम् ।
क्रोधो भुजामिव ममाद्य हिडिम्बहन्तु-
रुद्यद्गदां तव तनूमपि मूढ कुर्यात् ॥ १९ ॥
क्रौर्यस्पृशा तदनु कौरवसार्वभौम-
वाचा तया सपदि मारुतनन्दनस्य ।
दृग्द्वारपक्ष्मपुटयुग्मकपाटकूट-
निद्रार्गलाहरणकुञ्चिकया बभूवे ॥ २० ॥
इत्थं गिरा किंचिदुदीक्ष्य तस्य
लाङ्गूलमात्रे तरलः कपीन्द्रः ।
कोपारुणाक्षं कुरुसिंहमेनं
स्वापारुणाक्षः स्वयमेवमूचे ॥ २१ ॥
आवालधेररिमहागृहदाहशौण्डा-
दाचौषधाचलधृतिस्थपुटात् किरीटात् ।

---

हे अविनीतबुद्धे अशिक्षितबुद्धे! पदवीं मार्गं निरुध्य निद्रासि । त्वं कोऽसि । अपेहि मार्गं मुक्त्वा तिष्ठ । अहं गमने विलम्बं न सहे । विलम्बकरणे शासनमाह—हे मूढ मूर्ख ! अद्य हिडिम्बराक्षसस्य हन्तुः मम क्रोधः भुजामिव मद्बाहुमिव तव तनूमपि उद्यद्गदाम् उद्यती ऊर्ध्वं गच्छन्ती गदा यस्यास्ताम्, अन्यत्र उद्यन् आविर्भवन् गदः रोगः प्रहारदुःखमिति यावत्, यस्यास्तां कुर्यात् । मार्गं न त्यजसि चेत्तर्हि गदाप्रहारं कुर्यामित्यर्थः ॥ १९ ॥

क्रौर्यस्पृशेति, आवालधेरिति पद्यद्वयं क्षेपकं क्वचित्पुस्तके दृश्यते तद्व्याचक्ष्महे । क्रौर्यस्पृशा क्रौर्ययुक्तया तया कौरवाणां मध्ये सार्वभौमस्य श्रेष्ठस्य भीमस्य वाचा सपदि मारुतनन्दनस्य हनूमतः दृग्द्वारसंबन्धिपक्ष्मपुटयोः युग्ममेव कपाटकूटं कपाटसमूहः तस्य निद्रैव अर्गला विष्कम्भः तस्य हरणे निष्कासने कुञ्चिकया महाराष्ट्रभाषायां 'किली' इति संज्ञया बभूवे जातम् । यथा कुञ्चिकयाऽर्गलाहरणे कृते कपाटोद्घाटनं भवति तद्वत् भीमवाचा निद्राहरणेन हनुमद्दृगुन्मीलनं जातमित्यर्थः ॥ २० ॥

इत्थं तस्य भीमस्य गिरा वाण्या किंचिदुदीक्ष्य लाङ्गूलमात्रे पुच्छमात्रे तरलः चञ्चलः पुच्छचालनकर्तेत्यर्थः, स्वयं स्वापेन निद्रया अरुणे आरक्ते अक्षिणी यस्य सः कपीन्द्रः हनुमान् कोपेन अरुणे अक्षिणी यस्य तं कुरुसिंहम् एनं भीमम् एवं वक्ष्यमाणम् ऊचे बभाषे ॥ २१ ॥

अरेः शत्रोः रावणस्य महागृहाणां दाहे शौण्डात् प्रवीणात् आवालधेः पुच्छमभिव्याप्य औषधाचलस्य द्रोणाचलस्य धृत्या धारणेन स्थपुटात् नतोन्नतात् किरीटात् किरी-

---

१ ख. श्लोकोऽयं नास्ति । २ क. वाग्रूपया । ३ क. 'कवाट' । ४ क. ख. श्लोकोऽयं नास्ति ।
५ हिडिम्बहन्तुरितिविशेषणस्यात्र साभिप्रायत्वात्परिकरालंकारः ।

अङ्गेष्वजातचलनोऽप्यखिलेषु भीम-
मालोक्य मन्दमधरोष्ठपुटे चकम्पे ॥ २२ ॥
भद्र स्वस्त्यस्तु तुभ्यं चिरमिह जरया निद्रयाऽप्यातुरोऽहं
प्रत्युत्थानादिकर्मण्यपटुरवयवैरस्मि तस्मात्त्वमेव।
जात्याऽवस्थानरीत्याऽपि च विपिनपथे प्राप्ततिर्यक्त्वमेवं
वालाग्रे मां विकृष्य द्रुतमभिलषितं प्रार्थये साधयेति ॥ २३॥
अरातिसंघातनिघातकर्मण्यबालहस्तो मम वालहस्तम्।
उद्धृत्य याहि द्रुतमुत्तरत्रेत्युक्त्वैव स श्रान्तिमुपाजहार ॥ २४ ॥
इत्युक्त एष धरणौ परिघं निधाय
वल्कं दृढं च परिधाय भुजार्गलाभ्याम्।
तं कृष्टुमेव न शशाक स तु प्लवङ्गो
वालस्थया घनतयाऽस्य मनश्चकर्ष ॥ २५ ॥

---

टपर्यन्तम् अखिलेषु अङ्गेषु अवयवेषु न जातं चलनं यस्य तादृशोऽपि कपिः भीमम् आलोक्य अधरोष्ठपुटे मन्दं यथा तथा चकम्पे चचाल। ओष्ठचलनं विना भाषणं न भवत्यतो भाषणोपक्रमं चकारेति भावः ॥ २२ ॥

'हे भद्र कल्याण! तुभ्यं स्वस्ति कल्याणमस्तु। जरसा जरया निद्रयाऽपि आतुरः पीडितः अतः अवयवैः प्रत्युत्थानादिकर्मणि प्रत्युद्गमनादिक्रियायाम् अपटुः असमर्थः अस्मि। तस्मात्त्वमेव जात्या अवस्थानरीत्या शरीरस्थितिरीत्याऽपि च एवम् एतत्प्रकारकं यथा तथा प्राप्तं तिर्यक्त्वम् अध्वनि तिर्यगवस्थानं च येन तं मां वालाग्रे पुच्छरोमाग्रे विकृष्य अभिलषितम् इष्टं द्रुतं शीघ्रं साधय, इति प्रार्थये याच्ञां कुर्वे ॥ २३ ॥

अरातिसंघातस्य शत्रुसमूहस्य निघातकर्मणि वधकर्मणि अबालः प्रौढः दृढ इति यावत्, हस्तो यस्य सः त्वं मम वालहस्तं पुच्छम् उद्धृत्य द्रुतम् उत्तरत्र परस्मिन् देशे याहि गच्छ' इति उक्त्वैव सः हनूमान् श्रान्तिं श्रमम् उपाजहार स्वीकृतवान्। अत्र बवयोरभेदात्त्वम् अवालहस्तः मम बालहस्तम् उद्धृत्य याहीत्यनेन त्वं समर्थोऽहमसमर्थं इति ध्वन्यते। 'पुच्छोऽस्त्री लूमलाङ्गूले वालहस्तश्च वालधिः' इत्यमरः ॥ २४ ॥

इति उक्तः एषः भीमः परिघं गदां भूमौ निधाय वल्कं वल्कलरूपं वस्त्रं दृढं यथा तथा परिधाय भुजार्गलाभ्याम् अर्गलासदृशदृढबाहुभ्यां तं वालधिं कृष्टुम् आकृष्टुमेवं न शशाक न शक्तो बभूव। स तु प्लवङ्गः वानरः वालस्थया पुच्छलोमनिष्ठया घनतया दार्ढ्येन अस्य भीमस्य मनश्चकर्ष स्वाधीनं चकारेत्यर्थः। एतस्य पुच्छकेशस्यैतादृशं दार्ढ्यं तस्मादयं कोऽपि देवविशेषो भवेदित्यनुमितवान् इति भावः ॥ २५ ॥

---

१ ख. जरसा। २ क. एनं वालाग्रे। ३ क. ख. 'तप्राप्तये। ४ क. ख. श्लोकोऽयं नास्ति। ५ क. वालस्थ°।

तदनु विनयविस्मयव्रीडापारदृश्वना मातरिश्वसूनुना 'त्वं वासवलोकवासिषु कोऽसि' इति पृष्टः कपिकुञ्जरः स्वमञ्जनायां प्रभञ्जनेन संजनितं जानकीजानेर्हृदयरञ्जकं लेखवाहं व्याजहार ॥ ५ ॥

सबहुमानं तस्य वचनमाकर्ण्य ॥ ६ ॥—

प्रीतेन तेन पुनरप्यधिपः कपीना-
मूचे तथा यदि भवानधुनाऽर्थयेऽहम् ।
कर्तुं तनुं नयनयोः पथि तावकीं तां
तत्तादृशीमुदधिपल्वलतासवित्रीम् ॥ २६ ॥

इत्युक्तोऽयं प्रवृद्धोऽङ्गैर्हेलया रुरुधे निजैः ।
वैमात्रेयस्य तस्यैव मार्गं दिविषदामपि ॥ २७ ॥

त्रस्तस्य तद्वपुरुदीक्ष्य सजातिशङ्कि-
मैनाकसंशयकुठारितपक्षलोपम् ।
मोहे यथा नयनयोर्मुकुलीबभूव
बोधे तथैव करयोरपि युग्ममस्य ॥ २८ ॥

---

तदनु तदनन्तरं विनयविस्मयव्रीडानां नम्रताश्चर्यलज्जानां पारदृश्वना पारं गतेन तद्विशिष्टेनेति यावत्, मातरिश्वसूनुना वायुपुत्रेण भीमेन 'त्वं वासवलोकवासिषु देवेषु कोऽसि' इति पृष्टः कपिकुञ्जरः वानरश्रेष्ठः स्वम् आत्मानम् अञ्जनायाम् एतन्नाम्न्यां वानर्यां प्रभञ्जनेन वायुना संजनितम् उत्पादितं जानकी जाया यस्य तस्य रामस्य हृदयरञ्जकं प्रियं लेखवाहं लिखितपत्रप्रापकं दूतमित्यर्थः, व्याजहार कथितवान् ॥ ५ ॥

सबहुमानं सादरं यथा तथा वचनं हनुमद्वाचम् आकर्ण्य ॥ ६ ॥—

प्रीतेन भीमेन पुनरपि कपीनामधिपः हनूमान् ऊचे उक्तः । किमुक्तस्तदाह—तथेति । भवान् तथा वायुपुत्रः रामदूतो यदि तर्हि अहम् अधुना सा चासौ तादृशी च तत्तादृशी तां, तावकीं तां त्वदीयां तनुं नयनयोः पथि कर्तुं द्रष्टुमित्यर्थः, प्रार्थये । कीदृशीं तनुम्, उदधौ समुद्रे पल्वलतायाः अल्पसरस्तुल्यतायाः सवित्रीम् उत्पादयित्रीम् । यदि त्वं हनूमान् तर्हि यया अनायासेन समुद्रलङ्घनं कृतं तां विशालां तव तनुं दर्शय, येन मे संदेहनिवृत्तिर्भवेदिति भावः ॥ २६ ॥

इति भीमेन उक्तः अयं हनूमान् प्रवृद्धः सन् यथा निजैः अङ्गैः अवयवैः वैमात्रेयस्य मातृसपत्नीपुत्रस्य तस्य भीमस्य मार्गमिव दिविषदां देवानामपि मार्गं रुरुधे रुद्धवान् । तादृशः प्रवृद्धः येनाकाशमपि व्याप्तमित्यर्थः ॥ २७ ॥

तद्वपुः उदीक्ष्य त्रस्तस्य भीमस्य मोहे मूर्छायां सत्यां नयनयोः युग्मं यथा संकुचितं, बोधे तन्माहात्म्यज्ञाने सति तथैव करयोर्युग्ममपि मुकुलीबभूव । प्रथमं भयेन मूर्छायां

---

१ क. विनयेति नास्ति । २ क. संजातम् । ३ क. लेखावाहकम् । ४ क. तावकीनाम् । ५ क. स द्युसदामपि । ६ अत्राङ्गवृद्धेः भीमदिविषदुभयमार्गरोधहेतुत्वात्काव्यलिङ्गं, द्वयोर्मार्गयो रोधरूपधर्मैक्याद्दीपकं च ।

प्रमोदात्परिपुष्यद्भिः प्रतिक्षणमथाङ्कैः ।
भीमेनाप्युदघाटीव भ्रातुर्वृद्धिविडम्बना ॥ २९ ॥

सविनयमेवं व्यजिज्ञपच्च ॥ ७ ॥

प्रार्थ्यमानपददर्शनं चिरात्पश्यतः पथि भवन्तमग्रजम् ।
विस्मयाम्बुनिधिरेष मेऽधुना वीरवर्य भवताऽपि दुस्तरः ॥३०॥
राघवस्य सहजादपि त्वयि प्रेमवृत्तिरधिकेति मे मतिः ।
यामिनीचरवधोत्सवे यतो लक्ष्मणादधिकमंशमग्रहीः ॥ ३१ ॥

आर्य क्षमस्व मम वागपराधमुग्र-
मित्यानतं चरणयोश्चिबुके गृहीत्वा ।
जिघ्रन् शिरस्यवरजं मुमुचे हनूमान्
भीमोऽप्यमुष्य विरहासहनोऽश्रुबिन्दून ॥ ३२ ॥

---

कृतनयनमीलन आसीत्पश्चात्तत्स्वरूपज्ञाने सति विनयेन विरचिताञ्जलिरासीदिति भावः । कीदृशं तद्वपुः, सजातिं समानजातीयं पर्वतं शङ्कतेऽसौ तथाभूतो यो मैनाकपर्वतः तस्य यः संशयः—अयं पर्वतः—इति संदेहः तस्य कुठारितः कुठारवदाचरितः नाशक इति यावत्, पक्षलोपः पक्षाभावो यस्य तत् ॥ २८ ॥

अथ भीमेनापि प्रमोदात् हर्षात् प्रतिक्षणं पुष्यद्भिः पुष्टिं स्वीकुर्वद्भिः अङ्कैः अवयवैः करणैः भ्रातुः हनूमतः वृद्धेर्विडम्बना अनुकरणम् उदघाटीव, उद्घाटितेवेत्युत्प्रेक्षा ॥२९॥

अथ च सविनयं यथा तथा एवं वक्ष्यमाणं व्यजिज्ञपत् विज्ञापितवान् ॥ ७ ॥

हे वीरवर्य हनूमन् ! प्रार्थ्यमानं पदयोर्दर्शनं यस्य तं भवन्तम् अग्रजं श्रेष्ठबन्धुं पथि मार्गे चिरात् बहुकालेन पश्यतः मे एषः विस्मयाम्बुनिधिः आश्चर्यसमुद्रः भवताऽपि शत-योजनजलनिधिमुल्लङ्घयता त्वयाऽपि दुस्तरः तरीतुमशक्यः । अकस्मात् भवच्चरणदर्शनेन मम महदाश्चर्यमभूदिति भावः ॥ ३० ॥

राघवस्य रामचन्द्रस्य प्रेमवृत्तिः सहजादपि बन्धोर्लक्ष्मणादपि त्वयि अधिका इति मे मतिः बुद्धिः भवति । यतः त्वं यामिनीचराणां राक्षसानां वधोत्सवे हननमेव उत्सवः तस्मिन् लक्ष्मणात् अधिकमंशम् अग्रहीः स्वीकृतवानसि । त्वया लक्ष्मणापेक्षया अधिका राक्षसा हता इति भावः । अन्योऽपि कश्चित् वस्तुविभागसमये बन्धोरप्यधिकमंशं स्वप्रियाय ददाति ॥ ३१ ॥

हनूमान् इति आभाष्य चरणयोः आनतम् अवरजं कनिष्ठबन्धुं भीमं चुबुके गृहीत्वा धृत्वा शिरसि जिघ्रन् सन् मुमुचे, तं त्यक्त्वाऽन्यत्र जगामेत्यर्थः । इति किं, 'हे आर्य श्रेष्ठबन्धो ! उग्रं कठोरं वागपराधं वाण्या कृतमपराधं दुर्भाषणरूपमपराधमिति यावत्, क्षमस्व' इति । अमुष्य हनूमतः विरहं न सहतेऽसौ विरहासहनः भीमोऽपि अश्रुबिन्दून् मुमुचे ॥ ३२ ॥

---

१ क. उदपादि । २ क. भ्रातृवृद्धि । ३. अत्राकस्मिककाङ्क्षितार्थसिद्धिवर्णनात्प्रहर्षणालंकारः ।

गच्छतोऽस्य पथि मारुतेः पुरो-
गन्धमादनमभूत्कुलाचलः ।
वानरेन्द्र इव गाढवीक्षिका-
वासनाभिरविमुक्तदृक्पथः ॥ ३३ ॥
अलकेशयोषिदलकेशयैः सुमैः
सुरभिं प्रमोदसुरभिं नभःसदाम् ।
शिखरे स तस्य महतीमुदग्दिशो
मणिदर्पणीमिव ददर्श वापिकाम् ॥ ३४ ॥
यक्षाधिपस्य यशसीव गृहीतदेहे
दृष्ट्वा भयादपगते सति हंसयूथे ।
कक्षानिवेशितगदः स विगाह्य तोयं
फुल्लानि हल्लककुलान्यखिलान्यलावीत् ॥ ३५ ॥

तदात्व एव तद्रक्षिणः 'कस्त्वं साहसिन्नायुरग्रभूमिमारुरुक्षसि' इति समन्ततो निरुन्धानानन्वर्थतावलम्बिततया लोहितानां लोचनानां प्रतिबिम्बैस्तां सरसीं पुनरपि सौगन्धिकान्तर्वर्तिनीमिव कुर्वतः क्रोधवशान्नाम

---

पथि गच्छतः अस्य मारुतेः वायुपुत्रभीमस्य पुरः अग्रतः गन्धमादनम् एतन्नामककुलाचलः विन्ध्यादिसप्तकुलाचलान्तर्गतः पर्वतः अभूत् । पर्वतमुत्प्रेक्षते, गाढाभिः वीक्षिकानां दर्शनानां वासनाभिः संस्कारैः कृत्वा अविमुक्तः दृक्पथः दर्शनमार्गः चाक्षुषप्रत्यक्षविषयतेति यावत्, येन सः वानरेन्द्र इव समुद्रलङ्घनकालिकस्वरूपदर्शकहनूमानिव ॥ ३३ ॥

सः भीमः तस्य गन्धमादनस्य शिखरे महतीं विपुलां वापिकां मानससरोवरं ददर्श । कीदृशीं वापिकाम्, अलकायाः एतन्नाम्न्याः नगर्याः ईशस्य स्वामिनः कुबेरस्य योषितां पत्नीनाम् अलकेशयैः केशवासिभिः सुमैः पुष्पैः सुरभिं सुगन्धाम् । तथा, नभःसदां देवानां प्रमोदसुरभिं हर्षकामधेनुं, हर्षदात्रीमित्यर्थः । तामुत्प्रेक्षते, उदग्दिशः उत्तरदिशः मणिदर्पणीमिव हीरकादिरत्नमयादर्शमिव ॥ ३४ ॥

गृहीतदेहे यक्षाधिपस्य कुबेरस्य यशसीवेत्युत्प्रेक्षा, हंसयूथे हंससमूहे भीमं दृष्ट्वा भयात् अपयाते सति कक्षायां विनिवेशिता स्थापिता गदा येन सः भीमः तोयं सरो जलं विगाह्य प्रविश्य फुल्लानि विकसितानि अखिलानि सर्वाणि हल्लककुलानि कमलविशेषकह्लारवृन्दानि अलावीत् अच्छिदत् ॥ ३५ ॥

तदात्वे एव सौगन्धिकलवनसमये एव तेषां सौगन्धिकानां रक्षिणः 'हे साहसिन् स्वबलमविचार्य महाकर्मकारिन्! आयुषः अग्रभूमिं चरमस्थलम् आरुरुक्षसि आरोढुमिच्छसि मर्तुमिच्छसीत्यर्थः' इत्युक्त्वा समन्ततः निरुन्धानान् निरोधं कुर्वाणान् अन्वर्थतायाः क्रोधवशनाम्नोऽन्वर्थतायाः कोपयुक्तताया इति यावत्, अवलम्बिततया स्वीकृततया

---

१ क. रे जाल्म आयु' । २ क. अवलम्बकतया । ३ क. लोहितायितानाम् ।

यातुधानान् स भीमो रंहसा समुपबृंहितसिंहनादश्चिरतरमुपोषितस्य परिघस्य पारणां परिकल्पयाञ्चक्रे ॥ ८ ॥

रक्षःसृता रक्तनदी महाद्रेर्विष्वक्पतन्ती वियति स्थितानाम् ।
क्षरत्तटीधातुझरीति बुद्धेः करावलम्बं कलयाञ्चकार ॥ ३६ ॥

पर्वतस्याग्रवस्तुभ्यः प्रवस्तुं नेच्छतीं दृशम् ।
उत्खाय स महायत्नादुपासीददुपत्यकाम् ॥ ३७ ॥

तदानीमितरेष्वपि भ्रातृषु कमलपालिकासूनोः स्कन्धभागशिविकामधिरुह्य तस्यैव कटकमागतेषु सत्सु मारुतिरादरेण रहसि ' विकसितां कुसुमसंहतिं मूर्तानुरागभ्रमदां प्रमदां प्रत्युपदामकरोत् ॥ ९ ॥

सरसीव कचेऽप्यस्या धार्तराष्ट्राकुलीकृते ।
ऊषे तया वरतनोरूर्मिमत्यलिभासुरे ॥ ३८ ॥

---

लोहितानां लोचनानां प्रतिबिम्बैः तां सरसीं सरोवरं पुनरपि सौगन्धिकान्तर्वलीमिव सौगन्धिकगर्भवतीमिव कुर्वतः क्रोधवशान् तन्नाम्ना प्रसिद्धान् यातुधानान् राक्षसान् सः भीमः रंहसा स्वबलेन समुपबृंहितः वृद्धिं नीतः सिंहनादो येन तथाभूतः सन् चिरं बहुकालम् उपोषितपरिघस्य गदायाः पारणां व्रतान्ते भोजनं परिकल्पयामास, गदया तान् जघानेत्यर्थः ॥ ८ ॥

महाद्रेः गन्धमादनात् विष्वक् सर्वतः पतन्ती रक्षोभ्यः सृता निर्गता रक्तनदी रुधिरनदी वियति आकाशे स्थितानां देवादीनां क्षरन्ती तटीधातुझरी पर्वततटसंबन्धिरक्तधातुसंपृक्तनदी इति बुद्धेः करावलम्बं कलयाञ्चकार ददौ । अधः पतन्तीं रुधिरनदीं दृष्ट्वा 'लोहितधातुयुतनदीयम्' इति बुद्धिरभूदिति भावः ॥ ३६ ॥

सः भीमः पर्वतस्य गन्धमादनस्य अग्रवस्तुभ्यः श्रेष्ठपदार्थेभ्यः ऊर्ध्वगतवस्तुभ्यश्च प्रवस्तुं प्रवासं कर्तुं निर्गन्तुमित्यर्थः, नेच्छतीं दृशं महायत्नात् उत्खाय आकृष्य उपत्यकाम् अद्रिसमीपभूमिम् उपासीददधिगतवान् । पर्वतोर्ध्वभागस्थितवस्तुदर्शनासक्तां दृशमाकृष्यागमनमार्गेणाधोगत इति भावः ॥ ३७ ॥

तदानीम् इतरेषु भ्रातृषु युधिष्ठिरनकुलसहदेवेषु कमलपालिकासूनोः हिडिम्बापुत्रस्य घटोत्कचस्य स्कन्धभाग एव शिविका नरयानं तत् आरुह्य तस्यैव गन्धमादनस्यैव कटकभुवम् आगतेषु सत्सु मारुतिः भीमः रहसि आदरेण मूर्तः मूर्तिमान् योऽनुरागः तस्य भ्रमदां भ्रान्तिदात्रीं तां विकसितां कुसुमसंहतिं, प्रमदां द्रौपदीं प्रति उपदाम् उपायनम् अकरोत् ॥ ९ ॥

तदा कुसुमसंहत्या सरसीव सरोवरे इव तस्याः वरतनोः द्रौपद्याः कचेऽपि केशेऽपि जातावेकवचनम्, ऊषे उषितं स्थितमिति यावत् । कथंभूते सरसि, कच इव धार्तराष्ट्रैः हंसैः धृतराष्ट्रपुत्रैश्च आकुलीकृते व्याप्ते मर्दिते च तथा ऊर्मिमति वीचिमति

---

१ क. तरेति नास्ति । २ क. °कसुवमा° । ३ क. तामित्यधिकम् । ४ भ्रान्तिमदलंकारोऽत्र ।

अथ कदाचिदाखेटाय तटाटवीमटति तस्मिन् वकद्विषि जटो नाम दुर्घटः सुरारिरुटजमुपेत्य वेदिकया वैतानतनूनपात इव दयितया सह त्रीनपि तान्वीरान्स्कन्धमानीय जवात्केनचिदपदिशापथेन प्रतस्थे ॥१०॥

गतागते तत्र घटोत्कचेन जटेन च स्कन्धधृतस्य राज्ञः।
पादार्पणालाभशुचा वनं तत्पतत्रिनादैरिव रोदिति स्म ॥ ३९ ॥

वनं यियासोः कठिने सभान्ते
जटासु रोधो न बभूव यस्य।
वने विजृम्भत्करुणे तु तस्य
जटासुरोऽधोऽजनि धर्मसूनोः ॥ ४० ॥

नीत्वा किमद्य वनसीमनि दूरमेता-
नत्रैव हन्मि सहसेति धियैव तिष्ठन्।
आलक्ष्यतायममरारिरनुष्णजङ्घो
गन्तुं पदात्पदमपि क्षितिपानुभावात् ॥ ४१ ॥

---

कौटिल्यवति च तथा अलिभिः भ्रमरैः भासुरे शोभावति अलिवत् भ्रमरवत् भासुरे कृष्णकान्तिमति च ॥ ३८ ॥ इति सौगन्धिकाहरणम्।

अथ कदाचित्तस्मिन् वकद्विषि वकराक्षसशत्रौ भीमे आखेटाय मृगयायै तटाटवीं पर्यन्ततटारण्यम् अटति विशति सति दुर्घटः दुर्जयः जटोनाम सुरारिः जटासुरः उटजं पाण्डवपर्णशालाम् एत्य वेदिकया सह वैतानतनूनपात इव यज्ञसंबन्धिनस्त्रीन् अग्नीनिव दयितया द्रौपद्या सह त्रीनपि तान् युधिष्ठिरनकुलसहदेवान् स्कन्धम् आनीय स्कन्धे गृहीत्वा जवात् वेगात् केनचिदपदिशापथेन क्षुद्रमार्गेणेत्यर्थः, प्रतस्थेः ॥ १० ॥

तत्र स्थले गतागते गमनागमने घटोत्कचेन जटासुरेण च स्कन्धे धृतस्य राज्ञः धर्मराजस्य पादयोः अर्पणस्य स्थापनस्य यः अलाभः तस्य शुचा शोकेन तद्वनं पतत्रिनादैः पक्षिशब्दैः रोदिति स्मेव रुरोदेवेत्युत्प्रेक्षा ॥ ३९ ॥

कठिने सभान्ते सभामध्ये वनं यियासोः जिगमिषोः यस्य जटासु रोधः प्रतिबन्धः न बभूव। विजृम्भती वर्धमाना करुणा कृपा यस्मिन् अथ च विजृम्भन्तः करुणाः वृक्षविशेषाः यस्मिंस्तस्मिन् वने तु तस्य धर्मसूनोः जटासुरोऽधः अजनि जातः इत्याश्चर्यं विरोधश्च, जटासुरः अध इति पदच्छेदेन स्कन्धारोहणात् जटासुरः अधः अजनीत्यर्थस्वीकारेण विरोधपरिहारः ॥ ४० ॥

क्षितिपानुभावात् धर्मराजमाहात्म्यात् पदात्पदमपि गन्तुम् अनुष्णे मन्दे जङ्घे यस्य सः अयं सुरारिः जटासुरः 'अद्य वनसीमनि एतान् युधिष्ठिरादीन् नीत्वा हन्मि किंवा सहसा विचारमकृत्वा अत्रैव हन्मि' इति धिया बुद्ध्या तिष्ठन्निव आलक्ष्यत दृष्टः ॥ ४१ ॥

---

१ क. पर्यटति। २ क. ख. दुर्जटः। ३ क. ख. °दिशपथेन। ४ क. °सीम्नि सुदूर°।

मध्येमार्गं वनान्तान्मदगजगमने मारुतौ संमुखेऽस्मि-
न्सार्धं तेनाथ योद्धुं धृतरभसमनस्तीव्रदर्पप्रसारः ।
दैत्यस्तान्राजपुत्रान् क्षितितलमनयद्बाहुना स्कन्धमध्या-
त्क्रोधान्धोऽरत्निसीम्ना स पुनरनिलभूर्दारुणं तस्य शीर्षम् ॥ ४२ ॥
निपेतुषस्तस्य निकृत्तमूर्ध्नो नितान्तभारेण वनान्तभूमिः ।
निम्नाऽभवद्दूरममुष्य सङ्गे निजैः प्रतीकैरिव संकुचन्ती ॥ ४३ ॥
निष्कण्टकाऽभवत्सर्वा निहतेऽस्मिन्वनावनिः ।
उत्कण्टकाऽभवत्प्रीतेरुन्नत्या सा तु पार्षती ॥ ४४ ॥
ततस्ते श्वेताद्रिं चिरमधिवसन्तः कुरुवराः
सिताश्वस्य प्राप्त्या मुदमनुबभूवुर्निरवधिम् ।
कथाशेषीकारात्त्रिदशरिपुवर्गस्य बहुधा
धनुर्ब्रह्मोज्झत्वं शतमखभुजे स्थापितवतः ॥ ४५ ॥

---

वनान्तात् वनप्रदेशात् आगच्छति मध्येमार्गं मार्गस्य मध्ये मदयुक्तगजगमनवत् गमनं यस्य अस्मिन् मारुतौ भीमे संमुखे सति अथ अनन्तरं तेन सार्धं भीमेन सह योद्धुं धृतः रभसः क्रोधवेगो येन तादृशं मनो यस्य सः तीव्रदर्पस्य गर्वस्य प्रसारः विस्तरो यस्य सः दैत्यस्तान् राजपुत्रान् धर्मनकुलसहदेवान् स्कन्धमध्यात् बाहुना क्षितितलमनयत् क्षितितले स्थापयामासेत्यर्थः । पुनः सः अनिलभूः भीमः क्रोधेन अन्धः अविचारी सन् अरत्निसीम्ना प्रसृतकनिष्ठिकामात्रस्य हस्तस्याग्रेण तस्य दैत्यस्य दारुणं भयंकरं शीर्षं मस्तकं क्षितितलमनयत् । तस्य मस्तकं छित्त्वा क्षितितलमानयामासेत्यर्थः ॥ ४२ ॥

निकृत्तः छिन्नः मूर्धा मस्तकं यस्य तस्य निपेतुषः निपतितस्य जटासुरस्य नितान्तभारेण बहुभारेण वनान्तभूमिः दूरम् अत्यन्तं निम्ना गर्तरूपा अभवत् । भूमिमुत्प्रेक्षते, निजैः स्वीयैः प्रतीकैः अवयवैः संकुचन्तीव दुष्टदैत्यशरीरस्य स्पर्शो मा भूदिति अवयवसंकोचं कुर्वतीवेत्यर्थः । अन्यापि स्त्री चाण्डालादिस्पर्शभियाऽवयवसंकोचं करोति ॥ ४३ ॥

अस्मिन्दैत्ये निहते सति सर्वा वनावनिः वनभूमिः निष्कण्टका क्षुद्रदुष्टशत्रुरहिता अभवत्, सा पार्षती द्रौपदी तु प्रीतेः उन्नत्या आधिक्येन उद्गताः कण्टकाः रोमाञ्चाः यस्यास्तथाभूता अभवत् । दैत्यहननेन सर्वा वनभूमिः निष्कण्टका जाता द्रौपदी तु उदितकण्टका जातेति वाचो वैचित्र्यम् ॥ ४४ ॥

ततः जटासुरवधानन्तरं श्वेताद्रिं हिमाचलं चिरम् अधिवसन्तः ते कुरुवराः धर्मराजादयः सिताश्वस्य अर्जुनस्य प्राप्त्या संगमलाभेन निरवधिम् अमर्यादां मुदम् अनुबभूवुः । कथंभूतस्य सिताश्वस्य, त्रिदशरिपूणां निवातकवचकालकेयाद्यसुराणां वर्गस्य समूहस्य बहुधा बहुप्रकारेण कथायां शेषीकारात् वधाद्धेतोरित्यर्थः, शतमखस्य इन्द्रस्य भुजे धनुर्ब्रह्म धनुर्वेदम् उज्झति त्यजति सः धनुर्ब्रह्मोज्झः तस्य भावं शस्त्रविद्यात्यागमित्यर्थः, स्थापितवतः स्थिरीकृतवतः ॥ ४५ ॥

---

१ क. ख. 'मनास्ती' । २ द्वयोः सजातीयविरोधाभासयारत्र संसृष्टिः ।

तमनुक्रमभाषितेशयुद्धं स बहूकृत्य चलाचलेन मूर्ध्ना ।
नृपतिः सहजैः समं महाद्रेर्न्यवृतद्द्वैतवनं नितान्तहृष्टः ॥ ४६ ॥
नरेन्द्रपुत्राः सह याज्ञसेन्या न केवलं तत्र तपोधनानाम् ।
नेत्राणि जह्रुर्नियमैः कृशाङ्गा नेदीयसीनां वनवीरुधां च ॥ ४७ ॥

तदनु स खलु मानी सर्वसाम्राज्यलक्ष्मीं
प्रचिकटयिषुरेषां प्राप्तकार्श्योन्नतीनाम् ।
कुरुनृपतितनूजो घोषयात्रापदेशा-
दभजत बलसंघैरावृतस्तं वनान्तम् ॥ ४८ ॥

कर्णानिलैस्तत्र करिव्रजानां चलत्सु सर्वेषु चमूरजस्सु ।
रजस्तु चित्ताश्रितमस्य राज्ञो बलादिवाचञ्चलमेव तस्थौ ॥४९॥
तत्र रज्जुनहनस्य भाविनः स्थानसूचनकृती इवाङ्गदे ।
धारयन् भुजयुगेन कौरवः सैनिकान्स विबभाज पङ्क्तिशः ॥ ५० ॥

सः नृपतिः धर्मराजः अनुक्रमेण भाषितं कथितम् ईशस्य शिवस्य युद्धं येन तम् अर्जुनं चलाचलेन श्लाघायां सकम्पेन मूर्ध्ना मस्तकेन बहूकृत्य—अनेन शिवेन सह युद्धं कृतमिति—अत्यादरं कृत्वा नितान्तम् अत्यन्तं हृष्टः सन् सहजैः समं बन्धुभिः सह महाद्रेः हिमाचलात्सकाशात् द्वैतवनं न्यवृतत् निवृत्तः ॥ ४६ ॥

तत्र वने नियमैः कृशाङ्गाः याज्ञसेन्या द्रौपद्या सह नरेन्द्रपुत्राः पाण्डवाः केवलं तपोधनानां मुनीनां नेत्राणि स्वेषां रमणीयत्वात् नयनानि न जह्रुः न हृतवन्तः अपि तु नेदीयसीनाम् अतिसमीपवर्तिनीनां वनवीरुधां वनवल्लीनां नेत्राणि जटाः तन्तूनिति यावत् , जटादिबन्धनार्थं जह्रुः । 'स्याज्जटांशुकयोर्नेत्रम्' इत्यमरः ॥ ४७ ॥

तदनु तदनन्तरं खल्वित्याश्चर्ये, प्राप्ता कार्श्योन्नतिः संपदल्पतातिशयो यैस्तेषाम् एषां पाण्डवानां सर्वां साम्राज्यलक्ष्मीं सार्वभौमसंपदम् प्रचिकटयिषुः प्रकटयितुमिच्छुः मानी सः कुरुनृपतेः धृतराष्ट्रस्य तनूजः पुत्रो दुर्योधनः बलसंघैः सेनासमूहैः आवृतः सन् घोषयात्रायाः घोषस्थगोवृषभादिदर्शनार्थं गमनस्य अपदेशात् कपटात् तं वनान्तं द्वैतवनमध्यभागम् अभजत् प्रापत् । प्राप्तदारिद्र्याणां पाण्डवानां स्वसाम्राज्यलक्ष्मीं दर्शयितुं स्वकीयगोधनदर्शनव्याजेन तद्वनं प्राप्त इति भावः ॥ ४८ ॥

तत्र वने करिव्रजानां गजसमूहानां कर्णानिलैः कर्णचालनसमुत्थवायुभिः सर्वेषु चमूरजःसु सेनारेणुषु चलत्सु गच्छत्सु सत्सु अस्य दुर्योधनस्य चित्ताश्रितम् अन्तःकरणनिष्ठं रजः रजोगुणस्तु बलादिव अचञ्चलमेव चलनरहितमेव तस्थौ । वायुना सर्वसेनारजोगमनेऽपि सेनाधिपतेर्नृपस्य रजो न चलितं तत् बलान्न चलितं किमिति हेतूत्प्रेक्षा, श्लेषेण वाचो वैचित्र्यं च ॥ ४९ ॥

तत्र वने भाविनः गन्धर्वैः सह युद्धानन्तरं भविष्यतः रज्ज्वा नहनस्य स्थानसूचन-

१ क. अनुजैर्नृपतिः । २ क. खलमानी ।

अभ्रंलिहस्य वटभूमिरुहस्तलेऽसौ
स्थित्वाऽशृणोत्तदनु वैणिकगीतिरीतिम् ।
संगीतभङ्गिरसिकं सह बन्धुवर्गै-
राकारयन्निव सुराधिपगायकेन्द्रम् ॥ ५१ ॥

तावदस्य धार्तराष्ट्रस्य चेष्टितरौक्ष्यं निरीक्ष्य नितरां क्रुधान्धः सुधान्धःपतिनिदेशेन वनावनिदेशेऽवतीर्णस्तूर्णं विधृतकृपाणवाणचापकलापतनुत्रसेनश्चित्रसेनश्चिरं क्षुधितस्तरक्षुश्चमूरुततिमिव चमूममूं निवार्य क्ष्वेडया लोलयाश्चक्रे ॥ ११ ॥

भटेषु धावत्सु भयेन कर्णः क्रुधा हसन् कुञ्जरमञ्जुचारः ।
करेण विस्फारितकालपृष्ठो जगाम शत्रुं जगदेकवीरः ॥ ५२ ॥

स्वसमाननाम्न्यवयवे नटद्गुणाद्धनुषश्च्युतैः स युधि देवगायिनाम् ।
अतिरक्ततां गलतलैकवर्तिनीमखिले वपुष्यपि चकार सायकैः ॥ ५३ ॥

---

कृती इव—इदं स्थानमिति सूचके इव—अङ्गदे बाहुभूषणे भुजयुगेन धारयन् कौरवः दुर्योधनः सैनिकान् पङ्क्तिशः विबभाज विभागं कृतवान् । पङ्क्तिशो विभागस्तु अश्वारोहेषु अश्वारोहः, हस्तिपकेषु हस्तिपकः, धानुष्केषु धानुष्कः, खड्गिषु खड्गी इत्यादिर्ज्ञेयः ॥५०॥

तदनु असौ दुर्योधनः अभ्रंलिहस्य अत्युच्चस्य वटभूमिरुहः वटवृक्षस्य तले अधोभागे बन्धुवर्गैः सह स्थित्वा वैणिकानां वीणावादनशिल्पिनां गायकानां गीतिरीतिं गानपद्धतिम् अशृणोत् । किं कुर्वन्निव, संगीतस्य गानवादनस्य भङ्ग्यां रसिकं सुराधिपस्य इन्द्रस्य गायकेन्द्रं चित्रसेनगन्धर्वराजम् आकारयन्निव आह्वानं कुर्वन्निवेत्युत्प्रेक्षा ॥ ५१ ॥

यावद्गानं शृणोति तावत् अस्य धार्तराष्ट्रस्य दुर्योधनस्य चेष्टितरौक्ष्यं पाण्डवान् प्रति स्वसंपत्तिदर्शनेन लज्जेर्ष्यादिदानक्रियायाः पारुष्यं निरीक्ष्य नितराम् अत्यन्तं क्रुधा कोपेन अन्धः व्याप्त इत्यर्थः, सुधान्धसां देवानां पत्युः इन्द्रस्य निदेशेन आज्ञया वनावनिदेशे अवतीर्णः स्वर्गात् भूमितलमागतः तूर्णं शीघ्रं विधृता कृपाणाः खड्गाः बाणाश्च चापानि च कलापाः तूणीराश्च तनुत्राणि कवचानि च तेषां सेनासमूहो येन सः चित्रसेननामा गन्धर्वः अमूं चमूं सेनां निवार्य भर्त्सयित्वा क्ष्वेडया सिंहनादेन लोलयाश्चक्रे मूर्च्छया पातयामास । कः कामिव, चिरं क्षुधितः तरक्षुः व्याघ्रसदृशः पशुः चमूरुततिमिव हरिणसमूहमिव । यथा तरक्षुः हरिणसमूहं स्वशब्देन मूर्छति तद्वदित्यर्थः ॥ ११ ॥

भटेषु योधेषु भयेन गन्धर्वभयेन धावत्सु सत्सु जगति एकवीरः कुञ्जरस्येव मञ्जुः सुन्दरः चारो गमनं यस्य सः करेण विस्फारितं सशब्दं कृतं कालपृष्ठम् एतत्संज्ञकं स्वधनुर्येन सः कर्णः क्रुधा क्रोधेन हसन् सन् शत्रुं चित्रसेनं जगाम, निर्भयो जगामेति भावः ॥५२॥

सः कर्णः युधि युद्धे देवगायिनां देवगायकानां गन्धर्वाणां गलतले एकस्मिन्नवयवे

---

१ क. तस्य । २ ख. क्रुधेति नास्ति । ३ ख. 'वतीर्णविधृ' । ४ क. ख. चिरक्षुधिव' । ५ ख. सपदि ।

गगने शिरश्चलयतः श्रवोञ्चलाद्गलिताऽपि दूरमवतंसमञ्जरी ।
पुनरुन्नमद्भिरिषुपक्षवायुभिः पुरतोऽभवत्कलहजीविनो मुनेः ॥५४॥
हस्तैः प्रवीणैरखिलेऽपि कर्णे सुधां विमुञ्चन्सुरगायिवर्गः ।
अयुक्तमेतत्पुनरत्र कर्णे विषाक्तवर्षं विससर्ज घोरम् ॥ ५५ ॥

तदनुविश्वातिशायिनो विश्वावसुकुमारस्य शरगणेन सहजवकृते कृतपणवन्ध इव धावति राधेये क्रन्दत्सु कुरुवृन्देषु सर्वेऽपि गर्वेण गन्धर्वभटाः सुयोधनमायोधनधरणिमध्यभाजं रश्मिभिरववध्य गर्जन्तो रभसवर्जं निर्जरपथमनैषुः ॥ १२ ॥

नयत्स्वमुं वैरिषु नाकमार्गं विषादभाजां विपिने कुरूणाम् ।
तत्तादृशे व्रीडभरेऽपि तेषामुत्तानभावं न जहुर्मुखानि ॥ ५६ ॥

---

वर्तिनीं स्थितिमतीम् अतिरक्तताम् अतिसुस्वरतां धनुषः च्युतैः सायकैः अखिले वपुषि देहेऽपि चकारेति आश्चर्यम्, अतिशयेन रक्तं शोणितं यस्मिन् तत् अतिरक्तं तत्ताम् अखिले वपुषि चकारेति श्लेषेणाश्चर्यपरिहारः । कथंभूताद्धनुषः, स्वेन समानं नाम संज्ञा यस्य तस्मिन् अवयवे कर्णे इत्यर्थः, नटन् गुणो मौर्वी यस्य तस्मात् । आकर्णचापगुणाकर्षणेन क्षिप्तैर्बाणैरिति भावः ॥ ५३ ॥

युद्धश्लाघाक्रियायां गगने शिरश्चलयतः कलहजीविनः कलहप्रियस्य मुनेः नारदस्य श्रवोञ्चलात् कर्णाग्रात् दूरं गलिताऽपि पतिताऽपि अवतंसमञ्जरी कर्णावतंसमन्दारादिपुष्पमञ्जरी उन्नमद्भिः ऊर्ध्वं गच्छद्भिः इषूणाम् ऊर्ध्वगामिनां कर्णवाणानां पक्षवायुभिः पुनः पुरतः ऊर्ध्वगत्या पूर्वस्थले कर्णे अभवत् । वहुयुद्धदर्शी नारदोऽपि युद्धश्लाघां चकारेति भावः ५४॥

प्रकृष्टाः वीणाः येषु तैः कुशलैश्च हस्तैः अखिलेऽपि कर्णे जात्यभिप्रायेणैकवचनम् । कर्णेष्वित्यर्थः, सुधां विमुञ्चन् प्रक्षिपन् सुरगायिवर्गः गन्धर्वसमूहः अत्र अस्मिन् कर्णे पुनः घोरं भयङ्करं विषाक्तवर्षं विषदिग्धवर्षणं वृष्टिं विससर्ज । एतद् अयुक्तं; कर्णे अवयवे सुधां सुधासदृशमधुरस्वरं विसृजन् अस्मिन् शत्रौ कर्णे विषाक्तवर्षं विषदिग्धबाणवृष्टिं विससर्जेत्यर्थस्वीकारे युक्तमेवेति वेद्यम् ॥ ५५ ॥

तदनु विश्वस्मिन् अतिशायिनो विश्वावसोः कुमारस्य चित्रसेनगन्धर्वस्य शरगणेन सहजवकृते सहजवार्थं युष्माकं मम च समान एव जव इति कृतः पणवन्धो येन तस्मिन्निव राधेये कर्णे धावति युद्धात्पलायमाने सति कुरूणां वृन्देषु क्रन्दत्सु सत्सु च सर्वेऽपि गन्धर्वभटाः आयोधनधरण्याः युद्धभूम्याः मध्यभाजं मध्यवर्तिनं सुयोधनं रश्मिभिः अववध्य गर्जन्तः हर्षशब्दं कुर्वन्तः सन्तः रभसवर्जं मन्दं यथा तथा निर्जरपथं गगनमार्गम् अनैषुः नीतवन्तः ॥ १२ ॥

विपिने अरण्ये वैरिषु गन्धर्वेषु अमुं सुयोधनं नाकमार्गम् आकाशमार्गं प्रति नयत्सु

---

१ क. भोजिनः । २ क. विपाठवर्षम् । ३ ख. वर्गम् । ४ क. चेत्यधिकम् । ५ ख. रज्जुभिर° । ६ क. दृशि ।

तस्यान्तःपुरसुभ्रुवो विगलितैर्बाष्पाम्बुभिः पङ्किले
मार्गे मन्दितवेगपादगतयो वक्षःस्खलत्पाणयः ।
आजग्मुस्तमजातशत्रुमजहत्कारुण्यमङ्घ्रिद्वये
कुर्वन्त्यो नमितं ह्रियैव पुरतो दत्तार्धसाह्यं शिरः ॥ ५७ ॥

सगद्गदमेवमभिदधुश्च ॥ १३ ॥

संद्रष्टुं तव पादमूलमधुना सर्वैः समं बन्धुभि-
र्देव भ्रातरमागतं वनतले लेशेन हेतोर्विना ।
पापः कश्चन गायको दिविषदां हा हन्त बद्ध्वा दृढं
निशङ्कैरुपवीणितो निजभटैरभ्रं नयत्युच्चकैः ॥ ५८ ॥

तदद्य नः कण्ठभुवि स्नुषाणां तवैवपादं शरणं गतानाम् ।
वास्तव्यतां मङ्गलसूत्रिकायाः प्रसीद दातुं प्रथमानकीर्ते ॥ ५९ ॥

---

सत्सु विषादभाजां दुःखिनां तेषां कुरूणां मुखानि तत्तादृशि तस्मिन् अनिर्वाच्ये व्रीडाभरेऽपि लज्जातिशयेऽपि उत्तानभावं न जहुः न तत्यजुः । लज्जयाऽधोमुखे कर्तव्येऽपि केन मार्गेण कथं नीयते इति दर्शनार्थं केवलमूर्ध्वं ददृशुरिति भावः ॥ ५६ ॥

विगलितैः वाष्पाम्बुभिः पङ्किले पांसूदकयोर्योगात् कर्दमवति मार्गे मन्दितः वेगो यस्याः तादृशी पादानां गतिर्यासां ताः वक्षस्सु उरस्थलेषु स्खलन्तः पतन्तः पाणयो यासां ताः दुःखेन उरस्ताडयन्त्य इत्यर्थः, तस्य दुर्योधनस्य अन्तःपुरसंवन्धिन्यः सुभ्रुवः सुन्दर्यः भार्या इत्यर्थः, न जातः शत्रुः शत्रुभावो यस्य तं यस्य कस्मिन्नपि शत्रुभावो नासीदित्यर्थः, न जहत् न त्यजत् कारुण्यं करुणा यं तं कारुण्यमेव यं न त्यजतीत्यर्थः, तं धर्मराजम् अङ्घ्रिद्वये पादयुग्मे पुरतः आदौ ह्रियैव लज्जयैव दत्तम् अर्धसाह्यम् यस्मिन्कर्मणि यथा भवति तथा नमितं कुर्वत्यः सत्यः आजग्मुः । स्वभर्तृमोचनार्थं शत्रुं प्रति शरणागमने लज्जयैव नमितं शिरस्तस्य करुणोत्पादनार्थं प्रति नमितमिति भावः ॥५७॥

सगद्गदं दुःखातिशयादस्पष्टाक्षरं यथा तथा एवं वक्ष्यमाणप्रकारेण अभिदधुः ऊचुश्च ॥ १३ ॥

'हे देव राजन् ! अधुना तवैव पादमूलं संद्रष्टुं सर्वैः भ्रातृभिः समम् अरण्ये आगतं भ्रातरं वन्धुं दुर्योधनं पापः पापी कश्चन कश्चित् दिविषदां देवानां गायकः गन्धर्वः हा इति खेदे, हन्त इति अनुकम्पायां, हेतोः अपराधरूपकारणस्य लेशेन विना दृढं यथा तथा बद्ध्वा उच्चकैः अभ्रम् आकाशं नयति । कथंभूतो गायकः, निःशङ्कैः एतन्मोचनार्थं पश्चात्कश्चिदायास्यतीति शङ्कारहितैः निजभटैः स्वकीयसेवकगन्धर्वयोधैः उपवीणितः वीणाशब्देन सह स्तुतः, उच्चकैः स्तुत इति वा संवन्धः ॥ ५८ ॥

प्रथमाना महती कीर्तिर्यस्य तत्संबुद्धौ हे प्रथमानकीर्ते ! तत्तस्मात् अद्य तवैव पादं शरणं रक्षितारं गतानां प्राप्तानां स्नुषाणां ज्येष्ठभ्रातुः पितृतुल्यत्वात् तव स्नुषाणां नः अस्माकं

---

१ ख. 'पुरस्थं' । २ अत्राजहत्कारुण्यस्य कौरवीणां धर्मराजप्राप्तिहेतुत्वात् काव्यलिङ्गभेदः ।

इति ताभिर्दीनभावं पुरोधाय निवेदितस्य राज्ञो निदेशेन निर्गत्य सत्वरमनुधावतां भ्रूदण्डमिव कोदण्डमपि कोपेन कुटिलीकुर्वतां भीमप्रभृतीनां क्ष्वेडितविस्फाराभ्यां तत्क्षणं वियदखिलं विकस्वरं निजगुणमासीत् ॥ १४ ॥

अर्जुनस्त्वेवमुवाच—

क्व गायका यूयमुपात्तवीणाः क्व चापधुर्याः कुरुवंशभूपाः।
अहो रणे चापलमीदृशं वः स्वमूलकं वा परमूलकं वा ॥ ६० ॥
वृषाङ्कमौलेर्व्रणचिह्नदायी वनेऽर्जुनोऽस्मिन्वसतीति वार्ता।
पपात कर्णे भवतां न किंस्विद्यदीदृशं साहसमातनुध्वे ॥ ६१ ॥
भ्राताऽधुनाऽसौ न विसृज्यते चेत्तथाऽत्र संनह्यतु गाण्डिवो मे।
यथा महेन्द्रः परिगृह्य वाणीं स्वबाहुकीर्तिं स्वयमेव गायेत् ॥६२॥

---

मङ्गलसूत्रिकायाः कण्ठभुवि कण्ठदेशे वास्तव्यतां स्थितिं दातुं प्रसीद। गन्धर्वजयेन तज्जीवदाने कृतेऽस्मत्सौभाग्यस्य स्थैर्यं भविष्यति, तद्भवता कृपया कर्तव्यमिति भावः'॥५९॥

ताभिः स्त्रीभिः इति पूर्वोक्तं दीनभावं पुरोधाय अग्रतः कृत्वा निवेदितस्य कृतवृत्तान्तनिवेदनस्य राज्ञः धर्मराजस्य निदेशेन आज्ञया सत्वरमनुधावतां भ्रूदण्डम् इव कोदण्डमपि कोपेन कुटिलीकुर्वतां—भ्रूदण्डस्य कुटिलीकरणं वक्रीकरणं, कोदण्डस्य गुणारोपणेन नमनं,—भीमप्रभृतीनां चतुर्णां क्ष्वेडितविस्फाराभ्यां सिंहनादधनुर्ज्याशब्दाभ्यां कृत्वा तत्क्षणम् अखिलं वियत् आकाशं विकस्वरः वृद्धिं प्राप्तः निजगुणः शब्दो यस्मिन् तथाभूतमासीत्। आकाशं सिंहनादधनुर्ज्याशब्दाभ्यां व्याप्तमासीदिति भावः ॥ १४ ॥

अर्जुनस्तु एवं वक्ष्यमाणम् उवाच—'उपात्ताः गृहीताः वीणाः यैस्ते यूयं गायकाः क्व। चापधुर्याः चापविद्यायां प्रवीणाः कुरुवंशभूपाः क्व। युष्माकमस्माकं च महदन्तरमिति भावः। अहो इत्याश्चर्ये। रणे युद्धे वः युष्माकम् ईदृशं चापलं स्वपरबलमनालोच्य साहसकर्म स्वम् आत्मा मूलं कारणं यस्य तथाभूतम्, अथवा परः मूलं यस्य तथाभूतं, स्वबुद्ध्या कृतमथवा परबुद्ध्या कृतमिति प्रश्नः ॥ ६० ॥

वृषाङ्कमौलेः शिवमस्तकस्य व्रणमेव चिह्नं तद्ददाति सः—युद्धे सदाशिवमस्तके व्रणकर्ता महावीर इत्यर्थः, अर्जुनः अस्मिन् वने वसति इति वार्ता भवतां कर्णे न पतिता किंस्वित्। यद्यस्मात् यूयम् ईदृशं साहसं स्वशक्त्यपेक्षया अधिकम् अस्मद्बन्धुबन्धनकर्म आतनुध्वे। यद्यस्मिन्वनेऽस्मद्वासवार्ता श्रुता स्यात्तर्हि इदं साहसं कर्म भवद्भिर्न कृतं स्यादिति भावः ॥ ६१ ॥

अधुना असौ भ्राता अस्मद्बन्धुः सुयोधनः न विमुच्यते चेत्तर्हि अत्र मे गाण्डीवनामा चापः तथा तेन प्रकारेण सन्नह्यतु युद्धार्थं सन्नद्धो भवतु, यथा येन प्रकारेण महे-

---

१ क. ख. क्ष्वेलित°। २ क. 'खरनिजगु°'। ३ क. जनः। ३ अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थं प्रति हेतुत्वात्काव्यलिङ्गम्।

इति विजयस्य वीरवादेन पुनरपि निवर्तमानैर्वीणामंसेषु निबध्य बाणासनमेव [1]कूजद्भिस्तैर्नभश्चरैः [2]सममेषां सकलवैमानिकपरिषदङ्गरुहवितीर्णनिद्राभङ्गो महान्संगरोऽभूत् ॥ १५ ॥

गम्भीरगाण्डिवगुणाद्गलितैः पृषत्कै-
गण्डस्थले हृदि भुजे गमितव्रणास्ते ।
गर्वं विहाय चकिता गगनान्तराले
गन्धर्वभावसदृशं गमनं वितेनुः ॥ ६३ ॥

वीणाः समस्ता विजयेन कृत्ता
गन्धर्वसैन्याद्गलिता बभूवुः ।
आयुष्मती केवलमास लोके
हस्ताग्रवीणा दिवि नारदस्य ॥ ६४ ॥

एतावतीति युधि मार्गणचारशक्तिः
स्पर्धीवभूव सुरगायकपाण्डवानाम् ।

---

न्द्रः वीणां परिगृह्य स्वबाहुकीर्तिं स्वयमेव गायेत् गास्यति । मया क्रोधेन जगति निर्गन्धर्वे कृते सति स्वर्गे गायकाभावात् स्वकीर्तिं स्वयमेव गास्यतीति भावः' ॥ ६२ ॥

इति विजयस्य शत्रुपराभवकर्तुः अर्जुनस्य वीरवादेन—अस्मिन् जगति अहमेक एव वीरः—इतिसूचकभाषणेन पुनरपि निवर्तमानैः वीणाम् अङ्केषु स्कन्धेषु निबध्य बाणासनमेव धनुरेव कूजयद्भिः वादयद्भिः नभश्चरैः गगने तिष्ठद्भिः तैर्गन्धर्वैः समम् एषां पाण्डवानां महान् संगरः संग्रामः अभूत् । कथंभूतः संग्रामः, सकलानां वैमानिकानां विमानचारिणां देवानां परिषदः समूहस्य यानि अङ्गरुहाणि लोमानि तेषां वितीर्णः दत्तः निद्राभङ्गो येन सः । यमद्भुतं संगरं दृष्ट्वा सकलदेवानामङ्गेषु रोमाञ्चोत्पत्तिर्जातेति भावः ॥ १५ ॥

गम्भीरात् दृढात् गाण्डिवगुणात् गलितैः निर्गतैः पृषत्कैः बाणैः गण्डस्थले कपोलस्थले हृदि भुजे च गमितव्रणाः प्रापितव्रणाः ते गन्धर्वाः चकिताः भीताः सन्तः गर्व—गगनचारिणां देवानामस्माकं मनुष्याः किं करिष्यन्तीति—गर्वं विहाय संत्यज्य गगनान्तराले गगनमध्ये गन्धर्वभावसदृशं गन्धर्वत्वानुरूपं गमनं वितेनुः चक्रुः । युद्धं त्यक्त्वा गगने पलायनं चक्रुरित्यर्थः । तत्पलायनं गन्धर्वत्वानुरूपं श्लेषेण अश्वत्वानुरूपम्, अश्ववत् अतिजवेन पलायनं चक्रुरिति भावः । 'वाजिवाहार्वगन्धर्व—' इत्यमरः ॥ ६३ ॥

विजयेन अर्जुनेन कृत्ताः छिन्नाः समस्ताः वीणाः गन्धर्वसैन्यात् गलिताः भुवि पतिताः बभूवुः । दिविलोके स्वर्गलोके नारदस्य हस्ताग्रवीणा हस्ताग्रस्थिता वीणा केवलम् आयुष्मती छेदरहिता आस आसीत् ॥ ६४ ॥

युधि सुरगायकानां गन्धर्वाणां पाण्डवानां च मार्गणचारशक्तिः बाणगमनशक्तिः एता-

---

१ क. करे इत्यधिकम् । २ क. तैरित्यधिकम् । ३ क. निपेतुः । ४ क. ख. आलुलोके । ५ अत्रेन्द्रकर्तृकवीणादानरूपाप्रस्तुतकार्यवर्णनेन गन्धर्ववधस्य प्रस्तुतस्य प्रतीतेः कार्यनिबन्धनाऽप्रस्तुतप्रशंसाभेदः । ६ अत्रातिशयोक्तिः स्पष्टा ।

तेषां ययुः शरकुलानि हि लक्ष्य-
मात्रं लक्ष्यं विभिद्य पुनराययुरस्तमेषाम् ॥ ६५ ॥

तत्र शक्रसुतस्य तादृशं विक्रममभिनन्द्य कृतसंधानेन गन्धर्वराजेन समर्पितं पौरुषहीनमिदं न पुरस्करणीयमिति वन्धमिषेण पश्चादुपनीत-बाहुयुगुलं सुयोधनमादाय ते भीमादयो वसुधाधिपस्य सन्निधिमधि-रोपयामासुः ॥ १६ ॥

तं वीक्ष्य तत्र तरुमावरणं भजन्ती
सा पार्षती सविधवल्लिपरंपरासु।
हासैः कराङ्गुलिविलादसकृद्गलद्भि-
राकालिकीं कुसुमपङ्क्तिमिव व्यतानीत् ॥ ६६ ॥

वीरव्रातैस्त्रिभुवनभवैः संस्तुते नः कुलेऽस्मि-
न्नुद्भूय त्वं बहुभिरनुजैरास्थितोऽप्याधिपत्यम्।
एवं भङ्गं किमिह भजसे वत्स नीचैः प्रणीतं
राजन्यानां परपरिभवो राजयक्ष्मा हि कीर्तेः ॥ ६७ ॥

---

व्रती इयत्प्रमाणा इति स्पष्टीवभूव। कथं तदाह, हि यतः तेषां गन्धर्वाणां शरकुलानि वाण-समूहाः लक्ष्यमात्रं ययुः, एषां पाण्डवानां शरकुलानि लक्ष्यं विभिद्य पुनः अन्तं स्वसमी-पभागं ययुः। गन्धर्ववाणैः पाण्डवानां व्रणाः न जाताः पाण्डववाणैः गन्धर्वाणां देहभेदप-र्यन्तं व्रणा जाता इति भावः ॥ ६५ ॥

तत्र शक्रसुतस्य अर्जुनस्य तादृशं विक्रमं पराक्रमम् अभिनन्द्य श्लाघित्वा कृतं संधानम् अर्जुनेन सह संधिर्येन तेन गन्धर्वराजेन समर्पितं पौरुषहीनं पराक्रमहीनम् इदं पुरस्कर-णीयम् अग्रतः करणीयं न भवतीति बन्धमिषेण पश्चात्पृष्ठभागे उपनीतं कृतं बाह्वोर्युगलं यस्य तं सयोधनम् आदाय ते भीमादयः वसुधाधिपस्य धर्मराजस्य सन्निधिम् अधिरो-पयामासुः स्थापयामासुः। तादृशं गन्धर्वकृतवन्धनयुक्तमेव सुयोधनम् अग्रतः स्थापया-मासुरिति भावः ॥ १६ ॥

तत्र आश्रमे तरुं वृक्षम् आवरणम् आत्मनः आच्छादकं भजन्ती स्वीकुर्वती सा पार्षती द्रौपदी तं तथा बद्धं सुयोधनं वीक्ष्य कराङ्गुलिविलात् हास्याच्छादनार्थं मुखे लापि-तयोः करयोः अङ्गुलिसंधिच्छिद्रात् असकृत् मुहुर्मुहुः गलद्भिः हासैः सविधवल्लीनां समीप-स्थलतानां परंपरासु आकालिकीम् अकाले उत्पत्तिनाशशालिनीं कुसुमपङ्क्तिं व्यतानीदिव अकार्षीदिव। हासानां शुभ्रत्वात् कुसुमपङ्क्तिविस्तारणोत्प्रेक्षा ॥ ६६ ॥

तदानीं सुयोधनं प्रति धर्मराजोक्तिमाह—वीरेति। हे वत्स! त्वं त्रिभुनभवैः वीराणां व्रातैः समूहैः संस्तुते, विश्रुते इति पाठे विशेषेण श्रुते, अस्मिन् नः कुले बहुभिः अनुजैः कनिष्ठबन्धुभिः सह उद्भूय उत्पद्य आधिपत्यं राजाधिपत्यम् आस्थितोऽपि प्राप्तः सन्नपि

---

१ क. वन्धनमि°। २ क. प्रत्यनयम्। ३ क. °तले विश्रुते, ख. विश्रुते। ४ क. उत्पद्य।

इत्थं निगद्य सरलेन युधिष्ठिरेण
बन्धाद्विमोच्य बकविद्विषता विसृष्टः ।
मानं च्युतं मृगयमाण इवातिनम्रो
वाचंयमेन स ययौ महता बलेन ॥ ६८ ॥

यं प्रायं बहु मन्यन्ते जना जीवितुमुत्सुकाः ।
उपाविक्षत्तमेवासौ पथि प्राणान् समुज्झितुम् ॥ ६९ ॥

तस्मिन् व्रते स्वपनलब्धसुरारिसाह्य-
स्त्यागे तनोस्तदनु बन्धुतया निषिद्धः ।
तस्माद्वनात्पुनरपि प्रतिपद्य धैर्यं
घुष्यद्बलो निववृते कुरुराजधानीम् ॥ ७० ॥

तत्र खलु—

कदाऽपि मा बन्धय गायकैर्मामितीव हर्म्यैरमृतायमानैः ।

---

इह लोके नीचैः अल्पैः प्रणीतं कृतम् एवम् एतादृशं बद्धानयनरूपं भङ्गं पराभवं किं भजसे कुतो भजसि । हि यतः राजन्यानां क्षत्रियाणां परस्मात् शत्रोः सकाशात् परिभवः कीर्तेः राजयक्ष्मा क्षयरोगः, कीर्तिनाशक इत्यर्थः। अस्मत्कुलभवस्य तव पराजयेनास्मत्कीर्तिनाशभयात्तव मोचनं कृतमिति भावः ६७ ॥

सरलेन ऋजुबुद्धिना युधिष्ठिरेण इति निगद्य उक्त्वा बकविद्विषता बकासुरशत्रुणा भीमेन प्रयोज्यकर्त्रा बन्धाद्विमोच्य मोचयित्वा विसृष्टः गच्छेत्युक्तः स दुर्योधनः च्युतं गलितं मानम् अभिमानं मृगयमाण इव अन्विष्यन्निव अतिशयेन नम्रः लज्जया नतः सन् वाचंयमेन निःशब्देन महता बलेन सैन्येन सह ययौ जगाम। अन्योऽपि गतं पदार्थं मृगयितुं नतो भूत्वाऽधोदृष्ट्या पश्यन् गच्छति ॥ ६८ ॥

जीवितुमुत्सुकाः उत्कण्ठिताः जनाः यं प्रायं बहु मन्यन्ते बहु मानयन्ति असौ दुर्योधनः पथि मार्गे प्राणान् समुज्झितुं त्यक्तुं तमेव प्रायम् उपाविक्षत् अशिश्रियत्। इति विरोधः, पूर्वार्धे प्रकृष्टः आयः शुभदैवम्, उत्तरार्धे प्रायं मरणपर्यन्तमनशनव्रतमिति विरोधपरिहारः ॥ ६९ ॥

तस्मिन् व्रते मरणपर्यन्तानशनव्रते स्वपने स्वप्ने लब्धं सुरारीणां दैत्यानां साह्यम् 'त्वमिदमनशनव्रतं त्यक्त्वा युद्धोद्योगं कुरु। तत्र वयं सहाया भविष्यामः' इतिवचनरूपं सहायं येन सः तदनु तदनन्तरं बन्धुतया बन्धुसमूहेन तनोः शरीरस्य त्यागे विषये निषिद्धः दुर्योधनः पुनरपि धैर्यं प्रतिपद्य प्राप्य घुष्यत् गर्जत् बलं सैन्यं यस्य तथाभूतः सन् तस्मात् वनात् कुरुराजधानीं हस्तिनापुरीं निववृते निवृत्तः ॥ ७० ॥

तत्र राजधान्यां खलु—

अथ अभिमानी सः दुर्योधनः 'कदापि गायकैः गन्धर्वैः मां मा बन्धय' इति हेतो-

---

१ क. ख. बहुमिच्छन्ति ।

संप्रीणयन्निन्द्रमथाभिमानी स पौण्डरीकं क्रतुमाजहार ॥ ७१ ॥

भूयोऽपि तां वनभुवं प्रविहाय भेजे
भूयः स काम्यकतपोवनमण्डलानि ।
किर्मीरनाशमुदिताखिलतापसौघ-
स्वाध्यायघोषमुखरीकृतदिङ्मुखानि ॥ ७२ ॥

मृदुभिर्नववल्लिकन्दमूलैर्विहितातिथ्यविधिः स तत्र पार्थः ।
स्थितिमाचरति स्म हृष्टचेतास्तृणविन्दोर्वचने तपोवने च ॥ ७३ ॥

प्रासूत या सदसि पट्टपटीरसंख्याः
सैषा समागतवतीति सकौतुकाक्ष्यः ।
वेणीधरामुटजसीमनि याज्ञसेनीं
विस्मित्य वल्कलवसं ददृशुर्गृहिण्यः ॥ ७४ ॥

तत्तादृक्षे करे स्याद्विविधवनभवं कन्दमूलोपहारं
दातुं लज्जापयोधेस्तलमभिममृशुर्धर्मदारा मुनीनाम् ।

---

वि अमृतायमानैः अमृततुल्यैः हव्यैः होमद्रव्यैः इन्द्रं संप्रीणयन् सम्यक्प्रीतिमुत्पादयन् पौण्डरीकं क्रतुं यज्ञम् आजहार चकार ॥ ७१ ॥

सः धर्मराजः भूयोऽपि पुनरपि तां वनभुवं द्वैतवनभुवं प्रविहाय त्यक्त्वा काम्यकतपोवनस्य मण्डलानि भूयः बहुतरं यथा तथा भेजे सिषेवे । कीदृशानि मण्डलानि, किर्मीरस्य राक्षसस्य नाशेन भीमकृतवधेन मुदितानां हृष्टानाम् अखिलानां तापसौघानां स्वाध्यायघोषैः मुखरितानि सशब्दीकृतानि दिङ्मुखानि दिक्प्रारम्भाः येषु तानि ॥७२॥

तत्र वने मृदुभिः नवैः वल्लीनां कन्दमूलैः विहितः आतिथ्यविधिः अतिथिसत्कारविधिर्यस्य सः पार्थः धर्मराजः हृष्टचेताः सन् तृणविन्दोः ऋषेः वचने आज्ञायां, तपोवने च स्थितिम् अनुवर्तनं, वासं च आचरति स्म चकार ॥ ७३ ॥

'या असंख्याः पट्टपटीः कौशेयवस्त्राणि प्रासूत स्वशरीरादुत्पादयामास सा एषा स्त्री समागतवती अत्रागता' इति सकौतुकानि दर्शने उत्सुकानि अक्षीणि यासां ताः -हिण्यः तापसपत्न्यः उटजसीमनि पर्णशालापरिसरे वेणीधरां तैलादिसंस्काररहितैकवेण्याः धारयित्रीं, वल्कलं वृक्षत्वचं वस्ते परिधत्ते तथाभूतां याज्ञसेनीं द्रौपदीं विस्मित्य विस्मयं प्राप्य ददृशुः । या अमूल्यानेकवस्त्रप्रसवित्री सा इदानीं वल्कलं परिधत्ते । कोऽयं विधेश्चमत्कारः । इत्याश्चर्येण ददृशुरिति भावः ॥ ७४ ॥

मुनीनां धर्मदारा धर्मपत्न्यः तस्मिन् तादृक्षे लोकविलक्षणे अस्याः द्रौपद्याः करे द्विविधं द्विप्रकारं यत् वनम् उदकम्, अरण्यं च तस्मिन् भवति तादृशम् उदकभवम् अरण्यभवं च कन्दमूलोपहारं कन्दमूलरूपोपायनं दातुं लज्जापयोधेः लज्जासमुद्रस्य तलम् अधोभागम् अभिममृशुः पस्पृशुः, लज्जासमुद्रे मग्ना बभूवुरित्यर्थः । करस्य लोकवैलक्षण्यमाह—

---

१ क. ख. भूपोऽपि । २ क. ऽस्या विवि॰ ।

यस्य स्पर्शानुभावादविरतमुदितैः पायसैरेव दिव्यैः
किंचिद्भाण्डं वनान्ते तनुमतिथिजनस्यातनोदन्यथार्थाम् ॥ ७५ ॥

तत्रान्तरे—

दिशि दिशि मृगयायै तेषु यातेषु जातु
स्वयमुटजमवाप्तः सोमकेन्द्रस्य पुत्र्याः ।
लपनशशिमहिम्ना लङ्घयामास वेलां
तरलितमकराङ्कस्तत्क्षणं सिन्धुराजः ॥ ७६ ॥

ततः क्रन्दन्तीं कुररीमिव निन्दन्तीमेनां पुरस्तादधिरोप्य सूतकरतोत्रदण्डाध्यापितवेगतन्त्रपारीणरथ्येन घनतरतज्जघनपयोधरभाराक्रमणविनम्रीभूतपूर्वभागतया पार्थदर्शनशङ्कया निकुञ्जीभूयेव धावता शताङ्गेन निमिषचूषितपरिणाहवनीपथं जयद्रथं पुनरप्याश्रमपदमाश्रित्य निशामितप्रमदावार्तेन दावार्तेनेव पूर्वजेन नियुक्तौ जटारिकिरीटिनौ रोषविद्रुमलताकिसलयैरिव लोचनैः शरासनमवकीर्य मृगयाविहारनिवृत्तमात्रेण चरणेन द्रुतमन्वदुद्रुवताम् ॥ १७ ॥

यस्येति । वनान्ते वनमध्ये किंचित् किंचन भाण्डं पात्रं यस्य करस्य स्पर्शानुभावात् अविरतम् अजस्रम् उदितैः उत्पन्नैः दिव्यैः अलौकिकैः पायसैरेव पयोविकारपरमान्नैरेव अतिथिजनस्य तनुं देहम् अन्यथार्थां विपरीतार्थाम् अतनुमित्यर्थः, अतनोत् अकरोत् । तनुं पुष्टामकरोदित्यर्थः ॥ ७५ ॥

तत्रान्तरे तस्मिन् समये—

जातु कदाचित् तेषु पाण्डवेषु मृगयायै मृगयार्थं दिशि दिशि यातेषु गतेषु सत्सु स्वयम् उटजं पाण्डवपर्णशालाम् अवाप्तः प्राप्तः सोमकेन्द्रस्य द्रुपदस्य आत्मजायाः द्रौपद्याः लपनशशिनः मुखचन्द्रस्य महिम्ना अनुभासा तरलितः क्षुब्धः मकराङ्कः मदनो यस्मिन् सः, अन्यत्र तरलिताः मकराः ग्राहाः अङ्काः चिह्नानि यस्य सः सिन्धुराजः सिन्धुदेशस्वामी जयद्रथः, समुद्रश्च तत्क्षणं तस्मिन् क्षणे वेलां मर्यादां तीरं च लङ्घयामास ॥ ७६ ॥

तत्र उटजे कुररीमिव पक्षिणीविशेषमिव क्रन्दन्तीं क्रोशन्तीं निन्दन्तीं तन्निन्दां कुर्वन्तीम् एनां द्रौपदीं पुरस्तात् अग्रभागे आरोप्य शताङ्गेन रथेन निमिषेण निमिषमात्रकालेन चूषितः पीतः परिणाहो दीर्घता यस्य तथाभूतः वनीपथः वनमार्गो यस्य तं जयद्रथं प्रति जटारिकिरीटिनौ भीमार्जुनौ रोष एव विद्रुमलता प्रवालवल्ली तस्याः किसलयैरिवेत्युत्प्रेक्षा, लोचनैः शरासनम् अवकीर्य अभिवृष्य ग्रहणार्थं विलोक्येति भावः । मृगयावि-

१ क. ख. नास्तीदम् । २ क. सोमकेन्द्रात्मजायाः । ३ ख. रुदतीम् । ४ क. तदिति नास्ति । ५ क. कृत° । ६ क. पार्थेनेत्यधिकम् । ७ क. विकीर्य । ८ क. विहारेति नास्ति । ९ क. अन्वद्रवताम् । १० अत्रोत्तरवाक्यार्थस्य लज्जापयोधिमज्जनहेतुत्वात्काव्यलिङ्गम् । अस्य चास्यौदार्यवर्णनात्मकोदात्तालंकारेण सहैकावाचकानुप्रवेशात्संकरः । ११ अत्र चन्द्रचन्द्रिकया आकुलितग्राहं समुद्रस्य कूललङ्घनरूपमर्थान्तरं ध्वनिरेव 'सर्वत्राद्वये नान्त्ये' इत्यनेन श्लेषनिषेधात् ।

ततः क्षणादेव कर्णपूरवनकुसुमसौरभजिघ्रत्सिञ्जिनीकेन धनञ्जयेन सपत्राकृतो धृतत्रासतया विद्यामिव विनयविपर्ययः कृष्णां विमुच्य कृतपलायनः स दुर्मेधाः पुरःप्रधावितेन मागधविरोधिना रुरुधे ॥१८॥

कचे गृहीत्वा भुवि पातितस्य कठोरचारित्रपरस्य शत्रोः ।
संताडने मारुतिरात्मपाणेः सच्छात्रयामास पदं च वामम् ॥७७॥

सौवीरभर्तुरथ मूर्धनि पञ्चचूडाः
क्लृप्ताः क्षुरेण पवनात्मभुवा विरेजुः ।
इङ्गालधूमकलिका इव शाम्यतोऽन्त-
स्त्रासाम्बुभिः स्मरशरानलपञ्चकस्य ॥ ७८ ॥

---

द्वारात् निवृत्तमात्रेण चरणेन द्रुतं शीघ्रम् अन्वद्रुद्रुवतां पश्चादधावताम्, आश्रमप्रवेशं कृत्वे-वान्वधावतामिति भावः । कीदृशेन शताङ्गेन, सूतस्य सारथेः करे यः तोत्रदण्डः तेन अध्यापितस्य पाठितस्य वेगतन्त्रस्य वेगशास्त्रस्य पारदृश्वानः पारद्रष्टारः रथ्याः अश्वाः यस्य तेन, सूतकशाघातात् धावदश्वेनेत्यर्थः । पुनः कथं० सूतेन, घनतराणां गुरुतराणां तस्याः द्रौपद्याः जघनपयोधराणां कटिपुरोभागस्तनानां भारस्याक्रमणेन विनम्रीभूतः पूर्वभागो यस्य तस्य भावः तत्ता तया पार्थदर्शनशङ्कया पार्थाः द्रक्ष्यन्तीति शङ्कया निकुब्जीभूयेव नम्रो भूत्वैव धावता । भारेण रथस्य नम्रतायां दर्शनशङ्कया कुब्जीभवनोत्प्रेक्षा । कीदृशौ जटा-रिकिरीटिनौ, पुनरपि आश्रमपदम् आश्रित्य प्राप्य निशमिता श्रुता प्रमदायाः द्रौपद्याः वार्ता येन तेन दावार्तेनेव दावाग्निना पीडितेनेव पूर्वजेन ज्येष्ठबन्धुना नियुक्तौ आज्ञप्तौ १७

ततः क्षणादेव कर्णपूरं कर्णावतंसं यत् वनकुसुमं तस्य सौरभं सुगन्धं जिघ्रन्ती सि-ञ्जिनी मौर्वी यस्य तेन आकर्णमाकृष्टगाण्डीवेनेत्यर्थः, धनञ्जयेन अर्जुनेन सपत्राकृतः शरीरे आपुङ्खशरारोपेण बहिरवशिष्टशरपक्षसहितः कृतः, धृतः त्रासः भयं येन सः तस्य भावः तत्ता तया विनयविपर्ययः विद्यामिव वेदशास्त्रविद्यामिव कृष्णां द्रौपदीं विमुच्य कृतपला-यनः दुर्मेधाः दुर्बुद्धिः सः जयद्रथः पुरः अग्रतः प्रधावितं प्रकृष्टं धावनं यस्य तेन माग-धविरोधिना जरासंधशत्रुणा भीमेन रुरुधे रुद्धः ॥ १८ ॥

कचे केशे गृहीत्वा भुवि पातितस्य कठोरं साहसं यत् चारित्रं कर्म तदेव परं मुख्यं कर-णीयं यस्य तस्य शत्रोः जयद्रथस्य सम्यक्ताडने विषये मारुतिः भीमः आत्मपाणेः स्वह-स्तस्य वामं पदं चरणं सच्छात्रयामास सच्छिष्यं चकार, सहायं चकारेत्यर्थः ॥ ७७ ॥

अथ ताडनानन्तरं सौवीरभर्तुः जयद्रथस्य मूर्धनि मस्तके पवनात्मभुवा भीमेन क्षुरेण क्षुरप्रवाणेन क्लृप्ताः कृताः पञ्च चूडाः विरेजुः शुशुभिरे । चूडाः उत्प्रेक्षते, त्रासाम्बुभिः भयजन्यघर्माम्बुभिः त्रासात्मकाम्बुभिर्वा अन्तः अन्तःकरणे शाम्यतः शान्तिं प्राप्नुतः स्मरशरानलानां मदनबाणाग्नीनां पञ्चकस्य इङ्गालसंबन्धिधूमकलिका इव, निर्वापितस्य बाणानलपञ्चकस्य पृथक् पञ्च धूमकलिकाः किमित्यर्थः ॥ ७८ ॥

---

१ ख. वनेति नास्ति । २ अत्र सजातीयोत्प्रेक्षात्रयस्य संसृष्टिः ।

विमतमनुजनीतं वीक्ष्य भूपः स्मितास्यः
कृतनतिशिरसं तं केशभारे हृतेऽपि ।
त्वदसुहरणमार्गे दुःशलैवार्गला नः
क्वचिदपि कुरु मैवं कुत्सितेत्युत्ससर्ज ॥ ७९ ॥

दीनधीः स तपसा हिमशैले दृक्पथं पुरहराद्गृहयालोः ।
आददे वरमथो विजयौ द्वावन्तरेण युधि पाण्डवरोधम् ॥ ८० ॥

पार्थाश्च कृच्छ्रादुत्तीर्णां पार्षतीं प्राप्य रेमिरे ।
हेमन्तात्पद्मिनीं मुक्तां हेलेरिव कराङ्कुराः ॥ ८१ ॥

तत्रान्तरे ज्वलितवर्णवपुः कदाचि-
दङ्गेषु शब्द इव कर्णमवाप्य रात्रौ ।
भासां निधिः कृतनमस्करणाय तस्मै
प्रेम्णाऽऽशिषः प्रणिजगाद यवीयसीं गाम् ॥ ८२ ॥

---

भूपः धर्मराजः अनुजेन भीमेन नीतम् आनीतमित्यर्थः, केशानां भारे हृतेऽपि दूरीकृतेऽपि कृता नतिः लज्जया नमनं यस्य तथाभूतं शिरो यस्य तं विमतं शत्रुं जयद्रथं वीक्ष्य स्मितास्यः हास्यमुखः सन् नः अस्माकं त्वदसूनां त्वत्प्राणानां हरणस्य मार्गे दुःशलेव एतन्नाम्नी भगिन्येव अर्गला प्रतिबन्धिका, जयद्रथस्य भगिनीपतित्वात् । 'हे कुत्सित नीचकर्मकारिन् एवं परजायाहरणरूपं कुत्सितं कर्म क्वचिदपि कुत्रापि मा कुरु' इत्युक्त्वा उत्ससर्ज गच्छेत्युक्त्वा विसृष्टः ॥ ७९ ॥

अथो दीनधीः अल्पबुद्धिः सः जयद्रथः हिमशैले तपसा कृत्वा दृक्पथं नेत्रेन्द्रियविषयतां प्रत्यक्षतामित्यर्थः, गृहयालोः गृहीतुः पुरहरात् शिवात् द्वौ विजयौ अन्तरेण अर्जुनं जयं च विना पाण्डवानां रोधं केवलं प्रतिबन्धं वरम् आददे जग्राह ॥ ८० ॥

पार्थाश्च कृच्छ्रात् संकटात् उत्तीर्णां निर्गतां पार्षतीं द्रौपदीं प्राप्य रेमिरे सुखमनुबभूवुः। यथा हेलेः सूर्यस्य कराङ्कुराः किरणोदयाः हेमन्तात् ऋतोः मुक्तां पद्मिनीं कमलिनीं प्राप्य रमन्ते तद्वत् ॥ ८१ ॥ इति जयद्रथपञ्चचूडाकरणम् ।

तत्रान्तरे तत्कालमध्ये कदाचित् भासां पतिः सूर्यः अङ्गेषु मध्ये कर्णं राजानं रात्रौ स्वप्ने प्राप्य । कः कमिव, यथा शब्द अङ्गेषु अवयवेषु मध्ये कर्णम् अवयवं प्राप्नोति तद्वत् । कृतं नमस्करणं नमस्कारो येन तस्मै कर्णाय प्रेम्णा स्नेहेन आशिषः यवीयसीम् अनुजां वाणीं प्रणिजगाद उवाच । आशीर्वादानन्तरं गिरमुवाचेत्यर्थः । कथंभूतः सूर्यः, ज्वलितः देदीप्यमानः पीतो वर्णो यस्य तथाभूतं वपुः शरीरं यस्य सः । शब्दपक्षे ज्वलितं स्पष्टं वर्णरूपम् अक्षररूपं वपुर्यस्य सः ॥ ८२ ॥

---

१ ख. अत्रान्तरे । २ क. पतिः । ३ अत्र विनाऽपि केशभारं विनमनोत्पत्तेर्विभावनाऽलंकारः 'विभावना विनाऽपि स्यात्कारणं कार्यजन्म चेत्' इति लक्षणात् ।

अहमहरधिनाथोऽनुग्रहान्मे पृथाया-
मयि जननमगास्त्वं वत्स कोशो गुणानाम्।
तदिदमिह रहस्यं शासनं गृह्यतां मे
तनयकुशलयोगे तातपादा यतन्ते ॥ ८३ ॥
मुखसंधानविश्लेषमुक्ते कवचकुण्डले।
तवैते भूषणे शोभां तन्वाते परदुर्लभाम् ॥ ८४ ॥
एतानि याचितुमिह द्विजवेषगूढं
मा लब्धकाममराधिपतिं कृथास्त्वम्।
आज्ञापथात् स्खलसि चेदणुमात्रमस्मा-
द्वध्यो भविष्यसि सुखेन रणे रिपूणाम् ॥ ८५ ॥
इत्थं निशम्य तां वाचं राधेयो रचितस्मितः।
हर्षादञ्जलिना साकमाददे प्रतिभाषितम् ॥ ८६ ॥
तवार्यमेति प्रथितेऽपि शब्दे ममार्य मेत्यर्थिजनेषु दानम्।
निषेधरूपे निदधाति मार्गे पदं कथं वा भवदीयजिह्वा ॥ ८७ ॥

---

अयि वत्स ! अहम् अहरधिनाथः अह्नां पतिः सूर्यः अस्मि। मे मम अनुग्रहात् पृथायां कुन्त्यां गुणानां कोशः भाण्डारगृहं त्वं जननं जन्म अगाः प्राप्तवानसि। तत् ततः इह इदं वक्ष्यमाणं रहस्यं गोपनीयं मे शासनम् आज्ञा गृह्यतां स्वीक्रियताम्। कुतोऽप्रार्थितः कथयसीति चेत्—तातपादाः पितृचरणाः तनयस्य पुत्रस्य कुशलयोगे कुशलप्राप्तिविषये यन्तते यत्नं कुर्वन्ति ॥ ८३ ॥

मुखयोः संधानविश्लेषाभ्यां संधिपृथक्भावाभ्यां मुक्ते रहिते लोकविलक्षणे इत्यर्थः, एते कवचकुण्डले तव भूषणे परैः दुर्लभां शोभां तन्वाते कुर्वाते ॥ ८४ ॥

त्वम् इह स्थले एतानि कवचकुण्डलानि याचितुं द्विजवेषेण ब्राह्मणरूपेण गूढं गुप्तम् अमराधिपतिम् इन्द्रं लब्धकामं कवचकुण्डलप्राप्त्या लब्धमनोरथं मा कृथाः मा कुरु। अस्मात् आज्ञापथात् अणुमात्रम् अत्यल्पमपि स्खलसि चेत् तर्हि त्वं रणे युद्धे रिपूणां सुखेन वध्यः भविष्यसि ॥ ८५ ॥

इत्थं पूर्वश्लोकोक्तां तां वाणीं निशम्य श्रुत्वा रचितं कृतं स्मितम् ईषद्धास्यं येन सः राधेयः कर्णः अञ्जलिना साकं कृतेन हस्ताञ्जलिना सह हर्षात् प्रतिभाषितं प्रत्युत्तरम् आददे स्वीचकार, ददावित्यर्थः ॥ ८६ ॥

मम दानम् अर्थिजनेषु आर्यं श्रेष्ठम् एति गच्छति। तव अर्यमा इति शब्दे नाम्नि प्रथितेऽपि प्रसिद्धे सत्यपि भवदीया त्वदीया जिह्वा याचितं पदार्थं मा दत्त्वेति निषेधरूपे मार्गे पदं कथं वा निदधाति। "यः खलु ददाति सोऽर्यमा" इतिश्रुतेः। त्वयि याचितपदा-

---

१ क. याचकमिह। २ अत्र सामान्येन विशेषसमर्थनादर्थान्तरन्यासः। ३ अत्र मुखसंधानेत्यादिपदार्थस्य विशेषणगत्या अनन्यसामान्यशोभाकरणहेतुत्वात्काव्यलिङ्गम्।

सततं सदर्थिसदसे बहु दातुं
सकुतूहलस्य पुरुषस्य जगत्याम्।
उदकोर्मिका करधृता हि विभूषा
कनकोर्मिका तु परमङ्गुलिभारः ॥ ८८ ॥
दिवसेश यः खलु शयः प्रतिकर्तुं
धृतलालसो भवति नार्थिषु दैन्यम्।
प्रतिपादयेत्स तु कथं पुरुषस्य
प्रतिलोमवर्णनिजनामपदार्थम् ॥ ८९ ॥
यश एव जन्मफलमात्मवतामिदमेषितव्यमतियत्नभरात्।
अपि भूषितं गुणगणैरपरैरयशस्विनं न जगदाद्रियते ॥ ९० ॥
व्यापृता वितरणोपनिषत्सु व्याहरन्ति हि विपश्चिदधीशाः।
स्पर्शनेन रहिताविति हेतोर्लुब्धकं च कुणपं च समानौ ॥ ९१ ॥

---

र्थदातृत्वे सति मयि च याचकश्रेष्ठे इन्द्ररूपार्थिने याचितपदार्थं ददाति सति भवदीयजिह्वा दानं मा कुर्विति निषेधं कथं वदतीति भावः ॥ ८७ ॥

जगत्यां लोके सदर्थिनाम् उत्तमयाचकानां सदसे सभायै सततं बहु यथा तथा दातुं सकुतूहलस्य कौतुकसहितस्य पुरुषस्य करे धृता उदकोर्मिका उदकाञ्जलिरित्यर्थः, विभूषा भूषणं, कनकोर्मिका हेमाङ्गुलीयकं तु परं केवलम् अङ्गुलिभारः ॥८८॥

हे दिवसेश सूर्य! यः शयः हस्तः अर्थिषु दैन्यं दीनतां प्रतिकर्तुं निराकर्तुं धृता लालसा महतीच्छा येन सः धृतलालसः न भवति खलु, पुरुषस्य स तु शयः प्रतिलोमाः विपरीताः वर्णाः अक्षराणि यस्य तस्य निजनाम्नः पदस्य यशः इति सुबन्तपदस्य अर्थम् अभिधेयं कीर्तिं कथं प्रतिपादयेत् संपादयेत्। शयः इति पदं विपरीतवर्णं कृतं चेत् यशः इति भवति तदर्थं कीर्तिं कथं संपादयेदिति भावः ॥ ८९ ॥

किमिति यशः संपादनीयमिति चेदाह—यश इति। आत्मवतां बुद्धिमतां यश एव जन्मनः फलं पुरुषार्थः। तस्मादिदं यशः अतियत्नभरात् एषितव्यम् अभिलषणीयम्। अपरैः सौन्दर्यधनिकत्वादिभिः गुणगणैः भूषितमपि अयशस्विनं पुरुषं प्रति जगत् नाद्रियते ॥ ९० ॥

हि यतः वितरणोपनिषत्सु दानरहस्येषु व्यापृताः विपश्चितां शास्त्रज्ञानवताम् अधीशाः श्रेष्ठाः स्पर्शनेन दानेन स्पर्शेन च रहितौ इति हेतोः लुब्धकः कृपणः कुणपश्च शवश्च समानौ इति व्याहरन्ति वदन्ति। शवतुल्यता मा भूदिति दातव्यमिति भावः ॥ ९१ ॥

---

१ क. 'कूलं'। २ दातृपुत्रस्य स्वयमपि दातुः निषेधवाक्यस्य च विरूपयोर्घटनात्मको विषमभेदः। ३ अत्र दानस्तुत्या तन्निषेधनिन्दाप्रतीतेर्व्याजस्तुत्यलंकारः। ४ अत्र स्पर्शनस्य श्लेषभित्तिकाभेदाध्यवसितस्य साम्यकथनहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमुपमैकवाचकानुप्रवेशसंकीर्णम्।

दृष्टे वनीपकजने वदनं स्मितेन
दानाम्बुना करतलं यशसा दिशश्च।
शुभ्रीकरोति विवशः स्वयमेव दाता
कस्तादृशं प्रति निवर्तयितुं क्षमेत ॥ ९२ ॥
वाञ्छामनाप्तेन वनीपकेन सहासवो दातृजनस्य यान्ति।
तदद्य शक्रार्चनया धृतासोर्भावी वधो मे परमो हि लाभः ॥ ९३ ॥
यद्गेहप्रतिहारभूतलशिला चिन्तामणिः कल्पका
यस्याराममहीरुहाश्च सुरभिः सा होमधेनुः पुनः।
तादृग्याचति चेदुपेत्य मघवा संपूर्य तत्कामनां
त्रैलोक्यस्थवदान्यसंसदुपरि स्यामेष मे निश्चयः ॥ ९४ ॥
वीक्ष्य वन्ध्यवचनोऽपि गुणज्ञो विस्मयाम्बुनिधिवीचिषु मग्नः।
पद्मबन्धुरिति वादिनमेनं पाटलस्मितरुचिर्गिरमूचे ॥ ९५ ॥

---

तव अयं यत्नो विफल इत्याह—दृष्टे इति। यः दाता वनीपकजने याचयजने दृष्टे सति स्वयमेवं विवशः दानकर्मणि परवशः सन् वदनं स्मितेन आनन्दात् हास्येन शुभ्रीकरोति, दानाम्बुना दानसंकल्पोदकेन करतलं शुभ्रीकरोति, तादृशं दातारं प्रति निवर्तयितुं दानकर्मणो व्यावर्तयितुं कः क्षमेत ॥ ९२ ॥

तव जीवनार्थं ममायं यत्न इति चेत्तत्राह—वाञ्छेति। वाञ्छां मनोरथम् अनाप्तेन अप्राप्तेन वनीपकेन याचकेन सह दातृजनस्य असवः प्राणाः यान्ति। तत्तस्मात् अद्य शक्रार्चनया इन्द्रसंमानेन धृतासोः धृतप्राणस्य मे भावी कालान्तरेण भविष्यन् वधः परमो लाभः, हि निश्चयेन। एतत्कालिकमरणापेक्षया कालान्तरे मरणं लाभ एवेति भावः ॥ ९३ ॥

इदानीं स्वनिश्चयमाह—यद्गेहेति। यस्य इन्द्रस्य गेहप्रतिहारस्य गृहद्वारस्य भूतलशिला भूतलसंबन्धिपाषाणः चिन्तामणिः चिन्तितपदार्थदाता मणिः। यस्य आरामसंबन्धिनः महीरुहाः वृक्षाः कल्पकाः वाञ्छितपदार्थदातारः कल्पवृक्षाः। पुनः सा प्रसिद्धा सकललोकपूज्या सुरभिः कामदोग्ध्री धेनुः होमधेनुः होमार्थं धेनुः पाल्यते तत्सदृशी तादृक्। उक्त-महैश्वर्यवान् मघवा इन्द्रः माम् उपेत्य याचति चेत्तर्हि तस्य कामनां संपूर्य पूरयित्वा त्रैलोक्यस्थानां वदान्यानां दातॄणां संसदः सभायाः उपरि सभायां श्रेष्ठ इत्यर्थः, स्यां भवेयम्। एष मे निश्चयः ॥ ९४ ॥

वन्ध्यं निष्फलं वचनं यस्य तथाभूतोऽपि गुणज्ञः अत एव विस्मयाम्बुनिधिवीचिषु

---

१ क. यद्गोष्ठीप्र°। २ क. °वृतिद्रुमाश्च। ३ अत्र वाक्यार्थत्रयेण दातुर्दाननिवारणाशक्यत्वसमर्थनात्काव्यलिङ्गभेदः। केवलप्रकृतानां वदनकरतलदृशां धवलीकरणेनौपम्यगम्यकतुल्ययोगिताभेदश्च। तौ चैकवाचकानुप्रवेशसंकीर्णौ। ४ अत्र चिन्तामण्यादिमतोऽपीन्द्रस्य याच्ञाप्रसङ्गेन तैरप्यपूरणीयस्तन्मनोरथ इति तत्पूरणस्य त्रैलोक्यस्थवदान्योपरितनहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम्। ५ अत्र गुणज्ञत्वस्य अतिविस्मयहेतुत्वात्पदार्थहेतुकेन काव्यलिङ्गेन अङ्गेन विस्मयाम्बुनिधीति संकीर्णं रूपकम्। तस्य च वचनस्य नैष्फल्यरूपप्रतिबन्धकसत्त्वेऽपि तदुत्पत्तिवर्णनात्मिकया विभावनया संसृष्टिः।

'अयि वत्स भवता भाषितं क्षममेव स्थूललक्ष्याणामीदृशं ' तव मतं पुनरपि मम रसनां निदेशावशेषपथपान्थिनीं निर्मिमीते ॥ १९ ॥

त्वं शुनासीरस्य मनीषितस्य पूरणात्प्रागेव पूर्वदेवगर्वनिर्वापणधूर्वहतया कुलिशमपि चिरारूढकलङ्काकुलजर्जरितधाराशतमातन्वतीं तदीयां शक्तिमाधत्स्व' इति ॥ २० ॥

ततस्तथेति परमङ्गीकृत्य पश्यतस्तनूजस्य समक्षमचिरेण स मरीचिमाली चरमाचलशिखरपरिशील्यमानविहारमिहापि समाचचार॥२१॥

कतिपयदिने काले याते ततो मरुतां पतिः
सदसि तनयं भानोरित्यार्थिचाटुशताकुले ।
कवचमतुलं वाचाऽयाचत्सकुण्डलमादरा-
दयमपि तथेत्युक्त्वा शक्तिं ततो जगृहेऽद्भुताम् ॥ ९६ ॥

---

आश्चर्यसमुद्रलहरीषु मग्नः पद्मबन्धुः सूर्यः इतिवादिनं पूर्वोक्तभाषणकर्तारम् एनं कर्णं वीक्ष्य पाटला ओष्ठयोः रक्तत्वात् श्वेतरक्तवर्णा स्मितरुचिर्यस्य तथाभूतः सन् गिरम् ऊचे जगाद ॥ ९५ ॥

अयि वत्स ! भवता भाषितं स्थूललक्ष्याणां दानशूराणां क्षममेव योग्यमेव । ईदृशं तव मतं पुनरपि मम रसनां जिह्वां निदेशस्य आज्ञायाः अवशेषपथस्य अवशिष्टमार्गस्य पान्थिनीम् अध्वगां निर्मिमीते । इन्द्रेण याचितं चेत् ददामीति तव मतं चेत् तर्हि देहि, परंतु किंचिदाज्ञाशेषं वच्मीति भावः ॥ १९ ॥

हे वत्स ! त्वं शुनासीरस्य इन्द्रस्य मनोरथपूरणात् पूर्वमेव आदावेव पूर्वदेवानां दैत्यानां गर्वस्य निर्वापणे नाशने धूर्वहतया भारवाहकतया कुलिशमपि वज्रमपि चिरम् आरूढः उत्पन्नः यः कलङ्कः मलः तेन आकुलं व्याप्तम् अत एव जर्जरितं जीर्णभावं प्राप्तं धाराशतं यस्य तथाभूतम् आतन्वतीं कुर्वतीं तदीयां शक्तिम् आधत्स्व । तां शक्तिं ददासि चेत्तर्हि तव याचितं ददामीत्युक्त्वा गृहाणेति भावः ॥ २० ॥

ततः तथेति तथा करिष्यामीत्युक्त्वा परं केवलमिदमेव अङ्गीकृत्य पश्यतः तनूजस्य पुत्रस्य कर्णस्य समक्षम् अचिरेण शीघ्रं मरीचिमाली सूर्यः चरमाचलस्य अस्ताचलस्य शिखरे परिशील्यमानम् अभ्यस्यमानं विहारम् अन्तर्धानक्रीडाम् इहापि पुत्रसमीपेऽपि समाचचार कृतवान् । कर्णस्य पश्यतः सतोऽन्तर्धानं प्राप्त इत्यर्थः ॥ २१ ॥

ततः कतिपयानि दिनानि यस्मिन् तस्मिन् काले याते सति मरुतां देवानां पतिः इन्द्रः अर्थिनां याचकानां चाटुशतैः मिथ्याप्रियवचनशतैः आकुले सदसि सभायां भानोः तनयं कर्णं प्राप्य अतुलं निरुपमं सकुण्डलं कुण्डलाभ्यां सहितं कवचं वाचा अयाचत् । अयं

---

१ क. ख. अये । २ क. भवतो । ३ क. -णाममूदृशम् । ४ क. त्वित्यधिकम् । ५ क. पान्थां, ख. पाथिनीम् । ६ क. ख. अथवेत्यधिकम् । ७ क. पूर्वमेव । । ८ क. 'ङ्काकुर' ।

नकारमेते वहतो रिपुं ममेत्यमर्षभारादिव शस्त्रधारया ।
सुतो रवेर्दंशनकर्णवेष्टने स्वयं समुत्कृत्य ददौ बिडौजसे ॥ ९७ ॥
निशम्य तत्कल्पतरोर्ह्रिया च्युतैश्चिरार्जितैस्त्यागयशोभरैरिव ।
सुपर्वमुक्तैः कुसुमैर्न केवलं तदङ्गमङ्गाश्च सुगन्धयोऽभवन् ॥ ९८ ॥
जाग्रत्सु सर्वावयवेषु तस्य कर्णस्य कर्णः पुनरर्थिने स्वाम् ।
हिरण्मयीं तद्वितताार भूषां तन्नामसाम्यं ध्रुवमत्र हेतुः ॥ ९९ ॥
आपृच्छ्य तं तदनु नाकपतिः सुधर्मा-
मासाद्य सिद्धमरुदप्सरसां समाजे ।
प्राशंसदस्य चरितं सविधे सुरभ्या
रोमन्थमप्यविगणय्य निशम्यमानम् ॥ १०० ॥
तावत्पार्थास्तेऽपि पुनः काम्यकसीमां
हित्वा संघैर्भूविबुधानामनुयाताः ।

---

कर्णोऽपि आदरात् तथेति दास्यामीत्युक्त्वा ततः इन्द्रात् अद्भुतां लोकविलक्षणां शक्तिं जग्रहे ॥ ९६ ॥

रवेः सुतः कर्णः 'एते कवचकुण्डले मम रिपुं नकारं वहतः धारयतः' इति अमर्षभारादिव क्रोधातिशयादिव दंशनकर्णवेष्टने स्वयमेव शस्त्रधारया उत्कृत्य छित्त्वा बिडौजसे इन्द्राय ददौ । अत्र दंशनकर्णवेष्टनार्थयोः कवचकुण्डलयोः नकारवाहकत्वं वाच्यवाचकयोरभेदाध्यवसायात् ज्ञेयम् ॥ ९७ ॥

तत् शस्त्रेण छित्त्वा कवचकुण्डलदानं निशम्य श्रुत्वा ह्रिया च्युतैः भ्रष्टैः चिरार्जितैः बहुकालं संपादितैः त्यागस्य दानस्य यशोभरैः यशःसमूहैरिव सुपर्वमुक्तैः कुसुमैः केवलं तदङ्गं कर्णशरीरं सुगन्धि नाभवत् अपि तु अङ्गाः अङ्गदेशाश्च सुगन्धयः अभवन् ॥ ९८ ॥

सर्वावयवेषु जाग्रत्सु विद्यमानेषु सत्सु तस्य कर्णस्य कर्णः अवयवः पुनः अर्थिने स्वां स्वकीयां हिरण्मयीं भूषां भूषणं यत् यस्मात् वितताार ददौ तत्तस्मात् अत्र भूषादानकर्मणि नाम्नोः अवयवावयविनोः कर्ण इति नाम्नोः साम्यं हेतुः कारणं ध्रुवं निश्चयेन ॥ ९९ ॥

तदनन्तरं नाकपतिः इन्द्रः तं कर्णम् आपृच्छ्य गच्छामीति प्रश्नं कृत्वा सुधर्मा स्वर्गस्थां देवसभाम् आसाद्य प्राप्य सिद्धमरुदप्सरसां समाजे अस्य कर्णस्य चरितं स्वसहोत्पन्नकवचकुण्डलयोश्छेदेन दानरूपं चरित्रं प्राशंसत् प्रशशंस । कीदृशं चरित्रं, सविधे समीपे सुरभ्या कामधेन्वा रोमन्थमपि चर्वितस्याकृष्य पुनश्चर्वणमपि अविगणय्य निशम्यमानं श्रूयमाणम् । धेनूनां विश्रान्तिसमये रोमन्थे परमादरोऽस्ति, तत्रादरं त्यक्त्वा अलौकिकपदार्थदानेन याचकमनोरथपूरयित्र्या कामधेन्वाऽप्याश्चर्येण श्रूयमाणमिति भावः ॥ १०० ॥

यावत् इतः कर्णचरितं जातं तावत् ते पार्था अपि वध्वा साकं द्रौपद्या सह पुनः

---

१ क. रिपू । २ क. यद्वित । ३ अत्रासंबन्धेऽपि संबन्धरूपातिशयोक्तिः । ४ अत्रोत्प्रेक्षया तन्नामसाम्यमात्रस्यापि तथा दानहेतुत्वे किमु वक्तव्यं तद्दाननैसर्गिकत्वमित्यर्थापत्तिप्रतीतेरलंकारध्वनिः ।

तीर्थव्रातान्विस्मृतपूर्वानवगाढुं
वव्ध्वा सार्धं द्वैतवनारण्यमवापुः ॥ १०१ ॥

तत्र कदाचिदाश्रमद्वारि 'हा महाभागा मम होमसाधनमपहृत्य हरिणोऽयमितस्ततो धावति' इति बाष्पायमाणस्य कस्यचिदग्रजन्मनः शोकनिवारणाय चक्रीकृत्य चापमनुधावतस्तान् पार्श्वलताताडनानुषक्तनवकिसलयजालमुत्प्लवनवेगपवनवर्हिर्ज्वलितगर्भवह्निशिखाकन्दलमिवारणिं विषाणयोर्बिभ्राणः कतिषुचित्पदेषु सुग्रह इव कतिषुचिद्दुरासद इव चित्रगतिः कोऽपि कृष्णसारो दूरमपाकृष्य स्वयमन्तरधात् ॥ २२ ॥

तदनन्तरं ललाटन्तपनखम्पचहेलिधूलिभ्यां द्यावापृथिवीभ्यामुदन्यावदान्यमहिमनि दिनयौवने प्रकृतमर्थमिव पानीयमपि इतस्ततो विचिन्वद्भिरनुजैः सह कस्यचिद्विशालस्य वनसालस्य मूलभुवं तच्छायमण्डलमिव पाण्डवः शनैः शनैरुपससर्प ॥ २३ ॥

---

काम्यकवनस्य सीमां हित्वा त्यक्त्वा भूविबुधानां ब्राह्मणानां संघैः अनुयाताः अनुगताः सन्तः विस्मृतपूर्वान् पूर्वं विस्मृतान् तीर्थानां व्रातान् समूहान् अवगाढुम् अन्तः प्रविश्य स्नातुं द्वैतवनसंज्ञमरण्यम् अवापुः प्रापुः ॥ १०१ ॥

तत्र द्वैतवने कदाचित् आश्रमद्वारि पाण्डवपर्णशालाद्वारे 'हा इति खेदे । हे महाभागाः पाण्डवाः! मम होमस्य साधनम् उपकरणम् अपहृत्य अयं हरिणः धावति' इत्युक्त्वा वाष्पायमाणस्य नेत्राभ्यामश्रूणि त्यजतः कस्यचित् अग्रजन्मनः ब्राह्मणस्य शोकनिवारणाय चापं चक्रीकृत्य बाणसंधानं कृत्वा आकर्णमाकृष्य अनुधावतः पश्चाद्धावमानान् पाण्डवान् कोऽपि कृष्णसारः कृष्णमृगः दूरं देशम् अपाकृष्य नीत्वा स्वयम् अन्तरधात् अदर्शनमगात् । कथंभूतः कृष्णसारः, पार्श्वलतानां पार्श्वभागस्थलतानां ताडनेन अनुषक्तं संलग्नं नवानां किसलयानां पल्लवानां जालं समूहो यस्य तम् उत्प्लवनवेगस्य उड्डानवेगस्य पवनेन बहिर्भागे ज्वलितं गर्भस्थवह्नेः शिखाकन्दलं ज्वालासमूहो यस्य तमिवेत्युत्प्रेक्षा । अरणिम् अग्निमन्थनकाष्ठं विषाणयोः शृङ्गयोः बिभ्राणः । पुनः कथंभूतः०, कतिचित्पदेषु सुग्रह इव सुखेन ग्रहीतुं शक्य इव कतिचित्पदेषु दुरासदः दुःखेनापि प्राप्तुमशक्य इव विचित्रा लोकविलक्षणा गतिर्यस्य सः ॥ २२ ॥

तदनन्तरं ललाटं तापयति ललाटंतपा नखान् पचति नखम्पचा ललाटन्तपनखम्पचे हेलिधूली सूर्यरेणू ययोः ताभ्यां द्यावापृथिवीभ्याम् आकाशभूमिभ्याम् उदन्यायाः पिपासायाः वदान्यः दाता महिमा स्वभावो यस्य तस्मिन् दिनयौवने मध्याह्ने प्रकृतं प्रस्तुतम्

---

१ क. साकम् । २ क. हा हा । ३ क. अरणिमित्यधिकम् । ४ क. तत इति नास्ति । ५ ख. गृहमेधिनः । ६ क. पार्थानित्यधिकम् । ७ ख. उत्प्लुत्य धावनवे° । ८ क. ज्वलद्वह्निशिखा° । ९ क. विषाणया । १० क. विचित्रगतिः । ११ ख. आकृष्य । १२ क. तदनु । १३ क. । महिम्नि । १४ क. प्रादुर्भवति सतीत्यधिकम् । १५ क. तच्छायाम° ।

तत्रानिलैः कमलगन्धिभिरुच्यमाना-
माशां गतेषु सलिलाय चिरायितेषु ।
भीमादिषु क्षितिभुजा परितप्य भेजे
तेषां पदानुसरणादथ काऽपि वापी ॥ १०२ ॥
तस्यास्तटे कमलिनीदलपात्रपाणी-
स्तान्पङ्क्तिशो निपतितानवलोक्य वीरान् ।
वाष्पाम्बुभिः प्रथमदर्शितमार्गयेव
तन्वा नृपस्य धरणौ सहसा निपेते ॥ १०३ ॥
स नृपतिर्ददृशेऽधिकवत्सलः
सपदि मूर्छितधीर्निभृताङ्गकः ।
स्वयमपि प्रविभज्य तदा दशा-
मनुभवन्निव तामनुजाश्रिताम् ॥ १०४ ॥
नासाविलोभनपटून्नवपुष्पगन्धा-
नादाय तत्र मधुपैरनुसेव्यमानाः ।

---

अथम् अरणिमिव पानीयमपि इतस्ततः विचिन्वद्भिः मृगयमाणैः अनुजैः भीमादिभिः सह कस्यचित् विशालस्य वनसालस्य वनवृक्षस्य मूलभुवं तच्छायस्य तस्य वृक्षस्य छायायाः मण्डलमिव पाण्डवः धर्मराजः शनैः शनैः उपससर्प जगाम । मध्याह्ने वृक्षच्छाया यथा वृक्षमूलतले गच्छति तद्वद्धर्मोऽपि जगामेत्यर्थः ॥ २३ ॥

अथ तत्र वृक्षमूले कमलगन्धिभिः कमलसुगन्धयुतैः अनिलैः उच्यमानाम्—अस्याः आशायाः पद्मगन्ध्यनिलाः आगच्छन्ति तस्मादस्यां पद्मयुक्ता वापी वर्तते—इति सूच्यमानाम् आशां दिशं सलिलाय सलिलमानेतुं गतेषु भीमादिषु चिरायितेषु चिरकालं कुर्वत्सु सत्सु क्षितिभुजा धर्मराजेन परितप्य संतापं प्राप्य तेषां भीमादीनां पदानुसरणात् पदचिह्नितमार्गानुसरणात् काऽपि वापी दीर्घिका भेजे प्राप्तेत्यर्थः ॥ १०२ ॥

तस्याः वाप्याः तटे तीरे कमलिन्याः दलान्येव पत्राण्येव पात्राणि पाणिषु येषां तान् पङ्क्तिशः पङ्क्तिक्रमेण निपतितान् तान् वीरान् भीमादीन् अवलोक्य बाष्पाम्बुभिः प्रथमं दर्शितः मार्गो यस्याः तयेव नृपस्य तन्वा सहसा अकस्मात् धरणौ निपेते निपतितम् । नृपस्य वाष्पाम्बुना आदौ यत्र निपतितं ततस्तन्वा तत्रैव निपतितमिति भावः १०३

अधिकवत्सलः भ्रातृषु परस्नेहवान् सपदि तत्काले मूर्छितधीः निःसंज्ञः निभृतानि निश्चेष्टितानि अङ्गानि अवयवाः यस्य सः नृपतिः तदा अनुजैः आश्रितां तां निःसंज्ञतादशां प्रविभज्य अनुभवन्निव ददृशे दृष्टः, लोकैरिति शेषः ॥ १०४ ॥

तत्र स्थले नासायाः घ्राणेन्द्रियस्य विलोभने लोभोत्पादने पटून् कुशलान् नवपद्मानां

---

१. क. 'पत्रपा' । २ क. पद्मग' । ३ अत्र छायामण्डलपाण्डवयोः शनैः शनैर्मूलोपसर्पणेनौपम्यस्य गम्यत्वात्तुल्ययोगिताभेदः । अस्य च अरणिजलयोरन्वेषणे नौपम्यगमकतुल्ययोगिताभेदेन संसृष्टिः ।

वर्धिष्णुचेतनमिमं वनवापिकायाः
कल्लोलमल्लपवनाः कलयाम्बभूवुः ॥ १०५ ॥

ततः क्षणादेव किंचिदुद्भ्रम्य परितः शून्यशून्या दिशो विलोकयमानः शनैः शनैः उपसृत्य शोकचञ्चलेन पाणिना तान् भ्रातॄन् पर्यायवृत्त्या परामृश्य परामृश्य वनविहङ्गमृगपानसौकर्याय दुरवतरां तां सरसीं परिपूरयितुमिव बाष्पधारामभिवर्षन्धर्मसूनुरेवं विलपितुमारभत ॥२४॥

वीरा भवद्विपदि देवपरंपराऽपि
दूरापरान्प्रति नरान्न गिरां प्रवृत्तिः ।
हा हा दशेयमिह वोऽद्य कुतोऽवतीर्णा
मामन्तरेण किमिदं भवतां प्रयाणम् ॥ १०६ ॥

दैवं कठोरचरितं दयया विहीनं
माद्रीसुतावहह मातृसुखानभिज्ञौ ।

---

गन्धान् सुगन्धान् आदाय मधुपैः भ्रमरैः अनुसेव्यमानाः पद्मगन्धभ्रमरैर्युक्ता इत्यर्थः, वनवापिकायाः कल्लोलमल्लानां महाकल्लोलानां पवनाः तत्संबन्धिवायवः वर्धिष्णुः चेतना ज्ञानं यस्य तमिमं नृपं कलयाम्बभूवुः सिषेविरे। चेतनां प्राप्नुवन्तममुं शीतलगन्धिवायवोऽनुकूला र्बभूवुरिति भावः ॥ १०५ ॥

ततः क्षणादेव किंचित् उद्भ्रम्य उत्थाय परितः सर्वतः शून्येभ्यः शून्याः किंचिदपि प्रियपदार्थप्राणिवर्जिताः दिशः विलोकयमानः शनैः शनैः उपसृत्य समीपं गत्वा शोकचञ्चलेन पाणिना तान् भ्रातॄन् भीमादीन् पर्यायवृत्त्या परामृश्य परामृश्य संस्पृश्य संस्पृश्य वनविहङ्गमृगाणां पानस्य जलप्राशनस्य सौकर्याय सुखेन करणाय दुरवतरां विषमाधोगमनमार्गां तां सरसीं वापीं परिपूरयितुमिव बाष्पधारां दुःखाश्रुधाराम् अभिवर्षन् धर्मसूनुः एवं वक्ष्यमाणं विलपितुम् आरभत ॥ २४ ॥

'हे वीराः! भवतां विपदि अनिष्टविषये देवपरंपराऽपि देवसमूहोऽपि दूरात्समीपे स्थातुमशक्या अशक्तेति यावत्, अपरान् नरान् प्रति तु गिरां प्रवृत्तिर्नास्ति । मनुष्या अनिष्टं कुर्युरिति वक्तुमप्यसंभवः । हा हा इति दुःखातिशये द्विरुक्तिः । अद्य इह वः युष्माकं दशा मरणरूपा कुतः कस्मात्सकाशादवतीर्णा आगता । मामन्तरेण मां विना भवतामिदं प्रयाणं लोकान्तरगमनं किम्, अयोग्यमित्यर्थः । इह स्वदेशेऽपि मां विहाय भवद्गमनं नासीत् लोकान्तरगमनं कथं जातमिति प्रश्नो वा ॥ १०६ ॥

दैवं प्रारब्धं कठोरचरितं दयया विहीनं निर्दयं च। अहह इति खेदे । यतः माद्रीसुतौ नकुलसहदेवौ मातुः सुखस्य अनभिज्ञौ माद्र्याः पुत्रोत्पत्तिसमये मृतपतिना सह दाहात्

---

१ क. 'ममुम्। २ क. दशापीत्यधिकम् । ३ क. ख. कराञ्चलेन तान्पर्या°। ४ क. परामृश्य वन°, ख. परिमृश्य वन° । ५ क. सुतरामित्यधिकम् । ६ क. परिपूरयितुमिति नास्ति । ७ क. दूरेतराम् । ८ अत्र वायूनां गुणसमृद्धेः विशेषणगत्या नृपचेतनासंघटनहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ।

कन्दाङ्कुराणि च फलानि च भक्षयित्वा
कान्तारसीमनि मया चरितुं न सेहे ॥ १०७ ॥
स्वयमव्रण एव यो रणे व्रणमाधत्त हरस्य मस्तके।
व्रणमायुषि पार्थ तस्य ते विदधाति स्म मृधं विनैव कः ॥ १०८ ॥
वत्स द्वेषिनियुद्धजीवन भुजप्रख्यानिधे मारुते
कर्णाकर्णिकया निशम्य भवता प्राप्तामवस्थामिमाम्।
शोकेनानिशमेकचक्रनगरीभाजां च वाष्पायितुं
स्वस्रीयैः सह सौबलस्य च मुदा कोऽप्येष कालोऽभवत् १०९
मय्यप्यसूनिह विमुञ्चति याज्ञसेनी
सा श्वापदामिषमबुद्धगतिर्भवेन्न।
हा माद्रि कुन्ति युवयोर्वनभूमिरेव
पुत्रप्रसूतिविपदोः पदतां प्रपेदे ॥ ११० ॥

---

अज्ञातारौ कन्दाङ्कुराणि फलानि च भक्षयित्वा कान्तारसीमनि दुर्गमारण्यप्रान्तदेशे मया सह चरितुं संचारं कर्तुं न सेहे तावपि नीतौ। अतः कठोरचरितं निर्दय चेत्यर्थः॥१०७॥

यः रणे स्वयम् अव्रण एव सन् हरस्य ईश्वरस्य मस्तके व्रणम् आधत्त चकारेत्यर्थः। हे पार्थ अर्जुन! तस्य ते आयुषि व्रणं नाशं मरणमित्यर्थः, मृधं युद्धं विनैव कः विदधाति स्म चकार। मृत्युञ्जयशिवापेक्षया जगति को वलवानस्तीत्यहं न वेद्मीति भावः॥१०८॥

हे वत्स वाल! द्वेषिभिः शत्रुभिः सह नियुद्धं वाहुयुद्धं जीवनम् अतिप्रियं यस्य तत्सं-बुद्धौ हे भुजप्रख्यानिधे हे भुजकीर्तिनामाकर! हे मारुते भीम! भवता प्राप्ताम् इमाम् अवस्थां मरणरूपां कर्णाकर्णिकया जनानां कर्णे कर्णे उपांशुकथनरीत्या एकचक्रीनगरीभा-जां तन्नगरीस्थमनुष्याणां शोकेन अनिशम् अहोरात्रं वाष्पायितुं बकराक्षसवधेन तत्रत्या-नां सुखदातुस्तव मरणश्रवणे दुःखेन नेत्राश्रूणि मोचयितुं, स्वस्रीयैः भागिनेयैः दुर्योधना-दिभिः सह सौबलस्य शकुनेरपि मुदा त्वन्मरणवार्ताश्रवणजन्यहर्षेण वाष्पायितुम् आन-न्दाश्रूणि मोचयितुमित्यर्थः, कोऽपि अनिर्वचनीयः कालः अभूत् प्रादुरभूत्। एतद्वार्ता-श्रवणेन एकचक्रनगरस्थानां दुःखं शकुनिदुर्योधनादीनां हर्षश्च स्यादिति भावः ॥१०९॥

इहस्थले युष्मच्छोकेन मय्यपि असून् प्राणान् विमुञ्चति त्यजति सति नः अस्माकम् अबुद्धगतिः अज्ञातस्थितिः सा याज्ञसेनी द्रौपदी श्वापदानां वन्यपशूनां वृकव्याघ्रादी-नाम् आमिषं भक्ष्यं भवेत्। हा खेदे। हे माद्रि हे कुन्ति! वनभूमिरेव पुत्राणां प्रसूतिविपदोः प्रसवमरणयोः पदताम् आश्रयत्वं प्रपेदे प्राप्ता। आप्तजनरहिते स्थले दीनवत् युष्मत्पुत्रो-त्पत्तिविनाशौ जाताविति भावः ॥ ११० ॥

---

१ क. भवान्। २ ख. मुदे। ३ क. ह्यभूत्। ४ अत्रोत्तरवाक्यार्थेन दैवस्य दारुणकर्मत्वसमर्थ-नात्काव्यलिङ्गम्। ५ अत्र भीमावस्थाकर्णनस्य विशेषणगत्या बाष्पोदयहेतुत्वात्काव्यलिङ्गम्।

कूटस्थशीतकरकुक्षिगतं कुरङ्गं
कुर्वन् स्वजातिकृतकोपरसातिरेकम्।
कोदण्डमप्यगणयन् कुलिशास्त्रसूनोः
क्वाऽसौ स्थितो वनमृगः कुलहानये नः॥ १११॥
इत्थं विलप्य नृपतौ स्वयमप्यमीषा-
मन्तस्य हेतुरिदमित्युदकं सरस्याः।
पातुं प्रवृत्तवति कोऽपि पुमानदृश्यो
गम्भीरमाह गगनस्थित एव वाचम्॥ ११२॥
'राजन्मदुक्तिसरणेः प्रतिवाक्यदानं
देवोऽप्युपेक्ष्य जलमत्र न पातुमीष्टे।
एते मदीयमवमत्य वचोऽवलेपा-
त्पीताम्भसः सपदि बिभ्रति दीर्घनिद्राम्' ॥ ११३॥
तत्प्रत्युदीर्य सलिलं तु पिबेति वक्तुः
प्रश्नानसौ दिविचरस्य पटूत्तरैः स्वैः।
प्रत्युद्ययौ बहुमतैर्वनदेवताना-
मिन्दोः करानिव तरङ्गकुलैः पयोधिः॥ ११४॥

---

कूटस्थस्य अस्मत्कुलादिपुरुषस्य शीतकरस्य चन्द्रस्य कुक्षौ गतं विद्यमानं कुरङ्गं मृगं स्वजात्या स्वजातीयेन कृष्णसारेण कृतः ब्राह्मणारणिहरणात् स्वाश्रयचन्द्रकुलस्थपुरुषमारणेन संपादितः कोपरसस्य अतिरेकः आधिक्यं यस्य तथाभूतं कुर्वन् असौ वनमृगः अरणिहर्ता कृष्णसारः कुलिशास्त्रसूनोः शस्त्रपाणेरिन्द्रस्य सूनोः अर्जुनस्य कोदण्डमपि अग्निदत्तं गाण्डीवधनुरपि अगणयन् सन् नः कुलस्य हानये नाशं कर्तुं क्व स्थितः' ॥ १११॥

नृपतौ इत्थं विलप्य अमीषां भ्रातृणाम् अन्तस्य मरणस्य हेतुः कारणं सरस्याः वाप्याः इदम् उदकम् इति ज्ञात्वा स्वयमपि तदेव पातुं प्रवृत्तवति सति गगनस्थित एव कोऽपि अदृश्यः पुमान् वाचं गम्भीरं यथा तथा आह, उवाचेत्यर्थः ॥ ११२॥

'हे राजन्! मदुक्तिसरणेः मत्प्रश्नपद्धतेः प्रतिवाक्यदानं प्रत्युत्तरदानम् उपेक्ष्य अत्र वाप्यां जलं पातुं देवोऽपि अमरोऽपि न ईष्टे न समर्थो भवति। अमरोऽप्यनादरात् मरिष्यति इतरेषां का वार्तेति भावः। एते त्वद्भ्रातरः अवलेपभरात् बलगर्वात् मदीयं वचः अवमत्य अनादृत्य पीतम् अम्भः उदकं यैस्ते तथाभूताः सन्तः सपदि तत्काले एव दीर्घनिद्रां मरणदशां बिभ्रति धारयन्ति, मृता इत्यर्थः' ॥ ११३॥

ततः असौ धर्मराजः 'मत्प्रश्नोत्तरमदत्त्वा सलिलं न पिब' इतिवक्तुः दिविचरस्य देवस्य प्रश्नान् वनदेवतानां बहुमतैः स्वैः स्वकीयैः पटूत्तरैः मनोहरप्रतिवचनैः प्रत्युद्ययौ प्रत्युज्जगाम, सुन्दरोत्तरैः तत्प्रश्नानां बहुमानं चकारेत्यर्थः। कः कैः कानिव, यथा पयोधिः

---

१ क. बत। २ क. जलमत्र।

तदनन्तरम्—

कटिलम्बितवल्कलो जटालः
कमनीयस्मितधौतयज्ञसूत्रः ।
कुशबर्हवतंसितः स देवः
कुरुराजस्य पुरोऽवतीर्य तस्थौ ॥ ११५ ॥

स तु तत्र लोकातीतेन राकाशतमिवाकारयता निजेन तेजसा कुड्मलीकृतकरकमलयुग्मं तमात्मसंभवं प्रेममेदुरमेवमवादीत् ॥ २५ ॥—

'अये वत्स मां धर्ममवेहि । संप्रति विमतजनवितीर्णं विविधं विपिनक्लेशमनुभवतो भवतो भावं बुभुत्सुरेवमाचरिषम् । तद्बहुधा परीक्षितेन भवतः शीलेन समञ्जसेन प्रश्नोत्तरेण च प्रसेदिवानस्मि ॥ २६ ॥

तस्मान्ममानुग्रहेण स्वप्नान्निवृत्तैरिव भूयोऽप्युत्थितैरनुजन्मभिः सह त्रयोदशीं शरदं रूपान्तरवन्तं भवन्तं कोऽपि न जानीयादि'त् इति वरं च तमरणिं च विस्मयविस्मारितनयनपरिस्पन्दनाय निजनन्दनाय प्रतिपाद्य स पुमानन्तर्दधे ॥ २७ ॥

---

समुद्रः तरङ्गकुलैः वीचिवृन्दैः इन्दोः चन्द्रस्य करान् किरणान् प्रत्युद्गच्छति तद्वत् । प्रत्युत्तरैर्देवः सन्तुष्टो बभूवेति भावः ॥ ११४ ॥

ततः कटेः सकाशात् लम्बितं वल्कलं यस्य सः वल्कलं वसान इत्यर्थः, जटालः जटावान्, कमनीयं सुन्दरं स्मितं यस्य सः धौतं विशदं यज्ञसूत्रं यस्य सः ततः कर्मधारयः, कुशानां बर्हैः पत्रैः वतंसितः अवतंसविशिष्टः सः प्रश्नकर्ता देवः कुरुराजस्य धर्मराजस्य पुरोदेशे अवतीर्य प्रकटीभूय तस्थौ ॥ ११५ ॥

स तु देवः लोकातीतेन लोकविलक्षणेन अत एव राकाशतं पूर्णचन्द्रयुक्तपूर्णिमारात्रिशतम् आकारयतेव स्पर्धयाऽऽह्वानं कुर्वतेव चन्द्रशतसदृशेनेत्यर्थः, निजेन तेजसा कुड्मलीभूतं करकमलयुग्मं यस्य तम् आत्मसंभवं पुत्रं धर्मराजं प्रेममेदुरं प्रेम्णा सहितं यथा तथा एवं वक्ष्यमाणम् अवादीत् । शशिकिरणेन कमलमुकुलीभवनं युक्तमेव ॥ २५ ॥—

'अये वत्स मां धर्मम् अवेहि । संप्रति विमतजनैः शत्रुजनैः वितीर्णं दत्तं विविधम् अनेकप्रकारं विपिनक्लेशम् अरण्यदुःखम् अनुभवतः भवतः तव भावं धर्मे स्थितिकर्तारमभिप्रायं बुभुत्सुः बोद्धुमिच्छुः सन् एवं मृगरूपेण अरणिहरणादिकम् आचरिषम् आचरितवानस्मि । तत्तस्मात् बहुधा परीक्षितेन भवतः शीलेन स्वभावेन समञ्जसेन ज्ञानपूर्वकेण मत्प्रश्नोत्तरेण च प्रसेदिवानस्मि प्रसन्नोऽस्मि ॥ २६ ॥

तस्मात् ममानुग्रहेण स्वप्नान्निवृत्तैरिव निद्रां विहाय प्रबुद्धैरिव अनुजन्मभिः सह त्रयोदशीं शरदं वर्षं रूपान्तरमिव वेषान्तरवन्तं भवन्तं कोऽपि न जानीयात्' इति वरं तम् अरणिं च विस्मयेन विस्मारितः विस्मृतिं प्रापितः नयनपरिस्पन्दो नेत्रनिमेषो यस्य

---

१ क. संप्रतीति नास्ति । २ क. वेषान्तर॰ । ३ क. च तमिति नास्ति ।

तत्तादृशो भगवतो वचसा निकाम-
मासाद्य मोदभरमाश्रममागतानाम् ।
प्राप्तारणेर्द्विजवरस्य शुचेव साक-
मन्तर्जगाम समयोऽपि महानमीषाम् ॥ ११६ ॥

इत्यनन्तभट्टकविकृतौ चम्पूभारते पञ्चमः स्तवकः ॥ ५ ॥

## ६ षष्ठः स्तवकः ।

तदनु ते भरता व्यवधाश्रयाच्चरमहायनलङ्घनकाङ्क्षिणः ।
अतिचिरं रविभाण्डविवर्धिताननुचरानिव तामटवीं जहुः ॥ १ ॥

तदनु [१] तदनुचितवचनसाहसाधिगतवाहसाधिपवपुषं नहुषमौदर-

---

तस्मै निजनन्दनाय धर्मराजाय प्रतिपाद्य दत्त्वा सः पुमान् पुनः अन्तर्दधे अदृश्यो बभूव ॥ २७ ॥

स चासौ तादृक् तस्य भगवतः अचिन्तनीयशक्तेः देवस्य वचसा निकामम् अत्यन्तम् आमोदभरं हर्षसमूहम् आसाद्य आश्रमम् आगतानाम् अमीषां पाण्डवानां महान् समयोऽपि द्वादशवर्षात्मककालोऽपि प्राप्तारणेः द्विजवरस्य शुचा शोकेन साकमेव सहैव अन्तर्जगाम । यथा देवः अन्तर्धानं प्राप्तस्तथा ब्राह्मणशोकः द्वादशवर्षात्मकवनवासकालश्चान्तर्धानं जगामेत्यर्थः ॥ ११६ ॥

इति श्रीचम्पूभारतटीकायां श्रीखण्डोपाह्वनारायणसूरिकृतायां
पञ्चमः स्तवकः ॥ ५ ॥

---

तदनु द्वादशवर्षवनवाससमाप्त्यनन्तरं ते प्रसिद्धाः भरताः भरतवंशोत्पन्ना धर्मराजादयः नटाश्च व्यवधाश्रयात् वेषान्तराश्रयात् चरमहायनस्य त्रयोदशवर्षस्य लङ्घनं यापनं काङ्क्षन्ते इच्छन्ति ते तथाभूताः सन्तः अतिचिरं बहुकालं रविभाण्डेन रविदत्तपात्रोत्पन्नान्नेन विवर्धितान् अनुचरानिव ब्राह्मणादिपरिजनानिव ताम् अटवीं द्वैतवनं जहुः तत्यजुः । यथा वेषान्तरेण त्रयोदशवर्षं यापयितुं ब्राह्मणादीन् तत्यजुः, तथा तद्वनमपि तेत्यजुरित्यर्थः ॥ १ ॥

तदनु तदनन्तरं तस्य नहुषस्य अनुचितम् अयोग्यं यत्साहसं ब्राह्मणवाहकशिबिकारोहणं तेन अधिगतं प्राप्तं वाहसाधिपस्य महाजगरसर्पस्य वपुर्यस्य तं नहुषम् एतन्नामकं

---

१ क. अन्तम् । २ क. अमीत्यधिकम् । ३ अत्र वाञ्छिताभ्यां भ्रातृजीवनारणिलाभाभ्यामधिकस्य अज्ञातवासावसरे परदुर्ज्ञेयवेषान्तरलाभवरस्य वर्णनात्प्रहर्षणालंकारः—'वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम्' इति लक्षणात् । ४ अत्र पाण्डववनवासब्राह्मणदुःखयोः समाप्तिसहभावस्य सहृदयरञ्जकत्वात्सहोक्तिरलंकारः 'सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः' इति लक्षणात् । तथा प्रकृतयोस्तयोः समाप्तिगमनेनौपम्यस्य गम्यत्वात्तुल्ययोगिताभेदश्च । ५ अत्राज्ञातवासकाङ्क्षया विशेषणगत्याऽनुचराटवीत्यागहेतुत्वात्पदार्थहेतुककाव्यलिङ्गस्य परिजनाटव्योः प्रकृतयोस्त्यागेनौपम्यगमकस्य तुल्ययोगिताभेदस्य चाङ्गाङ्गिभावेन संकरः ।

दमुनः शमनाय चतुर्णववारिकाङ्क्षिणः पारिकाङ्क्षिणः कोपोदिताच्छापोदधेरुत्तरैरमुमुत्तार्य तस्मादेव विस्मारितनिजविधिदुर्विलासादासादितवराः वरारोहया सह दुःसहनिजधामपिधानवैदग्ध्यमभ्यसितुकामा इव मत्स्यनगरस्यानतिसमीपगामिनीं पितृवनशमीमभजन् ॥ १ ॥

क्रमेण मत्स्येन्द्रपुरोपकण्ठे करालमापुः पितृकाननं ते ।
वधूद्रुहां भाविनि सूतजानां वधप्रदेशस्य दिदृक्षयेव ॥ २ ॥
शमीतरौ तत्र निधाय शस्त्रममी तदन्तर्ज्वलदग्निकल्पम् ।
जगाहिरे वेषमिवान्यमुच्चैर्ध्वजं विराटस्य पुरं प्रवीराः ॥ ३ ॥

---

राजानम् औदरदमुनसः जठराग्नेः शमनाय क्षुधानिवारणायेत्यर्थः, चतुर्णववारीणि काङ्क्षतेऽसौ तस्य पारिकाङ्क्षिणः अगस्त्यमुनेः कोपेन उदितात् उक्तात्—त्वं सर्पो भव—इति शापोदधेः शापसमुद्रात् उत्तरैः प्रश्नोत्तरैः उत्तार्य वहिर्निष्कास्य विस्मारितः विस्मृतिं प्रापितः निजविधेः स्वप्रारब्धस्य दुर्विलासो विषमपरिपाको यस्य तस्मात् शापविमुक्ताद्देवत्वं प्राप्तान्नहुषादेव आसादिताः प्राप्ताः वराः येषां ते पाण्डवाः वरारोहया सह द्रौपद्या सह मत्स्यनगरस्य विराटनगरस्य अनतिसमीपगामिनीं किंचिद्दूरं स्थितां पितृवनशमीं स्मशानस्थशमीवृक्षम् अभजन् आश्रयन् । आदौ श्मशानशमीं किमिति भेजुः, तत्र हेतूत्प्रेक्षामाह—निजेति । निजधाम्नः निजतेजसः पिधानस्य आच्छादनस्य वैदग्ध्यं चातुर्यम् अभ्यसितुं कामो इच्छा येषां ते तथाभूता इव, शम्यां स्वान्तर्गताग्नेस्तेजोगोपनकौशलं वर्तते स्वतेजोगोपनाय तदभ्यसितुकामा इवेत्युत्प्रेक्षा । 'अगस्त्यशप्तसर्पवपुर्धरनहुषवेष्टितभीमो युधिष्ठिरेण तत्प्रश्नोत्तरदानेन मोचितः' इति भारती कथाऽनुसंधेया ॥ १ ॥

ते पाण्डवाः क्रमेण मत्स्येन्द्रस्य विराटस्य पुरोपकण्ठे नगरसमीपे करालं भयङ्करं पितृकाननं श्मशानम् आपुः प्रापुः । श्मशानप्राप्तौ हेतूत्प्रेक्षामाह—वध्विति । वधूद्रुहां द्रौपद्याः द्रोहकर्तॄणां सूतजानां कीचकानां भाविनि भविष्यति वधे प्रदेशस्य स्थलस्य दिदृक्षयेव समीचीनां वा नवेति द्रष्टुमिच्छयेव ॥ २ ॥

अमी प्रवीराः पाण्डवाः तत्र श्मशाने शमीतरौ तस्याः शम्याः अन्तः गर्भे ज्वलन् योऽग्निः तत्कल्पं तत्सदृशशस्त्रं जातावेकवचनं शस्त्राणीत्यर्थः, निधाय संस्थाप्य अन्यं भिक्षुवल्लवादिरूपं वेषमिव उच्चैः उच्चाः ध्वजाः यस्मिन् तत् विराटस्य पुरं जगाहिरे प्रविविशुः । अन्यं वेषं गृहीत्वा पुरं जगाहिरे इति भावः ॥ ३ ॥

---

१ क. दमनः । २ क. अगस्त्यस्येत्यधिकम् । ३ क. ख. अमुमिति नास्ति । ४ क. दुर्विलसितया तया वरारोहया सह । ५ क. ते मात्स्यन', ख. मात्स्यन' । ६ क. पितृवनगामिनीं शमीम् । ७ अत्र वेषान्तरविराटपुरयोः श्लेषमिसिकया स्वीकारप्रवेशयोः गाहमानेनाभेदाध्यवसितेनौपम्यस्य गम्यत्वाकेवलप्रकृतास्पदा तुल्ययोगिताऽलंकारः ।

समत्वमुत्कर्षनिकर्षयोः स्वं संदर्शयिष्यन्निव धर्मसूनुः ।
क्रमेण हंसः परमोऽपि[1] भूत्वा कङ्कत्वमापद्यत सद्य एव ॥ ४ ॥
पुराऽर्जुनस्येव यतित्वमेतदस्यापि कामप्यपरां सपत्नीम् ।
संपादयेत्किं नु ममेति कृष्णा तथाविधं वीक्ष्य नृपं शशङ्के ॥ ५ ॥

त्रिदण्डकाषायकमण्डलूज्ज्वलो
जपस्फुरद्दन्तपटो युधिष्ठिरः ।
उपानहं दारुमयीं पदा स्पृश-
न्नुपासदत्संसदि मेदिनीश्वरम् ॥ ६ ॥

दृष्ट्वा समुत्थितो मात्स्यो धृतप्रश्रयविस्मयः ।
तत्पादपांसुं फालान्ते चक्रे तं पुनरासने ॥ ७ ॥

दुर्वीरगर्वासहनोऽथ भीमो
दर्वीकरो दर्शितसूदभावः ।
शोणाधरालोलुपसूतसूनोः
प्राणानिलान्पाययितुं किलासीत् ॥ ८ ॥

---

धर्मसूनुः उत्कर्षनिकर्षयोः उत्कृष्टत्वनिकृष्टत्वयोः स्वं स्वकीयं समत्वं दर्शयिष्यन्निव क्रमेण परमः हंसोऽपि परमहंससंन्यासी, हंसपक्षी चापि भूत्वा सद्यः तत्काले एव कङ्कत्वं कङ्कनामकविप्रत्वं गृध्रसदृशपक्षित्वं च आपद्यत प्रापत् । हंसगृध्रयोर्महदन्तरं लोके प्रसिद्धम् ॥ ४ ॥

कृष्णा द्रौपदी तथाविधं यतिवेषं धर्मराजं वीक्ष्य—एतत् यतित्वं पुरा तीर्थयात्राप्रसङ्गे अर्जुनस्येव अस्यापि धर्मस्यापि एतत् यतित्वं मम कामपि अपराम् अन्यां सपत्नीं संपादयेत् किं नु—इति शशङ्के । यथार्जुनस्य यतित्वे सुभद्रा सपत्नी संपादिता तथा धर्मस्य यतित्वम् अन्यां सपत्नीं संपादयेत् किं नु इति शङ्कितवतीत्यर्थः ॥ ५ ॥

त्रिदण्डं दण्डत्रयं च काषाये रक्तवस्त्रे च कमण्डलुश्च तैः उज्ज्वलः शोभमानः जपेन ओङ्कारजपेन स्फुरन्तौ किंचिच्चलन्तौ दन्तपटौ ओष्ठौ यस्य सः युधिष्ठिरः दारुमयीं काष्ठमयीम् उपानहं पादुकां पदा चरणेन स्पृशन् धारयन् संसदि सभायां मेदिनीश्वरं विराटम् उपासदत् समीपे जगाम ॥ ६ ॥

तं यतिं दृष्ट्वा समुत्थितः मात्स्यः विराटः धृतौ प्रश्रयविस्मयौ नम्रताश्चर्ये येन तथाभूतः सन् तस्य यतेः पादस्य पांसुं धूलिं फालान्ते ललाटमध्ये चक्रे, तं यतिं पुनः आसने स्वसिंहासने चक्रे । स्वसिंहासने उपवेशयामासेत्यर्थः ॥ ७ ॥

अथ दुर्वीराणां राक्षसादीनां गर्वं न सहतेऽसौ दुर्वीरगर्वासहनः अयं भीमः शोणाध-

---

१ क. ख. हि । २ ख. पद्यमपद्ययोः स्थानव्यत्यासः । ३ क. 'करादर्शित' । ४ क. पारयितुम् । ५ अत्रोपमयोज्जीवितोत्प्रेक्षा । ६ अत्र नमस्कृत्युपवेशनक्रियययोर्यौगपद्यात्समुच्चयालंकारः 'बहूनां युगपद्भावभाजां गुम्फः समुच्चयः' इति लक्षणात् ।

पितुः सखायं परिपूज्य मेधैर्दिने दिने तृप्तिमिवोपनेतुम्।
सूदाकृतिः सोऽपि ययौ विराटं वृकोदरो वृत्तशरावपाणिः ॥ ९ ॥

कुलशैलशृङ्ग इव जङ्गमे तदा
कुरुकुञ्जरे चलति कम्पनं मुहुः।
वसुधैव तस्य न पुनरस्य केवलं
वहति स्म कीचकभुजाप्यदक्षिणा ॥ १० ॥

महानसेऽवतरतो जनस्य स पतिः कृतः।
महानसेवत रतो मात्स्यं स्वादुषु कर्मसु ॥ ११ ॥

स्त्रीत्वेन योगः खलु वीरगर्ह्यः पुंस्त्वेन चान्तःपुरवासविघ्नः।
इतीव षण्ढत्वमवश्यभाव्यमादाय पार्थोऽपि जगाम मात्स्यम् ॥ १२ ॥

कृतवसतिरसौ नृपस्य कन्या गृहभुवि नर्तयति स्म तालपाणिः।
मधुकरमुखरो लता वनान्ते मलयगिरेरिव मारुतप्ररोहः ॥ १३ ॥

---

रायां द्रौपद्यां लोलुपः अतिलुब्धो यः सूतसूनुः कीचकः तस्य प्राणानिलान्पाययितुं किल दर्वी महाराष्ट्रभाषया 'पळी' करे यस्य सः, सर्पश्च, दर्शितः सूदभावः पाचकत्वं येन तथाभूतः आसीत्। सर्पा वायुपानं कुर्वन्ति ॥ ८ ॥

सूदाकृतिः पाचकवेषः सः नियुद्धेन राक्षसहन्ता वृकोदरोऽपि भीमोऽपि परिपूज्यं सर्वतः पूजार्हं पितुर्वायोः सखायं मित्रम् अग्निं दिने दिने एधैः काष्ठैः तृप्तिम् उपनेतुमिव वृत्तशरावपाणिः दुर्वीहस्तः सन् विराटं ययौ ॥ ९ ॥

तदा जङ्गमे कुलशैलस्य विन्ध्यादिपर्वतस्य शृङ्ग इवेत्युत्प्रेक्षा, कुरुकुञ्जरे कुरुश्रेष्ठे भीमे चलति गच्छति सति तस्य पुरस्य वसुधैव केवलं मुहुः कम्पं न वहति स्म न उवाह; किं तु अदक्षिणा सव्या भुजापि कम्पनं वहति स्म। मृत्युसूचकसव्यभुजास्फुरणं बभूवेति भावः ॥ १० ॥

महानसे पाकशालायाम् अवतरतः वसतः जनस्य पतिः अध्यक्षः कृतः महान् सः भीमः स्वादुषु कर्मसु पाकक्रियासु रतः सन् मात्स्यं विराटम् असेवत ॥ ११ ॥

स्त्रीत्वेन योगः वीरस्य गर्ह्यः निन्द्यः खलु सत्यम्। पुंस्त्वेन योगस्तु अन्तःपुरे राजपत्नीगृहे वासस्य विघ्नः प्रतिबन्धकः। इतिहेतोरिव अवश्यभाव्यम् उर्वशीशापेन भविष्यत्षण्ढत्वं नपुंसकत्वम् आदाय गृहीत्वा पार्थोऽपि अर्जुनोऽपि मात्स्यं जगाम ॥ १२ ॥

नृपस्य गृहभुवि कृतवसतिः असौ अर्जुनः तालः तालक्रियामानकर्ता कराद्याघातः पाणौ यस्य तथाभूतः सन् कन्याः नर्तयति स्म। कः का इव, यथा वनान्ते वनमध्ये मधुकरैः भ्रमरैः कृत्वा मुखरः सशब्दः मलयगिरेः मारुतप्ररोहः वाताङ्कुरः लताः नर्तयति तद्वत् ॥ १३ ॥

---

१ अत्रोत्प्रेक्षाश्लिष्टपरंपरितरूपकयोरङ्गाङ्गिभावेन संकरः। २ अत्र विराटनगरभूकीचकभुजयोश्चलनेनौपम्यस्य गम्यत्वात्केवलप्रकृतास्पदा तुल्ययोगिता। ३ पूर्णोपमा।

मम ध्वजाङ्कस्य बिभर्ति संज्ञामसाविति प्रेमभरादुपेतः ।
प्रसूनधन्वेव सुतोऽपि माद्र्या मत्स्येन्द्रमागत्य ननाम मूर्ध्ना ॥१४॥
तं पश्यन्नकुलं राजा तन्द्रालुर्दृङ्निमेषणे ।
निजां मात्स्येश्वराभिख्यां निनाय प्रकटार्थताम् ॥ १५ ॥
कशां करे स बिभ्राणं शशाङ्ककुलभूषणम् ।
मन्दुरापतिमातेने तं दुरापपराक्रमम् ॥ १६ ॥
अस्मत्तिरोधिविरतेर्भविताऽत्र हेतु-
रेतद्दिनैः कतिपयैरिति जानतेव ।
पाण्डोः सुतेन चरमेण च तस्य राज्ञो
वृन्दं गवां प्रजुगुपे पृथुकौतुकेन ॥ १७ ॥
आगता नगरवासवाञ्छया देवतेव विपिनस्य पार्षती ।
केलिपुष्पमिव दन्तकङ्कतं बिभ्रती नृपवधूमुपागमत् ॥ १८ ॥
सैरन्ध्रीरूपभाजोऽस्या जातिनैच्यान्नतं शिरः ।
सुदेष्णायास्तु वीक्ष्यैनां सुन्दरीं व्रीडपीडनात् ॥ १९ ॥

---

माद्र्याः सुतः नकुलोऽपि—असौ विराटः मम ध्वजाङ्कस्य मत्स्यसंज्ञां मत्स्य इति नाम बिभर्ति धारयति—इति हेतोः प्रेमभरात्प्रेमातिशयात् उपेतः प्राप्तः प्रसूनधन्वेव मत्स्येन्द्रम् आगत्य मूर्ध्ना ननाम ॥ १४ ॥

राजा विराटः नकुलं पश्यन्सन् दृशोः निमेषणे मीलने तन्द्रालुः अलसः सन् निजां मात्स्येश्वर इति अभिख्यां नाम प्रकटः अर्थो यस्याः सा प्रकटार्था तत्तां निनाय । मत्स्यस्यानिमिषत्वात् राज्ञा नकुलसौन्दर्यदर्शने अनिमिषत्वेन निजं मत्स्येश्वरनाम अन्वर्थकं कृतमित्यर्थः ॥ १५ ॥

करेण कशाम् अश्वादेस्ताडिनीं चर्ममयीं रज्जुं बिभ्राणं शशाङ्ककुलाय भूषणवत् शोभाकरं दुरापः दुष्प्रापः पराक्रमो यस्य तं नकुलं मन्दुरायाः वाजिशालायाः पतिम् आतेने चकार ॥ १६ ॥

अत्र एतत् गवां वृन्दं कतिपयदिनैः अस्माकं तिरोधिविरतेः गुप्तस्थित्यन्तस्य हेतुः अपहरणेन कारणं भविता भविष्यति, इति जानतेव चरमेण कनिष्ठेन पाण्डोः सुतेन सहदेवेन तस्य राज्ञः विराटस्य गवां वृन्दं समूहं पृथुकौतुकेन प्रजुगुपे रक्षितम् ।कौरवैरेतद्धरणसमयेऽस्माकं प्राकट्यं भविष्यतीति जानतेवेत्युत्प्रेक्षा ॥ १७ ॥

नगरवासवाञ्छया आगता विपिनस्य वनस्य देवतेव केलिपुष्पमिव दन्तमयं कङ्कतं केशप्रसाधनोपकरणं बिभ्रती पार्षती द्रौपदी नृपवधूं विराटस्त्रियं सुदेष्णाम् उपागमत् ॥१८॥

सैरन्ध्रीरूपभाजः अस्याः द्रौपद्याः जातेः स्वीकृतसैरन्ध्रीजातेः नैच्यान्नीचत्वात् शिरः

---

१ क. वसतेर्भ । २ क. अन्तर्हे । ३ क. ख. सुषेष्णा । ४ क. तां दृष्ट्वा । ५ क. ख. व्रीलगौरवात् । ६ अत्रोत्प्रेक्षाव्यञ्जकाभावाद्गम्योत्प्रेक्षा, नकुलावलोकनप्राप्तनिमेषराहित्यस्य तादृगन्वर्थताप्राकट्यप्रापणहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गं वा ।

वनभुव इव माधवोदयश्री-
मनुजपतेरवरोधयोषितो मे ।
अनुदिनमखिलालिलालनीयै-
रलमकरोत्तिलकैरतीव हृद्यैः ॥ २० ॥

[ अनन्तरं स्ववशाभ्रमादृतकङ्कतमतिरसोत्पादनचणमधिगतशोभना-टनपाटवमिश्रितगन्धर्वकुलमाकलितगोत्रापलापं पञ्चानामपि रूपमुदञ्चयन्ती पाञ्चालनृपतिसुता पञ्चापि पतीननुयातवती ॥ ३ ॥]

विमतानपि तैर्जित्वा विवासमिव दायकः ।
अक्षेष्वकुरुतावृत्तिमवनीन्द्रेण धर्मभूः ॥ २१ ॥

---

नतं, सुदेष्णायास्तु शिरः सुन्दरीम् एनां द्रौपदीं वीक्ष्य व्रीडेन लज्जया पीडनात् नतम् ॥ १९ ॥

असौ द्रौपदी माधवोदयस्य वसन्तप्रादुर्भावस्य श्रीः शोभा वनभुवः वनभूमेरिव मनुजपतेः विराटस्य अवरोधयोषितः सुदेष्णायाः अनुदिनं प्रतिदिनम् अखिलालिभिः समस्तसखीभिः, अन्यत्र समस्तभ्रमरैः लालनीयैः श्लाघनीयैः अतीवहृद्यैः मनोहरैः तिलकैः ललाटे विशेषकैः, अन्यत्र तिलपुष्पैः अलमकरोत् अलंकृतवती । वसन्तलक्ष्मीः वनभुवं तिलकपुष्पैरिव द्रौपदी सुदेष्णां विशेषकैरलंकृतवतीत्यर्थः ॥ २० ॥

एतद्वयं क्षेपकत्वान्न व्याख्यातम् ॥ ३ ॥

तैरपि अक्षैरपि अपिशब्दात् युद्धसंग्रहः, विमतान् शत्रून् जित्वा विवासं प्रवासं दायक इव धर्मभूः अवनीन्द्रेण विराटेन सह अक्षेषु पाशकक्रीडासु आवृत्तिम् अकुरुत ।

---

१ क. असौ । २ क. ख. स्ववशा पाञ्चालसुता भृशमादृ', ख. स्ववशा' । ३ क. 'मधिकशो' । ४ क. गोत्रान्तरं पञ्चधा रूपं । ५ क. ख. पाञ्चालनृपतिसुतेति नास्ति । ६ टीकान्तरम्—अनन्तरमिति । अनन्तरं सर्वेषां विराटपुरावासानन्तरं स्ववशा स्वायत्ता न तु परतन्त्रेत्यर्थः, शिल्पकारिकापीति च अत एव पाञ्चालसुता द्रौपदी आदृता स्वीकृता कङ्कस्य भावः कङ्कता युधिष्ठिरत्वम् , आदृतं कङ्कतं प्रसाधनी च यस्मिन् तथोक्तम् । ' प्रसाधनी कङ्कतिका ' इति कोशे कङ्कतशब्दात्स्वार्थे कप्रत्यये टापि च " प्रत्ययस्थात्–" इत्यादिना कात्पूर्वस्यात इत्वे च कङ्कतिकेति ग्राह्यम् । अत एव ' शिरसीव कङ्कतमवोढमूर्धजे ' इति माघप्रयोगः । अत्यन्तं रसानां मधुरादीनां षण्णां शृङ्गाररस्य च उत्पादनेन प्रसिद्धं तच्चणम् । एकत्रालंकरणनैपुण्यात्, अन्यत्र पाकनैपुण्याच्चेति भावः । तेन वित्तेति प्रसिद्धार्थे चणप् । अधिकशोभया नाटने नाट्यशिक्षणे पाटवं सामर्थ्यं यस्मिँस्तथोक्तम्, के शिरसि अधिकं शोभायाः भूषणमाल्याद्यलंकरणजन्यायाः नाटने संयोजने पाटवं यस्मिँस्तथोक्तमिति च आश्रितं गन्धर्वाणाम् अश्वानां स्वपतीनां च कुलं वृन्दं यस्मिँस्तथोक्तम्, आकलितम् आश्रितं गोत्रान्तरं मालिनीत्यन्यन्नाम यस्मिँस्तथोक्तमिति च । ' गोत्रा गोनिचये भूम्यां नाद्रौ क्लीकुलसंज्ञयोः ' इति मेदिनी । अत एव पञ्चधा पञ्चप्रकारं रूपं सैरन्ध्रीवेषम् उदञ्चयन्ती प्रकटयन्ती सती पञ्चापि पतीन् युधिष्ठिरादीन् अनुयातवती विडम्बयति स्म । ' आर्तार्तै मुदिता हृष्टे ' इत्यादिना पतिव्रतानां पतिसमानधर्मस्मरणादिति भावः । अत्र स्ववशेति विशेषणस्य श्लेषभित्तिकाभेदाध्यवसितपञ्चविधरूपोदञ्चनसामर्थ्याभिप्रायगर्भत्वात्परिकरस्य श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्तेश्च अङ्गाङ्गिभावेन संकरः ।

एवं तैस्तैः स्वकृत्यैः संपादितं शिरःकम्पं वयःकृतमिव संततमनुभवताऽनेन महीपतिना बहुमानिताः पृथासुताः यथा विवासनखेदं तथा तदीयमपि स्वरूपमितरे जनास्तत्र नाज्ञासिषुः ॥ २ ॥

अथैकदा तत्र सुदेष्णायाः प्रेषणेन मदनोत्सवासवाय वासवायतनसदृशं वासगेहमागतां कौरवाधमकरपरिक्लेशदुःखादिव विवर्णेन वाससाऽवगुण्ठिताङ्गीं नखशशिपरंपरासेवनलालसतयेव प्रपदसंमुखीनलोचननीलोत्पलां राजीवशङ्कयाऽनुव्रजता राजहंसेनेव रजतभाजनेन राजितकराञ्चलां पाञ्चालसुतां विलोक्य पञ्चेषुबाणवञ्चितविवेको मञ्चादुपसृत्य किंचिदाकुञ्चितमौलिः कीचको नीचां वाचमुवाच ॥ ३ ॥

इदमेव हि सद्म भद्रभद्रं यदिदानीं तव मार्दवसमङ्गैः ।

---

अन्योऽपि अभ्यासदार्ढ्यार्थमावृत्तिं करोति । अवनीन्द्रेण सहाक्षक्रीडया तत्प्रीतिं वर्धयामासेति भावः ॥ २१ ॥

एवं तैस्तैः स्वकृत्यैः अङ्गीकृताऽक्षक्रीडापाकक्रियाकन्यानर्तनाश्वाध्यक्षतागवाध्यक्षतारूपस्वस्वकृत्यैः संपादितं शिरःकम्पं श्लाघाभिनयात्मकशिरश्चलनं वयसा वार्धक्येन कृतमिव संततम् अनुभवताऽनेन महीपतिना विराटेन बहुमानिताः पृथासुताः धर्मराजादयः यथा विवासनस्य देशान्तरप्रवासस्य खेदं दुःखं नाज्ञासिषुः न ज्ञातवन्तः तथा इतरे जनाः तत्र नगरे तदीयं पाण्डवीयं स्वरूपमपि नाज्ञासिषुः ॥ २ ॥

अथ तत्र विराटगृहे एकदा मदनोत्सवार्थम् आसवाय मद्यमानेतुं सुदेष्णायाः प्रेषणेन नत्वात्मबुद्ध्येति भावः, वासवायतनेन इन्द्रगृहेण सदृशं वासगेहं स्ववसतिगृहम् आगतां पाञ्चालसुतां द्रौपदीं विलोक्य पञ्चेषुणा मदनेन वञ्चितः विवेकः यस्य सः किंचिदाकुञ्चितः वक्रीकृतः मौलिः मस्तको येन सः कीचकः एतन्नामकसेनापतिः मञ्चात् मञ्चकात् उपसृत्य किंचित् तस्याः समीपं गत्वा वाचम् उवाच । कीदृशीं पाञ्चालसुतां, कौरवाधमस्य कुरुकुलोत्पन्नेषु नीचस्य दुःशासनस्य करेण परिक्लेशः आकर्षणादिः तज्जन्यदुःखादिव विवर्णेन निस्तेजस्केन मलिनेन च वाससा वस्त्रेण अवगुण्ठिताङ्गीम् । तथा, नखा एव शशिनः चन्द्राः तेषां परंपरा पङ्क्तिः तस्याः सेवने या लालसता अतितृष्णा तयेव प्रपदयोः पादाग्रयोः संमुखीने लोचने एव नीलोत्पले यस्यास्ताम् । परपुरुषदर्शनं मा भूदित्यधःपश्यन्तीमिति भावः । राजीवशङ्कया कमलभ्रान्त्या अनुव्रजता राजहंसेनेव राजतभाजनेन राजितं शोभितं कराञ्चलं कराग्रं यस्यास्ताम् ॥ ३ ॥

इदमेव हि सद्म मम गृहं भद्रात् भद्रम् अतिकल्याणरूपमित्यर्थः, यद्यत इदानीं तव

---

१ क. संपादितशिरः° । २ क. ख. तेन । ३ क. ख. सुषेण्णा° । ४ क. गृह° । ५ क. क्लेशादिव । ६ क. ख. राजतभा° । ७ क. नीचामिति नास्ति । ८ अत्र पाण्डवानां तदितरेषां च तत्तदज्ञानेनौपम्यस्य गम्यत्वात्तुल्ययोगिता । ९ अत्र केवलोत्प्रेक्षारूपकोत्प्रेक्षासंकररूपकाङ्गाङ्गिभावसंकरस्य भ्रान्तिमदुत्प्रेक्षासंकरस्य च त्रयाणां संसृष्टिः ।

अयमप्यहमस्मि धन्यधन्यो हरिणाक्षि त्वदपाङ्गगोचरो यः ॥ २२ ॥
नतगात्रि यदागमेन मां नयसे मोदगिरेरधित्यकाम् ।
चिरपुण्यफलाङ्कुरश्रियां दिवसो वैजननस्तदेष मे ॥ २३ ॥
अन्वर्थता मालिनि तेऽभिधायाः कुतो न जागर्त्यधुना कचेषु ।
तस्याः प्रतीपोदितवर्णपङ्क्तेरर्थोऽथवाऽलंकरणं ह्यमीषु ॥ २४ ॥
बाह्वोरनङ्गदत्वस्य बाले ते करणे उभे ।
एकं तयोस्तु लावण्यमितरन्नावगम्यते ॥ २५ ॥
अरम्यभावं भजते जगत्यामङ्गेषु किंचिद्विकलोऽपि लोकः ।
निरीक्ष्यसे त्वं तु विचित्रमेतन्मध्येन हीनाऽपि मनोज्ञमूर्तिः ॥२६॥

---

अङ्घ्रेः मार्दवज्ञम् अङ्घ्रिस्पर्शवदित्यर्थः । हे हरिणाक्षि ! यस्तव अपाङ्गस्य अपाङ्गदर्शनस्य गोचरः विषयः अयमहमपि धन्यधन्यः अतिधन्योऽस्मि ॥ २२ ॥

हे नतगात्रि ! हे कृशाङ्गि ! यत् यतः आगमनेन मोदगिरेः हर्षपर्वतस्य अधित्यकाम् उपरिभागं नयसे प्रापयसे तत् तस्मात् एषः अद्यतनः दिवसः चिरपुण्यस्य चिरकालिकपुण्यस्य फलाङ्कुराः फलप्रादुर्भावाः तेषां श्रियः संपत्तयः तासां वैजननः प्रसूतिमासः । यतः स्वागमनेन मह्यं हर्षं ददासि ततः प्राचीनपुण्यफलोदयः प्राप्त इति भावः ॥ २३ ॥

हे मालिनि ! पुष्पमालाकर्त्रि सैरन्ध्रि मालावति च अधुना ते तव अभिधायाः मालिनीनाम्नः अन्वर्थता मालवैशिष्ट्येन अर्थयुक्तत्वं कचेषु केशेषु कुतः न जागर्ति न विद्यते इत्यर्थः, अथवा तस्याः अभिधायाः प्रतीपं विपरीतं यथा तथा उदितानाम् उक्तानां वर्णानाम् अक्षराणां पङ्क्तेः अर्थः नीलिमा अमीषु कचेषु अलंकरणं भूषणं वर्तत इति शेषः, तव कचेषु मुक्तापुष्पादिमालापेक्षया नीलिमैव शोभाकारक इति भावः । आक्षेपालंकारः 'आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात्' इति लक्षणात् ॥ २४ ॥

हे बाले ! ते तव बाह्वोः भुजयोः अनङ्गदत्वस्य अङ्गदसंज्ञकबाहुभूषणसहितस्य मदनदत्वस्य च उभे द्वे कारणे भवतः । तयोर्मध्ये मदनदत्वस्य कारणम् एकं लावण्यं सौन्दर्यम् अवगतम् । इतरत् बाहुभूषणराहित्यस्य कारणं नावगम्यते न ज्ञायते । अलौकिकसौन्दर्यवत्यास्तव भूषणाभावे दारिद्र्यसौकुमार्यादि कारणं न ज्ञायते इति भावः ॥ २५ ॥

जगत्यां विश्वस्मिन् अवयवेषु अङ्गेषु मध्ये किंचिदपि स्वल्पमपि विकलः अवयवलेशेन हीनः लोकः अरम्यभावम् अरम्यत्वं भजते धारयति, त्वं तु मध्येन हीनाऽपि रहिताऽपि मनोरमा मूर्तिर्देहो यस्यास्तथाभूता निरीक्ष्यसे दृश्यसे । एतद्विचित्रम् आश्चर्यकारकम् । मध्यस्यातिसूक्ष्मत्वेन वर्णनं कविकुलक्षुण्णम् ॥ २६ ॥

---

१ क. फलोदयश्रि° । २ क. ख. एकम् । ३ क. संदृश्यसे त्वं निखिलेन बाले । ४ अत्र वाक्यार्थहेतुककाव्यलिङ्गद्वयसंसृष्टिः । ५ अत्राप्युत्तरवाक्यार्थहेतुकं काव्यलिङ्गम् । ६ अत्र व्याघातातिशयोक्त्योरङ्गाङ्गिभावेन संकरः ।

न पल्लवस्तन्वि न विद्रुमश्च
ताम्रोऽधरोऽयं तव बिम्बमेव ।
चन्द्रो यदि स्यात्तव वक्त्रमेत-
च्चन्द्रस्य बिम्बं सहजं हि लोके ॥ २७ ॥
कान्ते तवाननमिदं कमलावलीषु
स्रष्टुं पुरा सरसि विस्मृतमेव धात्रा ।
पश्चाद्विचिन्तनवता तदुपान्तभागे
संलक्ष्यते विरचितः खलु हंसपादः ॥ २८ ॥
कूपस्य तीरे निवसन्नपायं
को वा न धत्ते वद कोमलाङ्गि ।
त्वन्नाभिकूपस्य तटे निवासी
न दृश्यते संप्रति मध्यभागः ॥ २९ ॥
अक्षीणवक्त्रशशिसेवनलाभतोषा-
दालिङ्गितामिव मिथो रजनेस्त्रियामीम् ।
त्रेधा विभज्य रचितां वहसेऽद्य वेणीं
कं सिंहसंहननमूहयितुं वियुक्तम् ॥ ३० ॥

---

हे तन्वि! तव ताम्रः आरक्तः अयम् अधरः अधरोष्ठपल्लवो न भवति, विद्रुमः प्रवालश्च न भवति, किंतु विम्बमेव । कुत इति चेदाह—चन्द्र इति । हि यतः एतत्तव वक्त्रं मुखं चन्द्रः यदि स्यात् तर्हि लोके चन्द्रस्य विम्बं सहजं सहोत्पन्नं भवेत् । अधरविम्बत्वकल्पनाश्लेषेण चन्द्रबिम्बत्वं स्थापितम् ॥ २७ ॥

हे कान्ते! धात्रा ब्रह्मणा पुरा इदं तवाननं सरसि कमलानाम् आवलीषु पङ्क्तिषु स्रष्टुम् उत्पादितुं विस्मृतमेव । पश्चाद्विचिन्तनवता कमलमध्ये स्रष्टव्यं यत् तदत्र सृष्टमिति मनसि आनीतवता धात्रा तस्याः कमलावल्याः उपान्तभागे समीपभागे विचरतः हंसपादः लक्ष्यते खलु हंसानां तत्र विद्यमानत्वात्तत्पादोऽपि तत्र वर्तते एव । लिपिलेखनसमये यत्र यत्किंचित् विस्मृतं तत्र हंसपादसदृशं चिह्नं क्रियते ॥ २८ ॥

हे कोमलाङ्गि मृद्वङ्गि! कूपस्य तटे तीरे निवसन्वासं कुर्वन् को वा पुरुषः अपायम् अनर्थं न धत्ते न धारयति । यतः तव नाभिरेव गम्भीरत्वात्कूपः तस्य तटे निवासी मध्यभागः संप्रति न दृश्यते, तस्मात्कूपे पतितोऽदृष्टश्चेत्यनुमीयते इति भावः । मध्यस्यातिकृशत्वे पर्यवसानम् । सामान्यस्य विशेषणसमर्थनात्मकोऽर्थान्तरन्यासालंकारः ॥ २९ ॥

हे सैरन्ध्रि! कं वियुक्तं वियोगिनं सिंहसंहननं सुन्दरावयवसौन्दर्ययुक्तं पुरुषम् ऊहयितुं तर्कयितुं मृगयितुमिति यावत्, केशान् त्रेधा विभज्य रचितां वेणीं वहसे मस्तके धार-

---

१ क. ख. °विचिन्तितवता । २ क. संदृश्यते । ३ क. वसन्हि तीरे । ४ अत्रानुमानालंकारः । ५ अत्र हेत्वपह्नुतिसंभावनातिशयोक्तीनामङ्गाङ्गिभावेन संकरः ।

सुदति बहुपरागधूसरापि
त्वमपहरस्यधुना मनो मदीयम् ।
रतिरिव हरकोपदह्यमान-
स्मरतनुधूमलवाविलाखिलाङ्गी ॥ ३१ ॥

त्वामुल्लसद्बिम्बफलाधरं मे मामप्यनङ्गाशुगमर्दितं ते ।
विशङ्कमस्मिन्विजने प्रदेशे पद्मानने पातुमयं हि कालः ॥ ३२ ॥

इति तस्य तादृशं वचनमाकर्ण्यापि चित्रचम्पकमञ्जरीचञ्चरीकायमाणं पञ्चशराविकारा पाञ्चाली गिरमिमां स्मररागतिमिरकौमुदीमुदीरयामास ॥ ४ ॥

अन्तःपुरेषु विहरन्नपि कीचक त्वं
सैरन्ध्रये स्पृहयसीति विगर्ह्यमेतत् ।
रम्येषु कल्पकुसुमेषु चरन्द्विरेफो
रज्येत किं पितृवनद्रुमगुच्छिकायाम् ॥ ३३ ॥

---

यसि । 'वराङ्गरूपोपेतो यः सिंहसंहननो हि सः' इत्यमरः । वेणीमुत्प्रेक्षते—त्रेधेति । अक्षीणः पूर्णः वक्त्रशशी मुखचन्द्रमा तस्य सेवनस्य यो लाभः तेन तोषणहर्षात् मिथः अन्योन्यम् आलिङ्गितां कृतालिङ्गनां रजनेः रात्रेः त्रियामीमिव यामत्रयमिव । रात्रेश्चतुर्थप्रहरस्य परदिवसान्तर्गतत्वात्त्रियामात्वम् ॥ ३० ॥

शोभनाः दन्ताः यस्याः सा सुदती, तत्संबुद्धौ हे सुदति ! अधुना बहुभिः परागैः धूलिभिः धूसरा मलिनाऽपि त्वं मदीयं मनः अपहरसि । केव, हरकोपेन दह्यमाना या स्मरतनुः तस्याः धूमलवेन आविलं मलिनम् अखिलाङ्गं यस्याः सा रतिरिव स्मरवधूरिव॥३१॥

हे पद्मानने ! अस्मिन्विजने निर्जने प्रदेशे स्थले उल्लसत् बिम्बफलवत् अधरो यस्यास्तां पातुं चुम्बितुम् अधरोष्ठरसपानं कर्तुमित्यर्थः, मे अयं कालः समयः; अनङ्गाशुगैः मदनबाणैः मर्दितं पीडितं मामपि पातुं रक्षितुं ते तव अयं कालः । हि निश्चये । अयमन्योन्योपकारसमयो वर्तते इति भावः ॥ ३२ ॥

इति तस्य कीचकस्य वचनम् आकर्ण्यापि चित्तमेव चम्पकमञ्जरी तस्यां चञ्चरीकायमाणः भ्रमरवत् आचरन्पञ्चशरस्य मदनस्य विकारो यस्याः सा, यथा चम्पकमञ्जर्यां भ्रमरो न गच्छति तद्वत्सैरन्ध्रीचित्तं प्रति मदनविकारो नागच्छदित्यर्थः । पाञ्चाली द्रौपदी स्मररागतिमिरस्य स्मरकृतप्रीत्यात्मकतमसः कौमुदीं नाशकर्त्रीं ज्योत्स्नामिमां वक्ष्यमाणां गिरम् उदीरयामास उवाच । तदनु रागप्रतिकूलां वाणीं जगादेत्यर्थः ॥ ४ ॥

'हे कीचक ! त्वम् अन्तःपुरेषु अन्तःपुरसंबन्धिराजपत्नीषु विहरन् क्रीडन् सन्नपि सैरन्ध्रये राजपत्नीप्रसाधनकारिण्यै स्पृहयसि अभिलाषं करोषि इत्येतद्विगर्हितं निन्द्यम् । रम्येषु

---

१ क. लवावृताखि' । २ क. भयि । ३ उत्प्रेक्षालंकारोऽत्र । ४ अन्योन्यालङ्कारोऽत्र 'अन्योन्यं नाम यत्र स्यादुपकारः परस्परम्' इति लक्षणात् ।

प्रतायते चपलतापतिवत्नीषु या हठात् ।
इष्टार्थसिद्धेः प्रागेव दिष्टान्तं दोग्धि सा नृणाम् ॥ ३४ ॥
गन्धर्वाः सन्ति मे कान्ता बाधते यान्स्मरोऽनिशम् ।
स्वाभिख्यां स्वास्त्रसंख्यां च वहन्तीतीर्ष्ययेया किल ॥ ३५ ॥
दोष्मतामवतंसास्ते स्वरूपं नैव केवलम् ।
गोपायन्त्यप्रमादेन परेभ्यो मां च मानिनः ॥ ३६ ॥
तदद्य पथि वामेऽस्मिन् संप्रतिष्ठाससे यदि ।
ते तु त्वां चारयिष्यन्ति दक्षिणेऽपि धृतक्रुधः ॥ ३७ ॥
इत्यूचिषी सा महिषी कुरूणां शेमुषीमती ।
सद्यो निववृते तस्माच्चित्तवृत्तिरिवात्मनः ॥ ३८ ॥

---

मनोहरेषु कल्पकुसुमेषु कल्पवृक्षपुष्पेषु चरन् संचरन् द्विरेफः भ्रमरः पितृवनद्रुमस्य स्मशानवृक्षस्य गुच्छिकायां पुष्पमञ्जर्यो रज्येत किम् आसक्तो भवेत्किं, नैव भवेदित्यर्थः । उत्तमपदार्थान्सेवमानोऽधमपदार्थाभिलाषं नैव कुर्यादिति भावः ॥ ३३ ॥

पतिवत्नीषु सभर्तृकासु स्त्रीषु हठात् बलाद्या चपलता अविचारः प्रतायते क्रियते सा चपलता नृणाम् इष्टार्थस्य रतेः सिद्धेः प्राक् आदावेव दिष्टान्तं मृत्युं दोग्धि ददातीत्यर्थः । पतिवत्न्यभिलाषो मरणहेतुरिति भावः ॥ ३४ ॥

तव भर्ता नास्तीत्यतो वच्मीति चेदत आह—**गन्धर्वा इति** । गन्धर्वाः गुप्तरूपा मे कान्ताः पतयः सन्ति । तान् गन्धर्वान्स्मरः मद्धेतुकमदनः अनिशं सदा बाधते । बहुवचनोक्ता गन्धर्वाः कति सन्तीति चेत्तत्संख्यां बाधनहेतूत्प्रेक्षयाऽऽह—**स्वेति** । स्वाभिख्यां स्वलावण्यशोभां स्वास्त्राणां स्वबाणानां संख्यां पञ्चत्वसंख्यां वहन्ति धारयन्ति इति ईर्ष्यया किल इर्ष्ययेव । मय्यनुरक्ताः पञ्च गन्धर्वा मत्पतयः सन्तीति भावः॥ ३५॥

दोष्मतां प्रशस्तबाहुमताम् अवतंसाः शेखरीभूताः वीरश्रेष्ठा इत्यर्थः, मानिनः अभिमानवन्तः ते गन्धर्वाः स्वरूपं केवलम् अप्रमादेन सावधानतया न गोपायन्ति न गुप्तं कुर्वन्ति, किंतु परेभ्यः पुरुषान्तरेभ्यः मां च गोपायन्ति रक्षन्ति ॥ ३६ ॥

तत्तस्मादद्य वामे वक्रे अदक्षिणे च पथि वीरवनिताभिलाषरूपे मार्गे यदि संप्रतिष्ठाससे सम्यक् प्रस्थानं कर्तुमिच्छसि तर्हि धृता क्रुध् क्रोधो यैस्ते गन्धर्वास्तु त्वां दक्षिणेऽपि पथि यमदिङ्मार्गे चारयिष्यन्ति गमयिष्यन्ति । मदभिलाषं करोषि चेत्तर्हि गन्धर्वास्त्वां हनिष्यन्तीति भावः ॥ ३७ ॥

इति एवंप्रकारेण ऊचिषी उक्तवती शेमुषीमती बुद्धिमती सा कुरूणां महिषी द्रौपदी सद्यः तदानीमेव तस्मात्कीचकान्निववृते निवृत्ता । केव, आत्मनः चित्तवृत्तिरिव । यथा तस्याश्चित्तवृत्तिस्तस्मान्निवृत्ता तथा साऽपि निवृत्तेत्यर्थः ॥ ३८ ॥

---

१ क. प्रत्याय्यते । २ क. पत्नीषु । ३ क. 'ष्ठास्यसे । ४ क. ख. इत्यूचुषी ।

यथा यथाऽस्या धावन्त्या रिङ्खणेन पदोर्युगम् ।
तथा तथा रुषाऽऽरुण्यं तस्याधत्त दृशोरपि ॥ ३९ ॥

कृष्णा ततस्तेन कृतान्तभासा
केशे गृहीत्वा भुवि पातिता सा ।
पर्यायबद्धोद्यमविश्रमाभ्यां
पद्भ्यां कराभ्यामपि पर्यभावि ॥ ४० ॥

प्रहारभीत्येव तदा मृगाक्ष्या नाड्यां क्वचिद्याऽन्तरधत्त संज्ञा ।
उद्गम्य सा दूरगते प्रहर्तर्युद्घाटयामास दृशौ चिराय ॥ ४१ ॥

तदनु शनैरुत्तस्थुषी धरातलपरागधूसरिमतिरोहितदीधितितया वासरापलापितमहामहौषधिलतेव विलुलितचूर्णकुन्तलतया चक्रवाताकुलीकृतवालपूलिका चमरमृगीव सूतान्ववायजनपदस्य प्रथमामीतिबाधामिव बाष्पधारामुत्सृजन्ती क्वचिदपि शरणमलभमाना सा याज्ञसेनी मन्दं मन्दं तदेव भूपतिभवनमभिजगाम ॥ ५ ॥

---

धावन्त्याः हठात् तत्प्रवृत्तिः स्यादितिभयात्पलायमानायाः अस्याः सैरन्ध्र्याः रिङ्खणेन स्खलद्गमनेन पदोः चरणयोः युगं यथा यथा आरुण्यं रक्तताम् आधत्त दधौ तथा तथा अस्य कीचकस्य दृशोः युगं रुषा रोषेण आरुण्यम् आधत्त । पलायमानायाः तस्याः ग्रहणविषये कीचकः रोषेण पश्चादधावतेति भावः ॥ ३९ ॥

ततः कृतान्तभासा यमसदृशेन तेन कीचकेन केशे गृहीत्वा धृत्वा भुवि पातिता सा कृष्णा द्रौपदी पद्भ्यां कराभ्यामपि पर्यभावि पराभूता, ताडितेत्यर्थः । किंभूताभ्यां पद्भ्यां कराभ्यां, पर्यायेन बद्धौ धृतौ उद्यमविश्रामौ ताडनविषये उद्योगविश्रान्ती याभ्यां तौ । लत्ताप्रहारैश्चरणयोः श्रमाद्विरामे कराभ्यां ताडनं चकार ताडनेन करयोः श्रमाद्विरामे पद्भ्यां लत्ताप्रहारान् चकारेति भावः ॥ ४० ॥

तदा पराभवसमये या मृगाक्ष्याः द्रौपद्याः संज्ञा ज्ञानं प्रहारभीत्येव स्वस्यापि प्रहारः स्यादिति भयेन क्वचित् नाड्याम् अन्तरधत्त गुप्ता बभूव । मूर्छायां ज्ञानाभावो भवति सा संज्ञा प्रहर्तरि दूरगते सति चिराय बहुकालेन उद्गम्य प्रकटीभूय दृशौ उद्घाटयामास । अस्मात् प्रस्तुतवृत्तान्तात् काचित् स्त्री कस्मिंश्चिदन्यां स्त्रियं स्वसमीपे ताडयति सति स्वस्मिन् प्रहारभयेन कपाटं पिधाय गृहमध्ये कुत्रचिद्गुप्ता भूत्वा प्रहर्तरि गते सति पश्चादुत्थाय कपाटम् उद्घाटयतीत्यप्रस्तुतवृत्तान्तस्फुरणात् समासोक्तिरलंकारः ' समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ' इति लक्षणात् ॥ ४१ ॥

तदनु संज्ञाप्राप्त्यनन्तरं शनैरुत्तस्थुषी उत्थितवती धरातलस्य परागैः पांसुभिः धूसरिम्णा धूसरत्वेन तिरोहिता अन्तर्हिता दीधितिः शरीरकान्तिर्यस्याः सा तस्याः भावस्तत्ता तया वासरेण दिवसेन अपलापितं निह्नुतं महः तेजो यस्याः सा महौषधिलतेव विलु-

---

१ क. गृहीता । २ क. °पलपितं । ३ क. चमरी । ४ क. भूपतिरिति नास्ति ।

दृष्ट्वा तां ज्ञातवृत्तान्तो देव्या गेहे चरन् जनः ।
नयनाम्भो विमुमुचे न तु किंचन भाषितम् ॥ ४२ ॥

सायं महानसशयं शनकैर्ययौ सा
भीमं रहः पृथुशरावकृतोपधानम् ।
धूमाधिरोहमलिनं वसनं वसानं
नीलाम्बुवाहपरिवीतमिवाचलेन्द्रम् ॥ ४३ ॥

निःश्वस्य दीर्घमियमन्तिकमावसन्ती
स्पृष्टेन बाष्पसलिलैः कुचयोः स्खलद्भिः ।
बुद्धेन तेन किमिदं व्यसनं तवेति
पृष्टा सगद्गदमुवाच विषण्णचेताः ॥ ४४ ॥

किमद्य मे दुःखमपत्रपा का
को वीरपत्नीत्वपदेऽभिमानः ।

---

लिताः मर्दिताः चूर्णकुन्तलाः वक्रकेशाः यस्याः सा तस्याः भावस्तत्ता तथा चक्रवातेन आकुलीकृता मर्दिता वालपूलिका पुच्छकेशगुच्छो यस्याः सा चमरमृगीव चमरीव सूतान्ववायजनपदस्य कीचककुलजनपदस्य प्रथमाम् ईतिबाधामिव अतिवृष्टिमिव नाशकर्त्रीमित्यर्थः, बाष्पधाराम् उत्सृजन्ती क्वचिदपि शरणं रक्षितारम् अलभमाना सा याज्ञसेनी द्रौपदी तदेव भूपतिभवनं मन्दं मन्दं यथा तथा अभिजगाम ॥ ५ ॥

तां सैरन्ध्रीं दृष्ट्वा ज्ञातः वृत्तान्तः कीचककृतताडनादिर्येन स देव्याः राजपत्न्याः गेहे चरन् जनः नयनयोः अम्भः बाष्पं विमुमुचे तत्याज, भाषितं भाषणं तु किंचन किमपि न विमुमुचे । राजगृहस्थो जनः कीचककृतताडनां सैरन्ध्रीं दृष्ट्वा दुःखात् केवलं रुरोद तद्भयात् सदसद्भाषणं तु न चकारेत्यर्थः ॥ ४२ ॥

सा द्रौपदी सायं सायंकाले रात्रेः प्रथमप्रहरे 'सायंप्रातर्द्विजातीनामशनं श्रुतिचोदितम्' इत्यत्र सायंपदस्य तथार्थदर्शनात्, महानसे पाकशालायां शेतेऽसौ महानसशयः तं पृथुना विपुलेन शरावेण पाकपात्रविशेषेण कृतम् उपधानम् उच्छीर्षकं येन तं धूमाधिरोहेण धूमलेपेन मलिनं वसनं वस्त्रं वसानं परिदधानम् अत एव नीलेन अम्बुवाहेन मेघेन परिवीतम् आवृतम् अचलेन्द्रं महापर्वतमिव स्थितं भीमं रहः एकान्ते शनैः मन्दं मन्दं यथा तथा ययौ जगाम ॥ ४३ ॥

अन्तिकं समीपभागम् आवसन्ती स्थिता विषण्णं विषादयुक्तं चेतो यस्याः सा इयं द्रौपदी दीर्घं निःश्वस्य कुचयोः स्खलद्भिः पतद्भिः बाष्पसलिलैः उष्णनेत्रोदकैः स्पृष्टेन अत एव बुद्धेन जागृतेन तेन भीमेन 'इदं तव व्यसनं दुःखं किं कीदृशं, किन्निमित्तं च' इति पृष्टा कृतप्रश्ना सती सगद्गदं दुःखात् असपष्टाक्षरं यथा तथा उवाच ॥ ४४ ॥

अद्य मे दुःखं किं किमपि नास्तीति सोल्लुण्ठनं वचनम् । एवमग्रेऽपि । अपत्रपा

---

१ क. ख. मुकुलैः ।

सर्वं गतं कीचकनीचषिङ्गा-
द्धृत्वा कचे ताडनमाप्तवत्याः ॥ ४५ ॥
मयि दुःखेन घुष्यन्त्यां मत्स्याधिपसभान्तरे।
तथ्यस्यैव यतेरासीद्धर्मसूनोरुपेक्षणम् ॥ ४६ ॥
बुभुक्षते न जीवन्तीं मारितामेव मां नृपः।
कल्याणं खलु तत्तस्य कङ्कभावभृतोऽधुना ॥ ४७ ॥
तस्यैवाज्ञापथेऽजस्रं चलता स्खलनं विना।
भवता खलु निःशङ्कं परामृश्ये कचेऽपरैः ॥ ४८ ॥
दुःशासनादप्यधिकोऽपराधे
सूतात्मजोऽयं न निहन्यते चेत्।
आद्ये कचग्राहिणि नाशितेऽपि
समायुषौ वेणिमवेहि मां च ॥ ४९ ॥

---

अन्यतो लज्जा च का, वीरपत्नीत्वपदे वीरभार्यात्वस्थाने अभिनानश्च कः, एतत्त्रयं केवलं नास्तीति न अपि तु कीचकनामा नीचषिङ्गः नीचविटः तस्मात्कचं धृत्वा ताडनम् आप्तवत्याः मे सर्वं गतम् सर्वनाशे सति पृथक्कस्य नाशं वच्मीति भावः ॥ ४५ ॥

मत्स्याधिपस्य विराटस्य सभान्तरे सभामध्ये मयि दुःखेन घुष्यन्त्याम् आक्रोशन्त्यां सत्यां तथ्यस्य सत्यस्य यतेरिव संन्यासिन इव धर्मसूनोः उपेक्षणम् उपेक्षा आसीत् ॥४६॥

उपेक्षाकारणं कल्पयित्वाह—**बुभुक्षते** इति। नृपः धर्मराजः जीवन्तीं मां न बुभुक्षते उपभोक्तुं नेच्छति अपि तु मारितां गतप्राणामेव बुभुक्षते उपभोक्तुमिच्छति, भक्षयितुमिच्छति च। अधुना कङ्कभावभृतः कङ्कभावं कङ्कसंज्ञां गृध्रत्वं च धारयतः तस्य धर्मराजस्य तत्खलु तदेव मृतभक्षणमेव कल्याणं समीचीनं प्रियमिति यावत् ॥ ४७ ॥

तस्यैव उपेक्षाशालिनो धर्मसूनोरेव आज्ञापथे स्खलनं विना प्रमादं विना अजस्रं निरन्तरं चलता भवता खलु भवतैव निःशङ्कं कचे परैः अन्यैः करणभूतैः अहं परामृश्ये धृता। त्वदुपेक्षयैव परैर्मत्कचधारणं क्रियते इति भावः ॥ ४८ ॥

आत्मनो निश्चयमाह—**दुःशासनादिति**। अपराधे विषये दुःशासनादपि अधिकः लत्ताप्रहारताडनादिकरणात्, अयं सूतात्मजः कीचकः न निहन्यते चेत् तर्हि आद्ये प्राथमिके कचग्राहिणि दुःशासने नाशितेऽपि हतेऽपि मां वेणिं कचग्रथनं च समायुषौ अवेहि जानीहि। अयं भावः, वस्त्रहरणसमये दुःशासनवधपर्यन्तं वेणिमोक्षं न करिष्यामीति प्रतिज्ञा कृता अतस्तद्वधे कृतेऽपि द्वितीयकचधारककीचकवधो न करिष्यते चेत् तर्हि यावज्जीवं वेणिमोक्षं न करिष्यामीति भावः ॥ ४९ ॥

---

१ क. °पिङ्गाद्धृत्वा कचम्। २ क. चरता। ३ क. °मर्श्यां। ४ क. ख. °धिकापराधः। ५ अत्र कीचकताडनेन सर्वलोपसमर्थनात्काव्यलिङ्गम्। ६ अत्र कङ्कत्वमारणकाङ्क्षयोः संन्यासदारोपेक्षयोश्चानुरूपयोर्घटनवर्णनात्समालंकारद्वयम्।

अयं बलीयानिति ते मतिश्चे-
दन्यत्र मां क्वापि नयस्व भीरुम् ।
अज्ञातवासेऽप्यनुभूयमाने
रक्ष्यं हि शीलं गृहिणीजनानाम् ॥ ५० ॥

श्रुत्वा वधूगिरमिमां स्वपनोपनीतं
शोणत्वमक्ष्णि पुनरुक्तयतो रुषाऽपि ।
तस्याधरोष्ठमुदवेपत निर्गमिष्य-
त्क्रूराक्षरावलिविमर्दनशङ्कयेव ॥ ५१ ॥

गदाऽपि सा तिष्ठतु मे गभीरा नियुद्धमात्रं मयि निर्मिमाणे ।
क्व मेघवाहः क्व मरालवाहः क्व तार्क्ष्यवाहः क्व महोक्षवाहः ॥ ५२ ॥

हिडिम्बकिर्मीरबृहद्रथात्मभू-
बकादिहत्या तरतस्त्रपाम्बुधौ ।
निमज्जनायैव भुजस्य मेऽधुना
स्रजस्यमुं कीचकसूदनोद्यमम् ॥ ५३॥

---

तत्क्रोधोद्दीपनार्थमाह—अयमिति । अयं कीचकः बलीयान् इति ते मतिश्चेत्तर्हि भीरुं माम् अन्यत्र क्वापि कुत्रचित् स्थले नय । अज्ञातवासे तद्वधादि कथं करोमीति चेदाह–अज्ञातेति । हि यतः अज्ञाते वासे अनुभूयमानेऽपि तरुणीजनानां तरुणस्त्रीणां शीलं सदाचरणं रक्ष्यं रक्षितुं योग्यम् ॥ ५० ॥

इमां वध्वाः द्रौपद्याः गिरं श्रुत्वा स्वपनेन निद्रया उपनीतं प्रापितम् अक्षिण नेत्रे शोणत्वं रक्तत्वं रुषाऽपि क्रोधेनापि पुनरुक्तयतः द्विगुणं कुर्वतः तस्य भीमस्य अधरोष्ठं निर्गमिष्यन्ती या क्रूराक्षराणाम् आवलिः तया विमर्दनस्य घर्षणस्य शङ्कयेव उदवेपत अकम्पत । क्रोधेनोष्ठस्फुरणे क्रूराक्षराविमर्दशङ्कात्मकहेतूत्प्रेक्षा । अन्याऽपि भाविघर्षणासहनशङ्कया वेपते । वधूवाणीं श्रुत्वा क्रुद्धः सन्नुवाचेति भावः ॥ ५१ ॥

सा गभीरा दृढत्वस्यान्तेन रहिता मे मम गदाऽपि तिष्ठतु । मयि नियुद्धमात्रं बाहुयुद्धमात्रं निर्मिमाणे कुर्वति सति मेघवाहः इन्द्रः क्व कुत्र तिष्ठेत्, मत्पुरः स्थातुं नैव शक्तो भवेदित्यर्थः । मरालवाहः ब्रह्मा क्व, तार्क्ष्यवाहः विष्णुश्च क्व, महोक्षवाहः सदाशिवश्च क्व, एतेऽपि मत्पुरः स्थातुं नैव शक्नुयुरित्यर्थः ॥ ५२ ॥

हिडिम्बश्च किर्मीरश्च बृहद्रथभूः जरासंधश्च बकश्च आदयो येषां तेषां हत्या हननेन त्रपाम्बुधौ लज्जासमुद्रे तरतः मे भुजस्य निमज्जनायैव अमुं कीचकस्य सूदनोद्यमं वधोद्योगं

---

१ क॰ कुलपालिकानाम् । २ क॰ °मिति । ३ क॰ °द्विपञ्चाशत्कत्रिपञ्चाशत्कयोः पाठव्यत्यासः । ४ अत्र शीलसंरक्षणावश्यकत्ववाक्यार्थेन द्रौपद्या अन्यत्र नयनसमर्थनात्काव्यलिङ्गम् । ५ अत्र विनैव गदां बाहुयुद्धमात्रेण इन्द्रादीनां पलायनवस्तुना का गणना कीचकस्येत्यर्थान्तरापत्त्यात्मकार्थापत्त्यलंकारप्रतीतेः वस्तुनालंकारध्वनिः ।

तथाऽप्यौदास्यमेतस्मिन्ननौपायिकमेव मे ।
क्षोदीयानपि वध्यो हि कुलस्त्रीध्रुङ्महीयसाम् ॥ ५४ ॥

अये तन्वि किं बहुना—

तस्यासृजा यावकिताङ्घ्रिमस्थ्नां चूर्णेन कर्पूरमयाङ्गरागाम् ।
अकीर्तिमष्याऽथ विलिप्तनेत्रामलंकरिष्ये मम वीरलक्ष्मीम् ॥ ५५॥

वीरश्रियः शिल्पमिदं मयोक्तं यथार्थभावादनुभूय सद्यः ।
सैरन्ध्रिकाचारविनोदनेऽपि तवानुसारेच्छुमवेहि मां त्वम् ॥ ५६ ॥

त्वया पुनः श्वः स्मितपूर्ववाचा प्रत्युत्पतन्त्येव कटाक्षखेलैः ।
क्रीडां विधातुं क्रियताममुष्य संकेतभूस्ताण्डवमण्डपोऽयम् ॥५७॥

इत्याश्वासितवतः पत्युरनुमत्या पुनरागत्य नेपथ्यभवनमधिशयालोरस्याश्चेतसः पलायमानस्य भयभरस्य साऽपि विभावरी सहचरी बभूव ॥ ६ ॥

---

सृजसि उत्पादयसि। दैत्यराक्षसक्षत्रियादीनां निहननस्य मयोग्यकर्मत्वाभावात् लज्जाम्बुधौ पतितस्य निमज्जनायैव अतितुच्छमनुष्यसूतपुत्रवधं कथयसीति भावः ॥ ५३ ॥

तथापि एतद्वधकर्मणः अतितुच्छत्वेऽपि अस्मिन्कीचके औदास्यम् उदासीनत्वं मे मह्यम् अनौपायिकमेव अयोग्यमेव । हि यतः महीयसाम् अतिमहतां पुंसां क्षोदीयानपि अतिक्षुद्रोऽपि कुलस्त्रीध्रुक् कुलस्त्रियां द्रोग्धा वध्यः वधार्हः ॥ ५४ ॥

अये तन्वि! बहुना उक्तेन किं तस्य कीचकस्य असृजा रक्तेन यावकितौ संजातलाक्षारसरागौ अङ्घ्री यस्यास्तां तस्य अस्थ्नां चूर्णेन कर्पूरमयः अङ्गरागोऽङ्गलेपनं यस्यास्तां तस्य अकीर्तिरेव मषी कज्जलरसः तेनापि अभिलिप्ते नेत्रे यस्यास्तां मम वीरलक्ष्मीम् अलंकरिष्ये विशेषणोक्तरीत्या प्रसाधनं करिष्यामि । तं हनिष्यामीति भावः ॥ ५५ ॥

हे प्रिये! त्वं मया इदम् उक्तं वीरश्रियः शिल्पं प्रसाधनं यथार्थभावात् सत्यतया सद्यः अनुभूय मां सैरन्ध्रिकाचार एव विनोदनेऽपि नोदः तद्विषयेऽपि तव अनुसारेच्छुम् अनुकरणेच्छुम् अवेहि जानीहि । अहं राज्ञ्याः प्रसाधनकर्म करोमि अयमपि श्रियः प्रसाधनं कृत्वा मदनुकरणं करोतीति ज्ञास्यतीति भावः ॥ ५६ ॥

त्वया पुनः श्वः उत्तरदिने कटाक्षाणां खेलैः क्रीडाभिः सह प्रत्युत्पतन्त्येव सन्मुखोद्गमनं कुर्वत्येव स्मितपूर्वया वाचा क्रीडारतिं क्रीडां विधातुं कर्तुम् अयं ताण्डवमण्डपः अमुष्य कीचकस्य संकेतभूः संकेतस्थानं क्रियताम् । अद्य पूर्वरात्रौ अस्मिन् मण्डपे एकाकिना त्वया इष्टसिद्ध्यर्थमागन्तव्यम्, अहमप्यागमिष्यामीति संकेतः क्रियतामित्यर्थः ५७

इति एवंप्रकारेण आश्वासितवतः पत्युः भीमस्य अनुमत्या अनुमोदनेन पुनः आगत्य नेपथ्यभवनं राज्ञ्याः करणीयनेपथ्यगृहम् अधिशयालोः नेपथ्यगृहे शयानाया इत्यर्थः,

---

१ क. ख. 'न्ननोपयिक' । २ क. 'प्याभिलिप्तनेत्री' । ३ क. च । ४ ख. जालैः । ५ ख. 'पत्य । २ क. 'स्तस्याः ।

अन्येद्युरेत्य चपलः पुनरब्रवीत्तां
सुभ्रु प्रसीद मयि तुल्यनिकारपात्रे ।
केलीषु हार्दकलहेषु च केशकृष्टिं
पादाहतिं च दधती कुरु वैरशुद्धिम् ॥ ५८ ॥
पञ्च सन्तु धवास्तेभ्यो मुञ्च भीतिं मयि स्थिते ।
पञ्चवक्त्रे वने दृष्टे किं चरेयुः परे मृगाः ॥ ५९ ॥
मस्तकेऽञ्जलिपद्मस्य मम संप्रति भामिनि ।
प्रसादशंसिनं पादं प्रयच्छ सहचारिणम् ॥ ६० ॥

इत्यतिवेलं प्रलपन्तमेनं प्रति जुगुप्सया मुखसाचीकरणे त्रपाहेतुकतामभिनयन्ती सा कुन्तीस्नुषा तृष्णाभिभूतेव वचनमिदं किंचिदुदञ्चयाञ्चक्रे ॥ ७ ॥

अयि भद्र जगदिदमारुद्रं क्षुद्रयितुमनिद्राणस्य शम्बरद्रुहः शासनमुद्रणाय द्रुह्यति को वा जनः किंतु इयानेव प्रस्तुते विशेषः ॥ ८ ॥

---

अस्याः द्रौपद्याः चेतसः सकाशात्पलायमानस्य भयभरस्य सा विभावरी रात्रिरपि सहचरी सहगमनकर्त्री बभूव । तस्याः भयं गतं रात्रिरपि गतेत्यर्थः ॥ ६ ॥

चपलः अस्थिरचित्तः कीचकः अन्येद्युः अन्यस्मिन्द्वितीये दिवसे एत्य समीपमागत्य पुनः तां सैरन्ध्रीम् अब्रवीत् । हे सुभ्रु सुन्दरि ! तुल्यनिकारस्य मया कृतत्वत्पराभवतुल्यपराभवस्य पात्रे मयि प्रसीद केलीषु रतिक्रीडासु हार्दकलहेषु स्नेहकलहेषु च केशकृष्टिं केशेषु गृहीत्वा कर्षणं पादाहतिं लत्ताप्रहारं च दधती कुर्वती सती वैरशुद्धिं वैरस्य प्रतीकारं कुरु ॥ ५८ ॥

ते पञ्च धवाः गन्धर्वपतयः सन्तु । मयि स्थिते सति तेभ्यः सकाशात् भीतिं मुञ्च त्यज । वने पञ्चवक्त्रे सिंहे दृष्टे सति परे मृगाः चरेयुः इतस्ततः गच्छेयुः किम् , अपि तु भयान्नैव गच्छेयुरित्यर्थः ॥ ५९ ॥

हे भामिनि ! कोपेन संप्रति मम मस्तके अञ्जलिपद्मस्य सहचारिणं सखायं प्रसादशंसिनं प्रसादसूचकं पादं प्रयच्छ निधेहीत्यर्थः ॥ ६० ॥

इत्थम् अतिवेलम् अत्यन्तं प्रलपन्तम् अनर्थकं वचो वदन्तम् एनं कीचकं प्रति जुगुप्सया कुत्सया मुखस्य साचीकरणे तिर्यक्करणे त्रपाहेतुकतां त्रपाहेतुकमिदं मुखसाचीकरणे अभिनयन्ती मुखोपरि वसनाञ्चलानयनाद्यभिनयं कुर्वती सा कुन्तीस्नुषा द्रौपदी तृष्णाभिभूतेव कीचकरतीच्छापराभूतेव इदं वक्ष्यमाणं वचनम् उदञ्चयाञ्चकार प्रकटीचकार, उवाचेत्यर्थः ॥ ७ ॥

अयि भद्र कल्याण ! को वा जनः आरुद्रं रुद्रम् अभिव्याप्य इदं जगत् विश्वं क्षुद्रयितुं

---

१ ख. ॰राश्वसत्ताम् । २ क. ख. मानिनि । ३ क. इत्थम । ४ क. प्रत्यरुचिमुं । ५ क. चकार । ६ क. ख. ॰द्राणाय । ७ क. वस्तुनि । ८ अत्र तुल्ययोगितालंकारः ।

स्त्रीपुंसयोर्भावनटौ मिथो यौ पूर्वस्तयोर्व्रीडतिरःपटेन ।
चिरायते स्पष्टयितुं स्वरूपं परस्तु तन्नोत्सहतेऽनुमन्तुम् ॥ ६१ ॥

किं बहुना—

गीर्भिस्तवाद्य चतुराभिरुदस्यते मे
गन्धर्वदण्डनभयं त्वदवाप्तिविघ्नः ।
तस्माद्भजस्व रतिसौख्यभराय रात्रौ
भीमे स्थिते तमसि नर्तनगेहमध्यम् ॥ ६२ ॥

तथैव लीलां तनवानि तत्र तल्पान्तसीमानमुपेयुषस्ते ।
भूयो यथान्तःपुरिकाजनानां वक्त्रं न पश्येर्न पुनः स्पृशेश्च ॥ ६३ ॥

एवं मृगाक्ष्या वचनमाक्षिकस्य क्षौद्रपटलीभूतकर्णपुटः प्रमोदार्णवजलमानुषायमाणहृदयः सदनमासाद्य समारम्भणपूर्वेण सलिलावगाहेन विरजीकृताङ्गोऽयमन्तरिव बहिरप्यवलिप्तः, ततः परं भगवति निज-

---

दीनं कर्तुम् अनिद्राणस्य सावधानस्य शम्बरद्रुहः मदनस्य शासनमुद्रणाय शासनपिधानाय को वा जनः द्रुह्यति मदनाज्ञानुसरणं को वा न करोतीत्यर्थः, अपि तु सर्वोऽप्यनुसरणं करोत्येव । किं तु इयानेव प्रस्तुते विशेषः ॥ ८ ॥

स्त्रीपुंसयोः मिथः भावनटौ परस्परं नर्तकौ स्तः । तयोः पूर्वः स्त्रीभावनटः व्रीड एव लज्जैव तिरःपटः अन्तर्धानपटः तेन स्वरूपं स्पष्टयितु प्रकाशयितुं चिरायते विलम्बं करोति । परस्तु पुरुषभावनटस्तु तत् विलम्बकरणम् अनुमन्तुम् अनुमोदितुं नोत्सहते । स्त्री लज्जया स्वेच्छां चिराय प्रकटयति पुरुषस्तु तामुत्सुकतया सद्यः प्रकटयतीत्यर्थः ॥ ६१ ॥

बहुना उक्तेन किम्—

अद्य चतुराभिः चातुर्ययुक्ताभिः तव गीर्भिः कर्त्रीभिः तव अवाप्तेः विघ्नः मे गन्धर्वाणां दण्डनभयं शासनभयम् उदस्यते त्याज्यते । तस्मात् रतिसौख्यभराय रात्रौ भीमे भयंकरे तमसि स्थिते सति नर्तनगेहमध्यं भजस्व । अत्र रात्रौ तमसि भीमे भीमसेने स्थिते सतीत्याकूतम् ॥ ६२ ॥

तत्र मण्डपे ते तव तल्पान्तस्य शय्यासमीपस्थलस्य सीमानम् उपेयुषः प्राप्तवतः सतः तथैव लीलां क्रीडां तनवानि कुर्याम् यथा त्वम् अन्तःपुरिकाजनानाम् अन्तःपुरस्थस्त्रीजनानां वक्त्रं भूयः पुनः न पश्येः पुनर्न स्पृशेश्च । मम क्रीडावैदग्ध्यमनुभूयान्तःपुरस्त्रीणां तादृशवैदग्ध्याभावात् तव तासां मुखदर्शनेच्छा नैव स्यात्, तथा तन्मुखचुम्बनार्थं स्पर्शेच्छाऽपि नैव स्यादिति प्रकृतार्थः । तथा लीलां युद्धक्रीडां कुर्यां यथा क्रीडया तव मरणे सति पुनरन्तःपुरस्त्रीणामपि वक्त्रदर्शनस्पर्शने नैव करिष्यसीत्याकूतम् ॥ ६३ ॥

एवं मृगाक्ष्याः द्रौपद्याः वचनमेव माक्षिकं मधु तस्य क्षौद्रपटलीभूतौ मधुमक्षिकावल्मीकसमूहात्मकौ कर्णपुटौ यस्य सः, प्रमोदार्णवस्य आनन्दसमुद्रस्य जलमानुषायमाणं हृदयं मनो यस्य सः, सदनम् आसाद्य एत्य समालम्भनं सुगन्धितैलद्रव्यरसविलेपनं पूर्वं यस्य

---

१ क. रतिसुन्दरीणाम् । २ क ख. समालम्भनं ।

तनुजप्रजावतीमनोरथसिद्धिं संपादयितुमिव कमलबन्धौ चरमसिन्धौ निमग्ने निरुध्यमानादिविषद्ध्वान्ते ध्वान्तकदम्बे संभृतसंभोगसंविधानः कीचको निर्वर्तितराजभोजनपरिवेषणकृत्येन पवनसूनुना प्रविष्टपूर्वं तदेव नर्तनगेहमगाहत ॥ ९ ॥

क्व सालभञ्जिकेवासि मानिनि स्तम्भपार्श्वगा ।
इत्यसौ भीमतल्पान्तमाससाद शनैः शनैः ॥ ६४ ॥

ततस्तं बल्लवोऽपि स्त्रैणसमुचितेन कण्ठस्वरेण मृदुलमेवं जगाद १०

वधूशतमनादृत्य मामपेक्ष्य यदागमः ।
तत्त्वां बहिर्गतप्राणं मन्यते मे मनोऽधुना ॥ ६५ ॥

एवमुक्तवते वृकोदराय कीचकः पुनरपि वाचं मृदुपदामुपायनमादद ॥ ११ ॥

---

तेन सलिलावगाहेन जलस्नानेन विरजीकृतं निर्मलीकृतम् अङ्गं येन सः अयम् अन्तरिव बहिरपि अवलिप्तः अन्तः गर्वितः बहिश्चन्दनादिलिप्तश्च, ततः परं भगवति कमलबन्धौ सूर्ये निजतनयस्य कर्णस्य प्रजावत्याः भ्रातृजायायाः मनोरथस्य कीचकवधरूपेच्छायाः सिद्धिं संपादयितुमिव चरमसिन्धौ पश्चिमसमुद्रे निमग्ने सति सूर्यास्ते सतीत्यर्थः, निरुध्यमानः दिविषद्ध्वान्तः आकाशमध्यभागो येन तस्मिन् ध्वान्तकदम्बे तमःसमूहे संभृतं संपादितं संभोगसंविधानं ताम्बूलपदार्थादिसंभोगोपकरणं येन सः कीचकः निर्वर्तितं कृतं राजभोजनस्य परिवेषणकृत्यं येन तेन पवमानसूनुना भीमेन प्रविष्टपूर्वम् आदौ प्रविष्टं तदेव नर्तनगेहम् अगाहत प्राविशत् ॥ ९ ॥

'हे मानिनि ! त्वं सालभञ्जिकेव पुत्तलिकेव स्तम्भपार्श्वगा सती क्वासि ' इत्युक्त्वा असौ कीचकः भीमस्य तल्पान्तं शय्यासमीपभागं शनैः शनैः आससाद प्राप ॥ ६४ ॥

ततः बल्लवोऽपि पाचको भीमोऽपि स्त्रैणस्य स्त्रीकामुकस्य समुचितेन श्राव्यतया योग्येन कण्ठस्वरेण मृदुलं यथा तथा एवं वक्ष्यमाणं जगाद ॥ १० ॥

' यस्मात् वधूशतम् अन्तःपुरस्त्रीशतम् अनादृत्य माम् अपेक्ष्य आगमः आगतोऽसि तत्तस्मात् अधुना मे मनः त्वां बहिर्गतप्राणं बहिर्भागे विद्यमानमद्रूपप्राणं मनुते मन्यते इति प्रकृतार्थः । यतः स्वस्त्रीत्यागं कृत्वा मदभिलाषं करोषि ततस्त्वां गतप्राणं मन्ये इत्याकूतम् ' ॥ ६५ ॥

एवम् उक्तवते वृकोदराय भीमाय कीचकः पुनरपि मृदूनि पदानि यस्यां तां वाचम् उपदाम् उपायनं विदधे चक्रे । श्लक्ष्णां वाचमुवाचेत्यर्थः ॥ ११ ॥

---

१ क. तनय° । २ ख. निमज्जमाने । ३ क. ध्वान्ते इत्यधिकम् । ४ क. ख. पवमानसू° । ५ क. °नमण्डप° । ६ क. वलल: । ७ क. °मुपदां विदधे, ख. उपदाम् । ८ अत्राङ्गाङ्गिभावेन संकीर्णस्य श्लिष्टपरंपरितरूपकद्वयस्य श्लेषभित्तिकाभेदाध्यवसितावलेपेनान्तर्बाह्ययोः औपम्यगमकस्य तुल्ययोगिताभेदस्य मनोरथसंपादनोत्प्रेक्षायाः सिन्धौ बन्धावित्येकव्यञ्जनावृत्तिरूपवृत्त्यनुप्रासस्य ध्वान्तेऽध्वान्ते इति व्यञ्जनयुग्मावृत्तिरूपच्छेकानुप्रासस्य च अर्थालंकारशब्दालंकाराणां सजातीयविजातीयानां संसृष्टिः ।

गन्धर्वानपि दयितांस्तृणाय मत्वा
मामेवं रतिविधये प्रतीक्षसे यत् ।
देवत्वादपि सुतनु त्वयाऽधुना मे
मर्त्यत्वं जगति महत्तरं प्रक्लृप्तम् ॥ ६६ ॥

सुराधिकत्वेऽपि पदे वितीर्णे मह्यं तवास्त्येव हि कृत्यशेषः ।
कुरुष्व मेरोरधिके कुचे मां सुधाधिकं पायय चाधरोष्ठम् ॥ ६७ ॥

इत्थं ससान्त्ववचनोदयमर्धमञ्च-
मारोढुमानमितपूर्वतनोः स भीमः ।
मुष्ट्या हतिं निटिलसीम्नि चकार शत्रो-
रायुर्लिपिं शिथिलयन्निव धातृदत्ताम् ॥ ६८ ॥

गम्भीरचेताः स च कीचकोऽपि
गन्धर्वबुद्ध्या प्रतिहन्तुमेनम् ।
सद्यो भविन्त्र्याः शवतादशायाः
साधारणीमेव बबन्ध मुष्टिम् ॥ ६९ ॥

जवं भजन्तौ जयतर्षवन्तौ रुषं वहन्तौ रुधिरं किरन्तौ ।
परस्परं तौ पटुशब्ददन्तौ नियुद्धकेलिं निशि निर्मिमाते ॥ ७० ॥

---

हे सुतनु ! दयितान् पतीन् गन्धर्वानपि तृणाय मत्वा तृणसदृशान् तुच्छान् मत्वा यत् यतः रतिविधये रतिविधानार्थम् एवम् एकान्ते रात्रौ तमसि स्थित्या मां प्रतीक्षसे तत् तस्मात् अधुना देवत्वादपि मे मर्त्यत्वं मनुष्यत्वं जगति महत्तरम् अतिशयेन श्रेष्ठं क्लृप्तं हि कृतमेव ॥ ६६ ॥

त्वया मह्यं सुराधिकत्वे पदे वितीर्णे दत्तेऽपि तव कृत्यशेषः कर्तव्यशेषः अस्त्येव । हि प्रसिद्धम् । कृत्यशेषमेवाह—मेरोः विपुलतया सुवर्णतया च अधिके कुचे मां कुरु, सुधाधिकम् अधरोष्ठं पायय प्राशय च । महापददाने तदनुरूपाः पदार्था देया इति भावः॥६७॥

सः भीमः इत्थं ससान्त्ववचनोदयं सान्त्ववचनाविर्भावसहितं यथा तथा अर्धमञ्चं मञ्चकस्यार्धम् आरोढुम् आनमिता पूर्वतनुः कटेरूर्ध्वशरीरं येन तस्य शत्रोः कीचकस्य निटिलसीम्नि भालदेशे धात्रा ब्राह्मणा दत्ताम् आयुषः लिपिम् अक्षरविन्यासं शिथिलयन्निव शिथिलां कुर्वन्निव मुष्ट्या आहतिं प्रहारं चकार ॥ ६८ ॥

गम्भीरं धैर्ययुक्तं चेतो यस्य सः कीचकोऽपि गन्धर्वबुद्ध्या एनं प्रति हन्तुं सद्यः तदानीमेव भवित्र्याः शवतायाः प्रेततायाः दशायाः अवस्थायाः साधारणीमेव तुल्यामेव मुष्टिं बबन्ध चकार। इदानीं प्रहारार्थं या मुष्टिर्बद्धा सैव मरणदशायां स्थास्यतीति भावः॥६९॥

तौ भीमकीचकौ निशि नियुद्धकेलिं निर्मिमाते निर्मितवन्तौ । कीदृशौ तौ, परस्परं

---

१ क. ख. हि । २ क. तु । ३ क. 'वन्तौ नियुद्धवन्तौ नितरामतान्तौ । ४ अत्र वाक्यार्थहेतुकं काव्यलिङ्गम् । ५ अत्रालिङ्गनाधरपानप्रार्थनावाक्यार्थाभ्यां कृत्यशेषास्तित्वसमर्थनादनेकवाक्यार्थहेतुकं काव्यलिङ्गम् ।

अक्ष्वेलितारावमवीरवादमवीक्षकश्लाघनचाटुगुम्फम् ।
अनुच्चनिश्वासमहुंक्रियाकमभूतपूर्वं तदभून्नियुद्धम् ॥ ७१ ॥
शिलीमुखैश्चित्तजचापजुष्टैर्दत्तानि रन्ध्राणि दधन्निजाङ्गे ।
समीरजातेन विधूनितोऽपि स कीचको नैव चुकूज किंचित् ॥७२॥
तस्मिन्हते निपतिते बकवैरिमुष्ट्या
रङ्गेण तेन समकम्पि चलत्पताकम् ।
पार्थाच्चिरेण परिशीलितमुत्तराद्यैः
कन्याजनैरभिविडम्बयतेव नाट्यम् ॥ ७३ ॥

तत्र मण्डपे पिण्डतया कृतं तस्य दस्योस्तरसं तरसा विलोक्य प्रहर्षवत्या पार्षत्या श्लाघापूर्वमाघ्रातभुजः कुरुव्याघ्रो निर्गत्य यथापुरमविकृतमानसो महानसोदरं प्रविश्य सुखेनाधिशिश्ये ॥ १२ ॥

---

प्रति जवं वेगं भजन्तौ । जयस्य तर्षः तृष्णा साऽस्ति ययोस्तौ । रुषं रोषं वहन्तौ । रुधिरं किरन्तौ वर्षन्तौ । पटुशब्दाः व्यक्तशब्दाः दन्ताः ययोस्तौ ॥ ७० ॥

तत् नियुद्धं बाहुयुद्धम् अभूतपूर्वं पूर्वं न भूतम् एतादृशम् अभूत् जातम् । अपूर्वत्वमेवाह—न विद्यते क्ष्वेलितारावः सिंहनादो यस्मिन् तत् । न विद्यते वीरवादः 'मत्पुरस्त्वं कः' इत्यादि वीरवादो यस्मिन् । न विद्यते वीक्षकाणां युद्धचमत्कारद्रष्टृणां श्लाघनचाटुगुम्फः स्तुतिरचना यस्मिन् तत् । न विद्यते उच्चनिःश्वासो यस्मिन् तत् । न विद्यते हुंक्रिया प्रहारसमये हुंकारो यस्मिन् तत् । युद्धशब्दश्रवणेन लोकमेलनभयात् निःशब्दं युद्धं कृतमिति भावः ॥ ७१ ॥

चित्तजचापं मदनधनुः पुष्पं च जुष्टं सेवितं यैस्तैः शिलीमुखैः बाणैः भ्रमरैश्च दत्तानि रन्ध्राणि क्षतानि च निजाङ्गे दधत् समीरजातेन वायुसमूहेन च विधूनितोऽपि सः कीचकः सूतपुत्रः वेणुविशेषश्च किंचिदपि नैव चुकूज नैव शब्दं कृतवान् । अत्र प्रकृताप्रकृतश्लेषालंकारः । अत्रापि कूजनाभावे लोकमेलनभयं कारणम् ॥ ७२ ॥

बकवैरिणः भीमस्य मुष्ट्या हते ताडिते तस्मिन् कीचके पतिते सति तेन रङ्गेण नृत्यमण्डपेन चलन्त्यः पताकाः यस्मिन् कर्मणि यथा भवति तथा समकम्पि कम्पितम् । रङ्गमुत्प्रेक्षते, उत्तराद्यैः कन्याजनैः पार्थात् अर्जुनात् चिरेण बहुकालं परिशीलितम् अभ्यस्तं नाट्यं नृत्यम् अभिविडम्बयतेव अनुकरणं कुर्वतेव ॥ ७३ ॥

तदनु तस्मिन् मण्डपे पिण्डतया कृतं पिण्डीकृतं तस्य दस्योः शत्रोः तरसं मांसं तरसा वेगेन विलोक्य हर्षवत्या पार्षत्या द्रौपद्या श्लाघापूर्वं यथा तथा आघ्रातः भुजो यस्य सः

---

१ ख. सुधूनितः । २ क. तदन्वित्यधिकम् । ३ अत्राक्ष्वेलितारावमित्याद्यनेकपदार्थेन तन्नियुद्धस्य जगद्वैलक्षण्यसमर्थनादनेकपदार्थहेतुकं काव्यलिङ्गम् । ४ अत्र शिलीमुखकृतरन्ध्रवायुजातधूननरूपसामग्रीसत्त्वे कूजनानुदयवर्णनात्मिकाया विशेषोक्तेश्चित्तजचापादिशब्दश्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितत्वात् तयोरङ्गाङ्गिभावेन संकरः ।

निपात्य मानिन्यपि तत्र शत्रुं
चक्रन्द भीत्येव चलाग्रपाणिः ।
निशम्य तत्किं किमिति ब्रुवाणाः
सर्वेऽपि तस्यावरजाः समेयुः ॥ ७४ ॥
विलोक्य तं भ्रातरमात्तशोका
मृत्युद्विपस्येव पिधानपिण्डम् ।
ज्यायानिवामी विदधुः स्थलीं ता-
मस्रेण गुल्फद्वयसीं निजेन ॥ ७५ ॥

ततस्ते सोदरविपत्तिनिमित्तमियमेवेति रोषरूषितचेतसो निवेशितशवपिण्डभरस्य मूर्तैर्भीममुष्टिभिरिव नारिकेलफलैरुपबध्यमानस्य चरमविमानस्य स्तम्भदारुणि संदानितां कौन्तेयसीमन्तिनीं तिमिरमुदिरसौदामिनीभिः करदीपिकाभिः दीयमानचङ्क्रमावकाशेन पितृवनमुपनीय स्वकीयविवेकसंपत्त्या सह चित्यामत्याक्षुः ॥ १३ ॥

---

कुरुव्याघ्रः कुरुश्रेष्ठः भीमः, अत्र व्याघ्रपदेन क्रूरकर्मकारित्वं व्यज्यते, निर्गत्य मण्डपाद्बहिरागत्य यथापुरं यथापूर्वम् अविकृतं रोषभयादिरहितं मानसं यस्य तथाभूतः सन् महानसोदरं पाकशालामध्यं प्रविश्य सुखेन अधिशिश्ये निद्रां चकार ॥ १२ ॥

मानिन्यपि सैरन्ध्र्यपि तत्र मण्डपे शत्रुं कीचकं निपात्य पातयित्वा भीत्येव भयेनेव चलः अग्रपाणिः कराग्रं यस्यास्तथा सती चक्रन्द आर्तस्वरं चकार । तत् आक्रन्दनं निशम्य श्रुत्वा किं किमिति ब्रुवाणाः वदन्तः सर्वेऽपि तस्य कीचकस्य अवरजाः कनिष्ठबन्धवः समीयुः संघीबभूवुः ॥ ७४ ॥

आत्तशोकाः स्वीकृतशोकाः अमी उपकीचकाः मृत्युरेव द्विपः गजः तस्य पिधानं पिण्डमिव आच्छन्नभक्ष्यपिण्डमिव तं भ्रातरं कीचकं विलोक्य ज्यायानिव ज्येष्ठभ्रातेव तां स्थलीं मण्डपमध्यस्थलीं निजेन अस्रेण नेत्राश्रुणा रक्तेन च गुल्फद्वयसीं गुल्फप्रमाणां विदधुः चक्रुः । यथा भ्रातुः रक्तं गुल्फप्रमाणं पतितं तथोपकीचकानां दुःखेनाश्रु पतितमिति भावः ॥ ७५ ॥

ततः ते उपकीचकाः 'सोदरविपत्तेः भ्रातृमरणस्य निमित्तं कारणम् इयमेव' इति रुषा रोषेण रूषितं कलुषितं चेतो येषां ते तथाभूताः सन्तः निवेशितः स्थापितः शवपिण्डभारो यस्मिन् तस्य मूर्तैः भीमस्य मुष्टिभिरिव नारिकेलफलैः उपबध्यमानस्य प्रध्यमानस्य चरमविमानस्य श्मशानं प्रति शवनयनार्थं कृतस्य विमानस्य पार्श्व-

---

१ ख. समीयुः । २ क. भारस्य । ३ क. भीमस्य मु° । ४ क. °रुध्यमानपार्श्वस्य चर° । ५ क. ख. पथेत्यधिकम् । ६ क. महत्यामित्यधिकम् । ७ अत्र कीचकस्य तदनुजानां च रक्ते गुल्फप्रमाणात्वसंपादनेनौपम्यस्य गम्यत्वात्तुल्ययोगिता । बाष्पशोणितयोरस्रशब्दश्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्युज्जीवितेति द्वयोरङ्गाङ्गिभावेन संकरः ।

तावदेषा चकितचकिता 'हा नाथ जगत्प्राणभूत विपत्समयबन्धो संप्रति कान्तां रसवतीं परिगृह्य मुग्धामिमां कथं न गणयसि' इत्युच्चैः ररोदीत् ॥ १४ ॥

तत्रास्या रुदितस्वनैरथ जवादाकारितो मारुतिः
सक्थ्नोर्वातबलादलातमहसामीषल्लभोन्मीलनैः ।
ध्वान्ते गारुडभित्तिभङ्गिपिशुनेऽप्योघं द्विषां धावितुं
ज्येष्ठस्याध्वनि दिव्यदृष्टिमकरोद्दोर्दर्पसिद्धाञ्जनैः ॥ ७६ ॥

निपातितान् स्वेन निरीक्ष्य तत्र सूतान् स वीरः सुमनायते स्म ।
उत्पातमुद्रां दधता स्वपित्रा तरूनिवारण्यतले विरुग्णान् ॥ ७७ ॥

---

स्तम्भदारुणि संदानितां बद्धां कौन्तेयसीमन्तिनीं द्रौपदीं तिमिराण्येव तमांस्येव मुदिराः मेघाः तेषां सौदामिनीभिः विद्युद्भिः ईषत् प्रकाशाभिरित्यर्थः, करदीपिकाभिः दीयमानः चङ्क्रमावकाशो गमनावसरो यस्मिन् तेन पथा मार्गेण पितृवनं श्मशानम् उपनीय स्वकीयया विवेकसंपत्त्या कर्तव्याकर्तव्यविचारसंपत्त्या सह चित्यां शवदाहार्थं कृतकाष्ठरचनायाम् अत्याक्षुः चिक्षिपुः । द्रौपद्या सह कीचकदाहार्थं चित्यां विमानं चिक्षिपुरित्यर्थः ॥ १३ ॥

यावत् शवेन सह बद्ध्वा नीयते तावत् चकिताचकिता अतिभीता एषा द्रौपदी 'हा नाथ ! जगति प्राणभूत मत्प्राणस्वरूप अथ च जगत्प्राणभूतवायुजात भीम विपत्समये बन्धो रक्षक संप्रति कान्तां मनोहरां रसवतीं पाकशालां, शृङ्गारादिरसयुक्तां कान्तां भार्यां च 'रसवत्यां तु पाकस्थानमहानसे' इत्यमरः । परिगृह्य मुग्धाम् अज्ञाम् इमां मद्रूपां कथं न गणयसि' इत्युक्त्वा उच्चैः अरोदीत् ॥ १४ ॥

अथ तत्र नगरे अस्याः द्रौपद्याः रुदितस्वनैः जवात् आकारितः आहूतः मारुतिः भीमः सक्थ्नोः ऊर्वोः वायुबलात् गमनवेगजन्यवायुसामर्थ्यात् अलातमहसां ज्वलत्काष्ठतेजसाम् ईषल्लभानि लब्धुं शक्यानि यानि उन्मीलनानि तैः कृत्वा गारुडभित्तिभङ्गस्य हरिन्मणिभित्तिरचनायाः पिशुने सूचके तत्सदृशे इत्यर्थः, ध्वान्तेऽपि द्विषां शत्रूणाम् उपकीचकानाम् ओघं समूहं ज्येष्ठस्य भ्रातुः कीचकस्य अध्वनि यमनगराध्वनि धावितुं शीघ्रगत्या भ्रातृसङ्गं विधातुं दोर्दर्प एव बाहुबलमेव सिद्धाञ्जनानि तैः दिव्या दृष्टिर्यस्य तथाभूतमकरोत् । भीमस्तानपि सर्वान् जघानेति भावः ॥ ७६ ॥

सः वीरः भीमः अरण्यतले उत्पातमुद्राम् उत्पातस्वरूपं दधता स्वपित्रा वायुना विरु-

---

१ क. ख. हा हा नाथ नाथ । २ क. ख. उच्चैर° । ३ क. सक्थ्योर्वायुब° । ४ क. °लभैर्मीलनैः । ख. °त्प्रभो° । ५ क. श्रुवता । ६ क. तालान् । ७ अत्र द्रौपदीविवेकसंपदोः त्यागक्रियायां साहित्यवर्णनात्सहोक्तिः । ८ अत्र प्रस्तुतजगदीश्वरप्रार्थनया प्रस्तुतभीमप्रार्थनाद्योतनात् प्रस्तुताङ्कुरालंकारः 'प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः' इति लक्षणात् । ९ अत्र रूपकोपमासंसृष्टिः ।

गन्धर्वभीरुषु जनेष्वितरेषु तत्र
विष्वक्पलायनपरेषु विमुक्तबन्धा ।
कृष्णा च कीचकरिपुश्च कृतप्रशंसा-
वन्योन्यमभ्यगमतां नगरं पुनस्तौ ॥ ७८ ॥

ततः क्षणादेव संध्यारुणिमकरम्बितेनाम्बरमणिबिम्बेन परिचुम्ब्यमाने शम्बायुधहरिदङ्गणे परितो रुधिरवीचिमुचा पिशितपिण्डेन कृतानुषङ्गं रङ्गं विडम्बयति सति शुचा निरस्तमौलिभिर्निर्गलितवाग्भिर्निस्पन्दतनुभिर्निखिलैरपि पौरैर्नृपतिनिलयद्वारं निबिडितमभूत् ॥ १५ ॥

वध्वस्तदा मण्डलशो निविष्टा रुन्धद्भिराशा रुरुदुर्विलापैः ।
महत्सु दुःखेष्वपि जृम्भितेषु मालिन्युपालम्भनमस्पृशद्भिः ॥ ७९ ॥

तस्मिन्दिने सन्निधिमागता सा
कृष्णा दर्शं केकयराजपुत्र्याः ।

---

गणान् भग्नान् तालानिव तालवृक्षानिव तत्र श्मशाने स्वेन आत्मना निपातितान् सूतान् उपकीचकान् निरीक्ष्य सुमनायते स्म स्वस्थचित्तो बभूव ॥ ७७ ॥

तत्र श्मशाने गन्धर्वेभ्यः भीरुषु इतरेषु जनेषु विष्वक् आसमन्तात्पलायनपरेषु सत्सु विमुक्तः बन्धो यस्याः सा कृष्णा द्रौपदी कीचकरिपुः भीमश्च तौ अन्योन्यं परस्परं कृतप्रशंसौ सन्तौ पुनः नगरमभि नगरमभिमुखम् अगमतां गतवन्तौ ॥ ७८ ॥

ततः क्षणादेव संध्यायाः अरुणिम्ना रागेण कृत्वा करम्बितेन आवृतेन अम्बरमणिबिम्बेन परिचुम्ब्यमाने युक्ते शम्बायुधस्य इन्द्रस्य हरिदङ्गणे पूर्वदिग्भागे परितः सर्वतः रुधिराणां वीचीः मुञ्चति यस्तेन पिशितपिण्डेन मांसपिण्डेन कृतानुषङ्गं कृतसंबन्धं रङ्गं विडम्बयति अनुकुर्वति—सूर्योदये सतीत्यर्थः, शुचा शोकेन निरस्ताः त्यक्ताः मौलयः उष्णीषादयो यैस्तैः निर्गलितवाग्भिः भाषणरहितैः निष्पन्दतनुभिः अचञ्चलदेहैः निखिलैः संपूर्णैरपि पौरैः पुरवासिजनैः नृपतेः निलयद्वारं गृहद्वारं निबिडितं सान्द्रम् अभूत् । रात्रौ जातं गन्धर्वकृतकीचकवधादिवृत्तान्तं श्रुत्वा कथं जातमिति द्रष्टुं भयेन सर्वे जना राजद्वारि मिलिता इति भावः ॥ १५ ॥

ततः मण्डलशः मण्डलाकारेण निविष्टाः निषण्णाः वध्वः कीचकानां भार्याः आशाः दिशः रुन्धद्भिः रुन्धानैः महत्सु दुःखेषु जृम्भितेषु वृद्धिं गतेष्वपि मालिन्याः सैरन्ध्र्या उपालम्भनं निन्दाम् अस्पृशद्भिः दुर्विलापैः सह रुरुदुः ॥ ७९ ॥

तस्मिन्दिने सन्निधिम् आगता सा कृष्णा द्रौपदी केकयराजपुत्र्याः सुदेष्णायाः दर्शं

---

१ क.शम्पायुध° । २ क. वीचिमुचा, ख. वीचीति नास्ति । ३ ख.सतीति नास्ति । ४ अत्र निपातितोपकीचकावलोकनस्य विशेषणगत्या संतुष्टचित्तत्वहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । तच्च तालानिवेत्युत्प्रेक्षया संसृष्टम् । ५ अत्र गन्धर्वभयस्य विशेषणगत्या जनानां पलायनहेतुत्वात्काव्यलिङ्गम् । ६ अत्रोपालम्भनहेतोः कीचकवधस्य सत्त्वेऽपि तदनुदयवर्णनाद्विशेषोक्तिः ।

मषीशलाकार्पणया विनाऽपि
मन्देतरामश्रुकणैरकार्षीत् ॥ ८० ॥
तावद्युधिष्ठिरमुखा अपि वातजात-
व्याधूतकीचककुलाकुलकोटिभागम् ।
निर्यत्प्रियानयनवारिझरीपरीतं
संकेतशैलमधिरुह्य निशश्वसुस्ते ॥ ८१ ॥
तदनु विदितवार्तो धार्तराष्ट्रश्चरेभ्यः
शुभगुणचरितेभ्यः सूतजानां शतस्य ।
वसतिमरिजनानां मात्स्यभूपालपुर्यां
हृदयमुकुरलग्नैर्हेतुभिर्निश्चिकाय ॥ ८२ ॥
अन्येद्युरङ्गेश्वरसौबलिभ्यामास्थाय गोष्ठीमधिपः कुरूणाम् ।
भीष्मादिमान्बन्धुजनान्विलोक्य गम्भीरमेवं गिरमाबभाषे ॥ ८३ ॥

---

मषीशलाकायाः कज्जलरसशलाकायाः अर्पणया समर्पणेन विनाऽपि अश्रुकणैः अश्रुबिन्दुभिः मन्देतरां समृद्धाम् अकार्षीत् । प्रतिदिनं सुदेष्णाया दृगश्रुबिन्दूनां कज्जलशलाकार्पणं कारणं तस्मिन्दिने कीचकवधनिमित्तसैरन्ध्रीदर्शनं कारणं जज्ञे इति भावः ॥ ८० ॥

तावत्ते युधिष्ठिरमुखा अपि करणीयार्थस्य सिद्ध्यर्थम् ' अमुकस्थाने अमुककाले त्वया आगन्तव्यं मया चागम्यते' इत्यादिभाषणेन कृतः स्थानादिनियमः संकेतः स एव शैलः तम् अधिरुह्य निशश्वसुः द्रौपदीविपत्तिदर्शनजन्यदुःखेन निश्वासं तत्यजुः । कीदृशं संकेतशैलं, वातजातेन भीमेन व्याधूतं हतं यत् कीचककुलं तेन आकुलः व्याप्तः कोटिभागः अग्रभागो यस्य तम् । वातजातेव वातसमूहेन व्याधूतं भग्नं यत्कीचककुलं वेणुवृन्दं तेन आकुलः कोटिभागः उपरितनभागो यस्य तम् । निर्यती दुःखात् निर्गच्छन्ती प्रियायाः द्रौपद्याः नयनवारिझरी तया परीतं युक्तम् । शैलोऽपि वारिझरीपरीतो भवति ॥ ८१ ॥

तदनु शुभाः गुणाः सत्यभाषणादयः चरितानि अव्यभिचरितकर्माणि च येषां तेभ्यः चरेभ्यः चारेभ्यः सकाशात् सूतजानां शतस्य विदिता वार्ता वधादिवृत्तान्तो येन सः धार्तराष्ट्रः दुर्योधनः मात्स्यभूपालपुर्यां विराटनगरे अरिजनानां पाण्डवानां वसतिं हृदयमुकुरलग्नैः चित्तात्मकादर्शप्रतिबिम्बितैः हेतुभिः कीचकवधदेशसमृद्ध्यादिभिः कारणैः निश्चिकाय निश्चयं कृतवान् ॥ ८२ ॥

अन्येद्युः वार्ताश्रवणात् द्वितीयदिने कुरूणाम् अधिपः दुर्योधनः अङ्गेश्वरसौबलिभ्यां कर्णशकुनिभ्यां सह गोष्ठीं सभाम् आस्थाय अधिष्ठाय भीष्मादिमान् भीष्मप्रमुखान् बन्धुजनान् आप्तजनान् विलोक्य गम्भीरं यथा तथा एवं वक्ष्यमाणां गिरं बभाषे ॥८३॥

---

१. क. ख. मत्स्यं । २ क °बलाभ्या° । ३ क. भीष्माग्रगान् । ४ अत्राश्रुकारणाञ्जनशलाकाविन्यसनं विनाऽपि तदुदयवर्णनाद्विभावनालंकारः । ५ अत्र समस्तवस्तुसावयवरूपकम् । ६ अत्र शुभगुणचरितेभ्य इति विशेषणस्य तात्कालिकतदुक्तीनां याथार्थ्याभिप्रायगर्भत्वात्परिकरस्य हेतुभिः पाण्डवस्थित्यनुमानस्य चाङ्गाङ्गिभावेन संकरः ।

'भो भो विदितं किं भवतामपीदम् । संप्रति खलु मात्स्यपुरे कामपि कामिनीं कामयमानः कीचको निशि तस्याः पतिभिरदृश्यैः पञ्चभिर्गन्धर्वैरनुरहसि स्वसंख्यापदाभिधेयतामनीयत ॥ १६ ॥

तस्यै पुनरपि द्रुह्यन्तस्तदनुजा अपि तथैवेति काचिदियं किंवदन्ती कर्णात्कर्णमधिरोहति ॥ १७ ॥

एवं चेदसंशयं सा चतुष्पथमण्डपिकास्तम्भसालभञ्जिकेव सर्वकरावमर्शभाजनं पाञ्चालसुता ॥ १८ ॥

तेऽपि पुनरज्ञातवासिनः परेतपतिपवमानपाकशासनाश्विनां पारस्त्रैणेयास्तस्याः पतिविडम्बकाः । तेष्वपि द्वितीयेनैव बाहुशालिना वधूद्रुहां निहन्त्रा भवितव्यम् ॥ १९ ॥

अहो सर्वत्र विश्रृङ्खलममीषां दौःशील्यम् ॥ २० ॥

---

भो भो भवतामपि इदं वक्ष्यमाणं विदितं किं ज्ञातं खलु मात्स्यपुरे विराटनगरे कामपि कामिनीं कामयमानः इच्छन् कीचकः निशि रात्रौ तस्याः कामिन्याः पतिभिः अदृश्यैः पञ्चभिर्गन्धर्वैः अनुरहसि एकान्ते स्वेषां संख्यापदस्य पञ्चत्वस्य अभिधेयतां मरणरूपार्थतामनीयत नीतः, हत इत्यर्थः ॥ १६ ॥

पुनरपि तस्यै कामिन्यै द्रुह्यन्तः तदनुजाः कीचककनिष्ठबन्धवोऽपि तथैव अदृश्यतयैव तैर्हताः, इति काचिदियं किंवदन्ती जनवार्ता कर्णात्कर्णमधिरोहति आगच्छति । केनचित् कस्यचित्कर्णे उक्तं तेन अन्यस्येति प्रकारेण मत्कर्णं प्राप्तेत्यर्थः ॥ १७ ॥

एवं चेत् इत्थमस्ति चेत्तर्हि असंशयं सा कामिनी चतुष्पथमण्डपस्तम्भसंबन्धिनी सालभञ्जिकेव सर्वकरावमर्शस्य सर्वेषां करस्पर्शस्य भाजनं पात्रं पाञ्चालदुहिता द्रौपदी । यथा चतुष्पथमण्डपस्थसालभञ्जिकायाः सर्वैः करस्पर्शः क्रियते तथाऽस्या अपीत्यर्थः । एवं च इयं सर्वजनसाधारणेति भावः ॥ १८ ॥

ते पाण्डवा अपि पुनः अज्ञातवासिनः परेतपतिः यमः, पवमानः वायुश्च पाकशासन इन्द्रश्च अश्विनौ अश्विनीकुमारौ च तेषां पारस्त्रैणेयाः परस्त्रियां भवाः पुत्राः तस्याः पतिविडम्बकाः पतित्वानुकरणशालिनः । तेषु पञ्चस्वपि द्वितीयेनैव बाहुशालिना बलीयसा वधूद्रुहां निहन्त्रा कीचकानां वधकारिणा भवितव्यम् ॥ १९ ॥

अहो इत्याश्चर्ये । सर्वत्र सर्वस्थलेषु विश्रृङ्खलम् अप्रतिबन्धम् अमीषां पारस्त्रैणेयानां दौःशील्यं दुःस्वभावत्वम् ॥ २० ॥

---

१ क. अपीति नास्ति । २ क. खल्विति नास्ति । ३ क. ऽपीत्यधिकम् । ४ ख. °भिधेयम° । ५ क. मण्डपस्त° । ६ क. ख. सर्वजनकरपरामर्श° । ७ क. 'दुहिता । ८ गद्येऽस्मिन्बहु व्यत्यासो पतिविडम्बका इत्यस्मादग्रे इतिप्रवादभाजः इत्यधिकं च ।

तथाहि—

देशे जरासंधमुखैर्व्यरुन्धन्वनेऽपि किर्मीरहिडिम्बमुख्यैः ।
गूढे निवासेऽपि च सूतपुत्रैः क्व नु स्थितास्ते कलहं विनान्यैः ॥ ८४ ॥

अत्रैव स्थित्वा वेषान्तरकञ्चुकैरकिंचनैरेतैर्वञ्चितः खलु वृद्धो विराटः' इत्यभिधाय सुयोधनो राधेयेन सह कृतहस्ततालो वलगद्भुजशिखरमुच्चैर्जहास ॥ २१ ॥

ततः—

संक्षोभे नगरस्य मत्स्यनृपतेर्योद्धुं स्वयं निर्गतान्
दृष्ट्वा तानवकीर्णिनो वितनुमो गच्छाधुना त्वं पुरः ।
इत्युक्तः कुरुभूभुजा सदसि गा हर्तुं त्रिगर्तेश्वर-
स्तस्यैवाप पुरीं दिनावधिरिवार्यम्णः प्रतीचीं दिशम् ॥ ८५ ॥

तत्र दक्षिणेन पुरं व्यग्रतरसैन्येन काल्यमानं क्वचिद्रुणतया निम-

---

तथाहि दौःशील्यं समर्थयति—देशे जरासंधमुखैः व्यरुन्धन् विरोधं चक्रुः । वनेऽपि किर्मीरहिडिम्बौ मुख्यौ येषु तैः जटासुरादिभिः व्यरुन्धन् । गूढे निवासे अज्ञातवासेऽपि सूतपुत्रैः कीचकैः व्यरुन्धन् । तस्मात्तेकलहं विना क्व नु स्थिताः । सर्वत्र कलहेनैव स्थिता इति भावः ॥ ८४ ॥

अत्रैव विराटनगरे एव स्थित्वा वेषान्तरं कञ्चुकम् आच्छादकं येषां तैः अकिंचनैः दरिद्रैः एतैः पाण्डवैः वञ्चितः खलु निश्चयेन विराटः' इत्यभिधाय सुयोधनः राधेयेन कर्णेन सह कृतः हस्ततालः तद्धस्तोपरि स्वहस्तताडनं येन तथाभूतः सन् वलगन्ती चलन्ती भुजशिखरे स्कन्धौ यस्मिन्कर्मणि यथा भवति तथा उच्चैः जहास । अन्योऽपि अतिहर्षे सति स्वमित्रेण हस्ततालं करोति ॥ २१ ॥

ततः तस्मात् ।

मत्स्यनृपतेः नगरस्य विराटनगरस्य संक्षोभे लुण्ठनादिना उपसर्गे सति स्वयम् आत्मनैव योद्धुं निर्गतान् तान् पाण्डवान् दृष्ट्वा अवकीर्णिनः अज्ञातवासव्रतान् भ्रष्टान्वितनुमः कुर्मः । अधुना अद्यैव त्वं पुरः आदौ गच्छ विराटनगरमिति शेषः, इति कुरुभूभुजा दुर्योधनेन सदसि उक्तः त्रिगर्तानाम् ईश्वरः सुशर्मा गाः धेनुवृषभादीन् हर्तुं तस्य विराटस्य पुरीमेवाप । कः कामिव, यथा दिनावधिः सूर्यास्तमयः अर्यम्णः सूर्यस्य गाः किरणान् हर्तुं प्रतीचीं दिशम् अवाप तद्वत् । अनयोपमया सूर्यास्तसमये प्राप्त इति गम्यते ॥ ८५ ॥

तत्र अस्तमये पुरं दक्षिणेन पुरस्य दक्षिणदिग्भागे व्यग्रतरं गोग्रहणे त्वरमाणं सैन्यं यस्य तेन सुशर्मणा काल्यमानं रुद्ध्वा बलान्नीयमानं गोधनं गोसमुदायं निशम्य श्रुत्वा

---

१ क. 'कैः पर्वभिर°' । २ क. दक्षिणेत्यारभ्य काल्यमानमित्यन्तं नास्ति । ३ ख. सैन्यपरिवृतेन । ४ अत्र सुशर्मदिनावध्योः प्राप्त्या सादृश्यगम्यत्वात्तुल्ययोगिता ।

ग्नजमदग्निकुमारोष्णनिश्वासवेगविलुलितवीचीप्रपञ्चमिव स्यमन्तकप-ञ्चकं क्वचिन्नीलतया मदकण्डूलवेतण्डशुण्डाविधूनितविटपमालमिव सालवनं, क्वचिद्धवलतया मन्दरगिरिमन्थनपरिक्षोभितफेनकूटमिव क्षीरोदमध्यमुन्नमितलाङ्गूलमुद्गमितहुंकारमुल्लसितधूलीकमुद्दामघण्टारवं गोधनं निशम्य सेनाकुम्भिकुलगम्भीरबृंहितारम्भैर्मन्दिराग्रसिंहप्रतिच्छ-न्दबृन्दमुखकन्दरमौननियमं विभिन्दन्ननुकूलपवमानपुरोनाटितपटैर्वैरि-भटजीवितहरणाय वैवस्वतमिवाह्वयद्भिः केतनदण्डैः परिमोटितगगनत-टिनीतटविटपिवाटो विराटोऽपि रणप्रयाणारम्भटीमटीकत ॥ २२ ॥

संख्याय यानेषु समारुरुक्षा-
केलिस्पृशां कीचकबान्धवानाम् ।

---

विराटोऽपि रणप्रयाणस्य युद्धविषये गमनस्य आरभटीम् उद्योगम् अटीकत चकारेत्यर्थः । कथंभूतं गोधनं, क्वचित् कस्मिंश्चिद्भागे अरुणतया धेनूनां लोहिततया निमग्नः रुधिरह्रदे स्नानार्थं मग्नः यः जमदग्निकुमारः परशुरामः तस्य उष्णनिश्वासस्य वेगेन लुलितः इतस्ततः प्रसृतः वीचीप्रपञ्चः ऊर्मीसमुदायो यस्य तत्, स्यमन्तकपञ्चकमिव क्षत्रियरुधि-रक्तह्रदपञ्चकतीर्थमिव । क्वचिद्भागे नीलतया धेनूनां कृष्णतया मदेन कण्डूलाः कण्डू-विशिष्टाः ये वेतण्डाः गजाः तैः शुण्डाभिः विधूनिता कम्पिता विटपमाला शाखासमूहो यस्य तत्, सालवनमिव तमालादिवृक्षवनमिव । क्वचिद्भागे धवलतया धेनूनां शुभ्रतया मन्दरगिरेः प्रमथनेन परिक्षोभितः इतस्ततः पतितः फेनकूटः फेनसमूहो यस्य तत्, क्षीरो-दस्य क्षीरसमुद्रस्य मध्यमिव । उन्नमितम् ऊर्ध्वीकृतं लाङ्गूलं येन तत् । उद्गमितः आविष्कृतः हुङ्कारो येन तत् । उल्लसिता खुरैः उत्क्षिप्ता धूली येन तत् । उद्दामाः महान्त घण्टारवाः यस्मिंस्तत् । कथंभूतो विराटः, सेनायाः कुम्भिकुलस्य गजसमूहस्य गम्भीराः ये बृंहितारवाः हस्तिजातिशब्दाः तैः कृत्वा मन्दिराग्रेषु नगरगृहाग्रेषु सिंहप्रतिच्छन्दानां सिंहप्रतिमानां वृन्दस्य मुखकन्दराणां मुखबिलानां मौननियमं विभिन्दन् समापयन् अनुकूलः उत्तरदि-ग्भागात् पृष्ठतो वहमानः यः पवमानः वायुः तेन पुरः अग्रभागे दक्षिणदिगभिमुखं नाटिताः चालिताः पटाः येषु तैः, अत एव वैरिभटानां जीवितहरणाय वैवस्वतं यमम् आह्वयद्भिरिव आह्वानाभिनयेन आकारयद्भिरिव केतनदण्डैः ध्वजदण्डैः कृत्वा परिमोटितः भञ्जितः गगनतटिन्याः आकाशगङ्गायाः तटविटपिवाटः तीरवृक्षसमुदायो येन सः॥२२॥

संख्याय युद्धाय यानेषु वाहनेषु समारुरुक्षाकेलिं समीचीनाम् आरोढुमिच्छया क्रीडां स्पृशन्ति स्वीकुर्वन्ति येषां कीचकस्य बान्धवानां कुलजानाम् अश्वप्रसङ्गेऽपि–अयं गन्धर्वः समीचीनः,अयं नीलो गन्धर्वो,धवलं गन्धर्वम् आरोक्ष्यामि–इत्याद्यश्वोद्देशेनाप्यभिधीयमानः

---

१ क. 'तविचित्रवीची' । २ क. स्यमन्तप' । ३ क. ख. तमालकाननम् । ४ क. मथनवि-क्षोभि' । ५ क. ख. 'मुल्ललित' । ६ क. दक्षिणेन पुरं व्यग्रतरसैन्येन तेन काल्यमानम् इत्यधिकम् । ७ क. केतुदण्डैः । ८ क. 'रम्भमाटीकत । ९ अत्रोत्प्रेक्षातिशयोक्त्योः संसृष्टिः ।

अश्वप्रसङ्गेऽप्यभिधीयमानो-
गन्धर्वशब्दो गरलायते स्म ॥ ८६ ॥

सभ्यैश्च सूदैश्च तुरङ्गिभिश्च पौरैश्च विज्ञापितवीर्यभूम्नः।
दन्तानिवेन्द्रद्विरदः स पार्थान्धीरः पुरोधाय रुरोध शत्रुम् ॥८७॥

तृणकल्पमपि त्रिगर्तभूपं तमुपेक्ष्यैव तदा गवां कुलानि।
सहदेवविलोकमात्रहर्षात्सहसा मात्स्यपुरीसमीपमापुः ॥ ८८ ॥

मौर्वीकुशाङ्कितकरावथ बद्धपङ्क्ती
मात्स्यत्रिगर्तवसुधाधिपयोरनीकौ।
आध्मातशङ्खनिनदप्रणवप्रधान-
मायोधनाध्ययनमद्भुतमारभेताम् ॥ ८९ ॥

मत्स्येन्द्रमन्दिरमहानसभक्ष्यवृन्द-
स्वच्छन्दभक्षणरहस्यवदावदेन।

---

केनचिदुच्चार्यमाणः गन्धर्वशब्दः गरलायते स्म विषवद्बभूव। यथा विषभक्षणं शरीरदाहादि करोति तद्वच्छब्दाकर्णनं मनसस्तापायकरोदिति भावः ॥ ८६ ॥

धीरः सः विराटः सभ्यैः सभासदैः सूदैः बल्लवैश्चतुरङ्गिभिः अश्वारोहैश्च पौरैः गोपालैश्च विज्ञापितः राज्ञो निवेदितः वीर्यभूमा शौर्यबाहुल्यं येषां तान् धर्मभीमनकुलसहदेवान् पुरोधाय अग्रतः कृत्वा शत्रुं रुरोध। कः कानिव, यथा इन्द्रद्विरदः ऐरावतः दन्तान् चतुरो दशनान् पुरोधाय शत्रुं रुणद्धि तद्वत् ॥ ८७ ॥

तदा युद्धारम्भे गवां कुलानि तृणकल्पमपि तृणतुल्यमपि तं त्रिगर्तभूपं सुशर्माणम् उपेक्ष्यैव सहदेवस्य विलोकनमात्रेण दर्शनमात्रेण यो हर्षः तस्मात् सहसा बलेन मात्स्यपुरीसमीपं विराटपुरसमीपम् आपुः। अन्योऽपि स्वभक्ष्यम् उपेक्ष्यैवेष्टं प्रति गच्छति ॥८८॥

अथ मौर्व्याः गुणा एव कुशाः तैः अङ्किताः युक्ताः कराः ययोस्तौ, बद्धे पङ्क्ती याभ्यां तौ, मत्स्यत्रिगर्ताधिपयोः विराटसुशर्मणोः अनीकौ सेने आध्माताः मुखवायुभिः पूरिताः ये शङ्खाः तेषां निनदः शब्द एव प्रणवः ॐकारः प्रधानः अग्रसरो यस्मिन् तत् आयोधनं युद्धमेव अध्ययनं वेदाध्ययनम् आरभेताम् आरम्भं चक्रतुः। यथा कुशपाणयो ब्राह्मणा अभिमुखपङ्क्तीभ्यां स्थित्वा ॐकारोच्चारणपूर्वकं वेदं पठन्ति तद्वत् ज्याहस्ता भटाः शङ्खशब्दपूर्वं युद्धारम्भं चक्रुरित्यर्थः ॥ ८९ ॥

मत्स्येन्द्रमन्दिरस्य विराटगृहस्य यत् महानसं पाकशाला तत्संबन्धिनः भक्ष्यवृन्दस्य लड्डुकशष्कुल्यादि समूहस्य यत् भक्षणं तस्य रहस्यस्य वदावदेन वक्ता वललस्य बल्लवस्य भीमस्य क्ष्वेडारवेण सिंहनादेन तदा युद्धारम्भे केवलं रिपूणां चित्तं न अकम्पि न कम्पि-

---

१ क. ख. गोपैश्च। २ क वीरः। ३ क. ख. चमू°। ४ क. मत्स्यत्रि°। ५ क. प्रणाद°। ६ अत्रोपमार्थापत्त्योः संसृष्टिः। ७ अत्र समस्तवस्तुवर्ति सावयवरूपकम्।

क्ष्वेडारवेण वललस्य तदा रिपूणां
चित्तं न केवलमकम्पि दिशो दशापि ॥ ९० ॥

उदये समरस्य सैनिकानामुभयेषामसिधेनवो ववल्गुः ।
निजनामपदापरार्धवाच्यं निखिलं ग्राहयितुं च रक्षितुं च ॥ ९१ ॥

तावदम्बरपथादभिगन्तुस्तामनीकसरणीं शमनस्य ।
कासरादहरधीशतुरङ्गः कान्दिशीक इव दूरमयासीत् ॥ ९२ ॥

पाटलीकृतपयोधरपङ्क्तिः प्रादुरास शनकैरथ संध्या ।
वासरस्य रजनेरपि सीम्नोर्मध्यभागकुरुविन्दशिलेव ॥ ९३ ॥

संध्या बभौ सा समरे भटौघो
विम्बं विभिन्द्यादिति भीतिभारात् ।
विवस्वता विद्रवता विसृष्टा-
दिवस्थले दीप्तिरिवाग्निदेया ॥ ९४ ॥

---

तम् अपि तु दश दिशोऽपि कम्पिताः । एतादृशो महान् कठोरो बल्लवस्य सिंहनादस्तस्मा-द्विराटगृहे घृतशर्कराढ्यभक्ष्यवृन्दभक्षणेन बलाढ्योऽस्तीति ज्ञायते, इति भावः ॥ ९० ॥

समरस्य उदये प्रारम्भे उभयेषां सैनिकानाम् असिधेनवः छुरिकाः निखिलं संपूर्णं निजनामपदस्य असिधेनु इतिशब्दस्य यत् अपरार्धं धेनु इति उत्तरार्धं तस्य वाच्यं गोधनरूपार्थं ग्राहयितुम् अपहारयितुं रक्षितुं च ववल्गुः चञ्चला बभूवुः । सुशर्मणः सैनिकानाम् असिधेनवोऽखिलधेनूरपहारयितुं, विराटस्य सैनिकानां ताः रक्षितुमित्यर्थः ॥ ९१॥

यावत् युद्धप्रारम्भो भवति तावत् अहरधीश्वरस्य सूर्यस्य तुरङ्गः अम्बरपथात् आकाशमार्गात् ताम् अनीकसरणीं युद्धमार्गम् अभिगन्तुः आगन्तुः शमनस्य यमस्य कासरात् महिषात् कान्दिशीक इव भयेन पलायित इव दूरम् अयासीत् अगमत् । युद्धारम्भे सूर्यास्तमयो बभूवेति भावः ॥ ९२ ॥

अथ सूर्यास्तानन्तरं शनकैः पाटलीकृता रक्तीकृता पयोधरपङ्क्तिर्यस्याः सा संध्या वासरस्य दिवसस्य रजनेश्च सीम्नो मध्यभागे कुरुविन्दशिलेव माणिक्यशिलेव प्रादुरास प्रादुर्बभूव ॥ ९३ ॥

सा संध्या 'समरे युद्धे भटौघः योधसमूहः विम्बं विभिन्द्यात्' इति भीतिभारात् विद्रवता पलायमानेन विवस्वता सूर्येण वियत्स्थले आकाशे विसृष्टा त्यक्ता अग्नये देया दीप्तिरिव बभौ । सूर्योऽस्तसमये स्वदीप्तिम् अग्नौ निधाय गच्छति, पुनः प्रातःकाले तां गृह्णातीत्यागमः । 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः' इति भारते ॥ ९४ ॥

---

१ ख. परार्धवाच्यमेतत् । २ क. ख. धरणीम् । ३ क. नभःस्थले । ४ अत्र रिपुहृदयानां दशदिशां च कम्पनेनौपम्यस्य गम्यत्वात्तुल्ययोगिता । सा च पूर्वोक्तानुमानेन संसृष्टा । ५ उत्प्रेक्षाऽत्र ।

नभःपयोधेर्नवविद्रुमश्रीः
क्रमेण संध्या कृशिमानमागात् ।
उद्यत्प्रकोपैरुभयैरनीकै-
र्विभज्य नीतेव विलोचनानि ॥ ९५ ॥

ध्वजिनीजनितं रजोऽन्धकारं त्वरितं बान्धवकौतुकातिरेकात् ।
परिरब्धुमिवान्धकारसंघः परमार्थो रणचत्वरं जगाहे ॥ ९६ ॥

संकोच्य पक्षानेकेषु संविशत्स्वपि पत्रिषु ।
विस्तार्य पक्षानपरे विचेरुस्तत्र पत्रिणः ॥ ९७ ॥

शरवर्षभयेन तत्र युद्धे सकले कङ्ककुले गते विदूरम् ।
प्रमदं दधदेक एव कङ्कः परिबभ्राम स भीमपक्षपातः ॥ ९८ ॥

अन्योन्यपट्टसविघट्टभवैः स्फुलिङ्गै-
राजिस्थले रुधिरकर्दमभाजि योधाः ।
आगामिनीषु समितिष्वधिकं विधातु-
मासन्प्रतापनवबीजमिवावपन्तः ॥ ९९ ॥

---

नभःपयोधेः आकाशसमुद्रस्य नवविद्रुमाणां नूतनप्रवालरत्नानां श्रीरिव श्रीः शोभा यस्याः सा संध्या उद्यन् प्रकोपः क्रोधो येषां तैः उभयोः विराटसुशर्मणोः अनीकैः सैन्यैः विभज्य विभागं कृत्वा विलोचनानि नेत्राणि प्रति नीतेव क्रमेण कृशिमानं कृशत्वम् आगात् अगमत् । कोपेन नयनेषु रक्ततायामियमुत्प्रेक्षा ॥ ९५ ॥

परमार्थः रात्रिजन्यः सत्यः अन्धकारसंघः ध्वजिनीभ्यां सेनाभ्यां जनितम् उत्पादितं रजसां धूलीनाम् अन्धकारं बान्धवस्य स्वज्ञातेः कौतुकातिरेकात् कौतुकातिशयात् परिरब्धुमिव आलिङ्गितुमिव त्वरितं रणचत्वरं रणाङ्गणं जगाहे प्रविवेश ॥ ९६ ॥

तत्र रणाङ्गणे एकेषु पत्रिषु पक्षान्संकोच्य संविशत्सु प्रविशत्स्वपि अपरे अन्ये पत्रिणः पक्षान् विस्तार्य विचेरुः जग्मुः, इत्याश्चर्यम् । पत्रिणः पक्षिणः बाणप्रहारभयेन पक्षान् संकोच्य विचेरुः, अपरे पत्रिणः बाणाः प्रहारभयाभावात् पक्षान् विस्तार्य विचेरुरित्या-श्चर्यपरिहारः ॥ ९७ ॥

तत्र युद्धे सकले कङ्ककुले गृध्रसमूहे शरवर्षभयेन दूरं गते सत्यपि भीमः भयङ्करः पक्षयोः पातः चालनं तेन, भीमस्य यः पक्षपातः सहाय्यं तेन च सहितः अत एव प्रमदं हर्षं दधत् एक एव कङ्कः युधिष्ठिरः परिबभ्राम ॥ ९८ ॥

योधाः प्रतापस्य नवं स्फुलिङ्गरूपं बीजम् आगामिनीषु समितिषु संग्रामेषु अधिकं विधातुं कर्तुं तिमिरमेव कर्दमः तद्भाजि तद्युक्ते आजिस्थले रणाङ्गणे अन्योन्येषां पट्टिशानां खड्गसदृशायुधानां विघट्टात्प्रहारात् भवः उत्पत्तिर्येषां तैः स्फुलिङ्गैः अग्निकणैः आवपन्त इव आसन् । अन्यः कर्षकोऽपि व्रीह्यादिबीजम् अधिकं विधातुं कर्दमवत्यां भूमौ आवपति ९९

---

१ क. आप । २ श्लेषसंकीर्णोऽत्र विरोधाभासः । ३ तिमिरस्यात्र पङ्कत्वेन रूपणादाजिस्थलस्य केदारत्वरूपणप्रतीतेरेकवर्तिरूपकमलंकारः ।

नलिनीशबिम्बपथचारमलब्ध्वा
नभसि भ्रमत्सु नववीरसुरेषु ।
करपल्लवौ परिनिपीड्य मृगाक्ष्यः
कलहाय नक्तमशपन्त सुराणाम् ॥ १०० ॥
रराज हैमी रथकेतुराजी रज्यत्पटा रक्तकणैः प्रकीर्णैः ।
आकर्ण्य युद्धाद्भुतमर्धमार्गाद्द्रष्टुं निवृत्ता चरमेव संध्या ॥ १ ॥

तत्र तावदसिशरैर्निकृत्तमत्तगजसप्तिकुलपत्तिनवरक्तसिक्तं रणचत्वरमनुभूय भूयसा रोषेण संवर्तसमवर्तिसममूर्तिर्हृदि नर्तितधूर्तधार्तराष्ट्रशासनवार्तस्त्रैगर्तः कैवर्त इव मत्स्यचक्रवर्तिनमाहर्तुं मुहूर्तादुपावर्तत ॥ २३ ॥

मानिनामचरमोऽथ सुशर्मा मध्यवर्तिनमनीकपयोधेः ।
संमुखो झटिति बन्धमनैषीत्स ज्यया रिपुमपत्रपया च ॥ २ ॥

---

सुराणां मृगाक्ष्यः अप्सरसः नवेषु युद्धमरणभूतेषु वीरसुरेषु नलिनीशबिम्बपथेन सूर्यबिम्बमार्गेण चारं गमनम् अलब्ध्वा नभसि आकाशे भ्रमत्सु सत्सु करपल्लवौ परिनिपीड्य घर्षित्वा—अयं स्त्रीस्वभावः—नक्तंकलहाय रात्रियुद्धाय अशपन्त शापं ददुः। युद्धे अभिमुखं हतस्य सूर्यबिम्बभेदेन स्वर्गगमनात् रात्रौ तद्बिम्बाभावात् स्वर्गगमनाभावेन वरणाभावात् अप्सरसां संताप इति भावः ॥ १०० ॥

प्रकीर्णैः सर्वतः प्रसृतैः रक्तकणैः रक्तबिन्दुभिः रज्यन्तः पटाः वस्त्राणि यस्याः सा हैमी सौवर्णी रथकेतूनां राजिः पङ्क्तिः युद्धस्य अद्भुतं वृत्तान्तम् आकर्ण्य द्रष्टुम् अर्धमार्गात् निवृत्ता चरमा सायंकालिका संध्येव रराज ॥ १ ॥

तत्र सायंकाले तावत् असिशरैः निकृत्ताः छिन्नाः मत्तगजाश्च सप्तिकुलम् अश्वसमूहश्च पत्तयः पद्गाश्च तेषां नवरक्तेन सिक्तं रणचत्वरं रणाङ्गणम् अनुभूय भूयसा बहुतिशयेन रोषेण क्रोधेन संवर्तसमवर्तिना प्रलयकालसंबन्धियमेन समा मूर्तिर्यस्य सः हृदि मनसि नर्तिता धूर्तस्य शठस्य धार्तराष्ट्रस्य दुर्योधनस्य शासनवार्ता आज्ञावार्ता येन सः त्रैगर्तः सुशर्मा कैवर्त इव धीवर इव मत्स्यचक्रवर्तिनं मत्स्यदेशराजं विराटं मत्स्यश्रेष्ठं च आहर्तुं धृत्वा आनेतुं मुहूर्तात् उपावर्तत समीपमगमत् ॥ २३ ॥

अथ मानिनाम् अचरमः प्रथमः सुशर्मा झटिति संमुखः सन् अनीकपयोधेः सेनासमुद्रस्य मध्यवर्तिनं रिपुं विराटं ज्यया मौर्व्या बन्धम् अनैषीत् नीतवान् । अपत्रपया परस्मात् लज्जया च बन्धम् अनैषीत्, युक्तमकार्षीदित्यर्थः ॥ २ ॥

---

१ ख. निकरेत्यधिकम् । २ क. सप्तिरथपत्तिकुलन° । ३ नववीरसुराणां गगने विलम्बासंबन्धेऽपि तत्संबन्धोक्तिरूपातिशयोक्तेः सुराङ्गनानां रात्रिशपनासंबन्धेऽपि तत्संबन्धरूपातिशयोक्तेश्चात्राङ्गाङ्गिभावेन संकरः । ४ उत्प्रेक्षात्र । ५ लिष्टाश्लिष्टविशेषणोपमाद्वयस्य वृत्त्यनुप्रासस्य चैकवाचकानुप्रवेशसंकरः । ६ अत्र धनुर्गुणबन्धनव्यापारेणैव लज्जाबन्धनस्याप्युत्पत्तेर्विशेषालंकारः ' किंचिदारम्भतो शक्यवस्त्वन्तरकृतिश्च सः ' इति लक्षणात् ।

भूपे पराभवपदे युधि धर्मसूनो-
र्भ्रूवल्लिकम्पकलिकामवतंसयन् सः ।
मथ्नन्बलानि रिपवे मरुतः कुमारो
मात्स्यं विमुच्य विततार दशां तदीयाम् ॥ ३ ॥

विराटसैन्येषु मिषत्सु युद्धे त्रिगर्तनेतुर्दृढबन्धनाय ।
कोदण्डयुक्तो गुण एव तत्र कर्ता च जज्ञे करणं च जज्ञे ॥ ४ ॥

तस्यां निशायां तु तमःकदम्बकं
निमीलनोन्मीलनयोर्दृशां यथा ।
युद्धं तयोर्मात्स्यसुशर्मणोस्तथा
समानरूपं फलमेव संददौ ॥ ५ ॥

विमानितो वायुभुवा विराटतो
विमोचितो धर्मभुवा दयालुना ।
तया रजन्येव स सामिशेषया
समं ध्वजिन्या निरगाद्यथागतम् ॥ ६ ॥

---

युधि भूपे विराटे पराभवपदे पराजयस्थाने सति धर्मसूनोः भ्रूवल्लिकम्पकलिकाम् अव-तंसयन् शिरसि धारयन् भ्रूकम्पसूचितां सुशर्मणः सकाशात् राजमोचनरूपाज्ञां मानय-न्नित्यर्थः, सः मरुतः कुमारः भीमः बलानि शत्रुसैन्यानि मथ्नन् मर्दयन् मात्स्यं विराटं विमुच्य रिपवे सुशर्मणे तदीयां विराटीयां दशां मौर्व्या बन्धनरूपामवस्थां विततार ददौ। विराटं विमुच्य सुशर्माणं मौर्व्या बबन्धेत्यर्थः ॥ ३ ॥

युद्धे विराटसैन्येषु मिषत्सु पश्यत्सु सत्सु त्रिगर्तनेतुः सुशर्मणः दृढबन्धनाय तत्र बन्धन-क्रियायां कोदण्डयुक्तगुण एव कर्ता जज्ञे करणं च जज्ञे । बल्लवो मौर्व्या सुशर्माणं बबन्धेत्य-र्थात् गुणः बल्लवो भीमः कर्ता जातः, गुणः मौर्वी करणं जातेति भावः । 'सूदा औद-निका गुणाः' इत्यमरः ॥ ४ ॥

तस्यां निशायां तमसां कदम्बकं वृन्दं तु यथा दृशोर्मीलनोन्मीलनयोः समानरूपं दर्शनाभावरूपं फलं संददौ, यथा तमसा नेत्राणां मीलनोन्मीलनयोर्दर्शनाभावः तथा युद्धेन मात्स्यसुशर्मणोर्बन्धनं बभूवेति भावः ॥ ५ ॥

वायुभुवा भीमेन विमानितः अपमानितः दयालुना धर्मभुवा विराटतः विमोचितः सः सुशर्मा तया रजन्येव सामिशेषया अर्धशेषया ध्वजिन्या सेनया समं यथाऽऽगतं तथा निरगात् निर्जगाम । सुशर्मा निशीथादुपरि अर्धावशिष्टसैन्येन सह येन मार्गेणागतस्तेनैव मार्गेण जगामेत्यर्थः ॥ ६ ॥

---

१ क. इत्थम् । २ क. दधौ । ३ अत्र भ्रूवल्लिकम्पे आरोप्यमाणायाः कलिकायाः अवतंसीकरणो-पयोगित्वात्परिणामालंकारः । स च बन्धनकर्तुर्बन्धनमित्यनुरूपसंघटनात्मकसमालंकारेण संकीर्णः । ४ अत्रैकस्यैव तत्रापि गुणस्य कर्तृत्वं करणत्वं चेत्याश्चर्यम् । तत्तु श्लेषमूलम् । ५ अत्र प्रकृतयोस्तमो-युद्धयोः समानफलसंदायकत्वेनौपम्यस्य गम्यत्वात्तुल्ययोगिता ।

व्याकृत्तशीर्षकरको विमलास्थिदन्तो
रक्तह्रदांशुकधरो रथकेतुदण्डः।
सेनाक्षधृग्धृतशमः स्वयमाजिरङ्गः
कङ्कादिवाप चरमाश्रमसंप्रदायम्॥ १०७॥

तदनु मुहुर्मुहुर्वललमेव केवलमवलोकमाना वलमाना बलशासनदिशायामोजायमानेन चन्द्रमसा प्रसूतैर्मदकरटिघटाविषाणाङ्गणप्रतिफलनशतगुणितधवलिमवीचिभिर्मरीचीभिर्दलितरणविमर्दश्रमदुर्दशा विराटस्य चमूरपि प्रतिनिवर्तनवेगहर्षमाणगोधनपयःस्नवनधारापातशीतलितसिकतायां पदव्यां पक्ष्मपङ्क्तिनिमीलनेन समरभूरेणुभारेण लोचनयोर्निमीलनशिल्पकल्पितबहुसाहाय्यकमुद्रया निद्रया तां यामिनीं पश्चार्धसीमामत्यवीवहत्॥ २४॥

इति श्रीमदनन्तकविकुञ्जरविरचितचम्पूभारते षष्ठः स्तबकः।

---

व्याकृत्तं छिन्नं शीर्षमेव करकः कमण्डलुर्यस्य सः, विमलानि अस्थीन्येव दन्ताः यस्य सः, रक्तह्रदा एव अंशुकानि रक्तवस्त्राणि तेषां धरः धर्ता, रथकेतुरेव दण्डः वेणुदण्डो यस्य सः, सेनायाः अक्षान् रथावयवविशेषान् रुद्राक्षांश्च धृष्णोति धरतीति सेनाक्षधृक्, धृतः शमः युद्धावसाने शान्तिर्येन सः आजिरङ्गः रणरङ्गः स्वयं कङ्कात् युधिष्ठिरसकाशात् चरमाश्रमस्य संन्यासाश्रमस्य संप्रदायम् अवापेव। अन्योऽपि संन्यासिनः सकाशात् चतुर्थाश्रमदीक्षां गृहीत्वा तदुपदिष्टदण्डकमण्डल्वादिपदार्थसंपादनं करोति॥ १०७॥

तदनु शत्रुसेनागमनानन्तरं मुहुर्मुहुः केवलं वललमेव बल्लवमेव अवलोकमाना वलमाना गन्त्री बलशासनदिशायाम् ओजायमानेन ओजस्वीवाचरता तेजस्विनेत्यर्थः, चन्द्रमसा प्रसूतैः प्रकटीकृतैः मदकरटिघटायाः मदयुक्तगजसमूहस्य विषाणाङ्गणेषु दन्तचत्वरेषु प्रतिफलनेन प्रतिबिम्बनेन शतगुणिताः धवलिमवीचयः शुभ्रतोर्मयो येषां तैः मरीचिभिः चन्द्रिकाभिः दलिता नाशिता रणविमर्दश्रमदुर्दशा युद्धसंमर्दश्रमात्मकदुर्दशा यस्याः सा विराटस्य चमूरपि प्रतिनिवर्तने वेगो यस्य तच्च तत् हर्षमाणं यत् गोधनं गवां वृन्दं तस्य पयसः क्षीरस्य स्नवनधाराणां क्षरणधाराणां पातैः शीतलिता शीतलीकृता शर्करा यस्यां तस्यां पदव्यां मार्गे निद्रया तां यामिनीं रात्रिं पश्चार्धसीमाम् उत्तरार्धावसानम् अत्यवीवहत् प्रापयामास। विराटचमूः मार्गेऽवशिष्टां रात्रिं निद्रया यापयामासेत्यर्थः। कथंभूतया निद्रया, पक्ष्मपङ्क्तिषु निमीलनेन स्थितेन समरभुवः रणभूमेः रेणुभारेण धूलिसमूहेन लोचनयोः

---

१ क. ख. क्षयाद्भृतश°। २ ख. मुहूर्तं मुहुरविरलं वल°। ३ क. ख. वलमाना इति नास्ति। ४ क. प्रसृताभिर्मदसहितकरिघ°, ख. प्रसृतैर्मदकर°। ५ ख. विषाणाङ्कुरप्रति°। ६ क. श्रमेति नास्ति, ख. भटश्रमदु°। ७ क. °नहृष्यमाणगोधनवेगप्रस्तुतक्षीरधारा°। ८ ख. पयःप्रस्रवणधा°। ९ क. तिलीवेत। १० क. नयननिमी°। ११ क. सीमानं प्र°, ख. पाश्चात्यसीमानम्°। १२ उत्प्रेक्षात्र।

## ७ सप्तमः स्तबकः ।

आरूढे द्यामर्कबिम्बे परेद्युः
साकं सैन्यैः सार्वभौमः कुरूणाम् ।
पार्थादेकां बिभ्रदाहृत्य गोत्रां
मात्स्यादन्यां तत्पुरे हर्तुमागात् ॥ १ ॥

विदूरमार्गश्रमविह्वलाङ्गी
सेना समस्ता धृतराष्ट्रसूनोः ।
आभीरवाटान्तिक एव तस्थौ
सद्यो निरुद्धेव तदाज्यगन्धैः ॥ २ ॥

तावत्तस्य पादातं सर्वाभिसारेण गाहं गाहं गवां व्रजं व्रजगृहे जंगृहे ॥ १ ॥

दण्डाघाते दीयमानेऽपि योधैर्दुग्धं भूयो दोहशेषं वहन्त्यः ।

---

निमीलनशिल्पे निमीलनक्रियायां कल्पिता कृता बहुसाहाय्यकमुद्रा सहायत्वं यया तया । निद्रया पक्ष्मनिमीलनं भवति तत्र रेणुभारेण सहायत्वं कृतमिति भावः ॥ २४ ॥

इति श्रीचम्पूभारतटीकायां श्रीखण्डोपाह्वनारायणसूरि-
विरचितायां षष्ठः स्तबकः ॥ ६ ॥

---

अपरेद्युः दक्षिणगोग्रहणात् द्वितीयदिवसे अर्कबिम्बे द्याम् आकाशम् आरूढे सति सूर्योदये सतीत्यर्थः, पार्थात् धर्मराजात् एकां गोत्रां पृथिवीम् आहृत्य द्यूतेन अपहृत्य बिभ्रत् दधानः कुरूणां सार्वभौमः दुर्योधनः मात्स्यात् विराटात् अन्यां द्वितीयां गोत्रां गवां समूहं हर्तुं सैन्यैः साकं तत्पुरे विराटनगरस्योत्तरदिग्भागे आगात् आगमत् ॥ १ ॥

विदूरमार्गे अतिदूरमार्गे यः श्रमः तेन विह्वलानि किंचिदपि कर्तुमसमर्थानि अङ्गानि यस्याः सा समस्ता धृतराष्ट्रसूनोः सेना तस्य आभीरवाटस्य यानि आज्यानि तेषां गन्धैः सुगन्धैः निरुद्धेव—अस्मत्सेवनं कृत्वा गन्तव्यमिति—कृतनिरोधेव आभीरवाटस्य गोपालनिवासस्थानस्य अन्तिके एव सद्यस्तस्थौ । गोग्रहणफलकस्थिताज्यगन्धग्रहणफलकत्वमुत्प्रेक्ष्यते ॥ २ ॥

यावत् सेनास्थितिः तावत्तस्य दुर्योधनस्य पादातं पत्तिसमूहः सर्वाभिसारेण सर्वतः सर्वेषां सहैव गमनेन व्रजगृहे घोषगृहे गाहं गाहं प्रविश्य प्रविश्य गवां व्रजं समूहं जगृहे ॥ १ ॥

योधैः दण्डाघाते दण्डप्रहारे दीयमानेऽपि भूयः बहुतरं दोहशेषं दुग्धं वहन्त्यः गावः

---

१ क. पुरम् । २ क. प्रजगृहे ।

घोषाद्गावो निःसरन्ति स्म यत्नाद्गोभ्यो घोषो यत्नलेशं विनैव ॥३॥
इतस्ततः संभ्रममीयुषीणां गोपाङ्गनानां कुचदर्शनेन ।
निषादिपङ्क्तिर्निजहस्तिमस्ते सृणिं विधातुं श्लथपाणिरासीत् ॥ ४॥
भीमसेनभिषजा शमितो यो दक्षिणे झटिति तस्य पुरस्य ।
उत्तरेऽप्युदभवत्स तु पार्श्वे पक्षवात इव कौरववेधः ॥ ५ ॥
वृत्तं निवेदयितुमेतदतीववेगा-
दाधाव्य कश्चिदथ गोपयुवा विविग्नः ।
रिङ्खत्पदाः क्षितिपतेरिव घोषसीम्नि
स्वस्यापि गा विमुमुचे नृपसूनुगोष्ठ्याम् ॥ ६ ॥
औदास्यं किमिदं कुमार कुरवो गृह्णन्ति गास्तेऽखिला-
स्त्वद्दोष्णोः समयो यमाजिषु परैर्दुष्प्रापमाप्तुं यशः ।

---

यत्नात् घोषात् व्रजात् निःसरन्ति स्म निर्जग्मुः । घोषस्तु यत्नलेशं विनैव गोभ्यः निः-संसार । ग्रामात्मकस्य घोषस्य स्थावरतया गमनमसंभवि तत्रापि यत्नलेशं विनैवेत्याश्चर्यं, गोभ्यः घोषः आर्तस्वरः निःससारेत्याश्चर्यपरिहारः ॥ ३ ॥

इतस्ततः संभ्रमं त्वराम् ईयुषीणां प्राप्नुवतीनां गोपाङ्गनानां कुचदर्शनेन निषादिनां हस्तिपकानां पङ्क्तिः निजहस्तिनः मस्ते मस्तके—कुम्भस्थले सृणिम् अङ्कुशं विधातुम् आरोपयितुं श्लथपाणिः शिथिलहस्ता आसीत् । हस्तिपकाः कुचभ्रान्त्या हस्तिमस्तके बलेनाङ्कुशारोपणं न विदधुरिति भावः ॥ ४ ॥

भीमसेनः भिषक् वैद्य इव तेन झटिति शमितः शान्तिं नीतः तस्य पुरस्य विराटनगरस्य दक्षिणे पार्श्वे यः पक्षवात इव अर्धाङ्गवायुरोग इव कौरवाणां वेधः गोग्रहणरूपः उपसर्गः स तु कौरववेधः उत्तरेऽपि पार्श्वे भागे वामाङ्गे च पक्षवात इव उदभूत् । यथा दक्षिणाङ्गे जातोऽर्धाङ्गवायुर्भिषजा चिकित्सया शान्तिं नीतः सन् वामाङ्गेऽप्युद्भवति तथा भीमेन दक्षिणभागे शान्तिं नीतः कौरववेधः उत्तरेऽप्युदभवदित्यर्थः ॥ ५ ॥

अथ शत्रुभिः कृतगोग्रहणानन्तरं विविग्नः भीतः कश्चित् गोपेषु युवा इदं वृत्तं राजसूनवे निवेदयितुम् अतीववेगात् आधाव्य घोषसीम्नि रिङ्खत्पदा स्खलच्चरणाः क्षितिपतेः गाः धेनूरिव नृपसूनोः गोष्ठ्यां सभायां रिङ्खन्ति स्खलन्ति पदानि सुप्तिङन्तशब्दा यासां ताः स्वस्यापि गाः वाचः विमुमुचे । यथा घोषसीम्नि गाः विमुमुचे तत्याज तथा गोष्ठ्यां गाः विमुमुचे विससर्ज, उवाचेत्यर्थः ॥ ६ ॥

' हे कुमार राजपुत्र ! कुरवः ते अखिलाः गाः गृह्णन्ति । इदम् औदास्यं तवोदासी-

---

१ क. मस्तके । २ क. निधातुम् । ३ क. मत्स्यपु° । ४ क. बाधः । ५ ख. विषण्णः । ६ अत्र घोषाद्गवां निःसरणमान्यस्य दोहावशिष्टबहुलक्षीरधारणेन समर्थनात्काव्यलिङ्गं, तथोत्तरवाक्ये यत्नरूपकारणं विनैव घोषनिःसरणरूपकार्योत्पत्तेर्विभावना च । ७ अत्र भ्रान्तेरङ्कुशप्रहारत्यागहेतुत्वात्काव्यलिङ्गं, तच्च भ्रान्तिमदुज्जीवितम् ।

देवीं केकयनन्दिनीं कुरु महावीरप्रसूमूर्धसुं
द्रागारोह रथं गृहाण च धनुर्धत्स्वाभ्यमित्रिणताम् ॥७॥
उक्तोऽयमित्थं पुरतो वधूना-
मुल्लासयन् श्मश्रुलवान्नखाग्रैः ।
किंचिन्मणिस्तम्भवियोजिताङ्गो
गिरं दधेऽन्तःपुरमात्रधीरः ॥ ८ ॥
तथा भुजं विक्रमयेयमेतं
यन्ता यदि स्यादिह मे युयुत्सोः ।
षष्ठोऽपि नः कश्चन पाण्डवोऽभू-
दिति त्रसेयुः कुरवो यथा ते ॥ ९ ॥
इदं निशम्य स्मितलाञ्छितोष्ठया
तत्रोत्तरा केशकृता प्रणुन्ना ।
बृहन्नलां सारथिकृत्यदक्षां
भ्रात्रे निवेद्यानयति स्म चैनाम् ॥ १० ॥

---

नत्वं किम् । आजिषु संग्रामेषु परैः दुष्प्रापं दुर्लभं यशः आप्तुं त्वद्दोष्णोः तव भुजयोः अयं समयः । देवीं राज्ञीं केकयनन्दिनीं सुदेष्णां मातरं वीरप्रस्वां वीरमातॄणां मूर्धसु कुरु, शत्रुपराभवेन वीरप्रसूषु श्रेष्ठां कुर्वित्यर्थः । त्वं द्राक् शीघ्रं रथमारोह, धनुः गृहाण, अभ्यमित्रीणतां धाष्ट्र्येन शत्रोः अभिमुखं गच्छतः भावः अभ्यमित्रीणता तां धत्स्व धारय च । निर्भयः सन् शत्रोरभिमुखं त्वं गच्छेत्यर्थः ॥ ७ ॥

इत्थम् उक्तः अन्तःपुरमात्रे स्त्रीसभायामेव धीरः अयमुत्तरः वधूनां स्त्रीणां पुरतः श्मश्रुलवान् उत्तरोष्ठोर्ध्वकेशाग्रान् नखाग्रैः उल्लासयन् ऊर्ध्वं विकासयन् अनेन परापराधासहिष्णुताभिनयं कुर्वन् किंचित् मणिमयस्तम्भात् वियोजितम् अङ्गं येन तथाभूतः सन् पूर्वं मणिस्तम्भाश्रयेण स्थितः इदानीं क्रोधनाटनार्थं सरलः स्थितः सन्नित्यर्थः, गिरं दधे, उवाचेत्यर्थः ॥ ८ ॥

इह युयुत्सोः योद्धुमिच्छोः मे यन्ता सारथिः यदि स्यात्तर्हि एतं भुजं तथा विक्रमयेयं पराक्रमयुक्तं कुर्यां यथा ते कुरवः 'नः अस्माकं कश्चन षष्ठोऽपि पाण्डवः अभूत्' इति मत्वा त्रसेयुः भयं प्राप्नुयुः । मम कश्चन समीचीनसारथिर्मिलिष्यति चेत्तर्हि मया पाण्डवसदृशं पराक्रमं कृत्वा कुरुपराभवः कृतः स्यादिति भावः ॥ ९ ॥

इदम् उत्तरोक्तवचनं निशम्य स्मितेन हास्यप्रभया लाञ्छितौ ओष्ठौ यस्याः तया केशकृता केशप्रसाधनकर्त्र्या द्रौपद्या प्रणुन्ना प्रेरिता उत्तरा बृहन्नलां सारथिकृत्ये सारथ्यकर्मणि दक्षां कुशलां भ्रात्रे निवेद्य एनां बृहन्नलाम् आनयति स्म आनीतवती ॥ १० ॥

---

१ क. नन्दनाम् । २ अयम् । ३ ख. अत्रैकस्यैवोत्तरस्य कर्तृकारकस्य स्थापनाद्यनेकक्रियान्वयित्वात्कारकदीपकम् ।

अवाप्य तां संसदमादृतः क्रमा-
द्वाग्बभार द्वयमिन्द्रनन्दनः ।
नृपात्मजं पूजयितुं च मस्तकं
विलासिनीर्हासयितुं च कञ्चुकम् ॥ ११ ॥

षण्ढोऽपि तेजसा तत्र सारथ्यसदृशाकृतिः ।
न कासां पौरदृष्टीनां चकासामास फाल्गुनः ॥ १२ ॥

तं सारथिपदे कृत्वा विधातारमिवेश्वरः ।
परसेनां हसन्नेव प्रधक्ष्यामीत्यमन्यत ॥ १३ ॥

मालिनी तादृशः पत्युर्महान्तं तं रणोद्यमम् ।
श्यामाकचरुनिर्वापं जज्ञे सोमाय वाजिने ॥ १४ ॥

---

तां संसदं सभाम् अवाप्य आदृतः ताभिः स्त्रीभिः उत्तरेण च कृतादरः इन्द्रनन्दनः अर्जुनः क्रमात् द्वयम् अवाक् अधोभागे बभार दधौ । तदेव द्वयमाह—**नृपेति** । नृपात्मजम् उत्तरं पूजयितुं नमनेन संमानयितुं मस्तकम् अवाक् बभार। विलासिनीर्वधूः हासयितुं कञ्चुकम् अवाक् कटेरधोभागे बभार । कञ्चुके करप्रवेशनं मुक्त्वा पादप्रवेशनं चकारेति भावः ॥ ११ ॥

फाल्गुनः उत्तरफल्गुन्यां जातः अर्जुनः षण्ढोऽपि क्लीवमपि तत्र सभायां सारथ्यसदृशी सारथिकर्मानुरूपा आकृतिर्यस्य तथाभूतः सन् तेजसा कासां पौरदृष्टीनां न चकासामास न प्रकाशयामास । सारथितेजोदर्शनार्थं कैः पौरैः नेत्राणि न विकासितानि अपि तु सर्वैर्विकासितानीत्यर्थः । यद्वा, पौरदृष्टीनां पौरज्ञानानाम् । एवं च एतत्तेजोदृष्ट्याऽयं सम्यक् सारथ्यकर्म करिष्यतीति केषां पौराणां ज्ञानेषु प्रकाशो नाभूत्, अपि तु सर्वेषां प्रकाशोऽभवदित्यर्थः । 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इत्यमरः ॥ १२ ॥

सः उत्तरः ईश्वरः शिवः धातारमिव त्रिपुरदाहे ब्रह्माणमिव तम् अर्जुनं सारथेः पदे स्थाने कृत्वा हसन्निव परसेनां प्रधक्ष्यामि भस्मीकरिष्यामीत्यमन्यत ॥ १३ ॥

मालिनी सैरन्ध्री द्रौपदी तादृशः क्लीवत्वं प्राप्तस्य पत्युः अर्जुनस्य वाजिने क्लीबत्वापहारकाय सोमाय श्यामाकचरोः निर्वापं श्रपणपूर्वकाग्नौ प्रक्षेपं जज्ञे ज्ञातवती । 'पुंस्त्वकामः सोमाय वाजिने श्यामाकचरुनिर्वापं कुर्यात्' इति विधिः । एवं चास्यैतादृग्रणोद्यमेन पुंस्त्वं प्रकटीभविष्यतीति ज्ञातवतीति भावः ॥ १४ ॥

---

१ क. नितम्बिनीं । २ क. फल्गुनः । ३ क. स धाता । ४ अत्र शिरसो नमनेन कञ्चुकस्य च वैपरीत्येन द्वाभ्यामवाक्शब्देन च तन्त्रेण गृहीताभ्यां क्रमेणान्वयाद्यथासंख्यालंकारः 'यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः' इति लक्षणात् । एवं राजकुमारपूजनान्तःपुराङ्गनाहासनक्रिययोर्योगपद्यात्समुच्चयालंकारश्च 'बहूनां युगपद्भावभाजां गुम्फः समुच्चयः' इति लक्षणात् । द्वयोः संसृष्टिः । ५ अत्र तेजसा सारथ्यौचित्यसमर्थनात्काव्यलिङ्गम् । ६ उपमालंकारः ।

अकृत्रिमाण्यद्य वशे कुरूणा
पाण्डुस्नुषाया वसनानि सन्ति ।
आहृत्य नस्तानि दिशेति कन्या-
स्तमभ्ययाचन्त कुतूहलिन्यः ॥ १५ ॥

तत्क्षणं, यातायातसरभसराजलेखवाहमुखश्रुतवल्लवभुजबलावलेप-वृत्तान्तमोदमानसूदकुलवीरपत्नीवीरजननीति तव युगपत्प्रसिद्धेर्वैजननो वासरोऽयमिति कात्यायनीजनस्तूयमानसुदेष्णं मस्तकतलविन्यस्त-हस्तपल्लवतल्लजवृद्धवल्लवयोषिदभययाच्ञावचनप्रतिशब्ददानदक्षगवा-क्षमात्रोपलक्षितं कुमारप्रयाणपरिहार्यमाणमातुलशतान्तःपुरवधूटीनवविलापघोषं तत्पुरमासीत् ॥ २ ॥

लाजाभिवर्षी ललनासमाजो राज्ञः कुमाराय रथस्थिताय ।
मुदाऽऽशिषं मूल्यमिव व्यतानीज्जिघृक्षितानां द्विपदंशुकानाम् ॥ १६ ॥

---

कुतूहलिन्यः कन्याः उत्तराद्याः कुमार्यः 'अद्य अकृत्रिमाणि वस्त्रहरणसमये तन्तुवानादिक्रियारहितानि अलौकिकानि पाण्डुस्नुषायाः द्रौपद्याः वसनानि वस्त्राणि कुरूणां वशे सन्ति तानि आहृत्य तान् जित्वा तेभ्यः अपहृत्य नः अस्मभ्यं देहि' इति तम् उत्तरं अभ्ययाचन्त याच्ञां कृतवत्यः ॥ १५ ॥

तत्क्षणं तस्मिन् समये यातायातेषु गमनागमनेषु सरभसाः सवेगाः ये राज्ञो लेखवाहाः लिखितपत्रप्रापकाश्चाराः तेषां मुखेभ्यः श्रुतः यो बल्लवस्य भुजबलावलेपवृत्तान्तः भुजबलगर्ववृत्तान्तः तेन मोदमानं सानन्दं सूदकुलं पाचकसमूहो यस्मिंस्तत्, पतिर्विजयीभूतः पुत्रो विजयी भविष्यतीत्यतः वीरपत्नी वीरजननी इति तव युगपत्प्रसिद्धेः वैजननः प्रसूतिमासः प्रसूतिसमय इत्यर्थः, इति कात्यायनीजनैः अर्धवृद्धत्वादिलक्षणयुतस्त्रीभिः स्तूयमाना सुदेष्णा यस्मिन् तत्; 'कात्यायन्यर्धवृद्धा या काषायवसनाऽधवा' इत्यमरः । मस्तकतले विन्यस्ताः नमनार्थं स्थापिताः हस्ताः याभिस्तासां वृद्धवल्लवयोषितां वृद्धगोपालस्त्रीणाम् अभययाच्ञावचनस्य प्रतिशब्ददाने उत्तरदाने दक्षं निपुणं यत् गवाक्षमात्रं वातायनान्येव तैः उपलक्षितं युक्तम्; गोपालस्त्रीणाम् अभयदाने राजपुरुषाभावात् तत्राभययाच्ञाशब्दजन्यवातायनबिलप्रतिध्वनौ प्रत्युत्तरत्वारोपः । अनेन तत्र राजपुरुषाभावो द्योत्यते । कुमारस्य उत्तरस्य प्रयाणे युद्धार्थगमने परिहार्यमाणः निवार्यमाणः मातुलशतस्य कीचकशतस्य अन्तःपुरवधूटीनाम् अन्तःपुरसंबन्धितरुणस्त्रीणां नवः नूतनः विलापघोषः आक्रन्दशब्दो यस्मिंस्तत्; प्रयाणे अमङ्गलत्वात् कृतविलापघोषनिवारणमिति भावः । तत्पुरम् आसीत् ॥ २ ॥

लाजाभिवर्षी मङ्गलार्थं लाजवृष्टिकर्ता स्त्रीसमूहः जिघृक्षितानां ग्रहीतुमिष्टानां द्विपदं-

---

१ क. बललभुजाव°, ख. बललभु° । २ क. वीरपत्नीत्ववीरजननीत्वयु° । ३ क. ख. सुदेष्णम् । ४ क. प्रवृद्धवल्ल° । ५ क. याचना, ख. याचन° । ६ ख. °क्षोपल° ।

आलेख्यदत्तैः पुरुषैरुपेतामालोकयन् राजपथप्रतोलीम् ।
घोटान्नुदन्तीं स रथे निबद्धान् पोटां पुरस्कृत्य पुरात्प्रतस्थे ॥१७॥

तदनु दक्षिणदिङ्मुखादुदयमानः पवमानो वृन्दारकैर्मुक्तमन्दारकुसुमवर्षमन्दायितधूमगन्धं वल्लवचिकुरबन्धमाघ्राय निशितस्य जयोत्सवं विज्ञापयितुमवसरं विचिन्वन्निव विराटकुरुनन्दनयोः स्यन्दनसमीपे मन्दमन्दमसपन्दत ॥ ३ ॥

प्रस्वापितेभ्यः परभूपतिभ्यः
स्वजातिवर्गः सुलभो रणेऽस्मिन् ।
भविष्यतीति प्रणनर्त हृष्टा
शताङ्गशाटी शतमन्युसूनोः ॥ १८ ॥

जले मत्स्यान् दधानोऽपि स्थले मत्स्यान्विलोकितुम् ।
आगतोऽब्धिरिवानीकः कुरूणां ददृशे ततः ॥ १९ ॥

---

शुक्रानां शत्रुवस्त्राणां मूल्यमिव रथस्थिताय राज्ञः कुमाराय मुदा हर्षेण आशिषं—विजयी भव—इत्याशीर्वचनं व्यतानीत् ददौ ॥ १६ ॥

सः उत्तरः आलेख्यदत्तैः भित्तिषु चित्रलिखितैः पुरुषैः योधैः उपेतां राजपथप्रतोलीं राजमार्गसंबन्धिनीं रथ्यां विलोकयन् सन् राजपुरुषरहितां रथ्यां पश्यन्नित्यर्थः, रथे निबद्धान् घोटान् तुरगान्नुदन्तीं प्रेरयन्तीं पोटां श्मश्र्वादिपुरुषलक्षणयुतां स्त्रियं पुरस्कृत्य रथाग्रतः कृत्वा पुरान्नगरात्प्रतस्थे ॥ १७ ॥

दक्षिणदिङ्मुखात् उदयमानः निर्गतः पवमानः वृन्दारकैः देवैः मुक्तानां मन्दारकुसुमानां कल्पवृक्षपुष्पाणां वर्षेण वृष्ट्या मन्दायितः धूमगन्धो यस्य तं वल्लवस्य चिकुरबन्धं केशबन्धं निशि आघ्राय पुत्रत्वात् स्नेहेन मूर्धन्याघ्राणं कृत्वा तस्य भीमस्य जयोत्सवं विज्ञापयितुम् अवसरं समयं विचिन्वन्निव मृग्यमाण इव विराटकुरुनन्दनयोः उत्तरार्जुनयोः स्यन्दनसमीपे मन्दं मन्दम् असपन्दत अगच्छत ॥ ३ ॥

शतमन्युसूनोः अर्जुनस्य शताङ्गशाटी रथध्वजपटी—अस्मिन् रणे प्रस्वापितेभ्यः प्रस्वापनास्त्रेण निद्रां प्रापितेभ्यः रिपुभूपतिभ्यः स्वजातिवर्गः स्वज्ञातिवस्त्रसमूहः सुलभो भविष्यति—इति हेतोः हृष्टा सती प्रणनर्तेति लुप्ता चलने नर्तनोत्प्रेक्षा । अन्याऽपि स्वज्ञातिदर्शने संभविष्यति सति हर्षात् नृत्यति ॥ १८ ॥

ततः कुरूणाम् अनीकः सेनाजले मत्स्यान्दधानोऽपि स्थले मत्स्यान् विलोकितुं द्रष्टुम् आगतः अब्धिरिव ददृशे, उभाभ्यां दृष्ट इत्यर्थः । स्थले कीदृशा मत्स्याः सन्तीति द्रष्टुमागतः समुद्र इवेत्युत्प्रेक्षा ॥ १९ ॥

---

१ क. 'पथे' । २ क. घेटान्नु' । ३ ख. 'कवृन्दमु' । ४ क. बललस्य चि', ख. बललचि' । ५ ख. विजयायेत्यधिकम् । ६ क. मन्दं मन्दम् । ७ क. 'तीतीव ननर्त । ८ अत्र दक्षिणदिङ्मुखादुदयमान इति विशेषणस्य भीमविजयवृत्तान्तविज्ञानाभिप्रायगर्भत्वात्परिकरालंकारः ।

सेहे जिष्णुर्न तत्रारेः सेनाधूलिं विसृत्वरीम् ।
प्रायेण मानिना पुंसा परागो नहि सह्यते ॥ २० ॥

तत्रारिसैन्यमवलोकितुरुत्तरस्य
स्त्रीगोष्ठिकाऽजनि रणे निजवेश्मनीव ।
भीश्चित्तमश्रुलहरी नयनं विमूर्छा
बुद्धिं प्रवेपथुरुजा वपुरानशे यत् ॥ २१ ॥

व्यातन्वन्कुरवं गले विरचयंस्तालुन्यपां शोषणं
वृष्टीरक्ष्णि विवर्धयन् विपुलयन् द्यां धार्तराष्ट्रारवैः ।
सेवायां त्वरयन् धनञ्जयपदस्यान्तर्बहिः कम्पयन्
त्रासो मात्स्यसुते चकार चरितं षण्णामृतूनां क्रमात् ॥ २२ ॥

अथ रथादवप्लुत्य पुरं प्रति पलायमानोऽयमुत्तरः पश्चादनुधाव्य कचेषु गृहीतवते फाल्गुनाय फल्गुना कण्ठरवेण प्राक्तनचित्रमिव प्रमुषितार्धवर्णं वचनमेवमवादीत् ॥ ४ ॥

---

तत्र जिष्णुः अर्जुनः विसृत्वरीं प्रसरणशीलाम् अरेः सेनाधूलिं न सेहे । उक्तमर्थं श्लेषेण अर्थांतरे न्यस्यति—**प्रायेणेति** । तथाहि मानिना अभिमानवता पुंसा परागः धूलिः, अन्यापराधश्च प्रायेण न सह्यते ॥ २० ॥

तत्र रणे अरिसैन्यम् अवलोकितुः द्रष्टुः उत्तरस्य स्त्रीगोष्ठिका स्त्रीसभा निजवेश्मनीव अजनि जाता । यथा गृहे स्त्रीसभा आसीत् तथा रणेऽपि स्त्रीसभा मिलितेत्यर्थः । तामाह—यत् यतः भीः भीतिः चित्तम् आनशे प्राप । अश्रुलहरी बाष्पलहरी नयनं प्राप । विमूर्च्छा बुद्धिं प्राप । प्रवेपथोः रुजा व्यथा वपुः शरीरमाप च ॥ २१ ॥

मात्स्यसुते उत्तरे त्रासः शत्रुसैन्यदर्शनजन्यभयं षण्णाम् ऋतूनां चरितं कृत्यं क्रमात् वसन्तादिक्रमात् चकार । किं कुर्वन् चकार तदाह—गले कुरवं बवयोरभेदात् कुरबकपुष्पं स्वरभङ्गेन कुत्सितशब्दं च व्यातन्वन् प्रकटयन् । तथा तालुनि अपां जलानां शोषणं विरचयन् कुर्वन् । अक्ष्णि नेत्रे वृष्टीः जलवृष्टीः, बाष्पवृष्टीश्च विवर्धयन् । द्याम् आकाशं धार्तराष्ट्रारवैः हंसशब्दैः, युद्धार्थमेकरथी आगतः सोऽपि भीत इति ज्ञात्वा धृतराष्ट्रपुत्रकृतसिंहनादैश्च विपुलयन् अन्तः शब्दभरेण विस्तृतां कुर्वन् । धनञ्जयपदस्य अग्निस्थानस्य आत्ममोचनार्थम् अर्जुनचरणस्य च सेवायां त्वरयन् त्वरामुत्पादयन् । अन्तर्बहिश्च शरीरस्य अन्तर्बहिर्भागयोः अन्तःकरणशरीरबहिर्भागयोश्च कम्पयन् कम्पमुत्पादयन् ॥ २२ ॥

अथ शत्रुसैन्यदर्शनजन्यभयानन्तरं रथात् अवप्लुत्य पुरं प्रति पलायमानः अयम् उत्तरः

---

१ क. च । २ क. गुणस्या॰ । ३ क. ख. फल्गुनाय । ४ क. वच एवम् । ५ अत्रानेकवाक्यार्थेन स्त्रीगोष्ठीसमर्थनात्काव्यलिङ्गम् । ६ अत्र कुरवविस्तारीकरणादीनां कुरववृक्षरोदनादोः श्लेषभित्तिकया अभेदाध्यवसितानां षड्ऋतुधर्माणां प्रकृतात्मतया क्रमेण विन्यासाद्रत्नावल्यलंकारः 'क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः' इति लक्षणात् । सा च श्लेषाश्लिष्टा ।

किं वा चिकीर्षुरसि हन्त बृहन्नले त्व-
मक्ष्णोर्न मान्ति कुरुराजबलान्यमूनि ।
सद्यो निवर्तय रथं समरेच्छयाऽलं
नेष्याम्यहं निजगृहेष्ववशेषमायुः ॥ २३ ॥
गाः कालयन्तु सह वत्सकुलैरशेषै-
र्घोषान्दहन्तु कुरवः प्रहरन्तु गोपान् ।
मह्यं पलायनमहोत्सवमेव देहि
प्राणेषु किंचिदपि मे गुरुतां न वेत्सि ॥ २४ ॥
मातुर्मुखं मम पुरः पुर एत्य तिष्ठ-
त्युत्कण्ठितस्य नय तत्सविधं कृपालो ।
यावन्ति सन्ति मम कोशगृहे सवित्री
तावद्भिरेव कनकैरभिषेक्ष्यति त्वाम् ॥ २५ ॥
चित्रे युद्धं विलोक्याहं चापलादेत्य वञ्चितः ।
तत्रासद्भिरिहोद्यद्भिः क्ष्वेडाहेषितबृंहितैः ॥ २६ ॥

---

पश्चादनुधाव्य कचेषु गृहीतवंत फाल्गुनाय अर्जुनाय फल्गुना नीचेन कण्ठरवेण प्राक्तनं जीर्णं चित्रमिव आलेख्यमिव प्रमुषिताः लुप्ताः अर्धवर्णाः अकारादीन्यर्धाक्षराणि शुभ्रत्वादयोऽर्धवर्णाश्च यस्मिंस्तत्, एवं वक्ष्यमाणं वचनम् अवादीत् ॥ ४ ॥

हन्त इति खेदे । हे बृहन्नले ! त्वं मां धृत्वा किं वा चिकीर्षसि वाशब्दो वाक्यालंकारे। अमूनि कुरुवर्याणां बलानि सैन्यानि मे अक्ष्णोर्न मान्ति, अनन्तत्वाद्दृष्टिगोचरीकर्तुमपि न शक्नोमीति भावः । तस्मात् सद्यः रथं निवर्तय । समरेच्छया अलं पूर्यतां,त्वया मया च युद्धेच्छा न कर्तव्येत्यर्थः । अहम् अवशेषम् आयुः गृहेषु नेष्यामि ॥ २३ ॥

मरणभयेन रणं त्यक्त्वा गृहं प्रति गमने महाहानिः स्यादिति चेदत आह—गा इति । कुरवः अशेषैः वत्सकुलैः सह गाः कालयन्तु दण्डप्रहारं कृत्वा बलान्नयन्तु । घोषान् गोपालग्रामान् दहन्तु । गोपान् प्रहरन्तु । मह्यं पलायनमेव महोत्सवं देहि । मे मम राजपुत्रस्य प्राणेषु गुरुताम् इतरापेक्षया महत्त्वं किंचिदपि न वेत्सि । अतस्त्वयि तारतम्याभावात् अविचार्यसीति भावः ॥ २४ ॥

मातुर्मुखम् उत्कण्ठितस्य मम वीक्षाभ्यासबाहुल्यात् पुरः पुरः एत्य तिष्ठति । अतः हे कृपालो ! तस्याः मातुः सविधं समीपभागं नय । ननु रणादपवाहने मदुपरि त्वन्मातुः कोपः स्यादिति चेदत आह—सवित्री माता कोशगृहे यावन्ति कनकानि सन्ति तावद्भिः कनकैः त्वाम् अभिषेक्ष्यति अभिषेकं करिष्यति । कुमारानयनजन्यहर्षातिशयात् पारितोषिकत्वेन बहूनि कनकानि तुभ्यं दास्यतीति भावः ॥ २५ ॥

यदि शत्रुसेनादर्शनमात्रेण भीतोऽसि तर्हि योद्धुं रणाङ्गणे किमित्यागतोऽसीत्यत

---

१ क. ख. एव ति° । २ अत्र श्लिष्टविशेषणोपमा° ।

यथाऽहं भूतलं त्यक्त्वा रथमारुक्षमुच्छ्रितम् ।
तथा हृदन्तरं त्यक्त्वा कण्ठं प्राणोऽधिरोहति ॥ २७ ॥

इति बहुधा विलप्य पादयोः प्रणिपतन्तं नृपसुतमपराङ्गे करपुटेन मुहुरास्पृश्यालिङ्गयन् सस्मितं गिरममरपतिसुतोऽपि प्रवर्तयामास ॥ ५ ॥

उदितोऽसि विराटभूपतेरुदराद्भद्र कथं त्वमीदृशः ।
प्रवया अपि यः कुतूहलात्परसैन्यैरधुनाऽपि युध्यते ॥ २८ ॥

सारथौ गतभयेऽपि रथी त्वं
संगरे यदि बिभेषि रिपुभ्यः ।
मत्स्यकेकयभुवां भुजभाजां
मानकर्तनमितोऽपि पुनः किम् ॥ २९ ॥

विस्तीर्य संसदि विशृङ्खलवीरवादं
युद्धात्पलायितवतोऽद्य तवाङ्गकम्पः ।

---

आह—चित्र इति । 'अहं चित्रे भित्तिस्थलेख्ये युद्धं विलोक्य चापलात् अविचारात् एत्य एतद्रणाङ्गणं प्राप्य तत्र चित्रयुद्धे असद्भिः अविद्यमानैः इह युद्धाङ्गणे उद्यद्भिः प्रादुर्भवद्भिः क्ष्वेडाहेषितबृंहितैः सिंहनादाश्वशब्दगजशब्दैः वञ्चितोऽस्मि । यदि चित्रयुद्धे क्ष्वेडादयः स्युस्तर्हि नागच्छेयमिति भावः ॥ २६ ॥

अहं यथा येन प्रकारेण भूतलं त्यक्त्वा उच्छ्रितम् उन्नतं रथम् आरुक्षम् आरूढवानस्मि तथा तेन प्रकारेण प्राणः हृदन्तरं हृदयमध्यभागं त्यक्त्वा कण्ठम् अधिरोहति । रथादधो गन्तुं मां न मुञ्चसि चेत्तर्हि मम प्राणोत्क्रमणं भवेदिति भावः '॥ २७ ॥

इति बहु विलप्य दीनभाषणं कृत्वा पादयोः प्रणिपतन्तं पादौ धृत्वा नमस्कुर्वन्तम् उत्तरम् अपराङ्गे पृष्ठभागे करपुटेन मुहुः आस्पृश्य आलिङ्गयन् अर्जुनोऽपि गिरं सस्मितं यथा तथा प्रवर्तयामास, उवाचेत्यर्थः ॥ ५ ॥

'हे भद्र कल्याण! त्वं विराटराजस्य उदरे ईदृशः युद्धे भीरुः कथम् उत्पन्नोऽसि । यः विराटः प्रवया अपि वृद्धः सन्नपि कुतूहलात् अद्यापि शत्रुसैन्यैः सह युध्यते । एतत्स्वभावेन पितुर्लाञ्छनकारी जातोऽसीति भावः ॥ २८ ॥

सारथौ गतभये सत्यपि त्वं रथी सन् संगरे युद्धे रिपुभ्यः यदि बिभेषि तर्हि मत्स्यकेकयभुवां पितृमातृकुलोत्पन्नानां भुजभाजां बाहुपराक्रमशालिनां राज्ञां मानकर्तनं माननाशकम् इतः युद्धात्पलायनकर्मणः सकाशात् अन्यत् किं वर्तते । एतदेवोभयकुललाञ्छनकारीत्यर्थः ॥ २९ ॥

संसदि सभायां विशृङ्खलम् अमर्यादं वीरेण वक्तव्यं वादं विस्तीर्य बहूक्त्वा अद्य

---

१ क. मुक्त्वा । २ क. बहु । ३ क. पदयोः । ४ क. तमित्यधिकम् । ५ क.ख. आस्फालयन् स° । ६ क. अमर्त्यप°, ख. अमराधिपसु° । ७ ख. बलभा° । ८ क. कृन्तनम् । ९ क. किमन्यत् ।१० क. विस्तार्य । ११ अत्र तादृग्रणधीरादीदृग्रणभीरूत्पत्तिवर्णनाद्विषमालंकारः 'विरूपकार्यस्योत्पत्तिरपरं विषमं मतम्' इति लक्षणात् ।

अन्तःपुरेषु हसतामबलाजनाना-
माचार्य एव भविता कुचवल्गितानाम् ॥ ३० ॥
कियद्द्विषामंशुकमाहृतं ते
सहोदरेणेति सखीभिरुक्ते ।
मानोत्तराया भृशमुत्तरायाः
किमुत्तरं ब्रूहि तदुत्तर त्वम् ॥ ३१ ॥
जरठो जनकोऽपि मातुलाः शतमप्यन्तमगुस्त्वमेककः ।
यदि यासि न धैर्यमत्र ते न वशे राष्ट्रमिदं भविष्यति ॥ ३२ ॥
तदिदं विजहीहि साध्वसं कुरु पाणौ तृणतां कुरुष्वपि ।
तव मत्स्यपतेस्तु वाहिनीमुखभागे खलु वल्गनं क्षमम् ॥ ३३ ॥
इत्याश्वास्य पितृवनाटवीतटमुपेत्य शमीविटपिकोटिसमार्टीकितकिरीटशङ्खचापनिषङ्गो जयलक्ष्मीपरिणयनयोग्यतां संपादयितुमिव खण्डि-

---

युद्धात्पलायितवतः तव अङ्गकम्पः अन्तःपुरेषु हसताम् अवलाजनानां स्त्रीजनानां निर्बलानामपीति ध्वनिः, कुचवल्गितानां कुचचाञ्चल्यानाम् आचार्य एव उपदेष्टा गुरुरेव भविता भविष्यति । एवं तव भयजन्यकम्पं दृष्ट्वा हसिष्यन्तीति भावः । गुरूक्तं शिष्योऽनुवदति ॥ ३० ॥

हे उत्तर ! 'ते सहोदरेण एकोदरेण बन्धुना द्विषां शत्रूणाम् अंशुकं वस्त्रं कियत् आहृतम् आनीतम्' इति उपहासवादे सखीभिः उक्ते सति भृशं मानेन उत्तरायाः वीरकुलोत्पन्नत्वाभिमानेन श्रेष्ठायाः उत्तरायाः तदा तत्समये उत्तरं किं तत् ब्रूहि । तदोत्तराया महती मानहानिः स्यादिति भावः ॥ ३१ ॥

'जीवन्नरो भद्रशतानि पश्येत्' इति वचनात् सुखेच्छुना प्राणरक्षणमवश्यं कर्तव्यम् इति चेत्तत्राह—**जरठ इति** । तव जनकोऽपि जरठः वृद्धः । शतमपि मातुलाः अन्तं मृत्युम् अगुः प्राप्नुवन् । त्वम् एककः असि । अत्र युद्धे यदि धैर्यं न यासि न प्राप्नोषि तर्हि इदं राष्ट्रं राज्यं ते वशे न भविष्यति त्वदधीनतायां न स्थास्यतीत्यर्थः । शत्रुपराजयं विना ते सुखं न भविष्यतीति भावः ॥ ३२ ॥

तत्तस्मात् साध्वसं भयं विजहीहि त्यज । पाणौ कुरुष्वपि तृणतां धनुः तृणतुल्यतां च कुरु । मत्स्यपतेः मत्स्यदेशाधीश्वरस्य मीनश्रेष्ठस्य च तव तु वाहिनीमुखभागे सेनाग्रे नदीप्रवाहाग्रभागे च वल्गनं चाञ्चल्येन इतस्ततो गमनं क्षेमं योग्यम् ॥ ३३ ॥

इत्युक्त्या आश्वासितः पितृवनाटवीतटं श्मशानारण्यसमीमभागम् उपेत्य शमीविटपिकोटेः शमीवृक्षाग्रात् समार्टीकिताः समानीताः किरीटश्च शङ्खश्च चापश्च निषङ्गौ च

---

१ क. राज्यमिदम् । २ अत्र स्त्रीणामेव तथा हासे किमुत पुरुषाणामित्यर्थान्तराक्षेपादर्थापत्त्यलंकारः । ३ अत्र पूर्वार्धे त्यागाद्यनेकक्रियायौगपद्याभिधानात्समुच्चयः । उत्तरार्धे मत्स्यपतित्ववाहिनीमुखसंचारयोरनुरूपसंघटनवर्णनात्समालंकारः ।

तषण्ढभावोऽयमाखण्डलसुतो निजतत्त्वव्याकरणाच्छतधापल्लवितधाष्ट्र्येन तेनैव सुदेष्णापत्येन परिकल्पितसारथ्यशिल्पं रथमारुह्य क्षणेन वारिधिपूरस्य वडवावह्निरिव सपत्नसैन्यस्य संमुखीनो बभूव ॥ ६ ॥

संख्यातीतमवेक्ष्य कौरवबलं तत्सव्यसाचीपुन-
श्चापे तादृशि किंचिदेष विदधे साचीभवन्तीं दृशम् ।
पार्वत्या निजपट्टवस्त्रशकलं स्नेहद्वयार्द्रं स्वयं
न्यस्य न्यस्य चिकित्सितव्रणशिरा देवोऽपि यं श्लाघते ॥ ३४ ॥

नभसि प्रविसारिदेवदत्ते नरदत्तं ध्वनितं ततो दधाने ।
मुमुहुर्द्विरदा मुमूर्छुरश्वा रथिनश्चुक्षुभिरे भटाश्च बिभ्युः ॥ ३५ ॥

पर्यायेणास्य गाण्डीवः पातितज्यः प्रकोष्ठयोः ।
गन्धर्वयुद्धमारभ्य कृतं मौनं समापयत् ॥ ३६ ॥

---

येन सः जयलक्ष्म्या परिणयने विवाहविषये योग्यतां संपादयितुमिव खण्डितः विसर्जितः षण्ढभावो नपुंसकत्वं येन सः अर्जुनः निजतत्त्वस्य स्वनामादिरहस्यस्य व्याकरणात् व्याख्यानात् शतधा अनेकप्रकारेण पल्लवितं पुष्टीकृतं धाष्टर्यं यस्य तेनैव सुदेष्णापत्येन उत्तरेण परिकल्पितं संपादितं सारथ्यशिल्पं सारथ्यचातुर्यं यस्य तं रथमधिरुह्य क्षणेन वारिनिधिपूरस्य समुद्रपूरस्य वडवावह्निरिव सपत्नसैन्यस्य शत्रुसैन्यस्य संमुखीनः संमुखगमनकर्ता बभूव ॥ ६ ॥

एषः सव्यसाची अर्जुनः संख्यातीतम् असंख्यं तत्कौरवाणां बलं सैन्यम् अवेक्ष्य पुरः अग्रभागे तादृशि अलौकिके चापे किंचित्साचीभवन्तीं तिर्यक्भवन्तीं दृशं दृष्टिं विदधे, चापग्रहणेच्छामकरोदित्यर्थः । कीदृशः सव्यसाची, पार्वत्या स्नेहयोः प्रीतितैलयोः द्वयेन आर्द्रं युक्तं निजपट्टवस्त्रस्य स्वकौशेयवस्त्रस्य शकलं खण्डं स्वयम् आत्महस्तेन न्यस्य न्यस्य उपरि स्थापयित्वा स्थापयित्वा चिकित्सितः शान्तिं नीतः व्रणो यस्य तादृशं शिरो यस्य स देवोऽपि शिवोऽपि यं श्लाघते व्रणव्यथां विस्मृत्य शिरश्चालनपूर्वकं श्लाघां करोति अन्ये तु सुरासुरादयः श्लाघां कुर्वन्तीति किमु वक्तव्यमित्यर्थः ॥ ३४ ॥

ततः देवदत्ते एतन्नाम्नि अर्जुनस्य शङ्खे नभसि प्रविसारि विसर्पणशीलं नरेण अर्जुनेन दत्तं ध्वनितं शब्दं दधाने सति युद्धारम्भे अर्जुनेन शङ्खं वादिते सतीत्यर्थः, द्विरदाः गजाः मुमुहुः मोहं प्रापुः । अश्वाश्च मुमूर्छुः । रथिनश्चुक्षुभिरे । भटाः वीराश्च बिभ्युः ॥ ३५ ॥

प्रकोष्ठयोः मणिबन्धात् कूर्परपर्यन्तं हस्तभागयोः पातिता ज्या मौर्वी यस्य सः अस्य अर्जुनस्य गाण्डीवः चापः कौरवघोषयात्रासमये जातं गन्धर्वयुद्धम् आरभ्य कृतं

---

१ क. व्याकरणशत° । २ ख. सारथिशि° । ३ क. °मधिरुह्य । ४ क. ख. वारिनिधिपू° । ५ क. वाडव° । ६ क. पुरः । ७ क. एव । ८ क. ख. °दत्तध्व° । ९ अत्रोपमोत्प्रेक्षयोः संसृष्टिः । १० अत्र काव्यलिङ्गार्थापत्त्योरङ्गाङ्गिभावेन संकरः । ११ अत्र मोहाद्यनेकक्रियायौगपद्यात्समुच्चयः ।

अथ करतलद्वयमण्डपकृतताण्डवस्य गाण्डिवस्य विस्फारेण पाण्डवोऽयमिति निश्चित्य लीलानिस्तीर्णविस्तरसंधासिन्धुरयं पुनरपि निर्बन्धमागत इत्यप्रधृष्यया निजेर्ष्यया रूक्षाः विपक्षाः पूर्वपक्षाः सिद्धान्तमिव युद्धाय तं पर्यवारयन् ॥ ७ ॥

विजयस्य रथे ततो निपेतु-
र्विमतानामिषवः परःसहस्राः ।
जनमेजययागवेदिमध्ये
जगतां भीतिकरा इवाहिसंघाः ॥ ३७ ॥

जम्भद्विषोऽपि तनयो जगदेकवीरो
जन्यं समारभत जृम्भयितुं स्ववीर्यम् ।
प्रत्यर्थिरक्ततटिनीस्नपनैः शराणां
भेत्स्यन्निवाथ पितृकाननवासदोषम् ॥ ३८ ॥

---

मौनं समापयत् गन्धर्वयुद्धानन्तरं युद्धप्रसङ्गाभावेन गाण्डीवज्याशब्दाभावात् जातं मौनम् इदानीं समाप्तमित्यर्थः, ज्याशब्दः कृत इति भावः ॥ ३६ ॥

अथकरतलद्वयमेव मण्डपः तस्मिन्कृतं ताण्डवं वाद्यसहितनृत्यं तेन तस्य गाण्डीवस्य विस्फारेण शब्देन अयं पाण्डवः अर्जुनः इति निश्चित्य लीलया अनायासेन अनिस्तीर्णः विस्तरः विस्तीर्णता यस्य तादृशः संधासिन्धुः प्रतिज्ञासमुद्रो येन सोऽयम् अर्जुनः पुनरपि निर्बन्धम् अस्मदीयपराभवाग्रहम् आगतः प्राप्त इति अधृष्यया बलीयस्या ईर्ष्यया तदुत्कर्षासहनेन रुक्षाः कठिनाः विपक्षाः शत्रवः कुरवः पूर्वपक्षाः आपाततः शास्त्रीयचोद्यानि सिद्धान्तमिव तम् अर्जुनं युद्धाय युद्धं कर्तुं पर्यवारयन् अवेष्टन्त ॥ ७ ॥

ततः परःसहस्राः सहस्रेभ्यः परे अनन्ता इत्यर्थः, जगतां भीतिकराः विमतानां शत्रूणाम् इषवः बाणाः विजयस्य अर्जुनस्य रथे निपेतुः । के कस्मिन्निव, जनमेजयस्य राज्ञः यागवेदेः मध्ये जगतां भीतिकराः अहिसंघाः सर्पसमूहा इव । अनयोपमया बाणानामेव नाशोऽर्जुनस्योपसर्गाभावश्च व्यज्यते ॥ ३७ ॥

अथ जगति एकवीरः जम्भद्विषः इन्द्रस्य तनयः अर्जुनोऽपि स्ववीर्यं स्वपराक्रमं जृम्भयितुं वर्धयितुं जन्यं युद्धं समारभत । किं कुर्वन्निव, शराणां पितृकाननवासदोषं प्रत्यर्थिनां शत्रूणां रक्ततटिन्यां रुधिरनद्यां स्नपनैः भेत्स्यन्निव नाशयिष्यन्निव । अन्योऽपि पदार्थदोषं गङ्गादिनद्यां स्नपनैर्नाशयति ॥ ३८ ॥

---

१ क. गाण्डीवस्य । २ ख. अवस्फा° । ३ क. ख. दुस्तर° । ४ क. ख. निर्बन्धुमा° । ५ क. इत्यधृष्य° । ६ क. महीयः । ७ अत्र गाण्डीवगुणटङ्कारस्य मौनव्रतसमाप्तिरूपेण कथनात्पर्यायोक्तिरलंकारः 'पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम्' इति लक्षणात् । ८ अत्र गाण्डीवटङ्कारेणार्जुनानुमानादनुमानम् । इच्छाहेतुकपरिवारणसमर्थनात्काव्यलिङ्गम् । उपमादयश्च संसृष्टाः ।

चलदश्वरथद्विपोत्थरेणून्
वरणस्रङ्मधुभिः प्रणीय शान्तिम् ।
सुखदृष्टरणा यथा भवेयुः
सुरवामा गगने तथा समीयुः ॥ ३९ ॥

कौन्तेयकर्णद्वितयोपकण्ठ-
मौहूर्तिकावेदितजैत्रयात्रैः ।
आशातशल्यै रुरुधेऽथ भल्लै-
राशा कुबेरस्य च वैरिणां च ॥ ४० ॥

उद्धारसंधिपरिमुक्तिषु मार्गणाना-
माद्ये उभे अपि तदा तिसृषु क्रियासु ।
सायुज्यमापतुरिवान्तिमया समीके
चक्रीकृते धनुषि शक्रसुतेन तेन ॥ ४१ ॥

---

सुरवामाः अप्सरसः चलन्तः गच्छन्तः ये अश्वरथद्विपाः तेभ्यः उत्थितान् रेणून् वरणस्रजां युद्धमृतवीरवरणपुष्पमालानां मधुभिः मकरन्दैः शान्तिं प्रणीय नीत्वा सुखेन दृष्टः रणो याभिस्ताः यथा भवेयुः तथा गगने समीयुः आजग्मुः । यासां वरणस्रङ्मधुभिः पर्जन्योदकैरिव सेनाधूलिः शान्तिं नीता तावत्य आगता इत्यर्थः । असंख्याता आगता इति भावः ॥ ३९ ॥

अथ कौन्तेयस्य अर्जुनस्य यत्कर्णद्वितयं तस्य उपकण्ठ एव समीपभाग एव मौहूर्तिकः ज्योतिर्वित् तेन आवेदिता कथिता जैत्रयात्रा येषां तैः, अन्योऽपि ज्योतिर्विदा कथितसमये शत्रुजयार्थं गच्छति, आशातानि समन्तात् तीक्ष्णानि शल्यानि अयोमयाग्राणि येषां तैः भल्लैः बाणैः कुबेरस्य वैरिणां च आशा क्रमेण उत्तरदिशाजयेच्छा च रुरुधे ॥ ४० ॥

तेन शक्रसुतेन समीके युद्धे धनुषि चक्रीकृते सति अतिजवात् पुनः पुनराकर्णमाकर्षणेन चक्राकारे कृते सति तदा उद्धारः तूणीराभ्यां बहिर्निष्कासनं, संधिः मौर्व्यां लापनं, परिमुक्तिः मोचनं च एतद्रूपासु तिसृषु मार्गणानां बाणानां क्रियासु आद्ये उद्धारसंधिरूपे उभे अपि क्रिये अन्तिमया मुक्तिरूपक्रियया सायुज्यम् ऐक्यम् आपतुरिव । सर्वदा बाणानामुद्धारसंध्यदर्शनपूर्वकमुक्तिदर्शनात् पूर्वक्रिये अन्तिमया क्रियया सायुज्यं प्राप्ते किमिति लोकैरमानीति भावः ॥ ४१ ॥

---

१ क. समेयुः । २ अत्र रणरेणोः वरमाल्यरसक्षपणासंबन्धेऽपि संबन्धोक्तिरूपाया अतिशयोक्तेः अर्जुनहनिष्यमाणवीरभटानामसंख्येयत्वरूपवस्तुव्यञ्जकायाः रसक्षपणयोर्हेतुहेतुमतोरुक्तिरूपस्य हेत्वलंकारस्य च द्वयोरेकवाचकानुप्रवेशसंकरः । ३ अत्र कुबेरदिशः कौरवतृष्णायाश्च श्लेषभित्तिकाभेदाध्यवसितेन तेनौपम्यस्य गम्यत्वात्तुल्ययोगितालंकारः ।

युद्धसीम्नि भुजगर्वविप्रुषा-
मुच्छ्रितान्कटकनिःसृताम्भसः ।
तत्र लक्ष्यमकरोत् स कुञ्जरान्
तस्य तात इव शैलसंचयान् ॥ ४२ ॥
काण्डैरपातयदधः करिमण्डलानां
शुण्डाः प्रचण्डतरदोर्युधि पाण्डुसूनुः ।
निद्रास्यतां निखिलवैरिमहीपतीना-
मुत्पादयन्निव पृथूरुपधानपङ्क्तीः ॥ ४३ ॥
विशालरन्ध्रं विजयास्त्रदत्तं
देहस्य मध्ये दधतो महान्तः ।
स्कन्दस्य शक्त्या क्षतमेखलस्य
क्रौञ्चस्य लीलां करिणो विवव्रुः ॥ ४४ ॥
आधोरणस्य शिरसा पततार्धमार्गे
संधानभाजि दिवमुत्पतिते कबन्धे ।
न्यस्य स्रजं सुरवधूरवबद्धमौना-
त्तस्माद्भयाद्दिवि पलायत दूरमेका ॥ ४५ ॥

---

तत्र तस्यां युद्धसीम्नि सः अर्जुनः उच्छ्रितान् उच्चान् कटकेभ्यः गण्डस्थलेभ्यः तटेभ्यश्च निःसृतं अम्भः दानोदकं जलं च येषां तान् कुञ्जरान् भुजगर्वस्य विप्रुषां लेशानां लक्ष्यम् अकरोत् । कः कानिव, तस्य अर्जुनस्य तातः इन्द्रः शैलसंचयानिव । भुजपराक्रमलेशेन गजान् बिभेदेति भावः ॥ ४२ ॥

प्रचण्डतरौ दोषौ भुजौ यस्य सः पाण्डुसूनुः युधि काण्डैः बाणैः करिमण्डलानां गजसमूहानां शुण्डाः अधः भूतले अपातयत् । किं कुर्वन्निव, निद्रास्यतां प्रस्वापनास्त्रेण निद्रां करिष्यतां निखिलानां वैरिमहीपतीनां पृथूः विपुलाः उपधानपङ्क्तीः उच्छीर्षकपरंपराः उत्पादयन्निव । अन्योऽपि श्रीमतां सुखशयनार्थमुच्छीर्षकानि निर्मिमीते ॥ ४३ ॥

विजयस्य अर्जुनस्य अस्त्रेण दत्तं कृतं विशालं रन्ध्रं छिद्रं देहस्य मध्ये दधतः महान्तः करिणः गजाः स्कन्दस्य शक्त्या क्षता मेखला कटको यस्य तस्य क्रौञ्चस्य एतन्नाम्नः पर्वतस्य लीलां शोभां विवव्रुः वितेनुः । अनेन निदर्शनालंकारेण गजानामत्युच्चत्वमतिविपुलत्वं च व्यज्यते ॥ ४४ ॥

एका सुरवधूः देवाङ्गना पतता आधोरणस्य हस्तिपकस्य शिरसा सह अर्धमार्गे संधानभाजि कबन्धे कस्यचिद्वीरस्य मस्तकरहितशरीरे दिवम् आकाशम् उत्पतिते सति

---

१ क. भृतग°, ख. भुजगर्विणां द्विपानु° । २ क. विप्रुषो मूर्छिता° । ३ क. भिया । ४ अत्रोपमोत्प्रेक्षयोः संसृष्टिः । ५ अत्र अन्यलीलायाः अन्यत्रासंभवेन तत्सदृशलीलाक्षेपादसंभवधर्मसंबन्धनिबन्धनो निदर्शनालंकारः ।

तुङ्गा गजाश्च जवनास्तुरगाश्च वीरा
योधाश्च तेन निहता भुवमाशु जग्मुः।
निद्रास्यतो निबिडमत्र नरेन्द्रसंघात्
प्रागेव सम्यगवकाशजिघृक्षयेव ॥ ४६ ॥
गङ्गां सितां रविसुतामसितां पिशङ्गीं
चक्रे तयोः सहचरीं च पुरा [3]विरिञ्चिः।
शोणा [4]कृता न तटिनीति किलार्जुनेन
बाणालिभिः शतमसृक्सरितां वितेने ॥ ४७ ॥
कर्णे क्वेति गवेषणस्य विषये गान्धारनाथे पुन-
र्निर्गन्तुं [5]कृतदिग्भ्रमे [6]शकलितच्छत्रेऽपि दुर्योधने।
द्रोणेऽपि क्षपितध्वजे कृतधनुर्भङ्गेऽपि तस्यात्मजे
मूर्छाले सरितः सुतेऽपि युधि सा [7]मम्लौ कुरूणां चमूः ॥[8]४८॥

---

तस्मिन्स्रजं वरणमालां न्यस्य अवबद्धमौनात् शिरसि जीवाभावेन धृतमौनात् तस्मात् तादृशपुरुषात् भयाद्धेतोः दिवि आकाशे दूरं पलायत । अत्र कविप्रौढोक्त्याऽद्भुतरसाविर्भावः ॥ ४५ ॥

तेन अर्जुनेन निहताः तुङ्गाः उच्चाः गजाः जवनाः वेगवन्तः तुरगाश्च योधाः वीराश्च तत्र रणाङ्गणे निबिडं निरन्तरं यथा तथा निद्रास्यतः प्रस्वापनास्त्रेण निद्रां करिष्यतः नरेन्द्रसंघात् प्रागेव आदावेव सम्यगवकाशस्य जिघृक्षयेव ग्रहीतुमिच्छयेव आशु शीघ्रं भुवम् आजग्मुः। अन्योऽपि जनसंमर्दे सति समीचीनस्थलालाभशङ्कयाऽऽदौ स्थलं गृह्णाति॥४६॥

विरिञ्चिः ब्रह्मा पुरा सृष्टिसमये गङ्गां सितां शुभ्रां, रविसुतां यमुनाम् असितां कृष्णां, तयोः गङ्गायमुनयोः सहचरीं सखीं सरस्वतीं पिशङ्गीं पिङ्गलां चक्रे। रुचा कान्त्या शोणा रक्ता तटिनी नदी न कृता इति हेतोः अर्जुनेन बाणानाम् आलिभिः पङ्क्तिभिः असृक्सरितां रुधिरनदीनां शतं वितेने किल कृतं किम्। अनयोत्प्रेक्षया असंख्य ातसैन्यं हतमिति व्यज्यते ॥ ४७ ॥

कर्णे क्वास्तीत्युक्त्या गवेषणस्य अन्वेषणस्य विषये सति, पुनः गान्धारनाथे शकुनौ च निर्गन्तुं युद्धात्पलायितुं कृतः स्वीकृतः दिग्भ्रमः दिग्भ्रान्तिर्येन तस्मिन् सति, उत्तराभिमुखं गन्तव्ये दक्षिणाभिमुखं गच्छति सतीत्यर्थः। दुर्योधनेऽपि शकलितच्छत्रे छिन्नच्छत्रे सति, द्रोणेऽपि क्षपितध्वजे छिन्नध्वजे सति, तस्य द्रोणस्य आत्मजे अश्वत्थाम्नि कृतधनुर्भङ्गे सति, सरितः सुते भीष्मेऽपि मूर्छाले प्रहारेण मूर्छिते सति, सा कुरूणां चमूः युधि मम्लौ दीना बभूव ॥ ४८ ॥

---

१ क. शूरा। २ क. गङ्गा सिता रविसुताऽप्यसिता पिशङ्गी चक्रे तयोः सहचरी च पुरा विधात्रा। ३ क. विधात्रा। ४ क. रुचा। ५ क. ख. धृत°। ६ क. विक°, ख. विगलित°। ७ ख. मम्ले। ८ अत्र पलायनाद्यनेकक्रियायौगपद्यात्समुच्चयालंकारः।

वीणामुनीन्द्रो विजयस्य युद्धं
नीरन्ध्रभावेन निरीक्षमाणः।
आनन्दजैरश्रुभिरेव चक्रे
हस्तार्पितैराह्निककृत्यमभ्रे॥ ४९॥
विस्मयार्णवविभावरीविभुं
वीक्ष्य वीक्ष्य विजयस्य विक्रमम्।
उत्तमाङ्गमखिलाप्सरोगणै-
रुर्वशी नभसि साऽप्यकम्पयत्॥ ५०॥
वपुरस्त्रसात्कृतवतां सुभटानां
वरणस्रजे विबुधवारवधूभ्यः।
कुसुमात्यये सति दलान्यपि दत्त्वा
क्षुपतामवाप कुलिशायुधशाखी॥ ५१॥
वाह्नोः प्रवृष्टकुसुमस्य ततो निलिम्पैः
प्रस्वापनास्त्रमहिमातिशयेन तस्य।
निद्रायते स्म निखिला पृतना रिपूणां
युद्धावतीर्णमपनेतुमिव श्रमं स्वम्॥ ५२॥

---

वीणया उपलक्षितः मुनीन्द्रः नारदः विजयस्य अर्जुनस्य युद्धं नीरन्ध्रभावेन एकाग्रवृत्त्या निरीक्षमाणः सन् अभ्रे गगने हस्तार्पितैः हस्ते गृहीतैः आनन्देन जातैः अश्रुभिः नेत्रोदकैरेव आह्निककृत्यं संध्यावन्दनादि कर्म चक्रे। सुरासुराद्यनेकयुद्धदर्शी नारदोऽपि विजययुद्धचमत्कारदर्शनं त्यक्तुम् अशक्नुवन् आनन्दसमुद्रे मग्न इति भावः॥ ४९॥

नभसि विस्मयार्णवस्य विभावरीविभुं पूरजनकं चन्द्रं विजयस्य विक्रमं वीक्ष्य वीक्ष्य अखिलाप्सरोगणैः सह सा अर्जुनेन भग्नमनोरथत्वात् रोषवती उर्वश्यपि उत्तमाङ्गं मस्तकम् अकम्पयत्। मस्तकचालनपूर्वकं पुनः पुनः विजयपराक्रमश्लाघां चक्रे इति भावः॥ ५०॥

कुलिशायुधशाखी कल्पवृक्षः वपुः अस्त्रसात् कृतवतां शस्त्राधीनं कृतवतां—धारातीर्थे मरणं प्राप्नुवतां सुभटानां वरणस्रजे वरणस्रगर्थं कुसुमात्यये सति पुष्पसमाप्तौ सत्यां विबुधानां देवानां वारवधूभ्यः अप्सरोभ्यः दलान्यपि पर्णान्यपि दत्त्वा क्षुपतां ह्रस्वशाखाशिफत्वम् अवाप प्राप। कल्पवृक्षोऽपि पुष्पपत्ररहितत्वं प्रापेत्यर्थः। अनेनासंख्याता भटा हता इति व्यज्यते॥ ५१॥

ततः युद्धानन्तरं निखिला रिपूणां पृतना सेना निलिम्पैः देवैः वाह्नोः प्रवृष्टानि विकीर्णानि कुसुमानि यस्य तस्य अर्जुनस्य प्रस्वापनास्त्रस्य महिम्नः अतिशयेन युद्धे अवतीर्णं

---

१ क. किसलया°। २ अत्रासंबन्धे संबन्धरूपातिशयोक्तिः। ३ अत्र अपिशब्दसूचकताद्दृशप्रद्वपवत्या उर्वश्याऽपि श्लाघने किमुतान्यैरित्यर्थान्तराक्षेपादर्थापत्त्यलंकारः। ४ अत्र कल्पवृक्षस्य स्वल्पशाखित्वासंबन्धेऽपि संबन्धोक्तेरतिशयोक्तिः। तया चार्जुननिहतारिवीराणामसंख्येयत्वप्रतीतेरलंकारेण वस्तुध्वनिः।

ततो [1] बीभत्सुः परिषत्समानीतानिजवधूपरिभवानुरूपफलप्रदित्सयेव सारथिना [3]विद्विषामपहारितविविधपरिधानो गुरुप्रभृतिषु [4] दिवास्वापो मा भूदिति कृपया मन्यमान इव पुनरपि तदस्त्रं क्षणादेव संजहार ॥ ८ ॥

अथ दृशः परिमृज्य कराञ्चलै-
रुणिताः परिमीलनमुद्रया ।
प्रकटितास्यबिलैः पटुजृम्भणात्
प्रबुबुधे कुरुराजचमूचरैः ॥ ५३ ॥

पूर्वप्रयोगमुदिता इव तस्य बाणा
निद्रां द्विषत्सु निखिला ददुरेव दीर्घाम् ।
पश्चात्प्रयुक्तममुनाऽहमितीव रोषात्प्र-
स्वापनं तु वितताार न तादृशीं ताम् ॥ ५४ ॥

स तु वपुरनुशोच्य धार्तराष्ट्रः
समिति विराटसुतापनीतचेलम् ।

---

प्राप्तं स्वं श्रमम् अपनेतुं दूरीकर्तुमिव निद्रायते स्म निद्रां चकार । अन्योऽपि व्यायामश्रम-मपनेतुं निद्राति ॥ ५२ ॥

ततः परिषदि सभायां समानीतायाः निजवध्वाः द्रौपद्याः परिभवानुरूपस्य फलस्य नग्नीभावरूपफलस्य प्रदित्सयेव दातुमिच्छयेव सारथिना उत्तरेण कृत्वा विद्विषां कर्णदु-र्योधनादीनाम् अपहारितानि विविधानि परिधानानि अधोवस्त्राणि येन सः बीभत्सुः अर्जुनः गुरुप्रभृतिषु द्रोणभीष्मादिषु दिवास्वापः—धर्मशास्त्रनिषिद्धत्वात्—दिवानिद्रा मा भूदिति कृपया मन्यमान इव पुनरपि तदस्त्रं क्षणादेव संजहार उपसंहृतवान् ॥ ८ ॥

अथ अस्त्रोपसंहारानन्तरं परिमीलनमुद्रया अरुणिता आरक्तीकृताः दृशः कराञ्चलैः हस्ताग्रैः परिमृज्य परिशोध्य पटुजृम्भणात् महाजृम्भणाद्धेतोः प्रकटितानि आस्यबिलानि यैस्तैः कुरुराजचमूचरैः प्रबुबुधे प्रबुद्धम् ॥ ५३ ॥

निखिलाः तस्य अर्जुनस्य बाणाः पूर्वप्रयोगेण प्रथमप्रयोगेण मुदिताः सन्त इव द्विषत्सु दीर्घामिव निद्रां ददुः । अमुना अर्जुनेन पश्चात् युद्धसमाप्तौ अहं प्रयुक्तम् इति रोषादिव प्रस्वापनम् अस्त्रं तु तादृशीं दीर्घां नाववतार न ददौ । दीर्घनिद्रा मरणम् । शत्रुहिंसां विना विजयप्राप्तिरित्यस्त्रचमत्कारः ॥ ५४ ॥

सः धार्तराष्ट्रः दुर्योधनस्तु समिति युद्धे विराटसुतेन उत्तरेण आनीतानि चेलानि व-

---

१ क. स इत्यधिकम् । २ क. निजेति नास्ति । ३ क. ख. द्विषता° । ४ क. अमीष्वित्यधिकम् । ५ ख. परिजृ° । ६ क. चमूश्चिरात् । ७ अत्रोक्तोत्प्रेक्षा प्रस्वापनास्त्रमहिमातिशयं प्रत्यहेतोरपि अर्जुने रणश्रमशामकस्य सुरतरुकुसुमवर्षस्य हेतुत्वोक्तिरूपप्रौढोक्त्यलंकारेणोज्जीवितेति द्वयोरङ्गाङ्गिभावेन संकरः । ८ उत्प्रेक्षाद्वयस्यात्र संसृष्टिः । ९ स्वभावोक्त्यत्र 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम्' इति लक्षणात् । १० अत्रोत्प्रेक्षाद्वयस्याङ्गाङ्गिभावेन संकरः ।

कुलिशभृदनुजीविदत्तबन्धां
कुशलममन्यत घोषवाटयात्राम् ॥ ५५ ॥
पराञ्चि कर्तुं वदनान्यनीशाः
पश्चाद्विमर्देन नभस्यमर्त्याः ।
निरीक्ष्य नग्नान्नृपतीन् ह्रियार्ता
निमीलनाज्ञं नयनं निनिन्दुः ॥ ५६ ॥
इति परिभवलक्ष्म्या संभृतां भोगमुद्रां
तनुभिरभिदधानाः स्थास्नुभिर्नग्नभावे ।
ध्वजपटशकलाग्रैः क्लृप्तकौपीनकृत्याः
सुबलदुहितृपुत्राः स्वां पुरीं प्रत्यगच्छन् ॥ ५७ ॥

तदनु हरिदङ्गणविशृङ्खलविश्रमितविजयशङ्खरवो निजायुधनिक्षेपर-

---

त्राणि यस्य तद्वपुः अनुशोच्य धिक्कृत्वा कुलिशभृतः इन्द्रस्य अनुजीविभिः किंकरैः रणात् लज्जातिशयजनकत्वेनैतयुद्धापेक्षया घोषयात्रायां बन्धनं वरमित्यमन्यतेति भावः ॥ ५५ ॥

नग्नान् नृपतीन् निरीक्ष्य ह्रिया आर्ताः पीडिताः अमर्त्याः अप्सरसः नभसि पश्चाद्भागे विमर्देन युद्धचमत्कारं द्रष्टुम् आगतानां देवानां वीरवर्णनार्थमागतानामप्सरसां च संमर्देन वदनानि पराञ्चि पश्चात् कर्तुम् अनीशाः असमर्थाः सत्यः निमीलनविषये अज्ञम् असमर्थं नयनं नेत्रं निनिन्दुः । ब्रह्मणा देवजातेर्नेत्रनिमीलनं कृतं स्याच्चेत्तर्हीदानीमस्माभिस्तत्कृतं स्यात्, तन्न कृत्वा व्यर्थमनिमिषत्वं कृतमिति मनस्यानीय निनिन्दुरिति भावः ॥ ५६ ॥

इति उक्तप्रकारेण परिभवलक्ष्म्या पराभवलक्ष्म्या संभृतां संपादितां भोगमुद्राम् उपभोगचिह्नं नग्नभावे स्थास्नुभिः स्थिरतराभिः तनुभिः अभिदधानाः ब्रुवाणाः प्रकटयन्त इत्यर्थः, सुबलदुहितृपुत्राः दुर्योधनादयः ध्वजपटशकलानाम् अग्रैः खण्डैः क्लृप्तानि संपादितानि कौपीनकृत्यानि यैस्तथाभूताः सन्तः स्वां पुरीं प्रति अगच्छन् ॥ ५७ ॥

तदनु सेनागमनानन्तरं हरिदङ्गणेषु दिगन्तेषु विशृङ्खलं यथा तथा विश्रमितः विश्रा-

---

१ अत्रोभयोः घोषवाटयात्रात्वेऽपि अत्र कुशलतररूपानर्थोत्पत्तिवर्णनाद्विषमालंकारः । एवं तत्र बन्धस्य दोषस्यापि गुणत्वेन वर्णनाल्लेशालंकारः ‘लेशः स्याद्दोषगुणयोर्गुणदोषत्ववर्णनम्’ इति लक्षणात् । द्वयोरेकवचनानुप्रवेशसंकरश्च । २ अत्र नग्ननृपावलोकनस्य लज्जां प्रति तस्याश्च वदनपराङ्मुख्योद्यमं प्रति च हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गद्वयमङ्गाङ्गिभावेन संकीर्णम् । एवं पाश्चात्यभागसंमर्दस्य वदनपराङ्मुख्यकरणाशक्तिं प्रति तस्याश्च नेत्रनिमीलनोद्यमं प्रति तन्मीलनराहित्यस्य नेत्रानिन्दनं प्रति च हेतुत्वादुक्तविधमेव काव्यलिङ्गत्रयमङ्गाङ्गिभावेन संकीर्णम् । अत्र च प्राथमिकं विमर्देन पराङ्मुख्यकरणाशक्त्यसंबन्धेऽपि संबन्धोक्तिरूपातिशयोक्त्या सहैकवाचकानुप्रवेशेन संकीर्णम् । त्रयाणामपि संकराणां पुनरङ्गाङ्गिभावेन संकर इति सुधीभिरनुसंधेयम् । ३ अत्र दिगम्बरत्वस्य अर्जुनकृतावमानानुमापकत्वात् अनुमानालंकारः ।

क्षिपु भूतकुटुम्बेषु नवसंमररुधिराञ्जलिपानपरितृप्तिकिलिकिलितमनुभवितुकाम इव पुनरपि पितृवनमेत्य तरुनिहितशस्त्रसंभारः पुरात्समायातेषु गुणेषु आवामेव रणाद्भुतदर्शनं प्रति वञ्चिते इति उपालब्धुमिव भूयोऽपि क्लैब्यसारथ्याभ्यां कृतानुषञ्जनः कुरुकुञ्जरो भूमिञ्जयमेवं जगाद ॥ ९ ॥

कुमार कोशीकुरु केशपाशं
मुखेऽश्रुणो मार्जय पातमार्गम् ।
तूण्या समं दोष्णि निधेहि चापं
राशेरुपर्यास्व रथे पटानाम् ॥ ५८ ॥

बधान धैर्यं वद बन्धुगोष्ठ्या-
मात्मानमेवारिजयस्य हेतुम् ।
मातुः पितुर्वा धुरि मन्त्रिणां वा
मा तत्त्वगन्धं मम सूचयेति ॥ ५९ ॥

---

न्तिं प्राप्तः विजयसूचकः शङ्खरवो यस्य सः, निजायुधान्येव निक्षेपः गुप्तद्रव्यस्थापनं तद्रक्षिषु भूतकुटुम्बेषु पिशाचकुटुम्बेषु नवे नूतने समरे यद्रुधिराञ्जलिपानं तस्य परितृप्त्या किलिकिलितं तृप्तिसूचकं तज्जातीयकिलिकिलेतिशब्दम् अनुभवितुकाम इव श्रोतुकाम इव पुनरपि पितृवनं श्मशानम् उपेत्य तरौ शमीवृक्षे निहितः स्थापितः शस्त्रसंभारो येन सः पुरात् समायातेषु स्वसमागमेन आयातेषु गुणेषु आवामेव रणे यदद्भुतं तस्य दर्शन विषये त्वया प्रतिवञ्चिते इति उपालब्धुमिव तन्निन्दां कर्तुमिव भूयोऽपि क्लैब्यसारथ्याभ्यां द्वाभ्यां गुणाभ्यां कृतम् अनुपञ्जनं स्वीकारो यस्य सः कुरुकुञ्जरः अर्जुनः भूमिञ्जयम् एतन्नामकमुत्तरम् एवं वक्ष्यमाणं जगाद । शमीतरौ आयुधानि स्थापयित्वा गृहीतपूर्ववेषोऽर्जुनः उत्तरमुवाचेत्यर्थः ॥ ९ ॥

द्वाभ्यां तद्वचनमाह—**कुमारेति** । 'हे कुमार राजपुत्र ! केशपाशं केशसमूहं कोशीकुरु बधानेत्यर्थः । मुखे अश्रुणः रोदनबाष्पस्य पातमार्गं पतनचिह्नं मार्जय हस्तेन परिमार्जय । तूण्या समं तूणीरेण सह चापं दोष्णि भुजमूले निधेहि । रथे स्वकीयरथे पटानां शत्रुभ्य आनीतवस्त्राणां राशेः उपरि आस्व निषीद ॥ ५८ ॥

धैर्यं बधान धारय । बन्धुगोष्ठयाम् आप्तसभायाम् आत्मानमेव अरिजयस्य शत्रुपराभवस्य हेतुं कर्तारं वद । मातुः पितुर्वा मन्त्रिणां वा धुरि अग्रभागे मम तत्त्वगन्धम् अर्जुनभावस्य लेशं मा सूचय । इति बृहन्नलया सारथ्यं कृतं मया शत्रूणां युद्धे पराभवः कृत इति धैर्येण ब्रूहीत्युवाचेत्यर्थः' ॥ ५९ ॥

---

१ ख. कुटुम्बकेषु । २ क. समरेति नास्ति । ३ क. परीति नास्ति । ४ क. सहाया° । ५ क. ख तत्रेत्यधिकम् । ६ क. कृतसांनिध्याभ्यां क्लैब्यसारथ्याभ्यां भूयः कृता° । ७ उत्प्रेक्षाद्वयस्यात्र संसृष्टिः ।

अथ तथेत्यभ्युपगम्य क्षतपङ्कारुणितनेमिरेखैर्द्विषदौत्पातिकैः कालचक्रै-रिव परिभ्रमद्भिश्चक्रैः संक्रीडता शताङ्गेन परिगच्छन्नग्रेसरगोघटाखुरपु-टकुट्टनत्रुटितधरणीतलोच्चलितरजोभाराक्रमणविनम्रीकृतपक्ष्मणाऽपि कु-रुभटजैत्रोऽयमिति विस्मयबलविस्तारितेन चक्षुषा बृहन्नलामप्यनादृत्य मुहुर्मुहुरापिबद्भिः पौरैरनुगम्यमानोऽयमुत्तरो नलकूवरोऽलकामिव स्वां पुरीं प्रविश्य परस्परोपमर्दनद्विगुणितवन्दिवादित्रघोषेण, महता राज-मार्गेण [६] पितुः सभामभिजगाम ॥ १० ॥

तान्येव पुष्पाणि त एव धूपास्ते केतवस्ते मणितोरणाङ्काः ।
पुत्रस्य तस्यापि पुरोपचारा बभूवुरग्रे जयिनः पितुर्ये ॥ ६० ॥
तदाऽवनीन्द्रः प्रणतं कुमारमस्रैर्द्वयैरार्द्रतनुत्रमाजौ ।
दोर्भ्यां द्विषद्बन्धनखेदभाग्भ्यामपि प्रमोदाद्दृढमालिलिङ्ग ॥ ६१ ॥

---

अथ तथेत्युक्त्या उपगम्य तद्वचनं स्वीकृत्य क्षतजपङ्केन रुधिरकर्दमेन अरुणिताः नेमि-रेखाः येषां तैः अत एव द्विषतां शत्रूणाम् औत्पातिकैः नाशसूचकोत्पातसंबन्धिभिः अ-लातचक्रैरिव ज्वलत्काष्ठचक्रैरिव परिभ्रमद्भिः चक्रैः संक्रीडता कूजता शताङ्गेन रथेन पथि गच्छन् अग्रेसरायाः गोघटायाः गवां संहतेः खुरपुटानां कुट्टनैः आघातैः त्रुटितात् क्षता-त् धरणीतलात् उच्चलितानाम् उद्गतानां रजसां भारेण आक्रमणात् विनम्रीकृते पक्ष्मणी यस्य तेनापि कुरुभटानां जैत्रः जेता अयमिति विस्मयबलेन विस्तारितेन चक्षुषा बृहन्न-लामपि याथातथ्येन कुरुभटजैत्रीं तामपि अनादृत्य मुहुर्मुहुः आपिबद्भिः सादरमवलोक-मानैः पौरैः अभिगम्यमानः तत्र तत्र प्रत्युद्गम्यमानः अयम् उत्तरः नलकूबरः एतन्नामकः कुबेरपुत्रः अलकाम् एतन्नाम्नीं स्वनगरीमिव स्वां पुरीं प्रविश्य परस्परोपमर्दनार्थम् अन्यो-न्यजयार्थं द्विगुणितः वन्दिनां वादित्राणां च घोषो यस्मिंस्तेन महता राजमार्गेण पितुः विराटस्य सभाम् अभिजगाम ॥ १० ॥

अग्रे आदौ जयिनः पितुः पित्रर्थमित्यर्थः, पुरोपचाराः नगरमण्डनार्थं संपादिताः पुष्पधूपादयः बभूवुः, तान्येव पुष्पाणि ते एव धूपाः ते एव केतवः ध्वजाः ते एव मणि-तोरणाङ्काः मणिमयद्वारोपरितोरणचिह्नानि तस्य विराटस्य पुत्रस्यापि बभूवुः । दक्षिणगो-ग्रहणे सुशर्मजेतुः पितुः कृते ये प्रातःकाले कृताः पुरोपचाराः त एवोत्तरगोग्रहणे कुरून् जित्वा मध्याह्ने आगतस्य पुत्रस्यापि बभूवुः । न तु नूतनाः कृता इत्यर्थः ॥ ६० ॥

तत्र सभायाम् अवनीन्द्रः विराटः आजौ युद्धे द्वयैः द्विविधैः अस्रैः रोदनाश्रुभिः रुधि-रैश्च आर्द्रं तनुत्रं कवचं यस्य तं प्रणतं नमस्कुर्वाणं कुमारं पुत्रं द्विषद्बन्धनेन सुशर्मकृतब-न्धनेन यो खेदः दुःखं तत् भजतः अनुभवतः तथाविधाभ्यामपि दोर्भ्यां भुजाभ्यां प्रमो-दात् हर्षात् दृढं यथा तथा आलिलिङ्ग ॥ ६१ ॥

---

१ क. 'कालातच' । २ क. पथि ग' । ३ क. घोटकखु' । ४ ख. 'भूतप' । ५ क. कुल' । ६ क. उपलक्षितः इत्यधिकम् । ७ क. तत्राव' ।

पार्थोऽप्युपानीय रथस्य गर्भात्पार्श्वस्थितायै पितुरुत्तरायै ।
व्यादत्त पट्टांशुकमात्मसूनोः पाणिग्रहार्थं किल मन्त्रवासः ॥ ६२ ॥

आचेटमन्यमखिलं पटमासुदेष्ण-
मन्तःपुराय स विभज्य ददौ कुमारः ।
सैरन्ध्रये न तु मलीमसवाससेऽपि
संचिन्त्य तां बहुपटप्रभवावलग्नाम् ॥ ६३ ॥

विनाऽर्जुनं पाण्डुसुतान्समाजे विस्मित्य विस्मित्य विलोकमानम् ।
जिघ्रन् विराटश्चिकुरेषु सूनुं जगाद विन्यस्य निजासनार्धे ॥ ६४ ॥

निपात्य पार्थान्कान्तारे निःसपत्नत्वमीयुषाम् ।
कण्ठे गल्लूयसे वत्स कौरवाणां त्वमेककः ॥ ६५ ॥

नव्यं गुरुं भुवि न मार्गितुमुत्तरायाः
संरक्ष्य सूतमपि तादृशि संप्रहारे ।
जन्मर्क्षजीवदिनयोगफलं च दातुं
कन्यासु वत्स कथमेत्य कुरून् व्यजेष्ठाः ॥ ६६ ॥

---

पार्थोऽपि अर्जुनोऽपि रथस्य गर्भात् मध्यात् पट्टांशुकं कौशेयं वस्त्रम् उपानीय पितुः पार्श्वस्थितायै उत्तरायै व्यादत्त दत्तवान् । अंशुकमुत्प्रेक्षते, आत्मसूनोः अभिमन्योः पाणिग्रहार्थं विवाहे कन्यां निश्चेतुं मन्त्रवासः किल वाग्दानसमये दातव्यं मन्त्रसहितवस्त्रमिव ॥ ६२ ॥

कुमारः अन्यम् अवशिष्टम् अखिलं पटम् आसुदेष्णम् आचेटं सुदेष्णामारभ्य दासपर्यन्तमित्यर्थः, अन्तःपुराय अन्तःपुरवासिजनाय विभज्य यथायोग्यं विभागं कृत्वा ददौ । मलीमसं मलिनं वासो यस्यास्तस्यैअपि सैरन्ध्रये न ददौ । किं कृत्वा, तां सैरन्ध्रिं बहूनां पटानां प्रभवः उत्पत्तिस्थानम् अवलग्नं मध्यभागो यस्यास्तथाविधां संचिन्त्य ज्ञात्वा अनेकदिव्यपटप्रसवित्र्यै एतत्पटप्रदानमयोग्यमिति ज्ञात्वा न ददावित्यर्थः ॥ ६३ ॥

विराटः समाजे सभायाम् अर्जुनं विना पाण्डुसुतान् धर्मादीन् चतुरः विस्मित्य विस्मित्य महाप्रतापिनोऽपि दास्येनेतरवत् स्थिता इति विस्मयं कृत्वा कृत्वा विलोकमानं पश्यन्तं सूनुं पुत्रं निजासनस्य अर्धे विन्यस्य गृहीत्वा चिकुरेषु केशेषु जिघ्रन् सन् जगाद ॥ ६४ ॥

'हे वत्स ! त्वम् एककः कान्तारे दुर्गमारण्ये पार्थान् निपात्य निक्षिप्य निःसपत्नत्वं शत्रुरहितत्वम् ईयुषां प्राप्नुवतां कुरूणां कण्ठे गल्लूयसे गण्डविलरोधकमांसगोलरोगवत् आचरसि । निरोगिणः कस्यचित्पुरुषस्य कण्ठविलरोधकमहारोगो मांसपिण्ड उद्भवति तद्वत् त्वं कुरूणामार्तिदो जात इति भावः ॥ ६५ ॥

वत्स ! उत्तरायाः नव्यं नूतनं गुरुं भुवि न मार्गितुं नान्वेषितुं तादृशे संप्रहारे युद्धे

---

१ क. प्रादत्त । २ क. गण्डूयसे । ३ अत्र बहुपटोत्पादकत्वेन द्रौपदीमध्यचिन्तनस्य विशेषणगत्या तस्यै वस्त्रदानप्रतिषेधहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । ४ व्यतिरेकालंकारोऽत्र व्यङ्ग्यः ।

इति प्रमोदचञ्चलेन पाणिना परामृश्य चरमाङ्गं पुनः पुनरनुयुञ्जानाय तताय सौदेष्णेयोऽपि त्रपाप्रवाहाभिमुखमवस्थातुमपारयन्निव विवलितकन्धरो गिरमेवं विज्ञापयामास ॥ ११ ॥

रोदःप्रसारि ध्वनितं मया चक्रे धुरि द्विषाम् ।
यावान्मे वेगसन्नाहस्तावांस्तत्र प्रदर्शितः ॥ ६७ ॥
अहमेको रणे तस्मिन्नपरैरननुष्ठिताम् ।
रथिसारथिपत्तित्वे रचयामि स्म कर्तृताम् ॥ ६८ ॥

अये देव किं बहुना—

अपार्थं कर्म मे नासीदाहवे यदरातिषु ।
पुरो विजयमादाय पुनरागामिमां पुरीम् ॥ ६९ ॥

---

सूतं सारथिमपि संरक्ष्य कन्यासु जन्मर्क्षजीवदिनयोः जन्मर्क्षगुरुवारयोः योगस्य मेलनस्य फलं ज्योतिःशास्त्रोक्तवस्त्रलाभरूपं च दातुं कुरून् एत्य संगम्य कथं केन प्रकारेण व्यजयेथाः विजितवानसि । तस्मिन् युद्धे बृहन्नलारूपसारथे रक्षणं त्वया न कृतं स्याचेत्तर्हीदानीमुत्तरायाः अन्यस्य गुरोरन्वेषणमस्माकं कर्तव्यं स्यात्, किंच कन्याप्रार्थितवस्त्रदानार्थं कुरून् कथं जितवानसीत्यर्थः ॥ ६६ ॥

इति प्रमोदात् हर्षात् चञ्चलेन पाणिना चरमाङ्गं पृष्ठं परामृश्य स्पृष्ट्वा पुनः पुनः अनुयुञ्जानाय पृच्छते ताताय विराटाय सौदेष्णेयोऽपि उत्तरोऽपि त्रपाप्रवाहस्य लज्जाप्रवाहस्य अभिमुखम् अवस्थातुम् अपारयन्निव अशक्नुवन्निव विवलितकन्धरः तिर्यक्कृतग्रीवः सन् एवं वक्ष्यमाणां गिरं विज्ञापयामास । कुरूणां जेत्री बृहन्नला तया मद्रक्षणं कृतं मया तु किमपि न कृतं तत्र तातस्य विपरीतवादो लज्जाहेतुरिति भावः ॥ ११ ॥

'मया द्विषां धुरि पुरोभागे रोदसोः द्यावापृथिव्योः प्रसारि प्रसारणशीलं ध्वनितं सिंहनादः, अथ च रोदसा रोदनेन प्रसारि ध्वनितम् आक्रन्दः चक्रे । यावान्वेगेन सन्नाहः युद्धे सन्नद्धता, अथ च पलायनार्थं वेगस्य सन्नाहः तावान् तत्र शत्रोरग्रे दर्शितः ॥६७॥

एकः अहं तस्मिन् रणे अपरैः अन्यैः अननुष्ठिताम् अनाचरितां रथिसारथिपत्तित्वे कर्तृतां रचयामि स्म कृतवानस्मि । प्रथमं पुरात् निर्गमनसमये रथित्वं मया कृतं, ततो युद्धसमये सारथित्वं कृतं, ततः प्राक् शत्रुसेनादर्शनेन भयात्पलायनसमये पत्तित्वं च कृतमित्यर्थः ॥ ६८ ॥

हे देव राजन्! बहुना उक्तेन किं प्रयोजनम् । आहवे युद्धे अरातिषु शत्रुषु यत् मे कर्म युद्धादि तत् अपार्थं व्यर्थं च पार्थरहितं नासीत् । पुरः युद्धान्तसमये विजयं शत्रुजयम् अथ च पुरः रथाग्रे विजयम् अर्जुनम् आदाय पुनः इमां पुरीम् आगाम् आगमम्'॥६९॥

---

१ ख. विनम्रीभूतक' । २ क. ख. अये इति नास्ति । ३ क. ख. आधाय । ४ अत्र गुरुशोकवारणस्य सूतरक्षणेन नूतनवस्त्रदानस्य कौरवजयेन सह क्रमेणान्वयाद्यथासंख्यालंकारः । ५ अत्र वाच्यकक्षायामनेकसाध्ये कर्मत्रये एकस्य प्रवृत्त्या परानुष्ठितत्वसमर्थनात्काव्यलिङ्गम् ।

इति तादृशीं तस्य वचनचातुरीमाकर्ण्य दुरोदरप्रहारवेदनामप्यविगणय्य तरलितेन शिरसा श्लाघमाने यतीन्द्रे वासरविरामशंसिनं यामशङ्खरवमाकर्ण्य यथोचितं सभास्तारान् विसृज्य मेदिनीपतिर्मोदेन सुदेष्णाप्रासादमाससाद ॥ १२ ॥

सुतावलोकेन नरेन्द्रसुभ्रु-
श्च्युताखिलाश्रुष्वपि सोदरात्ययात् ।
विलोचनाङ्गेष्वतिवृष्टिसंपदे
विभाण्डकापत्यविजृम्भणायितम् ॥ ७० ॥

अन्येद्युरात्मजमुखादमीषां याथात्म्यमवगम्य चकितचकितं कुटुम्बेन सह सचिवान्पुरस्कृत्य सभामागतो विराटो नामान्तरसंनिधानादेव हायनमेकैकमनुसर्पद्भिः स्वैः स्वैर्वेषैः प्रत्यासन्नेन सोदर्यजनेन समुपास्यमानस्य युधिष्ठिरस्य चरणनलिनयोः पलितंभावुकेन मौलिना मरालयुवकेलिमुल्लयाञ्चकार ॥ १३ ॥

---

यतीन्द्रे कङ्के युधिष्ठिरे इति तादृशीं द्व्यर्थां वचनचातुरीं भाषणकौशलम् आकर्ण्य दुरोदरं तदानीं प्रवृत्तद्यूते प्रहारस्य पाशकप्रहारस्य वेदनामपि अविगणय्य अगणयित्वा तरलितेन चञ्चलितेन शिरसा श्लाघमाने सति, मेदिनीपतिः विराटः वासरविरामशंसिनं सूर्यास्तसूचकं यामशङ्खरवं प्रहरान्तसूचकं शङ्खशब्दम् आकर्ण्य यथोचितं यथायोग्यं सभास्तारान् सामाजिकान् विसृज्य गमने आज्ञां दत्त्वा सुदेष्णाप्रासादम् आससाद प्राप । नरेन्द्रे युधिष्ठिरेण सह द्यूतक्रीडां कुर्वति आगतं विजयिनं पुत्रमुत्तरम् मुहुर्मुहुः श्लाघमाने सति बृहन्नलायाः साहाय्ये सति किमपि नाश्चर्यमिति युधिष्ठिरः पुनः पुनः जगाद । तदानीं क्रोधान्नरेन्द्रेण क्लीबसाहाय्यं कुरुजये अकिंचित्करमित्युक्त्वा युधिष्ठिरभालोपरि दुरोदरपाशप्रहारः कृतः । तेन तद्भालाद्रुधिरं सुस्राव ' इति भारती कथात्रानुसंधेया ॥ १२ ॥

सुतावलोकेन कर्त्रा नरेन्द्रसुभ्रुवः सुदेष्णायाः सोदरात्ययात् भ्रातृकीचकमरणात् च्युतानि गलितानि अखिलानि अश्रूणि येभ्यस्तेष्वपि विलोचनाङ्गेषु नेत्रात्मकावयवेषु नेत्ररूपाङ्गदेशेषु च अतिवृष्टेः संपदे संपत्त्यै विभाण्डकापत्यविजृम्भणायितम् ऋष्यशृङ्गवदाचरितम् । यथा पुराऽङ्गदेशेषु अवृष्टौ सत्याम् ऋष्यशृङ्गऋषेरागमनेनातिवृष्टिरासीत् , तथा पुत्रविलोकनेन सुदेष्णानेत्रयोः आनन्दाश्रूणामतिवृष्टिरासीदित्यर्थः ॥ ७० ॥

अन्येद्युः अन्यस्मिन् दिवसे आत्मजस्य उत्तरस्य मुखात् अमीषां कङ्कबल्लवादीनां याथात्म्यस्य स्वरूपं पाण्डवत्वं चावगम्य ज्ञात्वा चकितचकितं भीतभीतं यथा तथा कुटुम्बेन

---

१ क. ख. निशम्य । २ क. विहारेत्यधिकम् । ३ क. श्लाघयमाने । ४ क. ख. याथार्थ्यं । ५ क. ख. चकितः । ६ क. प्रकृतिमापन्नेन । ७ अत्रानन्दबाष्पवृष्टिसुतावलोकनयोः कार्यकारणयोरुक्तेर्हेतुदलंकारः [illegible]

तदानुनोद स्मितपाण्डुरिम्णा
तपःसुतोऽक्षक्षतिहेतुमुग्रम् ।
महेन्द्रसूनोर्दृशि शोणिमानं
मात्स्यस्य चित्तेऽपि च नीलिमानम् ॥ ७१ ॥

मात्स्यस्ततः प्रमुदितो महितेऽह्नि कन्यां
शौरौ समेयुषि सहाखिलबन्धुवर्गैः ।
मृद्वीं शिरीषकुसुमादपि पार्थसूनोः
सीमाशिलामतनुत प्रथमाश्रमस्य ॥ ७२ ॥

---

स्त्रीपुत्रादिना सह सचिवान् पुरस्कृत्य सभाम् आगतः विराटः नामान्तराणां कङ्कवल्लवादीनां सन्निधानात् सान्निध्यादिव एकैकं हायनं संवत्सरम् अपसर्पद्भिः दूरं गच्छद्भिः स्वैः स्वैः वेषैः सह प्रत्यासन्नेन समीपमागतेन सोदर्यजनेन बन्धुजनेन समुपास्यमानस्य सेव्यमानस्य युधिष्ठिरस्य चरणनलिनयोः पलितम्भावुकेन जरया शुक्लीभूतेन मौलिना मस्तकेन मरालयूनः तरुणहंसस्य केलिं लीलाम् उल्लयाञ्चकार प्रकटयामास । यथा हंसः कमलवने शोभते तथा नतिसमये युधिष्ठिरचरणकमलयोः विराटस्य जरया शुभ्रं मस्तकं शुशुभे इत्यर्थः ॥ १३ ॥

तदा नतिसमये तपसः सुतः धर्मराजः स्मितस्य ईषद्धास्यस्य पाण्डुरिम्णा शुभ्रतया अक्षस्य पाशस्य क्षतिः व्रणः हेतुः कारणं यस्य तम् उग्रं भयङ्करं महेन्द्रसूनोः अर्जुनस्य दृशि नेत्रे शोणिमानं क्रोधजन्यरक्तत्वं मात्स्यस्य विराटस्य चित्ते नीलिमानं महात्मनां पाण्डवानां सेवकतया स्वगृहे स्थापनेन कालुष्यं च नुनोद दूरीचकार । शुभ्रगुणाधिक्येन अन्येषां रक्तत्वादिगुणानामाच्छादनं भवतीति प्रसिद्धम् । एवं च धर्मराजस्य स्मितसूचितक्रोधविकाराभावेनार्जुनस्याक्षप्रहारजन्यक्रोधस्य विराटस्य दास्यग्रहणजन्यलज्जाहेतुकचित्तोद्विग्नतायाश्च निराकरणं जातमिति भावः ॥ ७१ ॥

ततः प्रमुदितः मात्स्यः विराटः शौरौ श्रीकृष्णे बन्धुवर्गैः सह समुपेयुषि प्राप्तवति सति महिते शुभगुणविशिष्टे अह्नि शिरीषकुसुमादपि मृद्वीं कन्याम् उत्तरां पार्थसूनोः अभिमन्योः प्रथमाश्रमस्य ब्रह्मचारिताश्रमस्य सीमाशिलां सीमान्तसूचकपाषाणम् अतनुत चकार । कन्यां दत्त्वाऽभिमन्युं गार्हस्थ्याश्रमवन्तं चकारेत्यर्थः ॥ ७२ ॥

---

१ अत्रान्यलीलाया अन्यत्रासंभवेन तत्सदृशलीलाक्षेपान्निदर्शनालंकारः । स च चरणनलिनयोरिति रूपकोज्जीवित इति द्वयोरङ्गाङ्गिभावेन संकरः । स चोत्प्रेक्षया संसृष्टः । २ अत्रार्जुनविराटाभ्यां धर्मराजस्मितनैर्मल्येन तदन्तःप्रसादानुमानादनुमानालंकारः । धर्मराजस्मितधावल्यव्याप्त्या अर्जुनलोचनारुण्यविराटमानसमालिन्यत्यागपूर्वकं वैशद्यप्राप्तिरूपतद्गुणालंकारद्वयेनाङ्गाङ्गिभावसंकीर्णेन प्रतीयत इत्यलंकारेणालंकारध्वनिः । एवममर्षत्यागशान्त्योरर्जुनविराटगतयोरसंलक्ष्यक्रमव्यङ्ग्ययोरङ्गाङ्गिभावेन संकरश्च । अस्य चोक्तव्यङ्ग्यानुमानालंकारसापेक्षत्वात् द्वयोः संलक्ष्यासंलक्ष्यक्रमव्यङ्ग्ययोरङ्गाङ्गिभावेन संकरश्च । ३ अत्र शिरीषकुसुमसुकुमार्याः परुषसीमाशिलात्मवर्णनाद्विरूपघटनात्मको विषमभेदः । एवं पत्नीत्वस्य व्यङ्ग्यस्य ब्रह्मचर्यसीमाशिलात्वेन भङ्ग्यन्तरेण कथनात्पर्यायोक्तिः । द्वयोश्चैकवाचकानुप्रवेशसंकरः ।

तथोपचारं विदधे सुदेष्णाजानिः स पार्थेषु समाधवेषु ।
तमेव गान्धारपतिं यथा ते जानीयुरत्यन्तकृतोपकारम् ॥ ७३ ॥
अथोल्लास्य कुरूनेतान् हरिर्मात्स्यपुराद्ययौ ।
मन्दारप्रमुखान्वृक्षान् वसन्त इव नन्दनात् ॥ ७४ ॥

इत्यनन्तभट्टकविकुञ्जरकृतौ श्रीमति चम्पूभारते सप्तमः स्तबकः ।

---

## ८ अष्टमः स्तबकः ।

तावत्पाण्डुसुतेन कौतुकवता कर्तुं प्रकोष्ठाङ्गणे
ज्यामेकां युधि नर्तकीं भुजभुवि स्थास्नुं चिरस्यापराम् ।
आहूताः क्षितिपा विराटनगरीं सैन्यद्विपैरुन्मदैः
प्रावृड्वासरसंचया इव घनैः प्रापुर्महाद्रेस्तटीम् ॥ १ ॥

---

सः सुदेष्णाजानिः विराटः समाधवेषु कृष्णसहितेषु पार्थेषु तथा तेन प्रकारेण उपचारं सत्कारं विदधे चक्रे, यथा ते सकृष्णाः पार्थाः तमेव राज्यापहरणेनापकारिणमेव गान्धारपतिं शकुनिम् अत्यन्तः कृतः उपकारो येन तथाभूतं जानीयुः । शकुनिना राज्यापहरणपूर्वकारण्यवासोऽस्माकं दत्तोऽत एतदुपचारा अस्माभिर्लब्धा इति मन्येरन्नित्यर्थः ॥७३॥

अभिमन्युविवाहानन्तरं हरिः एतान् कुरून् पार्थान् उल्लास्य आनन्दयित्वा मात्स्यपुरात् विराटनगरात् ययौ द्वारकां प्रति जगाम । क इव, वसन्त इव । यथा वसन्तः मन्दारप्रमुखान् कल्पान् पञ्च कल्पवृक्षान् उल्लास्य विकसितान् कृत्वा नन्दनवनात् गच्छति तद्वत् ॥ ७४ ॥

इति श्रीखण्डोपाह्वबाजीरागात्मजनारायणसूरिविरचितायां
श्रीमच्चम्पूभारतटीकायां सप्तमः स्तबकः ।

---

यावदभिमन्युविवाहोत्सवो जातस्तावत्कौतुकवता साश्चर्योत्साहवता पाण्डुसुतेन युधिष्ठिरेण युधि युद्धे प्रकोष्ठाङ्गणे मणिबन्धकूर्परभागे एकां ज्यां मौर्वीं नर्तकीं कर्तुम् अपरां ज्यां भूमिं भुजभुवि भुजाङ्गणे चिरस्य बहुकालं स्थास्नुं स्थिरतरां कर्तुं युद्धकर्मणा भूमिं स्वकीयां कृत्वा भुजबलेन तद्रक्षणं कर्तुमित्यर्थः, आहूताः क्षितिपाः राजानः उन्मदैः मदस्राविभिः द्विपैः विराटनगरीं प्रापुः । के कैः कामिव, प्रावृड्वासरसंचयाः वर्षाकालिकदिनसमुदायाः घनैः सह महाद्रेः तटीमिव ॥ १ ॥

---

१ क. ख. कल्पान् । २ क. °ष्ठाङ्कणे । ३ अत्र शकुन्यपकारस्य गुणत्वेन वर्णनाल्लेशालंकारः 'लेशः स्याद्दोषगुणयोर्गुणदोषत्ववर्णनम्' इतिलक्षणात् । एवं विराटेनोपकृतानां शकुनावुपकारसंभावनादसङ्गत्यलंकारः 'विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसंगतिः' इति लक्षणात् । द्वयोश्च पूर्ववत्संकरः । ४ पूर्णोपमाऽत्र ।

सेनानां यावतीः पार्थो युद्धायाक्षौहिणीर्दधौ ।
धार्तराष्ट्रश्चतसृभिस्तावतीरधिकाः पुनः ॥ २ ॥
उक्ताध्ववृत्तान्तमुवाच शल्यं पार्थस्ततो भानुसुतस्य युद्धे ।
आक्षेपवाचा हृदयं वितक्षन्नन्वर्थतामाचर मातुलेति ॥ ३ ॥

अथ भागिनेयेषु वत्सलतया सत्यसंगरस्तथेति प्रतिश्रुत्य ॥ १ ॥–

भद्राय तव मां विद्धि निद्रामुचमिति ब्रुवन् ।
मद्राधिपो ययौ पार्थात् स द्राग्दुर्योधनान्तिकम् ॥ ४ ॥

ततः—

साहाय्य युद्धे सरसीरुहाक्षं वरीतुकामो बलवैरिसूनुः ।
अजातशत्रोरवतंसयन् गां तुङ्गध्वजां द्वारवतीमयासीत् ॥ ५ ॥

तत्र चिरदृष्टस्य कुञ्जरकुमारकोमलचङ्क्रमविलासस्य तस्य त्रिलोकनाथ वीथीषु वीथीषु जनाः संघीबभूवुः ॥ २ ॥

---

पार्थः युद्धाय सेनानां यावतीः यावत्संख्याकाः अक्षौहिणीः दधौ बभार, धार्तराष्ट्रः दुर्योधनश्च पुनः चतसृभिः अधिकाः तावतीः तावत्संख्याकाः दधौ । युधिष्ठिरस्य मित्रनृपसेनानां सप्ताक्षौहिण्यो मिलिताः दुर्योधनस्य तु एकादशाक्षौहिण्यो मिलिता इत्यर्थः॥२॥

ततः पार्थः धर्मराजः उक्तः अध्ववृत्तान्तः ‘ हे दुर्योधन ते सहायं करिष्यामि ’ इति वाग्दानरूपमार्गवृत्तान्तो येन तं शल्यं प्रति वक्ष्यमाणमुवाच । इतीति किं, ‘ हे मातुल ! युद्धे भानुसुतस्य कर्णस्य हृदयम् अन्तःकरणम् उरस्थलं च आक्षेपवाचा धिक्कारवाण्या वितक्षन् व्यथयन् भिन्दन् च सन् अन्वर्थतां शल्यनामार्थयुक्तत्वम् आचर संपादय ’ इति । कुन्तबाणादीनां लोहमयाग्रं शल्यपदार्थः । धर्मराजेन आहूतं मात्रा बन्धुं स्वमातुलं शल्यं मार्गे स्वानुकूल्यार्थं गुप्तवृत्त्या कृतातिथ्यात्संतुष्टं प्रति दुर्योधनः साहाय्यं ययाचे । तेन करिष्यामीति वाग्दानं कृतम्, इत्यध्ववृत्तान्तः ॥ ३ ॥

अथ भागिनेयेषु भगिनीपुत्रेषु पाण्डवेषु वत्सलतया स्नेहेन सत्यसंगरः सत्यप्रतिज्ञः शल्यः तथेति करिष्यामीति प्रतिश्रुत्य प्रतिज्ञाय ॥ १ ॥–

सः मद्राधिपः शल्यः ‘ हे युधिष्ठिर ! मां तव भद्राय कल्याणं कर्तुं निद्रामुचं जागरूकं विद्धि जानीहि’ इति ब्रुवन् सन्–द्राक् द्रुतम् पार्थात् सकाशात् दुर्योधनान्तिके ययौ जगाम ॥ ४ ॥

युद्धे साह्याय साह्यं कर्तुं सरसीरुहाक्षं श्रीकृष्णं वरीतुं कामो यस्य सः बलवैरिसूनुः अर्जुनः अजातशत्रोः युधिष्ठिरस्य गाम् आज्ञावचनम् अवतंसयन् मूर्ध्ना गृह्णन् बह्वादरं कुर्वन्नित्यर्थः, तुङ्गध्वजाम् उच्चध्वजां द्वारवतीं द्वारकाम् अयासीत् अगमत् ॥ ५ ॥

तत्र द्वारकायां चिरदृष्टस्य बहुकालेन दृष्टस्य कुञ्जरकुमारस्य कलभस्येव कोमलः

---

१ ख. भागिनेयवरस° । २ क. तदनन्तरम् । ३ क. ख. कामस्य बलारि° । ४ क. कुरुकुञ्जरस्येत्यधिकम् । ५ क. वीप्साभावः ।

हेतुं सुभद्राहरणे तदीयां
यतित्वबुद्धिं हृदि कुर्वतीनाम् ।
गवाक्षमार्गैः कृतवीक्षणानां
स्त्रीणां मुखेन्दोः स्मितचन्द्रिकाऽभूत् ॥ ६ ॥
दौवारिकैस्तत्र स दत्तमार्गो
निद्रायमाणस्य निकेतमध्ये ।
शौरेरुपायाच्चरणोपधानं
तद्गर्भसिन्धुच्युतकूर्मशोभम् ॥ ७ ॥
यस्याधिमौलिसविधे प्रथमं समेत्य
तिष्ठन्कुरूद्वहसुतो युधि साह्यमर्थी ।
रेजे परीक्षितुमिवोत्सुकतां दधान-
स्तत्कुन्तले निजमनस्यपि वक्रिमाणम् ॥ ८ ॥
निमीलनालिङ्गितनेत्रयुग्मो
निष्पन्ददेहो नितरां बभौ यः ।

---

सुन्दरः चंक्रमविलासो गमनविलासो यस्य तस्य अर्जुनस्य अवलोकनाय वीथीषु वीथीषु रथ्यासु रथ्यासु जनः संघीबभूव समुदितो बभूव ॥ २ ॥

सुभद्रायाः हरणे हेतुं तदीयाम् अर्जुनीयां यतित्वबुद्धिं यतित्वं संपाद्य तस्याः हरणं कर्तव्यमिति बुद्धिं हृदि अन्तःकरणे कुर्वतीनां गवाक्षमार्गैः कृतं वीक्षणं याभिस्तासां स्त्रीणां मुखमेवेन्दुः तस्मिन् स्मितमेव शुभ्रत्वादुज्ज्वलत्वाच्च चन्द्रिका आसीत् । तं दृष्ट्वा सुभद्राहरणे यतिवेषधारणस्मरणेन हास्यं चक्रुरित्यर्थः ॥ ६ ॥

तत्र दौवारिकैः द्वारे नियुक्तैः पुरुषैः दत्तमार्गः सः अर्जुनः निकेतमध्ये गृहमध्ये निद्रायमाणस्य शौरेः श्रीकृष्णस्य चरणोपधानं शय्यासंबन्धि चरणोपस्थापनार्थमुपवर्हम् अगात् अगमत् । सेवकभावेन प्रभोः चरणस्थितिभागे जगामेत्यर्थः । कीदृशं चरणोपधानं, तस्य कृष्णचरणस्य गर्भे अन्तर्भागे या सिन्धुः गङ्गानदी तस्याः सकाशात् च्युतः भ्रष्टः यः कूर्मः तद्वत् शोभते तत् ॥ ७ ॥

युधि साह्यम् अर्थयतेऽसौ अर्थी कुरूद्वहसुतः दुर्योधनः प्रथममेत्य आगत्य यस्य श्रीकृष्णस्य सविधम् अधिमौलि शिरोभागे तिष्ठन् सन् तस्य कुन्तले शिरोरुहे निजमनस्यपि स्वमनसि च वक्रिमाणं वक्रत्वं निरीक्षितुम्—उभयोर्वक्रत्वं समानम् अथवा न्यूनाधिकं वर्तते—इति द्रष्टुम् उत्सुकतां दधान इव रेजे शुशुभे ॥ ८ ॥

निमीलनेन आलिङ्गितं युक्तं नेत्रयुग्मं यस्य, निष्पन्ददेहो यः श्रीकृष्णः स्वध्यानशैल्याः

---

१ क. शुद्धिम् । २ क. तत्स्यन्दिसिन्धुच्यु° । ३ अत्रार्जुनकपटसंन्यासचिन्तनतदवलोकनयोः विशेषणगत्या हसनहेतुत्वादनेकपदार्थहेतुककाव्यलिङ्गस्य परम्परितरूपकेण सहैकवाचकानुप्रवेशसंकरः ।

स्वध्यानशैलीसुखमास्थितानां
तपस्विनां संघमिवानुकुर्वन् ॥ ९ ॥
देवीकुचाद्रिरुचे घुसृणेन क्लृप्तः
सक्तः कपोलफलके मकरो यदीये ।
मीनध्वजारिजयिनो विजयस्य सिद्धिं
विश्राणयेति निगदन्निव कर्णमूले ॥ १० ॥
पाश्चात्यपाथोनिधिपार्श्वभागे
संपूर्य कुक्षिं सलिलस्य पूरैः ।
स्वजातियूथाच्च्युतिमाश्रितस्य
क्रमं दधौ यो घनशावकस्य ॥ ११ ॥

ततः प्रबुद्धेन तेन देवेन तयोः प्रथमागमनदर्शनाभ्यां कृत्यसाम्यं हृदि-कृत्य रणाङ्गणे गृहीतहेतीनां नवकोटिसंख्यावतां गोपकुमाराणां कदम्बेन केनचिदंशेन केवलसन्निधानेन स्वेनापि केनचिदंशेन परिपूरितमनोरथौ सुयोधनधनंजयौ स्वावासकटकभुवमासेदतुः ॥ ३ ॥

---

निजध्यानरीत्याः सुखमास्थितानां प्राप्नुवतां तपस्विनां संघम् अनुकुर्वन्निव बभौ । अनेन गाढनिद्रां प्राप्त इति व्यज्यते ॥ ९ ॥

घुसृणेन काश्मीरजेन कुङ्कुमेन क्लृप्तः रचितः देव्याः रुक्मिण्याः कुचात् सकाशात् यदीये कपोलफलके गल्लफलके सक्तः संलग्नः मकरः 'मीनध्वजस्य मदनस्य अरेः शिवस्य जयिनो विजयाय अर्जुनाय सिद्धिं युद्धे जयसिद्धिं विश्राणय देहि' इति कर्णमूले कर्णोपान्ते निगदन्निव रेजे शुशुभे । स्वप्रभोः मदनस्य शत्रोः शिवस्य जेतुरर्जुनस्य हिताशंसनं मकरस्य युक्तमेव ॥ १० ॥

यः श्रीकृष्णः पाश्चात्यपाथोनिधेः पश्चिमसमुद्रस्य पार्श्वभागे पार्श्वदेशे सलिलस्य पूरैः कुक्षिं संपूर्य स्वजातियूथात् स्वजातीयानां मेघानां समूहात् च्युतिं भ्रंशम् आश्रितस्य प्राप्तस्य घनशावकस्य मेघार्भकस्य क्रमं रीतिं दधौ । श्यामवर्णत्वात् सजलमेघार्भकवत् बभौ इत्यर्थः ॥ ११ ॥

ततः उभयोः आगमनानन्तरं प्रबुद्धेन गतनिद्रेण तेन देवेन श्रीकृष्णेन तयोः सुयोधनार्जुनयोः प्रथमागमदर्शनाभ्यां सुयोधनस्य प्रथमागमनं चरणदेशे स्थितस्य अर्जुनस्य स्वप्रबोधसमये प्रथमदर्शनं च ताभ्यां कृत्यसाम्यं कर्तव्यसाम्यं हृदि कृत्य मनसि कृत्वा रणाङ्गणे गृहीतहेतीनां गृहीतशस्त्राणां नवकोटिसंख्यावतां गोपकुमाराणां कदम्बेन समूहेन केनचिदंशेन भागेन केवलं सन्निधानेन शस्त्ररहितकेवलं समीपस्थेन स्वेनापि क्रमेण

---

१ क. स्वाङ्कध्वजारिजयिने विजयाय। २ क. स्वजा° । ३ क. क्रमेण प्रथमाभ्यागमद° । ४ क. रणाङ्गणे । ५ क. °पूरितघनमनो° । ६ अत्रान्यक्रमस्यान्यत्रासंभवेन तत्सदृशक्रमाक्षेपादसंभवद्धर्मसंबन्धनिबन्धनो निदर्शनालंकारः ।

सेनागजेन्द्रमदसौरभवीचिवेग-
निर्धूतगोग्रहणसंयुगपूतिगन्धम् ।
संवीक्ष्य मत्स्यवसुधेन्द्रपुरोपकण्ठं
शौरिश्च शक्रतनयश्च ननन्दतुस्तौ ॥ १२ ॥

दृष्ट्वा निवृत्य वदतो युधि पाण्डवाना-
मुत्साहमुग्रमथ संजयतो निशम्य ।
वातैर्विनाऽपि मणिसौधतले निवासं
कुर्वन्नकम्पत भृशं कुरुवंशकेतुः ॥ १३ ॥

पाण्डोः सुताय वसुधां प्रविभज्य दित्सोः
प्रज्ञादृशो रहसि सान्त्वपथोपदिष्टम् ।
दुर्योधनस्तु वचनं न चकार कर्णे
कर्णे स्वमेव वचनं मधुरं चकार ॥ १४ ॥

तदनु दिने दिने समुपचीयमाननानाविधनरपतिकुलचतुरङ्गबलकल-

---

परिपूरितौ मनोरथौ ययोस्तौ सुयोधनधनञ्जयौ स्वस्य आवासः स्थितिर्यस्यां तां कटकभुवं सेनावासभुवमासेदतुः ॥ ३ ॥

तौ शौरिः श्रीकृष्णः शक्रतनयः अर्जुनश्च सेनागजेन्द्राणां मदसौरभस्य दानोदकसुगन्धस्य वीचीनां लहरीणां वेगेन निर्धूतः दूरीकृतः गोग्रहणयोः दक्षिणोत्तरगोग्रहणयोः यौ संयुगौ संग्रामौ तयोः पूतिगन्धः मृतगजतुरङ्गमनुष्यादिदुर्गन्धो यस्य तं मत्स्यवसुधेन्द्रपुरस्य विराटनगरस्य उपकण्ठं समीपदेशं संवीक्ष्य ननन्दतुः । द्वारकायाः सकाशात् आगतौ कृष्णार्जुनौ युद्धोद्युक्तसेनां वीक्ष्य ननन्दतुरिति भावः ॥ १२ ॥

अथ सेनासंनाहानन्तरं पाण्डवानां युधि युद्धविषये उग्रम् उत्साहं दृष्ट्वा निवृत्य वदतः संजयतः निशम्य श्रुत्वा कुरुवंशकेतुः कुरुकुलश्रेष्ठो धृतराष्ट्रः मणिसौधतले रत्नमयसौधाधोभागे वसन्नपि वातैर्विनाऽपि भृशम् अत्यन्तम् अकम्पत । उग्रयुद्धोद्योगं श्रुत्वा स्वपुत्रादिमरणभयेन भृशमकम्पतेति भावः । वंशयष्टिध्वजस्तु वातेन कम्पते अयं तु वातैर्विनाऽपि गृहमध्यस्थितोऽपि अकम्पतेत्याश्चर्यं, वातकारणं विनापि कम्पकार्यकथनात् विभावनालंकारः ' विभावना विनाऽपि स्यात्कारणं कार्यजन्म चेत् ' इति ॥ १३ ॥

दुर्योधनस्तु वसुधां प्रविभज्य पाण्डोः सुताय दित्सोः दातुमिच्छोः प्रज्ञादृशः अन्धस्य धृतराष्ट्रस्य रहसि सान्त्वपथेन साममार्गेण उपदिष्टं वचनं कर्णे न चकार न जग्राह । वचनं श्रुत्वा तदनुसरणं न चकारेति भावः । अपि तु कर्णे राधेये स्वं स्वकीयमेव मधुरं वचनं चकार, स्वमनोभिलषितं मन्त्रं कर्णेन सह चकारेत्यर्थः ॥ १४ ॥

तदनु तदनन्तरं दिने दिने समुपचीयमानानां नानाविधानाम् अनेकप्रकाराणां नरपतिकु-

---

२. अत्र [illegible] काव्यलिङ्गम् ।

कलानप्यभिभवद्भिः कङ्ककाकसालावृकजम्बुककदम्बकरटितैः कटूकृतनिकटयोः कुरुविराटपुटभेदनयोः कतिपयदिनैरेव पञ्च खलु वीराः पौरवसाम्राज्यलक्ष्मीमभिवीक्ष्य स्थातुमवशिष्येरन्निति किंवदन्त्यां प्रवहन्त्यां सत्यां क्षितिपतिः क्षीणधैर्यो दीनाक्षरः सहोदरसमक्षं सरोरुहाक्षमेवं व्याचचक्षे ॥ ४ ॥

एतावतो बन्धुजनान्निहत्य
किं लब्धया कृष्ण भुवाऽधुना मे ।
सकन्दमूलानि सनिर्झराणि
न किं ममाद्यापि वनानि तानि ॥ १५ ॥

संतापकाले सति घर्मम्भः
पतत्यधस्तादिति हि प्रसिद्धिः ।
जिह्वां विहायाद्य जलं मुहुर्मे
दृष्टिं समारोहति चित्रमेतत् ॥ १६ ॥

---

लचतुरङ्गबलानां कलकलान् अपि अभिभवद्भिः पराजयमानैः कङ्काः गृध्रविशेषाश्च काकाश्च सालावृकाः श्वानश्च जम्बुकाश्च तेषां कदम्बकानां समूहानां रटितैः विकृतशब्दैः कटूकृतौ भयंकरीकृतौ निकटौ ययोस्तयोः कुरुविराटपुटभेदनयोः हस्तिनापुरविराटनगरयोर्मध्ये कतिपयदिनैरेव अल्पदिनैरेवेत्यर्थः, 'पञ्च वीराः खलु पौरवाणां साम्राज्यलक्ष्मीमभिवीक्ष्य भोग्यतयाऽभितोऽवलोक्य स्थातुमवशिष्येरन् अवशिष्टा भवेयुः' इति किंवदन्त्यां जनमुखतो वार्तायां प्रवहन्त्याम् अविच्छेदेन चलन्त्यां सत्यां क्षितिपतिः धर्मराजः क्षीणधैर्यः दीनाक्षरश्च सन् सहोदराणां भीमादीनां समक्षं यथा तथा सरोरुहाक्षं श्रीकृष्णम् एवं वक्ष्यमाणं व्याचचक्षे उवाच ॥ ४ ॥

'हे कृष्ण! एतावतः युद्धार्थं मिलितान्बहूनित्यर्थः, बन्धुजनान् भ्रात्रादिसंबन्धिजनान्निहत्य लब्धया अनया भुवा मम किं भवेत् । कन्दमूलनिर्झरसहितानि तानि द्वैतकाम्यकादीनि मम वनानि अद्यापि न सन्ति किम् । कन्दमूलफलाशनसहितेन वनवासेन मम सुखं यथा भवेत् तथा बन्धुवधपूर्वकसाम्राज्योपभोगेन नैव भवेत्, प्रत्युत महद्दुःखं स्यादिति भावः ॥ १५ ॥

संतापकाले उष्णकाले सति घर्मम् अम्भः घर्मोदकम् अधस्तादधोभागे पतति, इति हि इत्येव प्रसिद्धिः। अद्य जलं मे जिह्वां विहाय दृष्टिं नेत्रम् अधिरोहति इत्येतत् विचित्रम् आश्चर्यम् । जलस्य निम्नगामित्वं स्वभावः तं त्यक्त्वोर्ध्वं गच्छतीत्याश्चर्यं, भविष्यद्बन्धुमरणशोकेन जिह्वा शुष्का जाता दुःखेन नेत्रे बाष्पपूर्णे भवत इति भावः ॥ १६ ॥

---

१ क. कदम्बकेति नास्ति । २ क. कौरव । ३ क. प्रवहन्त्यां सत्यामिति नास्ति । ४ क. दीनाक्षरेण । ५ क. सरसीरुहाक्षमेवमाचचक्षे । ६ क. ऽनया । ७ क. सर्वमम्भः । ८ अत्र जलाधोगमनकारणसंतापकालविरुद्धतदूर्ध्वगमनकार्योत्पत्तिवर्णनाद्विरुद्धकार्योत्पत्तिरूपो विषमालंकारः ।

गलत्समीरैर्गजकर्णतालै-
र्नटत्पटेभ्यो नगरध्वजेभ्यः ।
तनूरिदानीं मम तान्तकान्ति-
राकम्पनाम्नायमसावधीते ॥ १७ ॥
आनन्दयित्रीमखिलस्य जन्तो-
रन्तःक्षमां स्वामपहाय मोहात् ।
बन्धुप्रणाशाद्बहुदुःखदोग्ध्र्यै
बहिःक्षमायै स्पृहयामि धिङ्माम् ॥ १८ ॥
गतिर्न मेऽन्या गरुडध्वज त्वया
विनाऽधुनाऽस्या विपदो विधूतये ।
वनानलार्चिर्वलयावृतिस्थिते-
र्वलाहकात्किं शरणं मृगीशिशोः ॥ १९ ॥
बहुभिः किमिहापरैः प्रलापै-
र्बहिरन्तश्च वदामि तुल्यभावः ।
कुकुराधिपबन्धुभिर्मम स्वैः
कुरु संधिं कुरुवंशभूतये त्वम् ॥ २० ॥

---

इदानीं तान्तकान्तिः म्लानकान्तिः असौ मम तनूः, गलन्तः निर्गच्छन्तः समीराः येभ्यस्तैः गजानां कर्णा एव तालाः कालक्रियामानसूचकवाद्यविशेषाः तैः कृत्वा नटन्तः नृत्यन्तः पटाः येषां तेभ्यः नगरध्वजेभ्यः सकाशात् आकम्पनाम्नायम् आकम्पनवेदम् अधीते। मिलितबहुसेनागजान् दृष्ट्वा मम शरीरे भयेन कम्प आविशतीति भावः॥ १७॥

अहमखिलस्य जन्तोः प्राणिनः आनन्दयित्रीं स्वां स्वकीयाम् अन्तःक्षमाम् अन्तःस्थापरापराधसहनरूपां मोहादज्ञानात् अपहाय त्यक्त्वा बन्धूनाम् आप्तानां प्रणाशात् अतिदुःखदात्र्यै बहिःस्थितायै क्षमायै पृथिव्यै स्पृहयामि इच्छामि अतः मां धिक् । यथा कश्चिदन्यो गृहस्थं समीचीनं पदार्थं त्यक्त्वा बहिःस्थितं तुच्छपदार्थम् इच्छति तद्वदिति भावः ॥ १८ ॥

हे गरुडध्वज ! अधुना त्वया विना अस्याः विपदः विपत्तेः विधूतये निराकरणाय मे अन्या गतिर्नास्ति । एतद्विषये दृष्टान्तमाह—वनेति । वनानलार्चिषां दावाग्निज्वालानां वलयेन आवृतौ आवरणे स्थितिर्यस्य तस्य मृगीशिशोः वलाहकात् मेघं विहाय, ल्यब्लोपे पञ्चमी । किं शरणं रक्षकम् अस्ति । यथा एतादृशस्य मृगबालस्य मेघो रक्षकस्तथा मम त्वमित्यर्थः ॥ १९ ॥

इह एतद्विषये अपरैः बहुभिः प्रलापैः भाषणैः किम् । बहिः आचरणे अन्तः मनसि च

---

१ क. भावम् । २ अत्र बन्धुनाशाङ्गीकारपूर्वकं राज्यकाङ्क्षावाक्यार्थेनात्मनिन्दनसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गम् । ३ अत्रोपमानोपमेयवाक्यार्थयोः द्वयोरविद्यमानत्वरूपैकसामान्यकत्वात्प्रतिवस्तूपमालंकारः 'वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता' इति लक्षणात् ।

इति ब्रुवन्तं यदुनायकोऽब्रवीद्युधिष्ठिरं योगिविचिन्त्यवैभवः।
महीपते यद्भवता समीरितं महात्मनां युक्तमिदं भवादृशाम्॥ २१॥
सरिदात्मजशासितोऽपि सन्स दुरध्वं न जहाति कौरवः।
इति चिन्तयतो ममाधुना हृदि सिद्धिः खलु संशयेशया॥ २२॥
प्रयते तथापि नृपसंधिसिद्धये
प्रयतेन्द्रियैर्भुवि पणायितस्य ते।
फलति क्वचिन्न फलति क्वचित्क्रिया
प्रविधातुरेष न हि दोषसीकरः॥ २३॥
इत्थं निगद्य मधुरस्मितमीक्षमाणो
भीमस्य वक्त्रमपि दारुकनीतमग्रे।
आरुह्य रत्नरथमाश्रितरक्षलीला-
कूलंकषो हरिरगात् कुरुराजधानीम्॥ २४॥

---

तुल्यभावः अहं वदामि। तदेव भाषणमाह—हे कुकुराणां यादवविशेषाणाम् अधिप कृष्ण! त्वं कुरुवंशस्य भूतये कल्याणाय स्वैः स्वकीयैः बन्धुभिः सह मम संधिं कुरु'॥ २०॥

योगिभिः विचिन्त्यं न तु दृश्यं वैभवं यस्य सः यदुनायकः इति उक्तप्रकारेण ब्रुवन्तं युधिष्ठिरम् अब्रवीत्। 'हे महीपते! भवता यत्समीरितम् उक्तम् इदं वचनं भवादृशां भवत्सदृशानां महात्मनाम् उदारमनसां युक्तम्॥ २१॥

सः कौरवः दुर्योधनः सरिदात्मजेन भीष्मेण शासितः शिक्षितः सन्नपि दुरध्वं दुर्मार्गं न जहाति इति चिन्तयतः मम हृदि मनसि अधुना सिद्धिः सामसिद्धिः संशयेशया खलु संशये स्थितैव॥ २२॥

हे नृप! तथापि प्रयतेन्द्रियैः जितेन्द्रियैः पणायितस्य स्तुतस्य संधिसिद्धये प्रयते प्रयत्नं करोमि। मत्प्रयत्नेनापि सिद्धिर्भविष्यति इति निश्चयो नास्तीत्याह—**फलति इति**। क्रिया सामादिप्रयोगः क्वचित्स्थले फलति क्वचिन्न फलति। प्रविधातुः क्रियाप्रयोक्तुः पुरुषस्य एषः दोषस्य क्रियानैष्फल्यरूपदोषस्य सीकरः लेशः न हि नास्त्येव। अनेन स्वावतारस्य भूमिभारभूतदुष्टराजन्यसंहारकर्तृत्वात् स्वगमनेन प्रत्युत विग्रहवृद्धावपि स्वस्य धर्मराजस्य च दोषाभावः सूचितः'॥ २३॥

आश्रितरक्षलीलया स्वभक्तरक्षणलीलया कूलंकषः परिपूर्णः हरिः इत्थं निगद्य उक्त्वा मधुरस्मितं भीमस्य वक्त्रमपि ईक्षमाणः सन्, यद्वा मधुरस्मितम् इति ईक्ष[illegible]याविशेषणम्।

---

१ क. लब्धये। २ क. शीकरः। ३ अत्र माहात्म्यस्य वंशश्रेयःप्रवणताभिप्रायगर्भत्वात्परिकरालंकारः। एवं माहात्म्यसाम्यवचनयोः अनुरूपघटनवर्णनात्समालंकारश्च। तयोः संसृष्टिः। ४ अत्र कुरुपितामहभीष्मशासनलङ्घनवाक्यार्थस्य संधिसिद्धिसंशयास्पदत्वहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम्। ५ अत्रोत्तरवाक्यार्थत्रयेण संशयास्पदसिद्धिमत्संधिप्रयत्नसमर्थनादनेकवाक्यार्थहेतुकं काव्यलिङ्गम्।

तमसां कुलानि सकलानि दर्शने
सति सद्य एव शमयन्महामहाः ।
स विवेश तत्र विदुरस्य मन्दिरं
चरमाद्रिकन्दरमभीषुमानपि ॥ २५ ॥
[ अवलोकयन्नथ पुरप्रतोलिका-
मनिमेषपौरजनतानिरन्तराम् ।
मृदुरानतेषु सुदुरासदः परै-
र्यदुराज एष विदुरालयं ययौ ॥ १ ॥ ]
कंसवैरिणि समेयुषि गेहं
क्षत्तुरातिशयितं मदनृत्तम् ।
संक्षिपां गमयति स्म पुरारेः
सांध्यताण्डवविधेरवलेपम् ॥ २६ ॥
विरतेरुचितं विशुद्धमह्नो
विधिमाधाय पितृष्वसुः सकाशे ।
वसतोऽस्य निशैव सा समाप्ता
वसुदेवात्मभुवः कथा न तास्ताः ॥ २७ ॥

---

अग्रे दारुकेण नीतं प्रापितं रत्नरथम् आरुह्य कुरुराजधानीं हस्तिनापुरीमगात् अगमत् । धार्तराष्ट्रशतहननस्य स्वयं प्रतिज्ञातत्वात् भगवदवतारस्य दुष्टनिग्राहकत्वाच्च उभयसिद्धे-र्विग्रहाधीनत्वात् साम्ना कथं सेत्स्यतीति भीममुखे स्मिताविर्भावः ॥ २४ ॥

दर्शने सति सद्य एव सकलानि तमसाम् अज्ञानानाम् अन्धकाराणां च कुलानि शमयन् महत् महः प्रतापः, तेजश्च यस्य सः श्रीकृष्णः तत्र नगर्यां विदुरस्य मन्दिरं विवेश । अभीषुमान् सूर्योऽपि चरमाद्रेः अस्ताचलस्य कन्दरं गुहां विवेश । सूर्यास्तसमये विदुरगृहं जगामेत्यर्थः ॥ २५ ॥

( क्षेपकटीका—अनिमेषपौरजनता स्तब्धदृष्टिपौरसमूहः तया निरन्तरां पूर्णां प्रतोलिकां स्वस्मिन्ये नम्राः भक्ता इति यावत्, तेषु मृदुः परैः दुर्योधनादिभिः दुरासदः दुष्प्रापः एतादृशो यदुराजः श्रीकृष्णः विदुरालयं विदुरगृहं प्रति ययौ ॥ १ ॥ )

कंसवैरिणि गेहं समेयुषि आगते सति क्षत्तुः विदुरस्य अतिशयितं मदेन हर्षजन्या-नवधानेन नृत्तं नर्तनं पुरारेः शिवस्य सांध्यः संध्यायां भवो यः ताण्डवविधिः तस्य अवलेपं गर्वं संक्षिपां संक्षेपं गमयति स्म निनाय । आतिशयितमित्यत्र स्वार्थेऽण् ॥२६॥

अह्नो विरतेः संध्याकालस्य उचितं विशुद्धं विधिं संध्यावन्दनाद्यनुष्ठानम् आधाय

---

१ क. ख. एतदाद्योः श्लोकयोर्व्यत्यस्तः पाठः । २ क. °भीशुमानिव । ३ क. स दुरासदः । ४ क. °शयिकम् । ५ ख. संक्षयम् । ६ क. समाप्ता । ७ अत्र कृष्णसूर्ययोः प्रवेशेनौपम्यस्य गम्यत्वात्केवल-प्रकृतास्पदा तुल्ययोगितालंकारः ।

[ अथ [1]विगतायां रजन्यामिव पृथासुतकथायां दीनद्युतिषु तारकाकलापेष्विव प्रदीपेषु [2]जृम्भितेषु शकुन्तिभिरिव बन्दिभिः कलकलेषु विकसितेषु नलिनेष्विव नयनेषूत्पलादिव [4]महोत्पलं राजनगराद्विदुरमन्दिरमागतेषु [3][5]चञ्चरीकेष्विव सारिकेषु विरोचन इव [6]कमलविलोचनः प्राचीनगिरेरिव पर्यङ्कादुत्तस्थौ ॥ १ ॥ ]

[ [7]समाप्य संध्यौपयिकं स कृत्यं समापयिष्यन्नथ शार्ङ्गधन्वा ।
अलंकृताङ्गो विदुरस्य हस्तमालम्ब्य मन्दं निरगान्निकेतात् ॥ २ ॥ ]

[8]अन्येद्युरखिलमहरारम्भकृत्यमवसाय्य बालातपेन वलाहक इव घुसृणमसृणितेन पटीरपङ्केन चर्चितकलेवरः पङ्केरुहशङ्किनीभिरञ्जलि-

---

कृत्वा पितृष्वसुः पृथायाः सकाशे वसतः निषण्णस्य वसुदेवभुवः कृष्णस्य सा निशेव समाप्नोत् समाप्ता, तास्ताः वसुदेवदेवक्यादिसंबन्धिन्यः कथाः न समाप्ताः ॥ २७ ॥

(अथ पृथासुतस्य कथायामिव रजन्यां विगतायां सत्याम्, अनेनैव क्रमेण पदद्वयम् उपमानोपमेयभावेन संयोज्य ध्यर्थेन तृतीयपदेन संबन्धनीयमिति लापनरीतिः । उत्पलाचन्द्रविकासिकमलान्महोत्पलं सूर्यविकासिकमलमिव चञ्चरीकेषु भ्रमरेष्विव सारिकेषु दूतेषु ॥ १ ॥ )

अन्येद्युः परदिवसे मुकुन्दः अखिलम् अहरारम्भकृत्यं प्रातःकालिकस्नानादिकृत्यम् अवसाय्य समाप्तं कृत्वा महता राजपथेन सुयोधनादिभिः चतुर्भिः दुर्योधनदुःशासनकर्णशकुनिभिः अध्यासितपूर्वं पूर्वमधिष्ठितं सभामण्डपं शनैः शनैः अवजगाहे प्रविवेश । कथंभूतेन राजपथेन, बन्दिबृन्देन स्तुतिपाठकसमूहेन परिपठ्यमानाः ये कंसादिवधानां विरुदावलिप्रबन्धाः तैः बन्धुरेण आकुलेन । तथा, मङ्गलकुसुमानां मङ्गलार्थं विकीर्णकुसुमानां संपदा अन्धीकृताः मत्ताः कृताः ये पुष्पन्धयाः भ्रमराः तेषां ये झङ्काराः तज्जातीयशब्दाः तेषां सहचराः तैः सह वर्तमानः वादित्रघोषो भेर्यादिशब्दो यस्मिंस्तेन । तथा, मेघवर्त्म यथा तथा उन्मिषन्तीभिः प्रकाशमानाभिः सौदामिनीभिरिव कनकवेत्रलताभिः सेवककरधृतसौवर्णयष्टिभिः आकुलितेन व्याप्तेन । कथंभूतो मुकुन्दः, बाला-

---

१ क. विरतायां निशीथिन्यामिव पृथाकथा° । २ क. विजृम्भितेषु ।३ क. °षु चञ्चरीकेष्विव पौरजनेषू° । ४ क. राजमन्दिरान्महोत्पलं प्रतीव विदु° । ५ क. चञ्चरीकेष्विव सारिकेष्विति नास्ति । ६ क. कमललोचनः प्राचीनगिर्यङ्कादिव । ७ क. श्लोकोऽयमधिकः । तट्टीका चेयम्—

समाप्येति । अथ उत्थानानन्तरम् अलंकृतानि निद्रावसरपर्यस्तवस्त्रभूषणादीनां यथापूर्वमवस्थापनेन विभूषितानि अङ्गानि यस्य तथोक्तः स शार्ङ्गधन्वा श्रीकृष्णः संध्यायां प्रातःकालिकायाम् औपयिकं युक्तं कृत्यं वन्दनादिकं समाप्य कृत्वा संधेः कुरूणां पाण्डवैः सह संधानस्य औपयिकं कृत्यं धृतराष्ट्रादिभिः सह आलोचनमपि समापयिष्यन् करिष्यमाणः सन् विदुरस्य हस्तम् आलम्ब्य गृहीत्वा निकेतात् शयनगृहात् मन्दं सविलासं यथा तथा निरगात् बहिरागतवान् ।

८ क. तदनु निखिल°, ख. अपरेद्यु° ।

खितराजहंसराजिभिरवकृष्यमाणेनेव पीताम्बरभागेन परिचुम्बित-प्रपदपल्लवो निजोदरान्तरानवकाशतया बहिर्निर्गतैर्जगदण्डशिशुभिरिव मुक्ताफलैः प्रत्युप्तमेखलामुखभागो वर्षाहेमन्तसमययोरप्यविनश्वरं लक्ष्मी-लीलाकमलमुपश्लोकयितुमागतेन दिनमणिबिम्बेनेव कौस्तुभेन देदीप्य-मानभुजान्तरो दनुजपरिषदौत्पातिकरक्तपरिवेषेणेव पद्मरागकेयूरेण परिमण्डितबाहुदण्डो द्वारि निर्गत्य सुयोधनदुर्वासितायाः नगरभुवः स्पर्शनं परिहर्तुमिव सविनयमुपागतेन दारुकेण संयोजितमणिपादुकः किंचिदेव नमितपूर्वकायेण विदुरेण वितीर्यमाणहस्तावलम्बो गुरुकृप-मुखैर्ब्रह्मसंघैः प्रतिपाद्यमानां जयाशिषं शिरसा प्रतिगृह्णानः कुशलप्रश्न-कोरकितमोदाभ्यां कुरुराजदेवव्रताभ्यां सदनाभिगमनाय संप्रार्थ्यमान-श्चिरमवसरं प्रतिपालयतामक्षौहिणीपतीनामञ्जलिर्वनजावलिमवलोक-नेन संभावयमानो मुकुन्दो बदिबृन्दपरिपठ्यमानकंसादिवधबिरुदावली-प्रबन्धबन्धुरेण मङ्गलकुसुमगन्धसंपदन्धीकृतपुष्पन्धयझङ्कारसहचरवा-दित्रघोषेण मेघवर्जमुन्मिषन्तीभिः सौदामिनीभिरिव कनकवेत्रलताभि-राकुलितेन महता राजपथेन सुयोधनादिभिश्चतुर्भिरध्यासितपूर्वं सभा-मण्डपं शनैः शनैरवजगाहे ॥ ५ ॥

---

तपेन बलाहक इव घुसृणमसृणितेन पटीरपङ्केन चर्चितकलेवरः । पुनः कथंभू०, अञ्चले पीताम्बरे ये लिखिताः राजहंसास्तेषां राजिभिः अवकृष्यमाणेनेव पीताम्बरभागेन परिचुम्बितः युक्तः प्रपदपल्लवः पल्लवसदृशपादाग्रभागो यस्य सः । अत्र शुभ्रत्वरक्तत्व-धर्मसाम्येन पादनखोपरिराजहंसत्वारोपः । पुनः कथंभू०, निजोदरान्तरे अनवकाशतया अवकाशाभावेन बहिर्गतैः बहिः स्थितैः जगदण्डानां ब्रह्माण्डानां शिशुभिरिव मुक्ता-फलैः प्रत्युप्तः खचितः मेखलायाः कटिसूत्रस्य मुखभागो यस्य सः । पुनः क०, वर्षा-हेमन्तसमययोरपि अविनश्वरं लक्ष्म्याः करस्थितं लीलाकमलम् उपश्लोकयितुं स्तुत्या संभावयितुम् आगतेन सूर्यबिम्बेनेव कौस्तुभेन देदीप्यमानं भुजान्तरं यस्य सः । पुनः क०, दनुजपरिषदः दैत्यसभायाः औत्पातिकेन [ विनाशसूचकेन ] उत्पातसंबन्धिना रक्तपरि-वेषेणेव पद्मरागकेयूरेण माणिक्यखचिताङ्गदेन परिमण्डितः परितः भूषितो बाहुदण्डो यस्य सः । पुनः क०, सुयोधनस्य दुर्वासः दुष्टस्थितिः संजाता यस्यास्तस्या नगरभुवः स्पर्शनं परिहर्तुं वर्जयितुमिव द्वारि निर्गत्य अग्रतो गत्वा सविनयमुपागतेन दारुकेण संयोजिते मणिप्रचुरे पादुके यस्य सः । पुनः क०, किंचिदवनमितः पूर्वकायो नाम शरीरपूर्वभागो येन तेन विदुरेण वितीर्यमाणः दीयमानः हस्तावलम्बो यस्य सः । पुनः क०, गुरुकृपमुखै-

---

१ क. °श्लोकितु° । २ क. °पदुत्पातर° । ३ क. भुजदण्डो । ४ क. द्वारीति परिहर्तुमिवेत्यस्मा-दग्रे । ५ क. किंचिदवन° । ६ क. कृपप्रमु° । ७ क. चिरतरावस° । ८ क. कमलवनावलि° । ९ क. विजयबिरु° । १० क. °राकुलीकृतेन ।

[ द्वारं समेयुषि हरावथ तत्र गोष्ठ्याः
सर्वैः समं नरपतिः सहसोदतिष्ठत् ।
पूर्वाचलाश्रयिणि पूषणि पद्मपङ्क्तेः
सौरभ्यपूर इव षट्चरणैरनेकैः ॥ ३ ॥]

तत्रातितुङ्गे तरसोपनीते रत्नासनेऽयं रचितोपवेशः ।
पुरोहितैरग्रभुवि प्रदत्तां पूजामुपादत्त पुमान्पुराणः ॥ २८ ॥

सभान्तरे तत्र समग्रकान्तिं संवीक्ष्य संवीक्ष्य सरोरुहाक्षम् ।
नरेन्द्रवर्ज्यं नगरीजनेषु न कस्य वाऽभून्नयनप्रमोदः ॥ २९ ॥

भद्रासनादवनतं पदपल्लवाग्रं
संवाहयत्युपगते विदुरे दयार्द्रः ।
सामाजिके बुधजने सति दत्तकर्णे
प्रज्ञादृशं गिरमभाषत पद्मनाभः ॥ ३० ॥

---

ब्रह्मसंघैः प्रतिपाद्यमानां दत्तां जयेत्याशिषं शिरसा प्रतिगृह्णानः । पुनः क०, कुशलप्रश्नेन कोरकितमोदाभ्याम् उदितहर्षाभ्यां कुरुराजदेवव्रताभ्यां धृतराष्ट्रभीष्माभ्यां सदनाभिगमनाय संप्रार्थ्यमानः । पुनः क०, चिरम् अवसरं दर्शनवेलां प्रतिपालयतां प्रतीक्षमाणानाम् अक्षौहिणीपतीनाम् अञ्जलिवनजावलिम् अञ्जलिकमलपङ्क्तिम् अवलोकनेन संभावयमानः सन्मानं कुर्वाणः ॥ ५ ॥

तत्र सभामध्ये तरसा संभ्रमेण उपनीते अतितुङ्गे रत्नासने रचितोपवेशः निषण्णः पुराणः पुरातनः पुमान् अयं कृष्णः पुरोहितैः अग्रभुवि प्रदत्तां दत्तां पूजां गन्धपुष्पादिपूजापदार्थान् उपादत्त स्वीचकार ॥ २८ ॥

तत्र सभायाः अन्तरे मध्ये समग्रा कान्तिः कमनीयता यस्य तं सरोरुहाक्षं कृष्णं संवीक्ष्य संवीक्ष्य नगरीजनेषु नरेन्द्रवर्ज्यं धृतराष्ट्रं विना कस्य पुरुषस्य नयनयोः प्रमोदः आनन्दो नाभूत्, अपि तु धृतराष्ट्रस्यान्धत्वात्तं विना सर्वस्यापि नयनयोरानन्दोऽभूदित्यर्थः ॥ २९ ॥

दयार्द्रः दयालुः पद्मनाभः उपगते विदुरे भद्रासनात् सिंहासनात् अवनतम् अधस्तादागतं पदपल्लवाग्रं संवाहयति मर्दयति सति, समाजिके सभास्थिते बुधजने च दत्तकर्णे सादरं शृण्वति सति प्रज्ञादृशम् अन्धं नृपं धृतराष्ट्रम् अभाषत ॥ ३० ॥

---

१ क. श्लोकोऽयमधिकः । तट्टीका चेयम्—

द्वारमिति । अथ हरौ श्रीकृष्णे द्वारं प्रति समेयुषि प्राप्तवति सति तत्र आस्थानमण्डपे नरपतिः दुर्योधनः सहसा सत्वरं गोष्ठ्याः समाजात् सर्वैः सभ्यैः समं पूषणि सूर्ये पूर्वाचलम् उदयाचलम् आश्रयिणि प्राप्तवति सति पद्मानां पङ्क्तेः अनेकैः षट्चरणैः भृङ्गैः समं सौरभ्यपूरः परिमलप्रवाह इव उदतिष्ठत् प्रत्युत्थितवान् । पूर्णोपमालंकारः ।

२ क. प्रदिष्टाम् । ३ क. ०दुपनतम् । ४ क. नृपमभाषत ।

अल्पैरहोभिरधियुद्धमवेक्ष्य नङ्क्ष्य-
चान्द्रं कुलं तव सुतैः सह पाण्डवानाम् ।
संधिं विधातुमधुना समये विधेयं
प्राप्तोऽहमस्मि भरतर्षभ ते सकाशम् ॥ ३१ ॥
शतेन संधत्स्व तनूभवानां कुन्तीकुमारान्कुशलोदयाय ।
कल्लोलजालेन कलिन्दजाया गङ्गातरङ्गानिव गेयकीर्ते ॥ ३२ ॥
पादारविन्दे प्रणतीः शिरोभिः शतं शतं सादरमर्पयन्तः ।
पाण्डोः कुमाराश्च भवन्तमेनं विज्ञापयन्ति स्म विनीतपूर्वम् ॥ ३३॥
जाता वने वयममी भवदङ्कभूमौ
संवर्धिताः शिरसि शासनमादधानाः ।
निस्तीर्णसंगरपयोनिधयस्त्वयाऽद्य
स्थाप्या यथांशमवनेरवने वने वा ॥ ३४ ॥
बाल्ये वनान्तजनुषां मम पाण्डवाना-
मेकाऽपि रक्षणविधौ न बभूव धात्री ।

---

हे भरतर्षभ भरतवंशश्रेष्ठ! अल्पैः अहोभिः दिवसैः अधियुद्धं युद्धमध्ये नङ्क्ष्यत् नाशं प्राप्स्यत् चान्द्रं कुलं सोमवंशम् अवेक्ष्य ज्ञात्वा अहमधुना समये अस्मिन्काले विधेयं कर्तव्यं पाण्डवानां तव सुतैः सह संधिं कर्तुं ते सकाशं समीपमागतोऽस्मि ॥ ३१ ॥

हे गेयकीर्ते! कुशलोदयाय कल्याणप्राप्तये तनूभवानां पुत्राणां शतेन कुन्तीकुमारान् संधत्स्व संधिं कुरु । केन कानिव, कलिन्दजायाः यमुनायाः कल्लोलजालेन महोर्मिसमूहेन सह गङ्गातरङ्गानिव ॥ ३२ ॥

नाहमेवं विज्ञापयामि अपि तु पञ्चापि कुन्तीपुत्राः साष्टाङ्गनतिपूर्वं विज्ञापयन्तीत्याह—**पादारविन्दे इति** । पाण्डोः कुमाराश्च तव पादारविन्दे शिरोभिः शतं शतं प्रणतीः नमस्कारानर्पयन्तः सन्तः एवं वक्ष्यमाणप्रकारेण भवन्तं विनीतपूर्वं विनयपुरःसरं विज्ञापयन्ति । स्मेत्यव्ययं वाक्यालंकारे नत्वतीतकालद्योतनार्थम्, अन्यथा विज्ञापनायाः परोक्षता स्यात् ॥ ३३ ॥

'अमी वयं वने जाताः । भवतः अङ्कभूमौ उत्सङ्गस्थले संवर्धिताः वृद्धिं नीताः । तव शासनम् आज्ञां शिरसि आदधानाः धारयन्तः निस्तीर्णः संगरपयोधिः द्वादशवर्षं वने वासः त्रयोदशे वर्षे अज्ञातवासः एतद्रूपः प्रतिज्ञासमुद्रो यैस्तथाभूताः स्मः । अद्य त्वया यथांशम् अवनेः अवने रक्षणे स्थाप्याः अथवा वने स्थाप्याः । दायदानार्हाणामस्माकं पैतामहराज्यार्धं दत्त्वा एतदुपभोगं कुरुतेत्यथ वा वने वस्तव्यमित्याज्ञापनीयमित्यर्थः ॥ ३४ ॥

इदानीं पुत्रवत्त्वेन तव लोभः समुत्पन्न इत्याह—'वनान्ते वनमध्ये जनुः जन्म येषां

---

१ ख. प्रवम् । २ क. ख. वृद्धिं नीताः ।

इत्येव शोकमनिशं हृदये दधानस्त-
स्यास्तु नार्धमपि संप्रति दित्ससि त्वम् ॥ ३५ ॥

इत्थं ब्रुवाणं यदुवीरमेनं निश्वस्य दीर्घं नृपतिर्बभाषे ।
व्यरंसिषं व्यध्वममुं विमुञ्च विमुञ्च वत्सेत्यनुशास्य शौरे ॥ ३६ ॥

मधुमथननिमीलिता मुनीन्द्रे
मम जननी खलु पुत्रवत्सला सा ।
मुखमहमनवेक्ष्य मूर्खसूनो-
र्मुदमधिकामधुना यया दधामि ॥ ३७ ॥

स्वयमपि न विबुध्यते सुतोऽयं
सुमतिजनस्य शृणोति नापि वाचम् ।
कुरुकुलकुशलाङ्कुराभिवृद्ध्यै
गुणगणवारिनिधे गतिस्त्वमेव ॥ ३८ ॥

---

तेषां मम पाण्डवानां रक्षणविधौ पालनकर्मणि एकाऽपि धात्री उपमाता, पृथ्वी च न बभूव नासीत्' इत्येवम् इत्थमेव शोकम् अनिशं हृदये अन्तःकरणे दधानः त्वं संप्रति तु तस्या धात्र्याः अर्धमपि न दित्ससि न दातुमिच्छसि । शतशो धात्र्यः पाण्डवानां रक्षणार्हास्तत्र एकापि नासीदिति महद्दैन्यं तेषां जातम् इति पूर्वं शोकमकार्षीः, इदानीं धात्र्यर्धमपि दातुं नेच्छसीति महान् लोभस्तव समुत्पन्न इति भावः ॥ ३५ ॥

नृपतिः धृतराष्ट्रः दीर्घं निश्वस्य इत्थमुक्तप्रकारेण ब्रुवाणम् एनं यदुवीरं बभाषे । तदेव-भाषणमाह—**व्यरंसिषमिति** । 'हे वत्स ! इमं व्यध्वं दायार्हाणां पाण्डवानां दायासमर्पणरूपं दुर्मार्गं विमुञ्च विमुञ्च त्यज त्यज' इत्यनुशास्य अनुज्ञाप्य हे शौरे ! व्यरंसिषं श्रमेण तूष्णीमभूवम् । पुत्रस्य पुरतो मत्प्रश्नो न चलतीति भावः ॥ ३६ ॥

हे मधुमथन ! मुनीन्द्रे व्यासे निमीलिता पुत्रोपपत्त्यर्थं संगमसमये कृतनेत्रनिमीलना सा मम जननी पुत्रवत्सला पुत्रस्नेहवती खलु । यया हेतुभूतया जनन्या अहं मूर्खसूनोः मुखम् अनवेक्ष्य अन्धत्वाददृष्ट्वाऽधुना अधिकां मुदं दधामि धारयामि । मृतभर्तृकायाः मम मातुरनपत्यत्वात् वंशनाशे प्राप्ते देवरात्सुतोत्पत्तिः कर्तव्येति शास्त्रमनुसृत्य पितामह्या प्रेषिता मम माता कृतनेत्रनिमीलना सती देवरेण व्यासेन सह संगता । तेनाहमन्धः समुत्पन्नः । येन दुष्टपुत्रमुखमनवेक्ष्य मुदं प्राप्नोमीति भावः ॥ ३७ ॥

अतिमूर्खोऽयमित्याह—**स्वयमिति** । अयं सुतो दुर्योधनः स्वयमपि न विबुध्यते कर्त-

---

१ अत्र वने धात्रीमात्राभावशोचनस्य स्वसमक्षमर्धधात्रीदानानवश्यकत्वहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । तच्चोपमातृभुवोः धातृशब्दश्लेषाभित्तिकालब्धाभेदाध्यवसायमूलातिशयोक्त्युज्जीवितामिति तयोरङ्गाङ्गिभावेन संकरः । २ अत्र किमुत्तरवाक्यार्थेन पुत्रवात्सल्यसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गम्, उत आन्ध्यस्य दोषस्यैव संतोषजनकत्वेन गुणत्ववर्णनाल्लेशालंकारः, इत्युभयत्र साधकसाम्यादेकत्र बाधकाभावाच्च द्वयोः संदेहसंकरः ।

इति सिद्धान्तितवति बद्धाञ्जलौ राजनि निजासनार्धनिवेशितकरतलतया किंचिदुन्नमितवामभुजशिखरेण गण्डमण्डले निमज्जितमकरकुण्डलं कटितटचलनकन्दलितकाञ्चनपटमर्मरमीषत्कन्धरां विनिवर्त्य ॥ ६ ॥—

कृतस्मितं रविभुवा कृतहस्ततालं
दुःशासनेन धुरि दूषितसंधिपक्षम् ।
कर्णोपकण्ठचलिताधरमातुलास्यं
कौरव्यमाह कुरुसंसदि कंसवैरी ॥ ३९ ॥

पृथासुतेभ्यः पृथिवीं तदीयां पुनर्दिशेति ब्रुवतो गुरोर्गाम् ।
अशृण्वतः कौरव ते कथं वा संभूतिरेषा शशिनोऽन्ववाये ॥ ४० ॥

तत्तादृशं शृणु महत्तव वंशवृत्तं
पूरुर्ददौ नववयः पितुरात्तजीर्णः ।

---

व्याकर्तव्यं न जानाति । सुमतिजनस्य बुद्धिमतो जनस्यापि वाचं न शृणोति, श्रुतवचनानुसरणं न करोतीत्यर्थः। कुरुकुलस्य यः कुशलाङ्कुरः कुशलोदयः तस्याभिवृद्ध्यै गुणगणानां वारिनिधिः त्वमेव गतिः शरणम् असि । त्वयैव कृपयाऽस्मत्कुलस्य रक्षणं कृतं चेद्भविष्यति नान्यथेति भावः ॥ ३८ ॥

बद्धाञ्जलौ कृताञ्जलौ राजनि इति—त्वयैव अस्य वंशस्य रक्षणं कर्तव्यम्—इत्युक्तप्रकारेण सिद्धान्तितवति सिद्धान्तं कुर्वति सति निजासनार्धे निवेशितं स्थापितं करतलं येन तस्य भावस्तत्ता तया किंचिदुन्नमितम् उच्चीकृतं यत् वामभुजस्य शिखरम् उर्ध्वभागः तेन गण्डमण्डले कपोलमध्यभागे निमज्जितं मकराकारं कुण्डलं यस्मिन्कर्मणि यथा तथा कटितटस्य चलनेन कन्दलितः बलिमान् कृतः यः काञ्चनपटः सुवर्णतन्तुप्रचुरः पटः तस्य मर्मरः शब्दो यस्मिन्कर्मणि यथा तथा च कन्धरां ग्रीवाम् ईषत् विनिवर्त्य वक्रीकृत्य कौरव्यमाहेत्युत्तरपद्येनान्वयः ॥ ६ ॥—

कंसवैरी श्रीकृष्णः कुरूणां संसदि सभायां कौरव्यं दुर्योधनम् आह । कथंभूतं कौरव्यं, कृतं स्मितं हास्यं येन तम् । रविभुवा कर्णेन कृतः हस्ततालः हर्षात्तद्धस्तोपरि हस्तताडनं येन तम् । धुरि अग्रभागे दुःशासनेन दूषितः संधिपक्षो यस्य तम् । कर्णोपकण्ठे श्रोत्रसमीपभागे चलिताधरम् उपांशुमन्त्रकरणात् चलिताधरोष्ठं मातुलास्यं शकुनिमुखं यस्य तम् । धृतराष्ट्रं प्रति कथ्यमानवचनं हेलया अशृण्वन्तमाहेति भावः ॥ ३९ ॥

हे कौरव दुर्योधन ! पृथासुतेभ्यः तदीयां पृथिवीं पुनर्दिश देहि । इति ब्रुवतः गुरोः पितुः गां वाणीम् अशृण्वतः ते तव एषा संभूतिः उत्पत्तिः शशिनः अन्ववाये वंशे कथं वा जातेति शेषः । गुरोर्वचनातिक्रमणकर्ता त्वत्सदृशोऽस्मिन् वंशे कोऽपि नोत्पन्न इति भावः ॥ ४० ॥

तत्तादृशम् अनिर्वचनीयं महत् तव वंशस्य वृत्तं शृणु । पितुः ययातेः सकाशात् आत्त

---

१ क. तटांत नास्ति । २ क. मर्मरारवमीष । ३ क. पौरव ।

त्यक्त्वाऽऽश्रमं पितृमुदे तृणवद्द्वितीयं
देवव्रतोऽयमिह तिष्ठति धीरधीरः ॥ ४१ ॥
कितवोक्तिभिः किसलितस्य कर्णयोः
सफलो भवेत्तव तदा मनोरथः ।
हरिनन्दनेन युधि पातितं धनु-
र्हरमस्तकान्न पुनरुन्ममज्ज चेत् ॥ ४२ ॥
[ बन्धूपदिष्टं न शृणोषि वत्स संधानमस्मिन्न तवाद्य दोषः ।
गन्धर्वराजेन कृतं वनान्ते बन्धं पुनर्मुक्तवतां हि तेषाम् ॥ ४ ॥]
वंशः कुरूणां महितोऽयमस्मिन् धर्तुं कलङ्कं चतुरौ खलु द्वौ ।
एकत्र कोटौ रजनेरधीशः परत्र मन्ये पुरुषो भवांश्च ॥ ४३ ॥
इति प्रगदितवति भगवति क्रोधनः सुयोधनोऽपि गिरमिमामुज्जहार ७

गृहीतं जीर्णं वार्धक्यं येन सः पूरुः त्वद्वंशे पूर्वं जातो राजा नववयः तारुण्यं तस्मै ददौ । तथाऽयं देवव्रतः भीष्मः पितृकृते जनकशन्तनुकृते द्वितीयम् आश्रमं गृहस्थाश्रमं विवाहमित्यर्थः, तृणवत् त्यक्त्वा इहलोके धीरेभ्यः सकाशात् धीरः बुद्धिमान् धैर्यवान् वा सन् तिष्ठति । पूर्वादयोऽस्मिन्वंशे पितृवचनानुसरणं कृत्वा कीर्तिमन्तो जाता इति भावः ॥ ४१ ॥

कर्णयोः कितवोक्तिभिः धूर्तखलोक्तिभिः किसलितस्य संजातकिसलयस्य तदाकर्णनपरश्रवणस्य तव मनोरथः तदा सफलो भवेत्, हरिनन्दनेन अर्जुनेन युधि पातितं ताडनार्थं निक्षिप्तं धनुः गाण्डीवं हरमस्तकात् नोन्ममज्ज चेत् न बहिरागतमासीत् चेत्। यतोऽर्जुनेन युद्धे हरप्रसादेन प्राप्तं गाण्डीवं धनुरस्ति ततस्तव कितवैः सह मन्त्रितमनोरथसिद्धिर्नैव भवेदिति भावः ॥ ४२ ॥

अयं कुरूणां वंशः महितः पूज्योऽस्ति । अस्मिन्वंशे कलङ्कं धर्तुं द्वौ निपुणौ खलु । तावेवाह—एकेति । एकत्र कोटौ भागे रजनेरधीशः चन्द्रः । परत्र कोटौ भवान्पुरुषश्च अस्तीत्यहं मन्ये । यथा गुरुकाष्ठादिकम् एकेन वोढुं न शक्यते इति द्वाभ्यामुह्यते, तथा अस्मिन्वंशे मयैतौ द्वावेव कलङ्किनौ निश्चिताविति भावः ॥ ४३ ॥

इति भगवति प्रगदितवति प्रगल्भतया ब्रुवति सति क्रोधनः सुयोधनः इमां वक्ष्यमाणां गिरम् उज्जहार उवाच ॥ ७ ॥—

१ क. °तः स, ख. तश्च । २ क. पुस्तकेऽधिकोऽयं श्लोकः । तट्टीका चेयम्—
बन्ध्विति । हे वत्स ! शिशुवत्कर्तव्यानभिज्ञ ! त्वं बन्धुभिः उपदिष्टं बोधितं संधानं संधिं न शृणोषि नाङ्गीकरोषीति यत् अस्मिन् संध्यनङ्गीकारे विषये अद्य तव दोषः अपराधः न भवति । किंतु वनान्ते द्वैतवनमध्ये गन्धर्वराजेन चित्रसेनेन कृतं बन्धं त्वदीयं पुनर्मुक्तवतां तेषां हि पाण्डवानामेव दोषः भवति । अत्र क्रमेण दोषगुणयोः बन्धूक्तसंध्यनङ्गीकारबन्धमोचनयोः गुणत्वस्य दोषत्वस्य च वर्णनाल्लेशालंकारद्वयमङ्गाङ्गिभावेन संकीर्णम् ।
३ क. निगदितवति , ख. प्रेतिनास्ति । ४ क. जगार, ख. जगाद । ५ अत्र किसलितफलितत्वारोपेण मनोरथस्य वृक्षत्वारोपप्रतीतेरेकदेशवर्ति रूपकम् ।

अरे नन्दनन्दन केवलं विराटतनयाश्रयलाभेन कृतकृत्यंमन्यानां कुन्तीभुवां च बहुभिरक्षौहिणीपतिभिरनुक्षणमावेद्यमानाञ्जलिधोरणीमवलोकितुमप्यलब्धावसराणामस्माकं च किं वा संधानं किं वा तव दूतकृत्यं किं वा मया देयमीदृग्विधं मुधायासमवधूय भवता यथागतं गन्तव्यमिति ॥ ८ ॥

आकर्ण्य तच्चकितचेतसि नम्रवक्त्रे
कर्णौ पिधाय नृपतौ करसंपुटाभ्याम् ।
मत्वा तृणाय मधुवैरिणमप्यलङ्घ्यं
गोष्ठ्या जवेन निरगात्कुरुराजसूनुः ॥ ४४ ॥

तदनु दनुजारातिरेष रोषस्मितलेशरूषिताधरस्तादृशेन तस्यावलेपवचनेन भिया विहस्तान्मुदा निरस्तान् समस्तानपि सभास्तारान् पुरस्तान्निरीक्ष्य पुनरपि वाचमेवं व्याजहार ॥ ९ ॥

---

'अरे नन्दनन्दन गोपालपुत्र! अनेन राजकृत्याज्ञत्वं द्योतयति । केवलं विराटतनयस्य उत्तरस्य आश्रयलाभेन आत्मानं कृतकृत्यंमन्यानां कुन्तीभुवां बहुभिः अक्षौहिणीसेनापतिभिः शल्यभगदत्तादिभिः अनुक्षणं प्रतिक्षणम् आवेद्यमानां वेत्रधारिमुखैर्निवेद्यमानाम् अञ्जलिधोरणीं नमनार्थं संहलहस्तरीतिम् अवलोकयितुमपि दृग्विषयीकर्तुमपि कार्यबाहुल्यात् नतिबाहुल्याच्च न लब्धः अवसरः समयो यैस्तेषाम् अस्माकं च किंवा संधानं संधिः, किंवा तव दूतकृत्यं च, किं वा मया देयं च । तेषामस्माकं च महदन्तरम् अतः संध्यादि वक्तुमप्यनर्हम् इति भावः । ईदृग्विधं मुधा निष्फलम् आयासमवधूय त्यक्त्वा भवता यथागतं गन्तव्यमिति । यथा आगतं तथैव गन्तव्यं कार्यसिद्ध्यभिलाषं त्यक्त्वा रिक्तेनैव गन्तव्यम् इत्यर्थः' ॥ ८ ॥

नृपतौ धृतराष्ट्रे तत्पुत्रवचनम् आकर्ण्य करसंपुटाभ्यां न्युब्जीकृतकरतलाभ्यां कर्णौ पिधाय आच्छाद्य चकितम् अनर्थात् भीतं चेतो यस्य तस्मिन्नम्रवक्त्रे अवनमितमुखे सति कुरुराजसूनुः दुर्योधनः अलङ्घ्यमपि धर्षणानर्हमपि मधुवैरिणं महादैत्यहन्तारं कृष्णं तृणायमत्वा तृणमिव तुच्छं मत्वा जवेन गोष्ठ्याः सभायाः सकाशात् निरगात् निर्जगाम॥४४॥

तदनु तदनन्तरम् एषः दनुजारातिः कृष्णः रोषस्मितयोः स्वस्य अवमाने रोषः,उत्तरगोग्रहे एकेन अर्जुनेन सर्वेषां पराजये कृतेऽपि गर्वोक्तिश्रवणादाश्चर्यजन्यहास्यं च तयोर्लेशाभ्यां तज्जन्यकम्पदन्तप्रभाभ्यां रूषितः युक्तः अधरो यस्य तथाभूतः सन् तादृशेन तस्य दुर्योधनस्य अवलेपवचनेन गर्वोक्त्या या भीः तया विहस्तान्व्याकुलान् मुदा हर्षेण

---

१ क. अये । २ क. मन्यमानानाम् । ३ क. 'लोकयितुम्' । ४ क. भवतेति नास्ति । ५ क. जगाद । ६ अत्र गौणोपजीवनकौन्तेयार्थगोपालदूत्यवस्तुना तदीयदूत्यं तदीयगुणमेवेत्यनुरूपसंघटनात्मकसमालंकारप्रतीतेः वस्तुनाऽलंकारध्वनिः ।

धराभुजा किं तटिनीभुवा किं मयाऽधुना किं वसताऽपि दूत्ये ।
पार्थाय दातुं प्रभवेद्धरित्रीं गदैव सा गन्धवहस्य सूनोः ॥ ४५ ॥
शौरेस्तां वाचमाकर्ण्य साध्वसाक्रान्तचेतसः ।
जोषंभावं सभास्तारा युगपद्दधुरुत्तरम् ॥ ४६ ॥
बहिः स संमन्त्र्य बलावलिप्तैस्त्रिभिः सहायैर्धृतराष्ट्रसूनुः ।
गन्धर्वराजेन कृतां दशां स्वां गदाग्रजन्मानमियेष नेतुम् ॥ ४७ ॥
श्रुत्वा तत्कुपितो हरिः स्वयमसावेकोऽपि सर्वात्मक-
स्ताराभिर्नवभिर्ग्रहैर्निबिडितां शैलैर्वनैः सागरैः ।
[1]पेटीभूषणमञ्जरीमिव धृतां कुक्षौ जगन्मण्डलीं
जङ्घालामतनोत्सभाजिरजुषां दृक्पङ्क्तिघण्टापथे ॥ ४८ ॥

---

निरस्तान् त्यक्तान् समस्तानपि सभासदान् सभ्यान् भीष्मद्रोणादीन् पुरस्तात् निरीक्ष्य पुनरपि एवं वक्ष्यमाणां वाचं व्याजहार उवाच ॥ ९ ॥

'शूरशिखामणीनां पार्थानां याच्ञया दायं दापयितुम् अहं नागतः, अपि तु दुर्योधनाग्रेसरदुर्योधनस्य दण्डार्हत्वं सर्वेषां पुरः प्रकटयितुमागत इति द्योतयन्नाह—धरेति । धराभुजा गुरुणा राज्ञा किम् एतस्मिन्कार्ये न किंचित् प्रयोजनमित्यर्थः । एवमग्रेऽपि तटिनीभुवा विचारशालिना भीष्मेण किम् । अधुना दूत्ये वसता दूतकर्म कुर्वता मया मित्रेणाऽपि किम् । एते पार्थाय पृथिवीं दातुं न समर्थाः, अपि तु गन्धवहस्य वायोः सूनोः भीमस्य गदैव पार्थाय धर्मराजाय धरित्रीं दातुं समर्था भवेत् । युद्धे एको भीम एव गदाप्रहारेण दुर्योधनादीन् हत्वा धर्माय पृथिवीं दातुं समर्थोऽस्तीति भावः' ॥ ४५ ॥

शौरेः तां वाचम् आकर्ण्य साध्वसेन भयेन आक्रान्तं चेतो येषां ते सभास्ताराः भीष्मद्रोणादयः सभ्याः जोषंभावं तूष्णींभावमेव उत्तरं युगपत् एककालावच्छेदेन दधुः । सर्वेऽपि तूष्णींभावं दधुः, केऽप्युत्तरं न ददुरित्यर्थः ॥ ४६ ॥

सः धृतराष्ट्रसूनुः बलेन अवलिप्तैः गर्वितैः त्रिभिः कर्णदुःशासनशकुनिभिः सहायैः सह संमन्त्र्य गदाग्रजन्मानं श्रीकृष्णं गन्धर्वराजेन कृतां स्वां स्वसंबन्धिनीं दशां रज्जुभिः बन्धनावस्थां प्रति नेतुमियेष । पार्थानां सहायमेकाकिनमागतं कृष्णं बद्धुमैच्छदित्यर्थः ४७

तत् बन्धनोद्योगकरणं श्रुत्वा कुपितः स्वयमसौ एकः सन्नपि सर्वात्मकः सर्वस्वरूपः हरिः ताराभिः नक्षत्रैर्नवभिर्ग्रहैश्च शैलैः वनैः सागरैश्च निबिडितां पेट्यां मञ्जूषायां भूषणमञ्जरीमिव भूषणविशेषा या मञ्जरी तामिव कुक्षौ धृतां जगन्मण्डलीं सभाजिरजुषां सभाङ्गणस्थानां दृक्पङ्क्तेः नेत्रसमूहस्य घण्टापथे समीपविस्तीर्णस्थले जङ्घालां जवेन गमनकर्त्रीम् अतनोत् । हरिः मामेकाकिनं दृष्ट्वा मद्बन्धनोद्योगे कुतुकिनां दुर्योधनादीनामुत्साहभङ्गाय निग्रहसामर्थ्यदर्शनाय च विश्वरूपं प्रकटीचकारेति भावः ॥ ४८ ॥

---

१ क. पेट्याम् । २ उपमालंकारः ।

तस्मिन्नङ्गुष्ठमात्रे नव इव मुकुरे वीक्ष्य सर्वं प्रपञ्चं
विस्मेराः सिद्धविद्याधरसुरसंदसः पुष्पवर्षं व्यमुञ्चन् ।
सान्द्रं मोहान्धकारं सकलमुनिजनः संमदाश्रूणि भीष्मः
क्षत्ताक्ष्णोः पक्ष्मपातं करिपुरजनता प्रेम दुर्योधनेऽपि ॥ ४९ ॥
अस्याट्टहासध्वनिरादिपुंसो
विश्रृङ्खलं व्योम्नि विजृम्भमाणः ।
दिक्पालसौधावलिजालकाना-
मध्यापकत्वं विभरांबभूव ॥ ५० ॥
संस्तूयमानचरितस्य जनैस्त्रिलोकी-
साधारणीकृतकृपस्य हरेः प्रसादात् ।
चक्षुष्मतां समधिरुह्य धुरं मुहूर्तं
भूयस्ततोऽप्यवततार स भूमिपालः ॥ ५१ ॥

---

अङ्गुष्ठमात्रे अङ्गुष्ठप्रमाणे नवमुकुरे इव तस्मिन्कृष्णे सर्वं प्रपञ्चं वस्तुजातं वीक्ष्य विस्मेराः विस्मयशीलाः सिद्धविद्याधराणां सदसः सभायाः 'स्त्रीनपुंसकयोः सदः' इत्यमरात् सदःशब्दस्य स्त्रीत्वम् । पुष्पाणां वर्षं वृष्टिं व्यमुञ्चन् । सकलमुनिजनः सान्द्रं निबिडं मोहरूपम् अन्धकारं व्यमुञ्चत् । अयं भगवान् जगन्निर्माणकर्ता ईश्वर इति ज्ञातवानित्यर्थः । भीष्मः संमदाश्रूणि आनन्दाश्रूणि व्यमुञ्चत् । एतदैश्वररूपदर्शनेन मम जन्मनः कृतार्थता जातेत्यानन्दाविर्भावः । क्षत्ता विदुरः अक्ष्णोः पक्ष्मपातं नेत्रनिमीलनं व्यमुञ्चत् । आश्चर्येण नेत्रनिमीलनं विस्मृतवानित्यर्थः । करिपुरं हस्तिनापुरं तत्संबन्धिनी जनता जनसमूहोऽपि दुर्योधनप्रेम व्यमुञ्चत् । एतादृशेऽपि दौष्ट्यं करोति इति प्रेमत्यागः ॥ ४९ ॥

अस्य आदिपुंसः श्रीकृष्णस्य अट्टहासस्य सशब्दहासस्य ध्वनिः विश्रृङ्खलम् अप्रतिबन्धं यथा तथा व्योम्नि विजृम्भमाणः वर्धमानः सन् दिक्पालानाम् इन्द्रादीनां सौधावलेः सदनपङ्क्तेः जालकानां गवाक्षाणाम् अध्यापकत्वं बिभरांबभूव दधार । यथा अध्यापकोक्तगिरं श्रुत्वा शिष्याः पठन्ति तथाऽट्टहासध्वन्यन्तरं स्वर्गस्थदिक्पालानां सौधावलिगवाक्षेषु प्रतिध्वनयो बभूवुरित्यर्थः । अट्टहासध्वनिः स्वर्गं जगामेति भावः ॥ ५० ॥

सः भूमिपालः धृतराष्ट्रः जनैः संस्तूयमानचरितस्य त्रिलोक्यां साधारणीकृता कृपा येन तस्य हरेः प्रसादात् मुहूर्तं घटिकाद्वयपर्यन्तं चक्षुष्मतां धुरं समधिरुह्य सम्यगारोहणं कृत्वा भूयः पुनरपि ततः धुरः अवततार पूर्वावस्थां प्रापेत्यर्थः । यदा हरिणा विश्वरूपं प्रकटीकृतं तदा मम चक्षुष्मत्तां दास्यसि चेत्तर्हि विश्वरूपदर्शनं करिष्यामीति धृतराष्ट्र-

---

१ ख. संस्मेराः । २ क. निकराः । ३ क. वृष्टीर्व्यं°, ख. वृष्टिम् । ४ क. ख. कम्पम् । ५ अत्रानेकक्रियायौगपद्यात्समुच्चयालंकारः । ६ अत्र त्रिलोकीत्यादिविशेषणस्य तत्तादृगपराधिदुर्योधनजनकत्वेऽपि धृतराष्ट्रस्य चक्षुर्दानौचित्याभिप्रायगर्भत्वात्परिकरालंकारः ।

ओजस्तवेदमुपसंहर माधवेति
घुष्यत्सु सत्सु गुरुभीष्मपुरोगमेषु ।
घोरं विहाय निमिषेण कुशेशयाक्षो
गोपीदृशां कुतुकहेतुमवाप रूपम् ॥ ५२ ॥

ततस्तादृशं निरुपमानं तस्य महिमानमनुभूय चरितार्थो मुनिसार्थः समुपसृत्य शान्तमूर्तिं तमेवमस्तौषीत् ॥ १० ॥

भगवन्महात्मभिरपि योगिभिरविदितप्रभावाय तस्मै प्रभवे भवते भगवते नमः ॥ ११ ॥

दुग्धाम्बुराशितनयानयनद्वयेन
तुल्याकृतित्वमहिमानमिवोपगन्तुम् ।
मत्स्यत्वमेत्य भुवि यः सुरवैरिनीता
मध्येसमुद्रमनवीनगवीर्विचिक्ये ॥ ५३ ॥
मन्थानशैलमपि मार्गरुधं हिमांशो-
र्वीचीकणैः सदृशमङ्गविषक्तिभाग्भिः ।

---

प्रार्थितेन हरिणा कृपया दत्तचक्षुष्मत्तया रूपं दृष्ट्वा पुनः पूर्ववत् अन्धो बभूवेति भारतीयेतिहासः ॥ ५१ ॥

'हे माधव ! इदं तव ओजः ऐश्वरं सामर्थ्यम् उपसंहर आच्छादय' इति गुरुभीष्मपुरोगमेषु घुष्यत्सु आक्रोशत्सु सत्सु कुशेशयाक्षः कृष्णः निमिषेण नेत्रनिमेषात्मकात्यल्पकालेन घोरं रूपं विहाय गोपीदृशां कुतुकहेतुं कौतुकदायि रूपम् अवाप स्वीचकारेत्यर्थः ॥ ५२ ॥

ततः तादृशं निरुपमानम् अलौकिकं तस्य कृष्णस्य महिमानम् अनुभूय चरितार्थः कृतार्थः मुनिसार्थः ऋषिसमूहः शान्तमूर्तिं समुपसृत्य समीपं गत्वा एवं वक्ष्यमाणप्रकारेण अस्तावीत् ॥ १० ॥

' हे भगवन् ! महात्मभिः महाप्रभावैः योगिभिरपि अविदितप्रभावाय तस्मै भगवते षडैश्वर्यसंपन्नाय ते नमोऽस्तु ॥ ११ ॥

तामेव दशावतारस्तुतिं दुग्धाम्बुराशीत्यादिभिर्दशभिः पद्यैराह—यः भगवान् दुग्धाम्बुराशेः क्षीरसमुद्रस्य तनया लक्ष्मीः तस्याः नयनद्वयेन तुल्या आकृतिः शरीराकारो यस्य तस्य भावस्तत्त्वं तेन यो महिमा तदेकदेशनयनसादृश्यलाभात् स्वस्मिन्महत्त्वम् उपगन्तुं प्राप्तुमिव भुवि मत्स्यत्वम् एत्य प्राप्य मध्येसमुद्रं समुद्रस्य मध्ये सुरवैरिणा शङ्खासुरेण नीताः अनवीनाश्च ताः गावश्च अनवीनगव्यः ता अनादिवेदानित्यर्थः, विचिक्ये अन्विषेष॥५३॥

यः कमठाकृतिः कूर्माकारः हिमांशोश्चन्द्रस्य मार्गरुधं मार्गरोधकमपि मन्थानशैलं

---

१ क. समुपसृत्येति नास्ति । २ क. तस्मै भगवते नमः । ३ ख. प्रभवते । ४ अत्र गोपीदृक्कुतुकहेतुत्ववस्तुना अतिमूढानां तासामेव नयनानन्दकारत्वे किमुतान्येषामित्यर्थापत्त्यलंकारप्रतीतेः वस्तुनाऽलंकारध्वनिः ।

काये बभार चरमे कमठाकृतिर्यो
जीवातुमुद्गमयितुं जलधेः सुराणाम् ॥ ५४ ॥
दंष्ट्राग्रवर्ति किटिवेषधरस्य यस्य
क्ष्मामण्डलं कुवलयाकरकोमलाभम् ।
ऊर्ध्वप्रसृत्वरबकावलिकावलीढ-
प्रावृट्पयोदवलयस्य बभार लीलाम् ॥ ५५ ॥
इन्द्रद्विषन् मदगजस्य हिरण्यनाम्नो
भेदं रसस्य पिशितस्तवकावलीनाम् ।
जिज्ञासमान इव यो धृतसिंहभावः
स्तम्भादुपेत्य नखरैस्तमुरस्यभाङ्क्षीत् ॥ ५६ ॥
याच्ञाप्रतारणवशादधियज्ञवाटं
यो वामनत्वमवलम्ब्य बलिं निगृह्णन् ।
दुःखं सतां स्वमिव खर्वतमं सुखं च
स्वीयं पदक्रममिवोन्नतमाततान ॥ ५७ ॥

---

मन्थनसाधनीभूतं मन्दरपर्वतम् अङ्गविपत्तिम् अङ्गसङ्गं भजन्ति ये तथाभूतैः वीचीकणैः समुद्रलहरीबिन्दुभिः सदृशं यथा तथा चरमे काये पृष्ठभागे बभार दधार, महापर्वतमपि जलबिन्दुवद्धारेति भावः । अनेन कमठाकृतेःपरममहत्त्वं ध्वन्यते । किमर्थं बभार तदाह– जलधेः सकाशात् सुराणां जीवातुं जीवनौषधम् अमृतम् उद्गमयितुम् ॥ ५४ ॥

किटिवेषधरस्य वराहाकृतेः यस्य दंष्ट्राग्रवर्ति कुवलयाकरवत् उत्पलविशिष्टसरोवरवत् कोमला मनोहरा आभा यस्य तत् क्ष्मामण्डलम् ऊर्ध्वं प्रसृत्वरी उपरि प्रसरणशीला या बकावलिका तया अवलीढं युक्तं यत् प्रावृट्पयोदवलयं वर्षाकालिकमेघमण्डलं तस्य लीलां शोभां बभार । अत्र वराहमेघमण्डलयोः क्ष्मामण्डलबकावलिकयोश्चोपमेयोपमानभावः ॥ ५५ ॥

धृतसिंहभावः धृतसिंहवेषः हिरण्यनाम्नः ' नामैकदेशे नामग्रहणम् ' इतिन्यायेन हिरण्यकशिपुनाम्नः इन्द्रद्विषन् दैत्य एव मदगजः मत्तहस्ती तस्य पिशितस्तबकावलीनां मांसगोलकसमूहानां रसस्य भेदं रुचिविशेषं जिज्ञासमान इव ज्ञातुमिच्छन्निव स्तम्भादुपेत्य आविर्भूय तं दैत्यम् उरसि नखरैः अभाङ्क्षीत् व्यदारयत् ॥ ५६ ॥

यः याच्ञया पदत्रयभूमियाच्ञया प्रतारणवशात् वामनत्वं ह्रस्वत्वम् अवलम्ब्य धृत्वा अधियज्ञवाटं यज्ञमण्डपे बलिं निगृह्णन् स्वमिव स्वकीयवपुरिव सतां दुःखं खर्वतमम् अत्यल्पम् आततान चकार । स्वीयं पदक्रममिव पदन्यासमिव सतां सुखम् उन्नतं महत् आततान ॥ ५७ ॥

---

१ क. ख. 'याङ्कुरको' । २ क. द्विपो । ३ क. शालम् । ४ अत्रान्यलीलाया अन्यत्रासंभवेनौपम्याक्षेपादसंभवद्धर्मसंबन्धनिबन्धनो निदर्शनालंकारः । ५ अत्र रूपकानुप्राणितोत्प्रेक्षा । ६ अत्र प्रकृतयोः भगवच्छरीरसज्जनदुःखयोरतिह्रस्वीकरणेन तत्पदक्रमतत्सुखयोश्चात्युन्नतीकरणेन चौपम्यस्य गम्यत्वात्केवलप्रकृतगोचरतुल्ययोगिताभेदद्वयस्य संसृष्टिः ।

सृष्टौ पुरा मुखभुजोरुपदे मुरारे-
रङ्गं द्वितीयमभजत् किमु वन्ध्यभावम् ।
इत्येव संशयमशेषजनस्य चक्रे
यस्याहवेषु करताण्डवितः कुठारः ॥ ५८ ॥
श्वश्रूर्मुनेरजनि यस्य पदाब्जधूलि-
र्यत्कृष्टमीशधनुराप शरव्यकृत्यम् ।
यस्माद्धियाऽब्धिरपि कम्पमकम्पमागा-
द्यत्पत्त्रिणो विघस एव विभीषणोऽभूत् ॥ ५९ ॥
हन्यामहं युधि रिपूनहमेव हन्या-
मित्येव यन्मुसललाङ्गलयोर्विवादः ।
यस्याम्बरं निजरुचिप्रतिमल्लवर्णं
यत्षष्ठसंस्करणमासवपानमाहुः ॥ ६० ॥

---

यस्य आहवेषु युद्धेषु करे ताण्डवितः कुठारः पुरा सृष्टौ सृष्ट्यारम्भे मुखं च भुजश्च ऊरुश्च पदं च तस्मिन् प्राण्यङ्गत्वादेकद्वावः तन्मध्ये इत्यर्थः, मुरारेः विराड्रूपस्य विष्णोः द्वितीयम् अङ्गं भुजः वन्ध्यभावं वन्ध्यत्वमभजत् किमु, इत्येव संशयम् अशेषजनस्य चक्रे । सृष्ट्यारम्भे विराड्रूपस्य पुरुषस्य मुखभुजोरुपदावयवेभ्यो ब्राह्मणक्षत्रियवैश्यशूद्रवर्णा जाताः । तथा च श्रुतिः "ब्राह्मणोऽस्य मुखमासीत्" इत्यादिः । क्षत्रियकृतस्वपितृहननक्रुद्धेन परशुरामेण परशुना सर्वक्षत्रियहननादयं संशयः ॥ ५८ ॥

यस्य पदाब्जधूलिः मुनेः गौतमऋषेः श्वश्रूः अजनि जाता । दाशरथिरामस्य पादरजसा गौतमभार्याहिल्योद्धारात् अहिल्यायाः धूलिजन्यत्वेन धूलेः श्वश्रूत्वम् । यत्कृष्टम् आकृष्टं धनुः ईशधनुः शरव्यस्य लक्ष्यस्य कृत्यं द्विधाभवनरूपकार्यम् आप प्राप । बाणमोचनानन्तरं लक्ष्ये द्वैविध्यं भवति तद्धनुषैवानुभूतमित्यर्थः । यस्माद्धिया अब्धिरपि अकं दुःखं पातीत्यकम्पं दुःखदमित्यर्थः, कम्पम् आगात् प्राप । लङ्कागमनसमये स्वकृतमार्गबन्धेन क्रुद्धं रामं दृष्ट्वा शोषणभयात् समुद्रः कम्पं प्रापेत्यर्थः । यद्वा अकम्पं कम्पाभावं स्तब्धतामपि प्राप । रहस्युपांशुशब्दश्रवणाय हस्तसंज्ञया घोषवारणात् स्तब्धीभावः । विभीषण एव यस्य पत्रिणः बाणस्य विघसः भोज्यावशेषोऽभूत् । यस्य बाणेन सर्वराक्षसा हताः, विभीषण एव शरणागमनात् अवशिष्ट इति भावः । 'अमृतं विघसो यज्ञशेषभोजनशेषयोः' इत्यमरः ॥ ५९ ॥

'अहं युधि रिपून् हन्याम् अहमेव रिपून्हन्यां त्वं न' इत्येव एतादृश एव यस्य भगवतः मुसललाङ्गलयोः आयुधयोः विवादः वाक्कलहः आसीत् । यस्य अम्बरं वस्त्रं निजरुचेः स्वश-

---

१ क. पत्रिणाम् । २ अत्र क्षत्रियकुलनिर्मूलनस्य भगवद्भुजवन्ध्यत्वरूपेण वर्णनात्पर्यायोक्त्यलंकारस्य अर्थापत्तिप्रमाणालंकारस्य च द्वयोरेकवाचकानुप्रवेशसंकरः । ३ अत्र तृतीयपादवाक्यार्थे विरोधाभासेन पर्यायोक्त्यलंकारत्रयस्य इतरवाक्यत्रयार्थघटकस्य संसृष्टिः ।

यः स्तन्यपानसमये सति पूतनायाः
प्राणानपि प्रविदधे परमोपदंशम् ।
नाकाधिपस्य वनभूरपि येन सद्यो
नारीमुदे पदनखम्पचधूलिरासीत् ॥ ६१ ॥

वार्यस्तपोधनवरेण्यमनःखलीनै-
स्तृण्यां मुहुः कवलयन् जगदार्तिरूपाम् ।
नीचान्विधातुमसुरान्निजशृङ्गतुल्यान्
कोपादुदेष्यति च यः कुहनातुरङ्गः ॥ ६२ ॥

एतैः स्तवैर्हृष्टमना यथार्थैर्मन्दस्मितश्रीमधुराधरोष्ठः ।
पीठादुदस्थादथ पीतवासा मेरोर्नितम्बादिव मेघशावः ॥ ६३ ॥

---

रीरशुभ्रकान्तेः प्रतिमल्लः प्रतिभटः वर्णो यस्य तथाभूतमासीत् । नीलवर्णमासीदित्यर्थः । शुभ्रवर्णकृष्णवर्णविरोधादियमुक्तिः । यस्य आसवपानं मधुपानं षष्ठसंस्करणं षष्ठं संस्कारम् अन्नप्राशनमाहुः । यस्य बाल्यप्रभृति अन्नप्राशनापेक्षया आसवप्राशनं प्रियमित्यर्थः । बलभद्रस्य अष्टमावतारत्वमताभिप्रायेणेयमुक्तिः ॥ ६० ॥

यः पूतनायाः स्तनपानसमये सति प्राणानपि परमोपदंशं भोजनक्रियायाः सौकर्यकारि परमं व्यञ्जनं प्रविदधे चक्रे । स्तन्यपानसमये शाकाद्युपदंशस्थाने तस्याः प्राणान् चक्रे इत्यर्थः । प्राणैः सह स्तन्यं पपाविति भावः । येन भगवता हेतुभूतेन नारीमुदे सत्यभामाप्रीत्यै नाकाधिपस्य इन्द्रस्य वनभूरपि सद्यः, पदनखम्पचा पदनखपाककर्त्री अतितप्ता आसीत् । नरकासुरवधानन्तरम् अदित्यै कुण्डलार्पणाय सत्यभामया सह स्वर्गं गते कृष्णे सत्यभामाप्रार्थनया कल्पवृक्षपारिजातापहरणात् छायाभावेन नन्दनवनभूः सूर्यतापेन तप्ताऽभवत् इति भावः । पुराणान्तरोक्त्या कृष्णस्यैव बौद्धावतारत्वं स्वीकृत्येयमुक्तिः ॥ ६१ ॥

यः कुहनया कपटेन तुरङ्गः नीचान् यवनरूपान् असुरान् निजशृङ्गेण तुल्यान् वधेनाभावरूपान् विधातुं कर्तुं कोपादुदेष्यति अवतरिष्यति । अश्वस्य यथा शृङ्गाभावः तथा वधेन असुराणामभावः, तं कर्तुम् उदेष्यतीति भावः । कीदृशस्तुरङ्गः, तपोधनेषु वरेण्यानां श्रेष्ठानां मनोरूपैः खलीनैः मुखरज्जुभिः वार्यः स्वाधीनः करणीयः । पुनः कीदृशः, जगदार्तिरूपां जगत्संबन्धिनी या आर्तिः असुरादिकृतपीडा तद्रूपां तृण्यां तृणसमूहं मुहुः कवलयन् भक्षयन् दूरीकुर्वन्नित्यर्थः । अत्राश्वारोहापेक्षयाऽश्वस्य प्राधान्यविवक्षयेयमुक्तिः ॥ ६२ ॥

अथ यथार्थैः अर्थमनतिक्रम्य वर्तमानैः एतैः स्तवैः हृष्टमनाः मन्दस्मितं तस्य श्रिया शोभया मधुरः सुन्दरः अधरोष्ठो यस्य सः, पीते वाससी वस्त्रे यस्य सः कृष्णः पीठात् तुङ्गमञ्चकात् उदस्थात् उत्तस्थौ । कस्मात्क इव, मेघस्य शावः शिशुः मेरोः नितम्बादिव कटकादिव ॥ ६३ ॥

---

१ क. वत । २ क. कृतन । ३ अत्रोपमालंकारः स्पष्टः ।

आस्थानाद्बहिरेत्य कैटभरिपुर्गाङ्गेयमालिङ्ग्य तं
पश्चार्धे परिमृश्य भूपमितरानापृच्छ्य सर्वान्कुरून्।
आघ्रायातिचिरेण मूर्ध्नि विदुरं युक्तं शताङ्गं हयै-
रारूढोऽभिययौ विराटनगरीमन्तः स्मरन्पाण्डवान् ॥ ६४ ॥

श्रुत्वा ततः परमतं पुरुषोत्तमात्ते
फेनायमानरणसन्नहनाब्धिपूराः।
आराधयन्विधिवदस्त्रगणं श्मशाने
पीतां वमन्तमिव कान्तिमिषेण धूम्याम् ॥ ६५ ॥

अत्रान्तरे—

ततः परं जह्नुकुमारिकाया-
स्तटीवने कृत्यविदां पुरोगा।
पृथा तपस्यन्तमवाप कर्णं
कर्णे प्रवृत्तिस्तु न किंचिदस्याः ॥ ६६ ॥

कमनीययशोभरे तनूजे कवचोत्कर्तनझर्झराङ्गकेऽपि।
नलिनान्मृदुलं नरेन्द्रपत्न्या नयनं तत्र चिरेण संचचार ॥ ६७ ॥

---

कैटभरिपुः कृष्णः आस्थानात् सभायाः बहिः एत्य तं गाङ्गेयं भीष्मम् आलिङ्ग्य भूपं धृतराष्ट्रं पश्चार्धे पृष्ठभागे परिमृश्य हस्तस्पर्शं कृत्वा इतरान् सर्वान् कुरून आपृच्छ्य स्वगमनप्रश्नं कृत्वा विदुरं मूर्ध्नि अतिचिरेण प्रेमातिरेकात् बहुकालम् आघ्राय च हयैः युक्तं शताङ्गं रथम् आरूढः अन्तः अन्तःकरणे पाण्डवान् स्मरन् सन् विराटनगरीम-भिययौ अभिमुखं जगाम ॥ ६४ ॥

ततः पुरुषोत्तमात् कृष्णात्परेषां दुर्योधनादिशत्रूणां मतं दायानर्पणपूर्वकयुद्धकरणलक्षणं श्रुत्वा फेनायमानः फेनमुद्वमन् रणसन्नहनमेव युद्धसन्नद्धतैव अब्धिपूरो येषां ते तथाभूताः संक्षुभितसेनासमुद्रा इत्यर्थः, ते पाण्डवाः अस्त्रगणं पाशुपतब्राह्माद्यस्त्रसमूहं विधिवदा-राधयन् आराधितवन्तः। कीदृशमस्त्रगणं, श्मशाने पीतां धूम्यां धूमसमूहं कान्तिमिषेण वमन्तमिव, कान्त्या देदीप्यमानमित्यर्थः ॥ ६५ ॥

अत्रान्तरे युद्धनिश्चये उभयसेनासन्नद्धतासमये—

ततः परं कृत्यविदां यस्मिन्समये यत्कर्तव्यं तज्जानतां मध्ये पुरोगा अग्रेसरा पृथा जह्नुकुमारिकायाः जाह्नव्याः तटीवने तपस्यन्तं तं कर्णम् अवाप प्राप। अस्या पृथायाः प्रवृत्तिः आगमनं तु तस्य कर्णे श्रोत्रे किंचिदपि न अवाप। तस्य समाध्यवस्थायां सत्यां कर्णेनास्याः आगमनं न ज्ञातमित्यर्थः ॥ ६६ ॥

कवचस्य सहजकवचस्य उत्कर्तनेन इन्द्राय दातुं छेदनेन जर्जराणि निम्नोन्नततया कृशी-

---

१ क. तत्रान्तरे। २ क. कर्णम्। ३ क. कर्कशाङ्गकेऽपि, ख. जर्जराङ्गकेऽपि। ४ अत्र प्रवर्धमानर-णसंनाहस्य विशेषणगत्या स्वेष्टदेवताभूतास्त्रपूजनहेतुत्वात्काव्यलिङ्गं वमन्तमिवेति सापह्नवोत्प्रेक्षया रणसंनाहनाब्धिपूरेति रूपकेण च संसृष्टम्।

स तत्र पूतः सवनाभिषेकैस्तपोवसाने तपनस्य सूनुः।
श्रोत्रे वितेने शुचिमक्षमालां नेत्रे च राज्ञीं निकटप्रपन्नाम्॥ ६८॥
विनतः पदयोरनन्तरं विहिताशीः परिरभ्य तं सुतम्।
परिहर्तुमुवाच पञ्चतामुभयीं धर्मसुतादिसूनुषु॥ ६९॥
अयि वत्स रवेरनुग्रहादजनिष्ठा मयि भाग्यमर्थिनाम्।
तनुरक्षणमात्रकारिणौ तव राधाधिरथौ न जन्मभूः॥ ७०॥
जहीहि राधातनयत्वबुद्धिं सहैव दुर्योधनसौहृदेन।
गृहाण वाण्या सह धर्म्यया मे सहोदरान्धर्मतनूजमुख्यान्॥ ७१॥
यस्मै कस्मैचन त्वं सहजकवचदः प्रार्थनातुल्यकालं
मातुः साक्षान्निदेशे मम सुकरतमे मा कृथा मन्दभावम्।

भूतानि अङ्गानि अवयवाः यस्य सः कवचोत्कर्तनजजर्जैराङ्गः, ततः अनुकम्पायां कप्रत्ययः। तस्मिन्नपि कमनीयः शोभाभरो यस्य तस्मिंस्तनूजे पुत्रे कर्णे नलिनात्कमलात् मृदुलं नरेन्द्रपत्न्याः पृथायाः नयनं चिरेण संचचार। जन्मसमये दृष्टं पुत्रं पुनरिदानीं सादरमवलोकयामासेत्यर्थः॥ ६७॥

तत्र वने सवनाभिषेकैः त्रिकालस्नानैः पूतः सः तपनसूनुः कर्णः तपसः अवसाने शुचिम् अक्षमालां रुद्राक्षमालां श्रोत्रे कर्णे वितेने स्थापयामास, निकटे समीपे प्रपन्नां राज्ञीं पृथां नेत्रे च वितेने तां ददर्शेत्यर्थः॥ ६८॥

पदयोः विनतः प्रणामात् अनन्तरं विहिताशीः दत्ताशीर्वादा तं सुतं कर्णं परिरभ्य आलिङ्ग्य धर्मसुतादिषु युधिष्ठिरादिषु उभयीं द्विविधां पञ्चतां पञ्चत्वसंख्यां मरणं च परिहर्तुं निराकर्तुम् उवाच। कर्णस्य पुत्रेषु गणनात् षट्त्वसंख्यया पञ्चत्वसंख्यापरिहारः, तथा धर्मादिषु बन्धुत्वज्ञानेन तत्पक्षे प्रविष्टस्य तद्धननपरिहारश्चेति भावः॥ ६९॥

अयीति कोमलामन्त्रणे। अयि वत्स! अर्थिनां याचकानां भाग्यं त्वं रवेरनुग्रहात् मयि अजनिष्ठाः जातः, मत्पुत्रोऽसीत्यर्थः। सूतजातीयौ राधाधिरथौ तु तव तनोः रक्षणमात्रकारिणौ त्वत्पोषकौ मातापितरावित्यर्थ,ः जन्मभूः जन्मस्थानं जन्महेतू न भवतः॥ ७०॥

मत्पुत्रत्वात् मद्वचनानुसरणं कुर्वित्याह—**जहीति**। दुर्योधनस्य सौहृदेन मित्रत्वेन सहैव राधातनयत्वं स्वस्मिन् राधापुत्रत्वमिति बुद्धिः तां जहीहि त्यज। धर्म्यया धर्मादनपेतया मे वाण्या सह धर्मतनूजमुख्यान् युधिष्ठिरप्रमुखान् सहोदरान् सोदर्यबन्धून् गृहाण आत्मीयत्वेन स्वीकुरुष्व॥ ७१॥

मद्वचनानुसरणम् अवश्यं कर्तव्यमन्यथा तवापकीर्तिः स्यादित्याह—**यस्मा इति**।

१ क. परमाभि°। २ क. निकटम्। ३ अत्र तादृङ्मृदुलनयनतादृक्कठिनाङ्गयोः घटनाया वैरूप्याद्विघटनात्मको विषमालंकारः। पुत्रवात्सल्यशोभरसमर्थितकर्कशाङ्गमृदुनयनसंचारात्मककाव्यलिङ्गं च द्वावप्येकवाचकानुप्रवेशसंकीर्णौ। ४ अत्र राधातनयत्वबुद्धिदुर्योधनसौहृदयोस्त्यागेन वाणीयुधिष्ठिरादिसोदर्ययोः ग्राह्यत्वेन चौपम्यस्य गम्यत्वात्तुल्ययोगिताद्वयस्याङ्गाङ्गिभावेन संकरः।

पाराङ्मुख्यं विधत्ते गुरुजनवचनानुष्ठितौ यस्य चेतो
धिक्शब्दस्याभिधेयं जगदिदमखिलं दोग्धि तस्मै मुखेन॥७२॥

इति दशनकिरणव्याजादन्तश्चिररक्षितं तदंशस्तन्यं प्रकाशयन्त्या इव कुन्त्या निदेशं कर्णः कर्णदेशाध्वनीनं विधाय साकमञ्जलिना समुचितमुत्तरं बबन्ध ॥ १२ ॥

भोजान्ववायो भुवने प्रतीतः कुलं कुरूणां च तथा द्वयेऽस्मिन् ।
तवाम्ब जन्मोपयमोत्सवौ चेत्त्वय्येव जागर्त्युचितज्ञभावः ॥ ७३ ॥
अङ्गद्वयं मे परिपालनीयं कर्ण त्वया शूरजनाग्रगेण ।
एवं वशे मे विततान यस्तत्तस्यापि सख्यं किमुपेक्षणीयम् ॥७४॥
परस्य लोकस्य गतेर्हि विघ्नं कृतघ्नतामेव वदन्ति सन्तः ।
सा न स्पृशेन्मामधुना यथा त्वं तथा प्रसीदाम्ब कृपार्द्रचित्ता ॥७५॥

---

त्वं यस्मै कस्मैचन पुरुषाय प्रार्थनातुल्यकालं यथा तथा सहजकवचं ददाति तथाभूतोऽसि। अतः सुकरतमे अतिशयेन कर्तुं शक्ये मातुः मम साक्षात् निदेशे आज्ञाविषये मन्दभावम् आलस्यं मा कृथाः । यस्य पुरुषस्य चेतः गुरुजनवचनस्य अनुष्ठितौ कर्तव्यताय पाराङ्मुख्यं पराङ्मुखतां विधत्ते वचनानुसरणं न करोतीत्यर्थः, तस्मै पुरुषाय इदम् अखिलं जगत् मुखेन धिक्शब्दस्याभिधेयम् अर्थं निन्दामित्यर्थः, दोग्धि ददाति। वदतीत्यर्थः ॥ ७२ ॥

कर्णः इति भाषणसमये मुखविवरेण दशनकिरणानां व्याजात्कपटात् अन्तः शरीरमध्ये चिरं रक्षितं तस्य कर्णस्य अंशं भागं स्तन्यं स्तनसंबन्धिक्षीरं प्रकाशयन्त्या इव प्रकटयन्त्या इव कुन्त्याः निदेशं कर्णदेशे श्रोत्रदेशे अध्वनीनं पान्थं विधाय श्रुत्वेत्यर्थः, अञ्जलिना साकं समुचितं योग्यम् उत्तरं बबन्ध ददावित्यर्थः ॥ १२ ॥

हे अम्ब मातः! भोजान्ववायः यादववंशः भुवने प्रतीतः प्रसिद्धः। तथा कुरूणां कुलं च प्रतीतम्। अस्मिन्द्वये तव जन्मोपयमोत्सवौ क्रमेण जन्मविवाहोत्सवौ स्तश्चेत्तर्हि त्वय्येव उचितज्ञभावः उचितज्ञता जागर्ति । एतद्विषये त्वय्येव विचारकर्तव्यतेति भावः ॥७३॥

त्वद्वचनानुसरणे मम कृतघ्नता स्यादित्याह–**अङ्गेति** । 'हे कर्ण! शूरजनेषु अग्रगेण पुरःसरेण त्वया मे अङ्गयोः शरीरदेशविशेषयोः द्वयं परिपालनीयं त्वया अङ्गदेशोपभोगं कृत्वा मद्रक्षणं कर्तव्यम्' एवमुक्त्वा यः दुर्योधनः तत् द्वयं मे मम वशे आधीनतायां विततान चकार, तस्यापि सख्यम् उपेक्षणीयं किम्। सर्वथा नोपेक्षार्हमित्यर्थः ॥ ७४ ॥

कृतघ्नता तु महादोष इत्याह–**परस्येति** । सन्तः सदसद्विचारशीलाः कृतघ्नतामेव परस्य लोकस्य स्वर्गादेः गते प्राप्तेः विघ्नं प्रतिबन्धकं वदन्ति । हि प्रसिद्धम् । हे अम्ब ! अधुना सा कृतघ्नता मां यथा न स्पृशेत् तथा त्वं दयार्द्रचित्ता प्रसीद ॥ ७५ ॥

---

१ क. °नुष्ठिते । २ क. सुखेन । ३ ख. चिरकालर° । ४ क. तदंशम् । ५ क. °पयमश्च चेद्वौ । ६ क. अङ्ग । ७ अत्र तादृगुपकारविश्वासवाक्यार्थेन दुर्योधनसख्यानुपेक्षणीयसमर्थनात्काव्यलिङ्गम् ।

इतिवादिनो रविसुतस्य मानसं
न निवर्तते स्म धृतराष्ट्रनन्दनात् ।
अपि तु स्वकीयतनयान्महाभुजा-
दनवाप्य काममियमेव केवलम् ॥ ७६ ॥

इति श्रीमदनन्तभट्टकविकुञ्जरविरचितचम्पूभारतेऽष्टमः स्तवकः ।

## ९ नवमः स्तवकः ।

अथोभये ते कुरवो रणाय स्वनामधेयोपपदं प्रसिद्धम् ।
क्षेत्रं व्यगाहन्त निरुद्धपार्श्वाः शताङ्गमातङ्गतुरङ्गयोधैः ॥ १ ॥

हिरण्वत्यास्तत्र त्रिदशविनुतायास्तटतरु-
प्रसूनानां गन्धैर्मथितपथिखेदाः करिघटाः ।
कृतज्ञत्वेनैव स्वयमपि मदाम्भोलहरिभि-
र्ददुस्तस्यै वह्नीरतिसुरभिगन्धीः प्रियसखीः ॥ २ ॥

अस्मज्जन्मभुवः समानभिधया सत्तापि सिन्धूनिमा-
न्पेष्यामो वयमद्य शोषणमिति स्फीताभ्यसूया इव ।
सेनासैन्धवपङ्क्तयः खुरपुटैर्दीप्रक्षुरप्रोपमै-
र्भूमेरुल्लिखितात्स्थलादजनयन्भूयो रजोमण्डलम् ॥ ३ ॥

---

इति वादिनः उक्तवतः रविसुतस्य कर्णस्य मानसं धृतराष्ट्रनन्दनात् न निवर्तते स्म, अपि तु महाभुजात् स्वकीयतनयात् कर्णात् कामं मनोरथम् अनवाप्य केवलं स्वयमेव निवर्तते स्म ॥ ७६ ॥

इति श्रीमदनन्तभट्टकृतचम्पूभारतटीकायां श्रीखण्डोपाह्वबाजीरायात्मजनारायणसूरिविरचितायामष्टमः स्तवकः ।

अथ युद्धनिश्चयानन्तरं शताङ्गमातङ्गतुरङ्गयोधैः रथगजाश्वपदातिभिः संरुद्धपार्श्वभागाः ते उभये द्विविधा इत्यर्थः, कुरवः कुरुवंशोद्भवाः युधिष्ठिरादयो दुर्योधनादयश्च रणाय रणं कर्तुं स्वस्य यत् नामधेयं कुरु इति नाम तदेव उपपदं पूर्वपदं यस्य तत् प्रसिद्धं क्षेत्रं कुरुक्षेत्रमित्यर्थः, व्यगाहन्त जग्मुः ॥ १ ॥

तत्र कुरुक्षेत्रे देवस्तुतायाः हिरण्वत्याः नद्याः तीरवृक्षसंबन्धिपुष्पाणां सुगन्धैः मथितः नाशितः पथिखेदः मार्गश्रमो यासां ता गजघटाः गजसमूहाः स्वयमपि कृतज्ञत्वेनैव तस्यै हिरण्वत्यै मदाम्भसां दानोदकानां लहरीभिः कृत्वा अतिशयेन सुरभिः सौगन्ध्यविशिष्टः गन्धो यासां ताः वह्नीः प्रियसखीः—नदीनां नद्य एव सख्यो भवन्ति—ताः ददुः । अनया दानोदकनदीप्रकटनोक्त्या मतङ्गजानां बाहुल्यं द्योत्यते ॥ २ ॥

सेनायाः सैन्धवपङ्क्तयः सिन्धुदेशोद्भवाश्वसमूहाः 'वयम् अस्माकं जन्मभुवः अभिधया

---

१ क. उपपदप्रसिद्धम् । २ क. तटरुह° । ३ क. इव । ४ क. मदाम्भोधिलहरी । ५ क. °त्तलात् ।

तेषां कुरूणां कलहोदयात्प्रा-
ग्रथस्वनानां करिबृंहितानाम् ।
आशामशेषां स्ववशे विधातु-
मन्योन्यमासीत्कलहो महीयान् ॥ ४ ॥

नाम्ना वा नवमग्रहस्य समतां सोढास्महेऽमी वयं
तुङ्गत्वं न सहेमहीत्यतिरुषा सन्नाहधुर्या इव ।
उद्दण्डा अपि केतवो ददृशिरे स्थानं ग्रहाणामति-
क्रम्य स्यन्दनवृन्दमौलिकलिता मध्येनभस्वत्पदम् ॥ ५ ॥

महीपतीनां पटमन्दिराणि
मार्गं सुराणां लिलिहुः शिरोभिः ।
वयं हि दूष्याणि शुचीभवेमे-
त्यभ्रापगावारिमिमङ्क्षयेव ॥ ६ ॥

---

नाम्ना समान् सप्तापि सिन्धून् समुद्रान् शोषणं नयामः' इति मनसि कृत्वा स्फीता वृद्धिं गता अभ्यसूया ईर्ष्या येषां तथाभूताः सन्त इव क्षुरप्रोपमैः अतितीक्ष्णक्षुरप्रबाणसदृशैः दीप्रैः खुरपुटैः उल्लिखितात् उत्खातात् भूमेः स्थलात् भूयः अतिशयेन बहुरजोमण्डलधूलिसमूहम् अजनयन् । लोके हि अस्मज्जनकस्य यन्नाम तदेवैतेषामपि वर्तते इदमसमीचीनमिति मत्सरः केषांचिदुत्पद्यते ॥ ३ ॥

तेषां कुरूणां कलहोदयात् प्राक् युद्धारम्भात्प्राक् अशेषाम् आशां दिशां स्ववशे स्वाधीनतया विधातुं कर्तुं रथस्वनानां करिबृंहितानां हस्तिशब्दानां च अन्योन्यं महीयान् अतिशयेन महान् कलहः आसीत्, सकलदिग्व्यापीनि रथध्वनिगजगर्जितानि बभूवुरित्यर्थः । सकलदिक्स्थ देशान् स्वाधीनान् कर्तुं मुख्यकलहात्प्रागयं कलहोऽभूदित्युक्तिचातुर्यम् ॥४॥

'अमी वयं नवमग्रहस्य नाम्ना केतुरितिनाम्ना समत्वं सोढास्महे सहिष्यामहे, तुङ्गत्वम् उच्चत्वं न सहेमहि न सहामहे इत्यर्थः' इति मनसि आनीय सन्नाहे सन्नद्धतायां धुर्याः धुरंधरा इव स्यन्दनवृन्दानां मौलिषु अग्रभागेषु स्थापिताः उद्दण्डाः उन्नतदण्डा उद्यतदण्डाश्च केतवः ध्वजाः अपि मध्येनभस्वत्पदम् आकाशमध्ये ग्रहाणां स्थानं स्थितिप्रदेशम् अतिक्रम्य स्थिताः ददृशिरे दृष्टाः । लोकैरिति शेषः । अनयाऽतिशयोक्त्या ध्वजानाम् अत्युच्चत्वं फलति ॥ ५ ॥

महीपतीनां पटमन्दिराणि वस्त्रगृहाणि शिरोभिः अग्रभागैः सुराणां मार्गम् आकाशं लिलिहुः पस्पृशुः, गगनमार्गं दध्नुरित्यर्थः । गगनमार्गधृतौ हेतुमुत्प्रेक्षते, 'वयं दूष्याणि दूष्यशब्दवाच्यानि दोषयुक्तानि च अतः शुचीभवेम शुद्धानि भवाम' इति मनस्यानीय

---

१ क. ख. वो । २ क. हे । ३ क. पथम् । ४ अत्र दिक्परिपालनव्यापनयोः श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्या 'संसर्गजा दोषगुणा भवन्ति' इति प्रसिद्धतादृशकौरवसंबन्धित्वकृतारोपराज्याभिलाषहेतुककलहोत्प्रेक्षाप्रतीतेरलंकारेणालंकारध्वनिः ।

ततः क्षणादेव विशालविनिर्मितवीथीसहस्रविराजमानं विशंकटविपणिविस्तारितविविधपण्याहरणविमर्दसहक्रयिकलोकं विटकुलानुसार्यमाणविलासिनीजननिविडितवेशवाटं विशिखकृपाणकुन्तशक्तिप्रमुखविविधायुधसंस्कारपरवशयोधसंबाधं तत्कुरुक्षेत्रं कुरुनगरमित्रं बभूव॥१॥

तत्र दुःशासनाग्रजो भगवन्नस्मिन्नुपतस्थुषि वीरभुजविनोदकाले त्वं विवाहविमुखोऽपि मदर्थं प्रत्यर्थिपार्थिवान्विनिहन्तुं पृतनाधिपत्यलक्ष्मीमुपयंमस्वेति विज्ञाप्य पितामहस्य चरणनलिनयोः प्रणिपपात ॥ २ ॥

दुर्योधने विशति मौलिभुवा पदं स्वं
शूराग्रणीष्वचरमः सुरसिन्धुसूनुः ।
अर्धक्षणाद्रिपुभटांस्त्रिदिवे विधास्य-
न्नध्यक्षतापदमविक्षदनीकिनीनाम् ॥ ७ ॥

---

अभ्रापगायाः आकाशगङ्गायाः वारिषु मिमङ्क्षयेव मज्जनेच्छयेव । अन्योऽपि दोषनिराकरणाय गङ्गास्नानार्थं गच्छति ॥ ६ ॥

ततः क्षणादेव तत्कुरुक्षेत्रं कुरुनगरमित्रं हास्तिनसदृशं बभूव । कीदृशं कुरुक्षेत्रं, विशालं यथा तथा विनिर्मितं यत् वीथीनां पटमण्डपपङ्क्तीनां सहस्रं तेन विराजमानम् । पुनः की०, विशङ्कटासु महतीषु विपणिषु पण्यवीथिकासु विस्तारितानि यानि विविधपण्यानि नानाक्रेयधान्यादिवस्तूनि तेषाम् आहरणेन क्रीत्वा ग्रहणेन यो विमर्दः परस्पराङ्गसंवर्षः तं सहन्ते तथाभूताः क्रयिकलोकाः क्रेतृलोकाः यस्मिंस्तत् । पुनः०, विटकुलैर्जारसमूहैरनुसार्यमाणः अनुगम्यमानः यः विलासिनीजनः जारिणीसमूहः तेन निविडितः व्याप्तः वेशवाटः जारिणीगृहसमूहो यस्मिन् तत् । पुनः०, विशिखादीनां नानायुधानां संस्कारे शाणोल्लेखनस्निग्धद्रव्यलेपनादौ परवशाः तत्पराः ये योधाः तैः संबाधं निविडितम् ॥ १ ॥

तत्र सेनानिवेशस्थाने दुःशासनाग्रजः दुर्योधनः 'हे भगवन् ! अस्मिन्नुपतस्थुषि सान्निध्यं प्राप्ते वीरभुजानां विनोदकाले कौशलदर्शनसमये त्वं विवाहविमुखोऽपि पितुरग्रे विवाहं न करिष्यामीति प्रतिज्ञातत्वात् विवाहपराङ्मुखोऽपि मदर्थं प्रत्यर्थिपार्थिवान् वैरिनृपान् विनिहन्तुं पृतनाधिपत्यलक्ष्मीं सेनाधिपत्यलक्ष्मीम् उपयमस्व वृणु सेनाधिपत्यं स्वीकुर्वित्यर्थः' इति विज्ञाप्य पितामहस्य भीष्मस्य चरणकमलयोः प्रणिपपात साष्टाङ्गं प्रणनाम ॥ २ ॥

शूराग्रणीषु शूरश्रेष्ठेषु अचरमः प्रथमः सुरसिन्धुसूनुः भीष्मः दुर्योधने मौलौ शिरसि भुवा विद्यमानेन किरीटेन, यद्वा मौलेः किरीटस्य भुवा स्थितिदेशेन शिरसा स्वपदं

---

१ क. ख. मानवि' । २ क. विस्तारितेति नास्ति । ३ ख. त्रिमर्दासह' । ४ क. 'णवारवि' । ५ क. निविडवे' । ६ ख. प्रासतोमरेत्यधिकम् । ७ ख. तावदित्यधिकम् । ८ ख. विहितेत्यधिकम् । ९ क. 'वान्निह' । १० ख. 'मुपयच्छस्वेति । ११ ख. विज्ञापितस्य । १२ क. नालिनेति नास्ति । १३ क. ख. 'णादरिभ' । १४ अत्राप्युत्प्रेक्षानुप्राणितातिशयोक्तिः ।

पार्थास्तु ते द्रुपदनन्दनमाशु चक्रुः
सेनान्यमुद्धतविरोधिवनानि दग्धुम्।
वह्निं प्रतापकपटान्निजजन्मकाले
सक्तं भुजे वहति यः सततं ज्वलन्तम्॥ ८॥

अथ सदसि महारथपरिगणनकथायामर्धरथोऽयमिति जाह्नवेयेन निह्नुतपौरुषतया रोषचिह्नितवदनरोचिरह्नांपतिकुमारोऽह्नाय युधि तस्यावधिमेव निजहेतेरसाधारणस्यापि साधारणं प्रतिजज्ञे॥ ३॥

इदं प्रतिपद्य खिद्यमानं मानधनं सुयोधनं 'वत्स मा भैषीर्महाभुजानपि रिपुमहीभुजः संख्ये खरतरविशिखमुखेन खादिष्यामि' इति पितामहः प्रसादयामास॥ ४॥

---

विशति सति शिरसा पदस्पर्शेन नतिं कुर्वति सतीत्यर्थः, रिपुभटान् अर्धक्षणात् त्रिदिवे स्वर्गे विधास्यन्करिष्यन् अनीकिनीनां सेनानाम् अध्यक्षतापदम् आधिपत्यपदम् अविक्षत् प्रविवेश, सेनापतित्वं स्वीचकारेत्यर्थः। दुर्योधने स्वपदं विशति सोऽप्यन्यपदमविक्षदित्युक्तिचातुर्यम्॥ ७॥

ते पार्थास्तु द्रुपदनन्दनं धृष्टद्युम्नं सेनान्यं सेनापतिम् आशु चक्रुः। कीदृशं द्रुपदनन्दनं, यः उद्धतानाम् बलिनां विरोधिनां वनानि दग्धुं निजजन्मकाले अग्निकुण्डादुत्पत्तिकाले सक्तं संलग्नं सततं ज्वलन्तं वह्निं प्रतापकपटात् भुजे वहति। सततमिति वहनक्रियाविशेषणं वा। वनदहने ज्वलद्वह्निः प्रभवतीति प्रतापे प्रतापत्वं निह्नुत्य ज्वलद्वह्नित्वारोपः॥ ८॥

अथ सदसि शूरसमाजे महारथानां परिगणनकथायाम् 'अस्मत्सेनायां कति महारथातिरथार्धरथाः सन्ति' इति परिगणनप्रस्तावे 'अयं कर्णः अर्धरथः' इत्युक्त्या निह्नुतं पौरुषं यस्य तस्य भावस्तत्ता तया रोषेण चिह्नितं वदनरोचिः वदनकान्तिर्यस्य सः अहःपतिसूनुः कर्णः तस्य भीष्मस्य अवधिं मरणतुल्यदशया सैनापत्यसमाप्तिम् असाधारणस्यापि हेतेः कालपृष्ठधनुःशस्त्रस्य साधारणं यथा तथा प्रतिजज्ञे प्रतिज्ञां चक्रे। अयं भावः— देवप्रसादलब्धकालपृष्ठनामकधनुष इतरधनुर्भिरसाधारण्यं, यदाऽयं भीष्मो निःसत्त्वो भूत्वा सैनापत्यं त्यजेत् तदैवाहं युधि करे धनुर्ग्रहीष्यामीति प्रतिजज्ञे। अतः तच्छस्त्रत्यागकाल एव स्वशस्त्रग्रहणकालः इत्यवधिशस्त्रयोः साधारण्यमिति॥ ३॥

इदं प्रतिपद्य ज्ञात्वा खिद्यमानं मानधनं सुयोधनं प्रति 'हे वत्स! मा भैषीः बलिनः क्षत्रियानपि संख्ये युद्धे खरतराः तीक्ष्णतराः ये विशिखाः तदेव मुखं तेन खादिष्यामि' इत्युक्त्या भीष्मः प्रसादयामास संतोषयामास॥ ४॥

---

१ क. ख. च। २ क. ख. जाह्नवीयेन। ३ क. ख. सूनुरह्नाय। ४ क. युधीति नास्ति। ५ क. खादयामि। ६ क. आश्वासयामास। ७ शुद्धापह्नुत्यलंकारः।

तदनन्तरम्—

अभ्रापगातनयपार्षतनन्दनाभ्या-
मग्रावनी तिलकिता धृतकार्मुकाभ्याम् ।
उच्चावचं निजनिजं विरुदं वहन्तो
युद्धाय तस्थुरुभयेऽपि कुरुप्रवीराः ॥ ९ ॥

जेता पुरामिव तदा जलजातयोनिं
पत्रीश्वराग्रजमिव प्रथमो ग्रहाणाम् ।
अग्रे निधाय यदुनायकमात्ततोत्रं
पार्थो रथी प्रधनभूमिमवाप वीरः ॥ १० ॥

संचिन्त्य भीष्ममुखबन्धुजनस्य हानिं
संतापिनः समरसीमनि शक्रसूनोः ।
बाष्पाम्बु चक्षुरधिकं श्वसितं मुखेन्दु-
र्धैर्यं मनः करतलं च मुमोच चापम् ॥ ११ ॥

बलारिसूनुं वसुदेवसूनुर्वचोभिराश्वास्य चिरेण तैस्तैः ।
असासहिं पावकजाठराग्नेरग्राहयत्तत्र पुनः शरासम् ॥ १२ ॥

---

तदनन्तरम्—

धृतकार्मुकाभ्याम् अभ्रापगातनयपार्षतनन्दनाभ्यां गङ्गापुत्रद्रुपदपुत्राभ्याम् अग्रावनी सेनाग्रभूमिः तिलकिता संजाततिलकेव भूषिता । उभयेऽपि द्वयेऽपि कुरुवीराः उच्चावचम् उच्चनीचं विरुदं मुकुटावतंसच्छत्रचामरादिकं पराक्रमसूचकराजलब्धपदार्थं वहन्तः धारयन्तः सन्तः युद्धाय युद्धं कर्तुं तस्थुः ॥ ९ ॥

तदा युद्धप्रारम्भे वीरः रथी पार्थः अर्जुनः—पुरां जेता रुद्रः जलजातयोनिं ब्रह्माणमिव, ग्रहाणां प्रथमः सूर्यः पत्रीश्वराग्रजमिव गरुडाग्रजमिव,—आत्ततोत्रम् अश्वताडनार्थं गृहीतकशं यदुनायकम् अग्रे रथाग्रे सूतस्थाने विधाय प्रधनभूमिं रणभूमिम् अवाप ॥ १० ॥

समरसीमनि भीष्ममुखबन्धुजनस्य हानिं मृत्युं संचिन्त्य संतापिनः पश्चात्तापयुतस्य शक्रसूनोः चक्षुः दुःखात् बाष्पाम्बु मुमोच । तथा मुखेन्दुः अधिकं श्वासं मुमोच । मनश्च धैर्यं मुमोच । करतलं चापं मुमोच तत्याज ॥ ११ ॥

वसुदेवसूनुः बलारिसूनुम् अर्जुनं तैस्तैः गीतात्मकैः वचोभिः चिरेण आश्वास्य ज्ञानोपदेशेन संतापं दूरीकृत्येत्यर्थः, तत्र युद्धप्रसङ्गे पावकस्य जाठराग्नेः क्षुद्विकारस्य आसासहिं भृशमसहनकर्तारं खाण्डववनदाहे पावकस्य क्षुधाशामकमित्यर्थः, शरासं चापं पुनः अग्राहयत् ग्राहयामास । युद्धे प्रवर्तयामासेत्यर्थः । 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् । इष्वासोऽपि' इत्यमरात् शरासशब्दस्य पुंस्त्वम् ॥ १२ ॥

---

१ क. °वनौ । २ ख. पक्षीश्व° । ३ क. विधाय । ४ अत्रोपमाद्वयसंसृष्टिः । ५ अत्रानेकक्रियायौगपद्यात्समुच्चयालंकारः ।

देवव्रतस्य जयकेतनचिह्नताल-
श्यामप्रभावलिरदृश्यत दूरदीर्घा ।
सख्याः सुतस्य समरे भुजवीर्यलक्ष्मीं
संवीक्षितुं रविसुतेव नभोऽधिरूढा ॥ १३ ॥
युद्धारम्भभटार्भटीपिशुनतामुद्दामयन्तस्तदा
निस्साणादिमजैत्रवाद्यनिनदा निर्धूतशब्दान्तराः ।
श्रान्तिं क्षेप्तुमिवातिदूरपदवीसंपादितामम्बुधे-
र्वेलाशैलमहागुहासु विविशुर्व्याप्तासु धाराधरैः ॥ १४ ॥
संग्रामदुन्दुभिरवश्रवणेन देवाः
सर्वे कपाटघटितानि गृहाणि कृत्वा ।
आदाय नन्दनवनादभिषेक्तुमाजौ
वीरान्प्रसूनचयमप्यभजन्विहायः ॥ १५ ॥
सति घर्मजले मिथोविमर्दा-
त्सकलं तद्व्यपनेतुमङ्गकेभ्यः ।
मघवत्प्रमुखाः सुरा बभूवु-
र्मरुतोऽपि स्वयमात्ततालवृन्ताः ॥ १६ ॥

---

दूरदीर्घा अतिदीर्घा देवव्रतस्य भीष्मस्य जयकृत् यः केतने ध्वजे चिह्नतालः अयं भीष्मरथ इति ज्ञापकस्तालवृक्षः तस्य श्यामा या प्रभावलिः कान्तिपरंपरा अदृश्यत दृष्टा-लोकैरिति शेषः । तामुत्प्रेक्षते, समरे सख्याः भागीरथ्याः सुतस्य भीष्मस्य भुजवीर्य-लक्ष्मीं संवीक्षितुं नभोऽधिरूढा उच्चदेशं नभस्थलम् अधिरूढा रविसुतेव यमुनेव ॥ १३ ॥

तदा युद्धारम्भे भटानाम् अर्भटी सिंहनादादिलीला तस्याः पिशुनतां सूचकताम् उद्दामयन्तः प्रकाशयन्तः निर्धूतानि दूरीकृतानि [illegible] यावत्, शब्दान्त-राणि यैस्ते निःसाणादिमानां भेरीपटहादीनां जैत्रवाद्यानां जिगीषुराजवाद्यानां निनदाः शब्दाः अतिदूरया पदव्या मार्गेण संपादितां प्रापितां श्रान्तिं श्रमं क्षेप्तुमिव नाशयि-तुमिव धाराधरैः वर्षुकमेघैः व्याप्तासु अम्बुधेः वेलाशैलानां तीरस्थमर्यादापर्वतानां महागु-हासु [1]विविशुः । युद्धारम्भे ये भेरीपटहादिशब्दा जातास्ते समुद्रपर्यन्तं दूरं गता इत्यर्थः । अन्योऽपि दूरमार्गगमनेन जातश्रमपरिहाराय शीतलस्थलमाश्रयति ॥ १४ ॥

स शब्दः स्वर्गं गत इत्याह—**संग्रामेति** । सर्वे देवा अपि संग्रामस्य दुन्दुभिरवाणां श्रवणेन गृहाणि कपाटैः घटितानि पिहितानि कृत्वा आजौ संग्रामे वीरान्कृतपराक्रमशूरान् अभिषेक्तुं वर्षितुं नन्दनवनात्प्रसूनचयं कुसुमसमूहम् आदाय विहायः आकाशम् अभजन् । देवा अपि युद्धचमत्कारं द्रष्टुं पुष्पाणि वर्षितुं चाकाशमारूढा इत्यर्थः ॥ १५ ॥

मघवत्प्रमुखाः इन्द्रादयो देवाः मिथः परस्परं विमर्दात् अङ्गसङ्गात् घर्मजले सति

---

१ क. कवाट° । २ अत्रोत्प्रेक्षानुप्राणिताऽसंबन्धे संबन्धरूपातिशयोक्तिः ।

तत्र तौ रिपुगणौ शनैः शनैः संगतौ सधनुषौ सगर्जितौ ।
पूर्वपश्चिममरुत्प्रचोदितौ पुष्करे नवघनाघनाविव ॥ १७ ॥
धावत्स्यन्दनकेतनांशुकमरुद्व्याधूतमन्दाकिनी-
बिन्दूनामपि सैन्यकुञ्जरघटाशुण्डासमुत्थायिनाम् ।
दानाम्भःपृषतामपि स्फुटशरत्ताराकृतिस्पर्धिनां
भेदं ग्राहयितुं शशाक गगने भृङ्गानुरोधक्रमः ॥ १८ ॥
आसाद्य द्विपमाहवे रदपथेनारुह्य तीक्ष्णासिना
यन्तारं विनिपात्य साट्टहसितं स्कन्धे विधाय स्थितिम् ।
कुम्भास्फालनकारिणं रिपुभटं दृष्ट्वा दिवौकःस्त्रियाः
कस्याश्चित्कुचकुम्भयोः कठिनयोः कण्डूरखण्डाऽभवत् ॥ १९ ॥

---

सकलं तत् घर्मजलम् अङ्गकेभ्यः व्यपनेतुं नाशयितुं स्वयं मरुतोऽपि वायवः सन्तोऽपि आत्ततालवृन्ताः वायूत्पादनार्थं गृहीतव्यजनाः बभूवुः । इदमाश्चर्यम्, मरुतो देवा इत्यर्थान्तरम् ॥ १६ ॥

तत्र रणाङ्गणे सायुधौ ससिंहनादौ रिपुगणौ उभयसैनिकसमुदायौ पुष्करे आकाशे पूर्वपश्चिममरुद्भ्यां पूर्वपश्चिमझञ्झावाताभ्यां प्रचोदितौ नुन्नौ वानै यौ घनाघनौ वर्षुकमेघौ ताविव शनैः शनैः मन्दगमनेन संगतौ मिलितौ ॥ १७ ॥

सामान्येन युद्धविशेषं विवक्षुस्तावदादौ गजयुद्धं नवभिराह—**धावदिति** । धावतां स्यन्दनानां यानि केतनांशुकानि ध्वजवस्त्राणि तेषां मरुद्भिः वायुभिः व्याधूतायाः कम्पितायाः मन्दाकिन्याः स्वर्गङ्गायाः बिन्दूनामपि सैन्यकुञ्जरघटानां सैन्यगजसमूहानां शुण्डाभिः गण्डादिनिकटे शुण्डाफूत्कारैः समुत्थायिनाम् ऊर्ध्वगामिनां दानाम्भःपृषतामपि मदोदकबिन्दूनामपि—द्वावपिशब्दौ परस्परसमुच्चायकौ—भेदं ग्राहयितुं ज्ञापयितुं गगने भृङ्गाणाम् अनुरोधक्रमः सुगन्धलोभेनानुगमनस्वभावः शशाक समर्थो बभूव । येषां बिन्दूनां भृङ्गानुगमनं वर्तते ते मदबिन्दवः येषां तन्नास्ति ते मन्दाकिनीबिन्दव इति ज्ञातमित्यर्थः । कथंभूतानां द्विविधबिन्दूनां, स्फुटाः स्पष्टाः याः शरत्ताराकृतयः शरत्कालिकनक्षत्राकाराः तान् स्पर्धन्ते तथाभूतानाम् । वर्तुलत्वेन शुभ्रत्वेन नक्षत्रसदृशानामित्यर्थः । तत्र दानाम्भसः श्यामत्वात् तस्य शुण्डाशीकरमिश्रीभावेन शुभ्रत्वं विवक्षितमिति ज्ञेयम् ॥ १८ ॥

आहवे युद्धे द्विपं गजम् आसाद्य प्राप्य रदपथेन दन्तमार्गेण आरुह्य तीक्ष्णेन असिना खड्गेन यन्तारं हस्तिपकं निपात्य हत्वा साट्टहसितं सशब्दहास्येन सहितं यथा तथा स्कन्धे गजस्कन्धे स्थितिं विधाय कृत्वा कुम्भयोःआस्फालनकारिणं गजचाञ्चल्यनिवारणाय करेण

---

१ क. तावरिगणौ । २ क. घनघना । ३ अत्र तैजसेष्वपि स्वेदसंभावना प्रौढोक्त्या । ४ अत्र तादृशोभयबिन्दूनां भृङ्गानुसरणेन मिथो वैलक्षण्यस्फूर्त्या विशेषकालंकारः । स च ताराकृतिस्पर्धिनामित्युपमयोज्जीवित इति द्वयोरङ्गाङ्गिभावेन संकरः ।

कश्चिद्गजः प्रतिभटेन करे विलूने-
ऽप्यामूलभागमसिना नमिताग्रकायः ।
क्षिप्रं प्रगृह्य रदनेन निषादिहस्ता-
त्स्रस्तां सृणिं पुनरदात्कुशलाय तस्मै ॥ २० ॥
भसितलेपसितौ करिणावुभौ युधि परस्परदत्तरदौ मुखे ।
हरिरवेक्ष्य वहत्यपि वाहने सरभसं निदधे सकला दृशः ॥२१॥
भग्नैकदन्तमुसलः प्रतिदन्तिघाता-
त्कुम्भाग्रलक्ष्यकुटिलाङ्कुशचन्द्रलेखः ।
कश्चिद्गिरीशसमतां कलयन्करीन्द्रः
सारूप्यभागिव गणाधिपतेर्विरेजे ॥ २२ ॥

---

आस्फालनकर्तारं रिपुभटं दृष्ट्वा कस्याश्चिद्दिवौकसः स्त्रियाः स्वर्वेश्यायाः कठिनयोः कुचकुम्भयोः अखण्डा निरन्तरा कण्डूः अभवत् । गजकुम्भास्फालनकर्तारं तत्तादृशं वीरं दृष्ट्वाऽयं स्वर्गगामी भवेच्चेत्तर्ह्येनं वृत्वा तद्धस्तेनाहं कुचकुम्भास्फालनं कारयिष्यामीत्युत्कण्ठा समुत्पन्नेति भावः ॥ १९ ॥

कश्चिद्गजः प्रतिभटेन शत्रुवीरेण असिना आमूलभागं मूलभागपर्यन्तं यथा तथा करे शुण्डादण्डे विलूने छिन्ने सत्यपि नमितः नम्रीकृतः अग्रकायः शरीरस्य पूर्वभागो येन तथाभूतः सन् निषादिनः हस्तिपकस्य हस्तात् स्रस्तां गलितां सृणिम् अङ्कुशं रदनेन क्षिप्रं शीघ्रं प्रगृह्य कुशलाय कल्याणार्थं तस्मै निषादिने पुनः अदात् दत्तवान् । स्वमरणसमयेऽपि मत्पोषकस्य विजयो भवत्विति पशोरपि बुद्धिरभवत्, किं पुनस्तत्रत्यमनुष्याणामिति भावः ॥ २० ॥

भसितस्य भस्मनः लेपेन सितौ शुभ्रौ युधि मुखे परस्परं दत्तरदौ अन्योन्यप्रहारार्थम् आरोपितदन्तौ उभौ करिणौ अवेक्ष्य हरिः इन्द्रः वाहने ऐरावतगजे वहत्यपि स्वस्य वहनं कुर्वत्यपि तस्मिन्सकलाः सहस्रसंख्याकाः दृशः सरभसं ससंभ्रमं निदधे स्थापयामास । शुभ्रत्वेन चतुर्दन्तत्वेन च मम गजो युद्धे गतः किमिति शङ्कया संभ्रमेण स्वगजं सहस्रदृग्भिरपश्यदिति भावः ॥ २१ ॥

प्रतिदन्तिनः युद्धार्थमागतस्य शत्रुगजस्य घातात् प्रहारात् भग्नः एकः दन्तमुसलो यस्य सः कुम्भाग्रे गण्डोपरिभागे लक्ष्या दृश्या कुटिलाङ्कुश एव चन्द्रलेखा यस्य सः कश्चित्करीन्द्रः गिरीशसमतां शिवसादृश्यं कलयन् स्वीकुर्वन् सन् गणाधिपतेः श्रीगजाननस्य सारूप्यभागिव एकदन्तत्वेन भालचन्द्रत्वेन च सरूपतां प्राप्त इव विरेजे शुशुभे । इदमाश्चर्यम्, गिरीशसमतां स्थूलत्वेन महापर्वतसाम्यमित्यर्थान्तरेण परिहारः ॥ २२ ॥

---

१ क. 'स्रस्तम् । २ क. भिन्नैक' । ३ क. ख. 'रेखः । ४ अत्र तादृग्वीरदर्शनस्य विशेषणगत्या कुचकण्डूदयहेतुत्वात्पदार्थहेतुकस्य काव्यलिङ्गस्य कण्डूवसंबन्धेऽपि संबन्धरूपातिशयोक्तेश्च द्वयोरङ्गाङ्गिभावेन संकरः । ५ अत्राङ्कुशदानासंबन्धेऽपि संबन्धोक्तिरूपातिशयोक्तिः । ६ भ्रान्तिमदलंकारोऽत्र । ७ अत्रोत्प्रेक्षा श्लेषोपमोज्जीवितेति तयोस्तस्याश्चाङ्गाङ्गिभावेन संकरः ।

कश्चिन्निर्गत्य वेगादरिनृपतिवले पातयन्स्वामिनं स्वं
तत्र स्कन्धाधिरूढं विमतमपि तथाऽधत्त नीत्वा स्वसैन्यम् ।
इत्थं दुःसाध्यरोधो युधि करिकलभो दूरधूताङ्कुशः सन्
विज्ञंमन्यं निषादिद्वयमपि विदधे हासपात्रं जनानाम् ॥ २३ ॥

हस्तेन हस्तमथ दन्तयुगेन दन्तौ
कर्णौ च कर्णयुगलेन पदे च पद्भ्याम् ।
वालेन वालमभिहत्य च वारणौ द्वौ
तुल्याङ्गयुद्धमिति शिक्षितमादधाते ॥ २४ ॥

निषादिनो दन्तिशिरस्यधोमुखं
निपातिताङ्गा लगुडस्य ताडनैः ।
व्यथापनोदाय मदस्य सौरभं
विनम्य जिघ्रन्त इवालुलोकिरे ॥ २५ ॥

तीक्ष्णैः प्रत्यर्थिभल्लैरपहृतशिरसां हस्तिपानां शरीरा-
दुत्क्रान्ताः प्राणवाताः करिमदपयसां सौरभीमुद्वहन्तः ।
पायं पायं कपोलस्थलकुचकलशस्वेदवारिप्रवाहं
चक्रुः संमर्दभाजां दिवि सुरसुदृशां तालवृन्तस्य कृत्यम् ॥२६॥

---

कश्चित्करिणः कलभः शावकः वेगेन निर्गत्य अग्रतो गत्वा अरिनृपतिवले शत्रुराजसैन्ये स्वं स्वकीयं स्वामिनं स्वोपरि स्थितं प्रभुं पातयन् तत्र शत्रुसैन्ये स्कन्धे अधिरूढं कृताधिरोहणं विमतमपि शत्रुनिषादिनमपि स्वसैन्यं नीत्वा तथा स्वप्रभुवत् अधत्त दधार इत्थं युधि दुःसाध्यः रोधो निरोधो यस्य सः दूरम् अत्यन्तं धूतः अगणितः अङ्कुशो येन तथाभूतः सन् विज्ञंमन्यम् आत्मानं निषादिकर्मणि कुशलमानि निषादिद्वयं जनानां हासपात्रम् उपहासास्पदं विदधे । अयं दुर्दान्तस्य गजस्य स्वभावः ॥ २३ ॥

द्वौ वारणौ गजौ हस्तेन हस्तं शुण्डया शुण्डाम् अभिहत्य । अभिहत्य इति क्रियायाः उत्तरत्रापि संवन्धः । दन्तयुगेन दन्तौ, कर्णयुगेन कर्णौ, पद्भ्यां पदे पादौ, वालेन वालं पुच्छेन पुच्छं च अभिहत्य अतिशयेन शिक्षितम् अभ्यस्तं तुल्याभ्याम् अङ्गाभ्याम् अवयवाभ्यां युद्धम् आदधाते कुर्वाते ॥ २४ ॥

लगुडस्य यष्टेः ताडनैः कर्तृभिः दन्तिशिरसि गजमस्तके अधोमुखं यथा तथा निपातिताङ्गाः पातितदेहाः निषादिनः व्यथायाः यष्टिप्रहारव्यथायाः अपनोदनाय विनम्य नम्रीभूय मदस्य सौरभं सौगन्ध्यं जिघ्रन्त इव आघ्राणं कुर्वन्त इव आलुलोकिरे विलोकिताः२५

तीक्ष्णैः प्रत्यर्थिभल्लैः शत्रुबाणैः अपहृतशिरसां छिन्नमस्तकानां हस्तिपानां निषादिनां

---

१ क. पातयत्स्वा॰ । २ क. ख. ॰साधरो॰ । ३ क. ॰दधानाम् । ४ अत्र दुःसाधरोधत्वादिना यन्तृपातनसमर्थनात्काव्यलिङ्गभेदद्वयेन वाक्यार्थरूपेण यन्तृद्वयपरिहाससमर्थनाद्वाक्यार्थहेतुककाव्यलिङ्गस्य असंबन्धे संबन्धरूपातिशयोक्तेश्चैकवाचकानुप्रवेशसंकरः । ५ अत्र स्वभावोक्तिः ।

अश्वावुभौ तस्थतुरग्रपादा-
वुत्क्षिप्य युद्धाभिमुखीभवन्तौ।
परस्परस्योपरि हेतिपाता-
त्स्वसादिनौ त्रातुमिवोर्ध्वकायौ॥ २७॥
एकैव वैरिभटखड्गवरस्य धारा
धारासु पञ्चसु सतीष्वपि कंचिदश्वम्।
स्कन्धे विभिद्य तदसूनितरैर्दुरापान्
जग्राह नाल्पमपि तत्क्षतजाम्बुलेशम्॥ २८॥

---

शरीरात् उत्क्रान्ताः बहिरूर्ध्वदेशनिष्क्रान्ताः करिमदपयसां गजदानोदकानां सौरभीं सौगन्ध्यम् उद्वहन्तः धारयन्तः प्राणवाता दिवि आकाशे संमर्दभाजां परस्पराङ्गसंघर्षवतीनां सुरसुदृशां देवाङ्गनानां कपोलस्थलकुचकलशयोः स्वेदवारिणां घर्मोदकानां प्रवाहं पायं पायं पीत्वा पीत्वा पुनः पुनः शोषयित्वेत्यर्थः, तालवृन्तस्य व्यजनस्य कृत्यं वायुमुत्पाद्य घर्मशोषणकृतिरूपं कर्तव्यं चक्रुः। अनयातिशयोक्त्या भटैः असंख्याता निषादिनो हता इति व्यज्यते॥ २६॥

अथ चतुर्भिरश्वयुद्धमाह—अश्वाविति। युद्धाभिमुखीभवन्तौ युद्धार्थमभिमुखौ भवन्तौ उभौ अश्वौ परस्परस्य उपरि हेतिपातात् परस्परकृतशस्त्रपातात् स्वसादिनौ स्वस्मिन् आरोहणकर्तारौ भटौ त्रातु मिव अग्रपादौ उत्क्षिप्य ऊर्ध्वं गतः कायः पूर्वकायो ययोस्तथाभूतौ सन्तौ तस्थतुः। अन्योऽपि शत्रुकृतशस्त्रप्रहारात् स्वस्वामिनं त्रातुं मध्ये स्वशरीरं करोति॥ २७॥

वैरिभटस्य यः खड्गवरः तस्य एकैव धारा पञ्चसु धारासु सतीष्वपि अश्वे विद्यमानास्वपि कंचित् अश्वं स्कन्धे विभिद्य छित्त्वा इतरैः दुरापान् अलभ्यान् तस्य अश्वस्य असून् प्राणान् जग्राह, अल्पमपि सूक्ष्ममपि तस्य अश्वस्य क्षतजाम्बुनः रक्तोदकस्य लेशं न जग्राह। समये पञ्च धारा अपि अनुपयुक्ता जाता इति भावः। पञ्चधारायुतमप्यश्वं विभिद्य गता धाराऽल्पमप्यम्बुलेशं न जग्राहेत्याश्चर्यं, खड्गधाराया अतितीक्ष्णतया छिदिक्रियां कृत्वा रक्तोत्पत्तेः प्राक् अतिशीघ्रं बहिर्निर्गमनाद्रक्ताम्बुलेशास्वीकाराभावः 'आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम्। गतयोऽमूः पञ्च धाराः' अश्वस्य इच्छया समागतिः, पूर्वतोऽधिका चतुरा गतिः, मण्डलिकया गतिः, वेगेन गतिः, त्वरया कम्पेन गतिः, इति क्रमेण पञ्चानां धाराणाम् अर्थाः॥ २८॥

---

१ अत्र अन्यकृत्यस्यान्यत्रासंभवेन तत्सदृशकृत्याक्षेपात् असंभवद्धर्मसंबन्धनिबन्धनो निदर्शनालंकारः। असंबन्धे संबन्धरूपातिशयोक्तिश्चैकवाचकानुप्रवेशेन संकीर्णा। २ अत्रोत्प्रेक्षा। ३ अत्र एकस्या धारापञ्चकवदश्वभेदवर्णनात्कारणासाकल्येऽपि कार्योत्पत्तिरूपो विभावनभेदः। एवं लोकैकदुर्लभजलवत्प्राणग्राहिण्योः जुगुप्सितरक्ताम्बुत्यागस्य भानुरूप्यात्समालंकारश्च। द्वयोरपि श्लेषोज्जीवितयोः संसृष्टिः।

समरभुवि बभासे सादिनो भूषणानां
मरकतमणिभासां मध्यगः कश्चिदश्वः ।
सकलभटविमर्दैश्चञ्चलाद्बिम्बभेदे
निपतित इव रथ्यो नेतुरह्नां शताङ्गात् ॥ २९ ॥

आयोधनाङ्गणजुषामसृगापगाना-
मावर्तगर्भपतिताः कुणपा हयानाम् ।
संबभ्रमुर्विहितपूर्वमुपाददानाः
शिक्षाविशेषमिव मण्डलचङ्क्रमेषु ॥ ३० ॥

धन्वी धानुष्कमारादसिभृतमसिमान् कुन्तिनं कुन्तधारी
चक्रास्त्रं चक्रहेतिर्गदिनमपि गदापाणिरन्योन्यमेत्य ।
स्वस्वास्त्राणां प्रयोगे दृढपरिचितयो हन्तृवध्यत्वशैली-
साधारण्ये प्रतिष्ठामथ विदुधुरसिद्वन्द्वयोधाग्रगण्याः ॥ ३१ ॥

ततः—धृष्टद्युम्नोत्कृत्तवर्माणमग्रे
दृष्ट्वा हाहाशब्ददीनां स्वसेनाम् ।

---

समरभुवि सादिनः अश्वारोहस्य भूषणानां भूषासंबधिनां मरकतमणीनां हरितरत्नानां याः भासः हरित्कान्तयः तासां मध्यगः मध्यस्थः कश्चित् अश्वः अह्नां नेतुः सूर्यस्य बिम्बभेदे विषये सकलभटानामभिमुखहतसकलयोधानां विमर्दैः प्रवेशे अहंपूर्विकया संमर्दैः चञ्चलात् शताङ्गात् रथात् निपतितः रथ्यः सूर्यरथाश्व इव बभासे शुशुभे । सूर्याश्वानां हरितत्वादियमुत्प्रेक्षा ॥ २९ ॥

आयोधनाङ्गणजुषां युद्धाङ्गणस्थितानाम् असृगापगानां रक्तनदीनाम् आवर्तगर्भे जलभ्रममध्ये पतिताः हयानां कुणपाः शवाः मण्डलचङ्क्रमेषु मण्डलाकारगतिषु पूर्वं विहितः कृतः विहितपूर्वः तं शिक्षाविशेषम् अभ्यासविशेषम् आददाना इव स्वीकुर्वाणा इव संबभ्रमुः । अनेन चतुरङ्गसेनावधबाहुल्यं द्योत्यते ॥ ३० ॥

अथैकेन पदातिद्वन्द्वयुद्धमाह—धन्वीति । अथ स्वस्य स्वस्य चास्त्राणां प्रयोगे दृढपरिचितयः दृढाभ्यासाः द्वन्द्वयोधेषु अग्रगण्याः मुख्याः धन्वी धनुर्धारी धनुः प्रहरणं यस्य तं धानुष्कम् । एत्य इति क्रियाया अत्रोत्तरत्रापि संबन्धः । चक्रहेतिः चक्रायुधः, इति अन्योन्यं स्वसमानशस्त्रिणं परस्परम् एत्य अभिगम्य हन्तृत्ववध्यत्वयोः शैल्याः अर्हतायाः साधारण्ये समानभावे प्रतिष्ठां स्थितिं दधुः । तस्मिन्द्वन्द्वयुद्धे अयमिमं हन्यादितिः निश्चयो न बभूवेति भावः ॥ ३१ ॥

ततः धृष्टद्युम्नेन पाण्डवसेनापतिना कृत्तानि छिन्नानि वर्माणि कवचानि यस्याः ताम्

---

१ क. 'द्भिन्नवाहान्नि°' । २ क. °नाङ्कण°' । ३ ख. गर्तप° । ४ ख. °मागाद° । ५ क. ख. °मभिविदधुरमी । ६ क. ममाणि° । ७ अत्रैकैकस्मिन्हन्तृत्ववध्यत्वरूपानेकगुणयोगपद्यात्समुच्चयभेदः ।

कोदण्डज्यामास्पृशन् घोरघोषां
कोपाद्भीष्मः प्राविशत्पार्थसैन्यम् ॥ ३२ ॥
ससिंहनादे सरितः कुमारे
चापं समाकृष्य शरैर्विमुक्तैः ।
परान् परेतुं प्रथमं प्रवृत्ते
वरान्वरीतुं ववलेऽप्सरोभिः ॥ ३३ ॥
पृथासुतानां पृतनान्तराले
पृथक् पृथक् तस्य पृषत्कवर्याः ।
द्विपान् सहस्रं तुरगान् सहस्रं
भटान्सहस्रं पतितानकार्षुः ॥ ३४ ॥
सिन्धोः सुतस्य विशिखैर्जमदग्निसूनोः
प्राणान् विलिह्य धिगिति प्रविमुक्तवद्भिः ।
कृत्तान्यमुञ्चत विरोधिकुलानि कश्चि-
त्कश्चिज्जवेन जगृहे युधि भूतवर्गः ॥ ३५ ॥
देवव्रते दलितवैरिणि दृष्टमात्रे
सारथ्यमात्रकरणे कृतसंगरोऽपि ।

---

अत एव हाहाशब्दैः दीनां स्वसेनाम् अग्रे दृष्ट्वा भीष्मः घोरघोषां कोदण्डज्यां धनुर्मौर्वीम् आस्पृशन् बाणसंधानार्थम् आस्फालयन् पार्थसेनां प्राविशत् ॥ ३२ ॥

सिंहनादेन क्ष्वेडाशब्देन सहिते सरितः गङ्गायाः कुमारे भीष्मे चापं समाकृष्य विमुक्तैः शरैः परान् शत्रून् परेतुं प्रेतान्कर्तुं हन्तुमित्यर्थः, प्रथमं प्रवृत्ते सति अप्सरोभिः वरान् वरीतुं ववले सज्जीबभूवे । अत्र वरीतुमिति पाठस्तु न सम्यक् । अभिमुखं हतानां स्वर्गगामित्वात्तद्वरणस्पृहयाऽप्सरोभिर्ववले इति भावः ॥ ३३ ॥

तस्य भीष्मस्य पृषत्कवर्याः बाणश्रेष्ठाः पाण्डवानां सेनामध्ये पृथक् पृथक् सहस्रं द्विपान् गजान् पतितान् मृत्वा पतितान् अकार्षुः, एवं तुरगान् भटांश्च अकार्षुः ॥ ३४ ॥

जमदग्निसूनोः परशुरामस्य प्राणान् विलिह्य आस्वाद्य धिगित्युक्त्वा प्रविमुक्तवद्भिः त्यजद्भिः एतत्प्राणापहरणे ब्रह्महत्याप्राप्त्यैतत्कर्म निन्द्यमिति मत्वा त्यजद्भिरिति भावः, सिन्धोः नद्याः सुतस्य भीष्मस्य विशिखैः युधि कृत्तानि छिन्नानि विरोधिकुलानि शत्रुवृन्दानि कश्चित् भूतानां वर्गः समूहः न जगृहे, कश्चित् भूतवर्गः जगृहे । इदं विचित्रम् , तत्र पञ्चमहाभूतान्तर्गतप्राणवाय्वादिसमूहः न जगृहे तत्याज, पिशाचानां वर्गो भक्षितुं जगृहे स्वीचकारेत्यर्थात् परिहारः ॥ ३५ ॥

दलितवैरिणि हतशत्रौ देवव्रते भीष्मे दृष्टमात्रे दृष्टे एव सारथ्यमात्रकरणे अर्जुनस्य

---

१ क. °ज्यामामृशन् । २ क. वरीतुम्, ख. परीतुम् । ३ अत्र तादृग्दीनसेनावलोकनस्य तथाभीष्मप्रवेशं प्रति हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । ४ अत्र भीष्मपरवारणाप्सरोवरवरण-क्रिययोर्यौगपद्यात्समुच्चयः ।

गोत्रेण केवलमहो मुरजिद्रथस्य
मध्येऽपि चक्रमतिविभ्रमयाञ्चकार ॥ ३६ ॥
अरिमण्डलखण्डकैः पृषत्कैरवदीर्णा रुधिरापगावलीनाम् ।
अवनीपतयो रुषा निजानामधिविन्नां जननीममुष्य चक्रुः ॥ ३७ ॥

तदनु समरसंमुखीनवैरिभटप्राणपरिमोषणोन्मुखशिलीमुखप्रस्थान-समयसमाप्रच्छनपात्रीकृतकर्णपुटैर्बलवैरिनगरवास्तव्यवारवनिताजन-तापाणिपङ्केरुहपरिगलितपारिजातप्रसूनसहपतितचञ्चरीकपुञ्जमञ्जुगु-ञ्जितव्यञ्जितभेदचिकुरबन्धैर्वेगापतितविशिखविघट्टनविपर्यस्तविकटमु-कुटविटङ्कविप्रकीर्णमुक्ताफलशङ्कावदान्यरणश्रमवारिशीकरनिकरकोर-कितनिटिलभागै रोषातिरेकव्यतिकरितदशनालिदंशनपुनरुक्तरक्तिमा-धरैरयुतेन राज्ञां शिरोभिः कल्पान्तरुद्रबन्धुः सुरसिन्धुसूनुर्वसुंधरां बन्धुरयाञ्चक्रे ॥ ४ ॥

---

सारथिकर्ममात्रकरणे कृतसंगरोऽपि कृतप्रतिज्ञोऽपि मुरजित् श्रीकृष्णः रथस्य मूले केवलं चक्रं न भ्रमयाञ्चकार, रथस्य मध्येऽपि चक्रं भ्रमयाञ्चकार। यदा भीष्मप्रतापस्य पुरोऽर्जुन-सामर्थ्यं न चलति स्म तदा कृष्णः सारथ्यकर्मणा केवलं रथं न गमयामास अपि तु भीष्मवधार्थं हस्ते चक्रं धृत्वा भ्रामयामासेत्यर्थः ॥ ३६ ॥

अरिमण्डलानां खण्डकैः छेत्तृभिः पृषत्कैः बाणैः अवदीर्णाः छिन्नाः अवनीपतयः राजानः रुषा क्रोधेन अमुष्य भीष्मस्य जननीं भागीरथीं निजानां रुधिरापगावलीनां रक्तनदीपरंपराणाम् अधिविन्नां सपत्नीं चक्रुः। अन्योऽपि वैरी स्वशत्रुमपकर्तुमशक्तस्तन्मा-तुरप्रियं करोति। स्त्रीणां सपत्नीदुःखं प्रसिद्धम् ॥ ३७ ॥

तदनु कल्पान्तरुद्रस्य बन्धुः संहारकारित्वेन तत्तुल्यः सुरसिन्धुसूनुः भीष्मः अयुतेन राज्ञां शिरोभिः दशसहस्रसंख्याकैः क्षत्रियाणां मस्तकैः वसुंधरां पृथ्वीं बन्धुरयाञ्चक्रे नतोन्नतां चक्रे। कथंभूतैः शिरोभिः, समरे संमुखीनाः युद्धार्थमभिमुखाः ये वैरिभटाः तेषां प्राणानां परिमोषणे अपहारविषये उन्मुखानाम् उत्सुकानां शिलीमुखानां बाणानां प्रस्थानसमयस्य यत्समापृच्छनं संप्रश्नः तस्य पात्रीकृताः कर्णपुटाः यैस्तैः। येषां कर्णपुटपर्यन्तं ज्यामाकृष्य परप्राणहरणार्थं बाणाः प्रमुक्तास्तैरित्यर्थः। पुनः कीदृशैः, बलवैरिनगरे अमरावत्यां वास्तव्या वासकर्त्री या वारवानिताजनता अप्सरसां संहतिः

---

१ ख. मूलेन। २ ख. असौ। ३ क. ख. मुरभिद्र°। ४ क. °मतिसंभ्र°। ५ क. ख. खण्डनैः। ६ ख. पृच्छन। ७ क. विलासिनीजनपा°। ८ क. ख. प्रसवस°। ९ क. ख. सहापतित। १० ख. °गादापतित°। ११ क. विकटेति नास्ति। १२ क. विटङ्केति नास्ति, ख. विशंकट°। १३ क. विविधेत्यधिकम्। १४ क. ख. °नावलि°। १५ क. ख. सूनुरयं व°। १६ क. ख. चकार। १७ अत्र दलितवैरिभीष्मावलोकनस्य विशेषणगत्या श्रीकृष्णस्य प्रतिज्ञात्यागपूर्वकं चक्रभ्रामणहेतुत्वात्पदार्थ-हेतुकं काव्यलिङ्गम्। १८ अनात्महन्तारं भीष्मं साक्षात्प्रतिकर्तुमशक्तानां सर्वेषां नृपाणां तदीयजननीदुःख-जननोद्योगवर्णनात्प्रत्यनीकालंकारः।

नद्याः सुतेन जनितैर्नवदेववर्गैः
सान्द्रे स्वधाम्नि सति संकुचितस्थितीनाम् ।
स्वर्गौकसामजनि सा स्वयमेव काम्या
कूलंकषा कुशिकनन्दनकोपमुद्रा ॥ ३८ ॥
भीष्मस्य कन्याजनपाणिपीडां
पितुर्मुदे त्यक्तवतोऽपि तस्य ।
संघात्सुराणां सति पुष्पवर्षे
संतानलाभोऽजनि तद्विचित्रम् ॥ ३९ ॥

---

तस्याः पाणिपङ्केरुहेभ्यः करकमलेभ्यः परिगलितानि यानि पारिजातप्रसूनानि कल्पवृक्षपुष्पाणि तैः सह पतिताः ये चञ्चरीकपुञ्जाः भ्रमरसमूहाः तेषां मञ्जुगुञ्जितैः व्यञ्जितः प्रकटीकृतः भेदो येषां ते चिकुरबन्धाः केशबन्धाः येषां तैः। पराक्रमिणामभिमुखहतानां संबन्धित्वाद्देवीकृतपुष्पवृष्टिविशिष्टैरित्यर्थः। पुनः०, वेगेन आपतितानां विशिखानां विघट्टनैः ताडनैः विपर्यस्ताः विपरीतं पतिताः ये विकटाः महान्तः मुकुटाः तेषां विटङ्केभ्यः कपोतपालिकाभ्यः विप्रकीर्णानां समन्ततः पतितानां मुक्ताफलानां शङ्कायाः वदान्याः दातारः ये रणश्रमवारिशीकरनिकराः रणसंबन्धिश्रमजन्यघर्मबिन्दवः तैः कोरकिताः विशिष्टाः भालदेशाः येषां तैः । सद्यश्छिन्नत्वान्मुक्ताफलसदृशघर्मबिन्दुयुक्तत्वम् । पुनः०, रोषातिरेकेण रोषातिशयेन व्यतिकरितानि आरब्धानि यानि दशनावलीनां दन्तावलीनां दंशनानि तैः पुनरुक्तः द्विगुणीकृतः रक्तिमा येषां ते अधरोष्ठा येषां तैः । दष्टपूर्वातिरक्ताधरैरित्यर्थः ॥ ४ ॥

नद्याः सुतेन भीष्मेण जनितैः शूरान्हत्वा उत्पादितैः देववर्गैः स्वधाम्नि स्वस्थाने स्वर्गे सान्द्रे संबाधे सति, संकुचिता स्थितिर्येषां तेषां स्वर्गौकसां सा प्रसिद्धा कूलंकषा पूर्णा कुशिकनन्दनस्य विश्वामित्रस्य कोपमुद्रा त्रिशङ्कुराजार्थे नूतनस्वर्गनिर्माणविषये कोपाकृतिः स्वयमेवात्मनैव काम्या एषणीया अजनि जाता । यदि तदानीं कुशिकनन्दनेन द्वितीयसर्गः कृतः स्यात्तर्हि इदानीं स्थितिसंकोचो न स्यात्, इदानीमस्मत्सुखाय भवेत् इति इच्छा समुत्पन्नेति भावः ॥ ३८ ॥

पितुः शन्तनोः मुदे हर्षाय कन्याजनानां पाणिपीडां विवाहं त्यक्तवतोऽपि तस्य भीष्मस्य सुराणां संघात् पुष्पवर्षे सति संतानलाभः संततिप्राप्तिः अभूत् । इति यत् तद्विचित्रम्, संतानस्य कल्पवृक्षविशेषस्य पुष्पाणि संतानानि तेषां लाभ इत्यर्थात्परिहारः ॥ ३९ ॥

---

१ अत्र देवानां स्वर्गस्थितिसंकोचासंबन्धेऽपि, एवं त्रिशङ्कुस्वर्गकामनासंबन्धेऽपि च संबन्धोक्तिरूपमतिशयोक्तिद्वयमङ्गाङ्गिभावेन संकीर्णम् । २ अत्र संतानकारणदारपरिग्रहाभावेऽपि तल्लाभवर्णनात् श्लेषप्रतिभोत्थापितो विभावनालंकारः ।

इत्थं विधाय दिनमेकमसौ समीकं
पाश्चात्यभूधरमुपेयुषि पद्मबन्धौ ।
प्रत्यर्थिनामिव चकार बलापहारं
स्वस्यापि चापशिखरादवरोपितज्यः ॥ ४० ॥

इति नवदिनानि नवनवानि भुजविलसितानि प्रकाश्य दशमेऽहनि पुनरप्यसौ निजध्वजचिह्नमात्रं वियदारोहति सति भगवति विवस्वति समरवर्षासमयशिखण्डिना गाण्डीवधन्वना पुरस्कृतं शिखण्डिनं विलोक्य स्त्रीपूर्वोऽयममुना सह न योद्धव्यमिति निषिध्य हस्ततलनिरस्तधनुर्लस्तकः प्रथमं स्वदूरापसारकुपितयेव सिञ्जिन्या पश्चाद्दूरनिष्कासितैर्विजयविपाठैरादिवसावसानमवदारितकलेवरतया नितान्ततान्तः शान्तनवः शान्तमनाः स्वान्तनिहितरमाकान्तः सुभटलोकसमुचितां शरशय्यां क्रमादधिशिश्ये ॥ ५ ॥

असौ भीष्मः, इत्थम् एकदिनं समीकं युद्धं विधाय कृत्वा पद्मबन्धौ सूर्ये पाश्चात्यभूधरम् अस्ताचलम् उपेयुषि प्राप्तवति सति चापस्य शिखरात् अग्रात् अवरोपिता अधः कृता ज्या येन तथाभूतः सन् स्वस्यापि बलापहारं सामर्थ्यापहारं सेनानिवर्तनं च चकार । केषामिव, प्रत्यर्थिनामिव शत्रूणामिव । यथा शत्रूणामपि बलापहारः कृतः तथा स्वस्यापि बलापहारः कृत इत्यर्थस्वीकारेण चमत्कारः । अर्थान्तरं तु उक्तम् ॥ ४० ॥

इति नवदिनानि नवनवानि नूतनेभ्यो नूतनानि भुजविलसितानि भुजक्रीडाः प्रकाश्य दशमेऽहनि पुनरप्यसौ शान्तमनाः स्वान्ते निहितो रमाकान्तो येन सः शान्तनवः भीष्मः सुभटलोकानां धार्मिकशूरलोकानां समुचितां शरशय्यां क्रमादधिशिश्ये, शरतल्पे शयितवान् इत्यर्थः । कथंभूतः भीष्मः, भगवति विवस्वति सूर्ये निजध्वजस्य चिह्नं तालवृक्षः तन्मात्रं तत्प्रमाणं यथा तथा वियत् आकाशम् आरोहति सति तत्समये समर एव वर्षासमयः वर्षाऋतुः तत्र शिखण्डिना मयूरेण तत्सदृशेन समरविषयप्रीतियुतेन गाण्डीवधन्वना अर्जुनेन पुरस्कृतं स्वाग्रतः स्थापितं शिखण्डिनं ज्येष्ठं द्रुपदपुत्रं विलोक्य, अयं पूर्वं स्त्री स्त्रीपूर्वः जन्मकाले जन्मान्तरे च स्त्री सन् ततः पुरुषो जात इत्यर्थः, अमुना सह न योद्धव्यमिति निषिध्य हस्ततलात् निरस्तः त्यक्तः धनुर्लस्तकः धनुर्मध्यो येन सः, त्यक्तचाप इत्यर्थः । पुनः०, प्रथमं स्वस्य दूरम् अपसारः अपसरणं तेन कुपितयेव सिञ्जिन्या गुणेन पश्चात् दूरं निष्कासितैः अपसारितैः आकर्णं ज्यामाकृष्य प्रयुक्तैरित्यर्थः, विजयवि-

१ ख. लतेत्यधिकम् । २ क. ख.ऽह्नि । ३ क. सतीति नास्ति । ४ ख. गाण्डीविना पु° । ५ क. दृष्ट्वा, ख. समीक्ष्य । ६ क. ख. °सरण° । ७ क. °श्चादतिदू° । ८ क. °सानं विदा° । ९ क. असावित्यधिकम् । १० अत्र शत्रूणां भीष्मस्य च बलापहारेण श्लेषभित्तिकालब्धैक्येनौपम्यस्य गम्यत्वात्तुल्ययोगितालंकारः ।

पार्थेन क्षितिविनिखातपुङ्खकानां
बाणानामुपरि पितामहः शयानः।
बभ्राजे व्रणबिलवान्तरक्तबिन्दु-
धाराणां घन इव शक्रकोपवर्षम् ॥ ४१ ॥
संवीक्ष्य तत्र तमिमं शयितं शरेषु
सांक्रामिकं गुणमिव प्रतिपद्यमानः।
भास्वानपि स्वयमुपात्तकरोष्मशान्तिः
पाश्चात्यसागरशरेषु शयालुरासीत् ॥ ४२ ॥
जगति विनुतकीर्तौ जामदग्न्यस्य शिष्ये
कवलितरिपुवर्गे कालधर्मं प्रपन्ने।
बहुसुरवरलाभाद्बद्धकामोत्सवानां
श्वशुरमरणदुःखं स्वर्वधूनां बभूव ॥ ४३ ॥

---

पाठेः अर्जुनबाणैः आदिवसावसानं सूर्यास्तपर्यन्तम् अवदारितं भिन्नं कलेवरं यस्य तस्य भावस्तत्ता तया नितान्ततान्तः अत्यर्थं व्याकुलः ॥ ५ ॥

पार्थेनार्जुनेन क्षितौ विनिखाताः आरोपिताः पुङ्खाः पश्चाद्भागा येषां तेषां बाणानामुपरि शयानः व्रणबिलैः क्षतच्छिद्रैः वान्ताः त्यक्ताः रक्तबिन्दवो यस्य सः, यद्वा वमतेरकर्मकत्वं स्वीकृत्य कर्तरि क्तः, तथाच व्रणबिलेभ्यः वान्ताः पतन्तः रक्तबिन्दवो यस्य सः पितामहः भीष्मः बभ्राजे शुशुभे। क इव, शक्रकोपवर्षी इन्द्रकोपेन रक्तवृष्टिकर्ता धाराणां घन इव मेघ इव। शक्रगोपवर्षीति पाठे इन्द्रगोपसंज्ञकलोहितकीटवर्षी मेघ इवेत्युत्प्रेक्षा ॥ ४१ ॥

तत्र रणाङ्गणे तम् इमं भीष्मं शरेषु शयितं वीक्ष्य सांक्रमिकं संसर्गजन्यं गुणं प्रतिपद्यमान इव प्राप्नुवानिव स्वयम् उपात्ता स्वीकृता करोष्मणः किरणोष्मणः, हस्तपराक्रमस्य च शान्तिर्येन सः भास्वानपि तेजस्वी सूर्योऽपि पाश्चात्यसागरस्य पश्चिमदिक्स्थसमुद्रस्य शरेषु बाणेषु, जलेषु च शयालुः निद्राणः आसीत्। म्लानं शरतल्पस्थं भीष्मं दृष्ट्वा सूर्यः स्वयमपि शान्तः सन् समुद्रशरेषु शयितवानित्यर्थः। तत्समये सूर्योऽस्तं जगामेति भावः ॥ ४२ ॥

जगति विनुता विशेषेण स्तुता कीर्तिर्यस्य तस्मिन्, कवलितः नाशितः रिपुवर्गो येन तस्मिन् जामदग्न्यस्य शिष्ये भीष्मे कालधर्मं मुमूर्षुतां प्रपन्ने प्राप्ते सति बहूनां सुरवराणां नूतनदेवानां लाभाद्बद्धः आरब्धः कामोत्सवो सुरतोत्सवो याभिः तासां स्वर्वधूनाम् अप्सरसां श्वशुरमरणस्य इदानींतनस्वपतिदेवनिर्मातृत्वेन श्वशुरो भीष्मः तस्य मरणदुःखं बभूवेति भावः ॥ ४३ ॥

---

१ क. ख. बभ्राज। २ क. ख. गोपवर्षी। ३ क. थियासौ। ४ अत्रोपमालंकारः। ५ अत्राप्सरसां तादृशदुःखासंबन्धेऽपि संबन्धोक्तेरतिशयोक्तिः।

पतिते युधि वाहिनीसुते पतदश्रुर्द्विविधापि वाहिनी ।
प्रथमा[1] परितापमुच्छ्रितं पटवेश्मानि ययौ ततः परा[2] ॥ ४४ ॥[3]

अपरेऽहनि कौरवश्चमूना-
मधिपत्वे परिकल्प्य कुम्भयोनिम् ।
पुरतो निजगाद भीष्मपाता-
द्रुदितोच्छूनदृशां[4] नराधिपानाम् ॥ ४५ ॥

कुम्भोत्पत्त्या प्रसिद्धो मुनिऋषभ[5] इव क्ष्माधरं विन्ध्यसंज्ञं
लोके तादृग्विधस्त्वं युधि निजमहसा भूभृतः[6] स्तम्भयित्वा ।
जीवग्राहं गृहीत्वा विनमितवदनं लज्जया धर्मसूनुं
पद्भ्यामेव प्रचारं विदधतमधुना लीलया मेऽर्पयेति ॥४६॥

उदितं तदिदं निशम्य गोष्ठ्यामुचितज्ञः करमुन्नमय्य किंचित् ।
गुहसंनिभविक्रमस्तदानीं गुरुरेषोऽपि कुरूद्वहं बभाषे ॥ ४७ ॥

कर्तुं हि शक्यमखिलं नृप काङ्क्षितं ते
धर्मात्मजे परिवृतेऽपि नराधिनाथैः[7] ।

---

युधि वाहिनीसुते भीष्मे पतिते सति द्विविधापि द्विप्रकारापि वाहिनी भागीरथी सेना च पतन्ति अश्रूणि यस्यास्तथाभूता अभूत् । तत्र प्रथमा भागीरथी उच्छ्रितं महान्तं परितापं शोकजन्यसंतापं ययौ, ततः परा द्वितीया सेना पटवेश्मानि ययौ ॥ ४४ ॥

अपरेऽहनि भीष्मपतनात् द्वितीये दिवसे कौरवः दुर्योधनः चमूनामधिपत्वे आधिपत्ये कुम्भयोनिं द्रोणं परिकल्प्य कृत्वा भीष्मपाताद्धेतोः रुदितेन रोदनेन उच्छूनाः शोथयुक्ताः दृशो येषां तेषां नराधिपानां राज्ञां पुरतः निजगाद उवाच ॥ ४५ ॥

'कुम्भात् उत्पत्त्या जन्मना प्रसिद्धः मुनिषु ऋषभः श्रेष्ठः अगस्त्यः विन्ध्यसंज्ञं क्ष्माधरं पर्वतमिव लोके तादृग्विधः कुम्भोत्पत्त्यादिना तत्सदृशः त्वं युधि निजमहसा स्वप्रतापेन भूभृतः भूपालान् पर्वतांश्च स्तम्भयित्वा तत्पराक्रमस्तम्भनं कृत्वा लज्जया विनमितम् अवाकृतं वदनं येन तं पद्भ्यामेव चरणाभ्यामेव प्रचारं गमनं विदधतं कुर्वन्तं धर्मसूनुं धर्मराजं लीलया जीवग्राहं गृहीत्वा जीवन्तं धृत्वेत्यर्थः, अधुना मे मह्यम् अर्पय देहि' इति उवाचेति पूर्वेणान्वयः । जन्मना प्रतापेन चागस्त्यसदृशस्त्वं भूभृत्स्तम्भनं कृत्वा धर्मराजं धृत्वा मेऽर्पयेत्यर्थः ॥ ४६ ॥[8]

गोष्ठ्यां सभायां तत् इदम् उदितं भाषितं निशम्य श्रुत्वा उचितज्ञः सम्यग्ज्ञाता गुहेन कार्तिकेयेन तुल्यः पराक्रमो यस्य स एष गुरुरपि द्रोणोऽपि तदानीं किंचित् करम् उन्नमय्य उच्चं कृत्वा कुरूद्वहं दुर्योधनं बभाषे ॥ ४७ ॥

'हे नृप! धर्मात्मजे वीरभूपालैः धराधिनाथैः परिवृते सत्यपि ते अखिलम् अशेषं

---

१ क.ख. प्रथमम् । २ ख. परम् । ३ क. ख. अत्रैव स्तबकसमाप्तिः । ४ ख. °तादुदि° । ५ क. वृषभः । ६ ख. भूभृतम् । ७ क. ख. धराधि° । ८ अत्रोपमा स्पष्टैव ।

शारिप्रणुन्नहयहेषितशब्दमिश्रो
न श्रूयते यदि नरस्य शरासघोषः ॥ ४८ ॥
सर्वास्त्रविद्यासहवाससौख्यं
संकेतभूमेरपि तस्य वाचम् ।
प्रत्युच्चयौ तां परिषद्गतानां
तिर्यक्प्रचारः शिरसो नृपाणाम् ॥ ४९ ॥
अथ द्रुपदजद्रोणौ रथद्विपहयावृतौ ।
बद्धायतसमुत्साहौ युद्धाय निरगच्छताम् ॥ ५० ॥
नामाक्षराङ्कितनदीसुतवाणकीर्णे
रङ्गेऽवतेरतुरुभावपि राजवर्गौ ।
सक्ष्वेडितौ सविरुदौ समदाट्टहासौ
संस्फालितांसशिखरौ सहवल्गनौ तौ ॥ ५१ ॥

---

काङ्क्षितम् इच्छाविषयं कर्तुं संपादयितुं शक्यं हि शक्यमेव । परंतु शौरिणा कृष्णेन प्रणुन्नाः प्रेरिताः ये हयाः तेषां हेषितशब्दैः अश्वजातीयशब्दैः मिश्रितः नरस्य अर्जुनस्य शरासघोषः गाण्डीवधनुर्ज्याघोषः यदि न श्रूयते तर्हि त्वत्काङ्क्षितं कर्तुं शक्यमित्यर्थः । अर्जुनाश्वधनुःशब्दश्रवणं यथा न स्यात् तावद्दूरमर्जुनो नीतश्चेत् तर्हि त्वत्काङ्क्षितं कुर्यामिति भावः ॥ ४८ ॥

सर्वासामस्त्रविद्यानां सहवाससौख्यम् एकत्रवाससौख्यं तस्य संकेतभूमेः—अस्मिन् स्थले सर्वाभिरागत्य सहवाससौख्यमनुभवाम इति संभाष्य यत्र मिलित्वा सौख्यमनुभवन्ति सा संकेतभूमिः—तद्रूपस्य महावीरस्यापि तस्य द्रोणस्य तां वाचं परिषदि सभायां गतानां विद्यमानानां नृपाणां शिरसः तिर्यक्प्रचारः वक्राचारः प्रत्युच्चयौ संमुखो ययावित्यर्थः । आश्चर्यम्, अनुमोदनार्थं शिरसश्चालनार्थेन परिहारः ॥ ४९ ॥

अथ रथद्विपहयैः आवृतौ बद्धः धृतः आयतः दीर्घः समुत्साहो याभ्यां तौ द्रुपदजद्रोणौ सेनापती युद्धाय युद्धं कर्तुं निरगच्छताम् ॥ ५० ॥

उभावपि तौ राजवर्गौ नाम्नः भीष्मनाम्नः अक्षरैः लिखिताक्षरैः अङ्किताः चिह्निताः ये नदीसुतवाणाः भीष्मवाणाः तैः कीर्णे व्याप्ते रङ्ग युद्धसभायाम् अवतेरतुराजग्मतुः । कीदृशौ राजवर्गौ, सक्ष्वेडितौ ससिंहनादौ । विरुदैः शौर्यप्रख्यापनाय धृतचिह्नैः सिंहव्याघ्राद्यङ्कितध्वजादिभिः सहितौ मदजन्याट्टहासेन सशब्दहास्येन सहितौ । संस्फालितम् आस्फालितम् अंसशिखरं स्कन्धाग्रं याभ्यां तौ । तथा सहवल्गनौ त्वं हतोऽसीत्यादिगर्वोक्त्या सहितौ ॥ ५१ ॥

---

१ क. ख. 'ख्यसंके' । २ क. रथाश्वगजसंवृतौ । ३ क. ख. महोत्साहौ । ४ क. ख. पूर्णे । ५ क. सक्ष्वेडितौ । ६ क. 'मदाट्ट' । ७ क. 'मास्फा', ख. 'सस्फालनांस' ।

अक्षौहिणीरवनिवल्लभवाहिनीना-
मेकत्र गाढमिलिताः सुतरामसोढाः।
सा युद्धभूमिरुपरीव समुत्पतन्ती
सान्द्रा रजःपटलिका समदृश्यताभ्रे ॥ ५२ ॥
भेरीरवे गगनशायिनि बाहुलीलां
द्रोणस्य वीक्षितुमनोभिरदृष्टपूर्वाम्।
मध्ये विसृज्य दिवि जम्भभिदोऽवकाशं
तस्थेऽभितस्त्रिदशकिंकरयक्षसिद्धैः ॥ ५३ ॥

ततस्ते सर्वेऽपि नरेन्द्रा वसुधातलनिहितवामजानुभागाः क्ष्वेडितमन्त्रमुदीर्य तूणीरपेटकसमुत्थापितान् जीवाकर्षणसमुपजातत्वरान् परुषभीषणविषदिग्धान् विनतातनयनिबद्धस्पर्धाभारान् तक्षकमुखान् बाणपन्नगान्नभोभुवि चिरं नर्तयन्तः परस्परं परिपन्थिनां प्राणपवमानमपीप्यन् ॥ ६ ॥

---

एकत्र एकस्मिन्स्थले गाढं सान्द्रं यथा तथा मिलिताः अवनिवल्लभानां भूपानां याः वाहिन्यः सेनाः तासामक्षौहिणीः एतन्नामकसंख्याः सुतराम् अत्यन्तम् असोढा सा युद्धभूमिः उपरि ऊर्ध्वभागे समुत्पतन्तीव उड्डयनं कुर्वतीव, अभ्रे आकाशे सान्द्रा निबिडा रजसां पटलिकासंहतिः समदृश्यत दृष्टा। यदोभये सेने रणाङ्गणमागते तदा बहुरजःपटलम् आकाशमुत्पपातेत्यर्थः ॥ ५२ ॥

भेरीणां रवे गगनशायिनि गगनं प्रति गते सति, पूर्वम् अदृष्टा अदृष्टपूर्वा तां द्रोणस्य बाहुलीलां वीक्षितुमनोभिः द्रष्टुकामैः त्रिदशकिंनरयक्षसिद्धैः दिवि आकाशे मध्ये मध्यभागे जम्भभिदे इन्द्राय अवकाशं विसृज्य विमुच्य अभितः उभयभागे तस्थे स्थितम् प्रभूणां निरीक्षणार्थे मध्येऽवकाशं मुक्त्वा सेवकानामुभयतः स्थितिरिति रीतिरेव ॥५३॥

ततः वसुधातले निहितः स्थापितः वामजानुभागो यैस्ते सर्वेऽपि नरेन्द्राः राजानः व्यालग्राहिणश्च क्ष्वेडितमन्त्रं सिंहनादात्मकं मन्त्रम् उदीर्य उच्चार्य तूणीरा एव पेटकाः तेभ्यः समुत्थापितान् प्रकटीकृतान् जीवाकर्षणे मौर्व्याकर्षणे, प्राणहरणे च समुपजाता त्वरा येषां तान् पुरुषान् कठिनान् क्रूरांश्च भीषणान् भयंकरान् विषदिग्धान् लिप्तांश्च विनतातनयेन गरुडेन सह गमनविषये जातिवैरेण च निबद्धः स्पर्धाभरो यैस्तान् तक्षकं छेदकं मुखम् अग्रभागो येषां तान्, पन्नगपक्षे तक्षकादीन् बाणपन्नगान् नभोभुवि आकाशस्थले चिरं नर्तयन्तः गमयन्तः सन्तः खेलयन्तः सन्तश्च परस्परं परिपन्थिनां शत्रूणां प्राणपवमानं प्राणवायुम् अपीप्यन् पाययामासुः ॥ ६ ॥

---

१ क. ख. असोढ्वा। २ क. वाहिनि। ३ क. पेटिकं। ४ क. 'स्पर्धास्तक्ष', ख. भरान्। ५ क. चिराय। ६ क. ख. 'स्परपरि'। ७ अत्र समस्तवस्तुवर्ति सावयवरूपकम्।

कलशीतनयेऽथ कार्मुकं स्वं
वलयीकुर्वति वैरिधन्वियूनाम् ।
युधि केवलमेव चापदण्डा
धृतजीवा जनदृक्पथेऽत्यतिष्ठन् ॥ ५४ ॥

विधातृसृष्टिं विपरीतरूपां
विधातुमुद्युक्त इवैष वीरः ।
शराभिवर्षेण चकार राज्ञा-
मूर्ध्वं कबन्धानि शिरांस्यधस्तात् ॥ ५५ ॥

तावद्घोटैर्वलक्षैर्वलयितसविधे तस्थिवांसं शताङ्गे
भारद्वाजो जिघृक्षुर्नृपतिमभिययौ भल्लवर्षं विमुञ्चन् ।
दंष्ट्रारोचिःशलाकास्तुमुलमवाकिरन्दिक्षु सर्वासु घोरः
शीतांशुं मध्यसीम्नि स्थितमिव परिधेः सिंहिकायाः कुमारः ॥५६॥

ततस्तदीयमार्गणगणाभिघातनिर्वर्तितमुखैर्निजशिलीमुखैः सह दूरमुपयातान् मातरिश्ववैश्वानराश्विनेयतनयप्रभृतीन् क्षितिपतिरथर-

अथ कलशीतनये द्रोणाचार्ये स्वं कार्मुकं धनुः वलयीकुर्वति बाणसंधानं कृत्वा आकर्षति सति वैरिणः ये धन्वियुवानः धानुष्कतरुणाः तेषां चापदण्डाः युधि केवलं जनानां दृक्पथेषु दृष्टिमार्गेषु धृतजीवाः धृतमौर्वीकाः धृतप्राणाश्च अतिष्ठन् आसन् । द्रोणाचार्यपुरतः कैरप्यरिधानुष्कैः स्वधनुः सज्जं न कृतमित्यर्थः ॥ ५४ ॥

विधातुः ब्रह्मणः सृष्टिं विपरीतरूपां कर्तुम् उद्युक्त एव एषः वीरः द्रोणः शराभिवर्षेण बाणवृष्ट्या राज्ञां वैरिनृपाणां कबन्धानि शरीरस्य शिरोधोभागान् ऊर्ध्वम् उपरि चकार, शिरांसि अधस्तात् अधोभागे चकार । विधातृसृष्टौ उपरि शिरः अधः कबन्धं वर्तते अनेन शिरांसि छित्त्वा भुवि पातितानीति कबन्धा इतस्ततो गच्छन्त्याकाशे उत्पतन्ति चातो विपरीता सृष्टिः कृता किमित्युत्प्रेक्षा ॥ ५५ ॥

यावत् सेनामर्दनं चलितं तावत् वलक्षैः शुभ्रैः घोटैः वलयितः सविधः समीपभागो यस्य तस्मिन् शताङ्गे रथे तस्थिवांसं स्थितं नृपतिं धर्मराजं जिघृक्षुः ग्रहीतुमिच्छुः भारद्वाजः द्रोणः भल्लवर्षं बाणवृष्टिं विमुञ्चन् सन् अभिययौ संमुखो जगाम । कमिव, परिधेः परिवेषस्य मध्यसीम्नि मध्यभागे स्थितं शीतांशुं चन्द्रं जिघृक्षुः घोरः सिंहिकायाः कुमारः राहुः सर्वासु दिक्षु दिशासु दंष्ट्रारोचिषः शलाकाकारसूक्ष्मदंष्ट्रारोचींषि तुमुलं सान्द्रमवाकिरन् वर्षन् सन् यथाऽभियाति तद्वत् ॥ ५६ ॥

ततः तदीयानां द्रौणीयानां मार्गणगणानां बाणसमूहानामभिघातैः प्रहारैः निर्वर्तितानि पश्चात् कृतानि मुखानि येषां तैः निजशिलीमुखैः स्वबाणैः सह दूरम् उपयातानागतान्

१ ख. पथेऽत्रतिष्ठन् । २ क. 'वृष्टीर्वि' । ३ क. घोराः । ४ क. ख. तदनु । ५ क. रथेति नास्ति । ६ अत्र धन्वसूभयत्र प्राप्तस्य सजीवत्वस्यैकत्र धन्वसु नियमनात्परिसंख्यालंकारोऽसंबन्धे संबन्धरूपातिशयोक्तिश्चैकवाचकानुप्रवेशसंकीर्णौ । ७ अलंकारोऽत्र पूर्णोपमा ।

क्षिणः प्रवीरानभिवीक्षमाणेन माधवेन धाव्यमानतुरङ्गेण शताङ्गेन प्लवङ्ग-केतनो नगेन्द्रो नदीप्रवाहमिव निर्निरोधरथपर्यंतमाचार्यमुपरुरोध ॥७॥

शिवयुद्धकृतस्तस्य द्रोणयुद्धेऽप्यभून्मनः ।
सर्वाऽपि जनता श्रेयः काङ्क्षते ह्युत्तरोत्तरम् ॥ ५७ ॥

दाता गृहीता च धनञ्जयावि-
त्युद्दामशब्दो भुवनेषु यस्य ।
विस्फारघोषो धनुषोऽस्य भूया-
न्विजृम्भते स्म द्विषतामसह्यः ॥ ५८ ॥

नामैषां मे ज्यायसः पुण्यकीर्ते-
रासीदिष्टं मात्स्यपुर्यामितीव ।
गाण्डीवोत्थैरेष बाणैर्हतानां
कङ्कान् क्रव्यैर्विद्विषां पर्यतार्प्सीत् ॥ ५९ ॥

---

मातरिश्वा वायुः, वैश्वानरः अग्निः, आश्विनेयौ च तेषां तनयाः पुत्राः भीमसेनधृष्टद्युम्न-नकुलसहदेवाः प्रभृतयो येषां तान् प्रवीरान् महावीरान् क्षितिपतिरथं रक्षन्ति तान् अभितः वीक्षमाणेन माधवेन धाव्यमानाः त्वरया गम्यमानाः तुरगाः यस्य तेन शता-ङ्गेन रथेन प्लवङ्गकेतनः अर्जुनः—नगेन्द्रः महापर्वतः नदीप्रवाहमिव—निर्निरोधा निरोधरहिता रथचर्या रथगमनं यस्य तम् आचार्यं द्रोणम् उपरुरोध, द्रोणधर्मराजयोर्मध्ये बभूवेत्यर्थः॥७॥

शिवेन सदाशिवेन अल्पमानेन च युद्धकृतः तस्यार्जुनस्य द्रोणाचार्येण शिवापेक्षया द्रोणसंज्ञकाधिकमानेन च यत् युद्धं तत्रापि मनो मनोरथः अभूत् । श्लेषेणोक्तमर्थं सामा-न्येन द्रढयति—सर्वेति । तथाहि सर्वाऽपि जनता जनसमूहः उत्तरोत्तरम् अधिकादधिकं श्रेयः कल्याणं काङ्क्षते ईच्छति ॥ ५७ ॥

अग्न्यर्जुनयोः धनञ्जयशब्दवाच्यत्वाद्यस्य धनुषः दाता गृहीता प्रतिगृहीताऽपि धनञ्ज-याविति उद्दामशब्दौ प्रौढशब्दौ भुवनेषु स्वर्गमृत्युपातालेषु स्थितौ, अस्य गाण्डीवनाम्नः धनुषः ज्याशब्दः विजृम्भते स्म ववृधे । कथंभूतः शब्दः, द्विषतां शत्रूणाम् असह्यः । तथा भूयान् महान् ॥ ५८ ॥

'मात्स्यपुर्यां विराटनगर्यां पुण्यकीर्तेः मे ज्यायसः ज्येष्ठबन्धोः धर्मस्य एषां पक्षिणां नाम कङ्क इति संज्ञा इष्टं प्रियम् आसीत्' इतीव अस्माद्धेतोरिव एषः अर्जुनः गाण्डीवादु-त्थितैः बाणैः हतानां द्विषतां क्रव्यैः मांसैः कङ्कानेतत्संज्ञकपक्षिणः पर्यतार्प्सीत् तृप्तान् चकारेत्यर्थः ॥ ५९ ॥

---

१ क. ख. वीक्ष्य क्षणेन माधवधा° । २ क. निर्निवाररथचर्यं त°, ख. दुर्निरोधरथचर्यमा° । ३ ख. काङ्क्षति । ४ ख. ऽपि । ५ क. धनञ्जयो वे° । ६ क. ऽरित । ७ अत्र सामान्येन विशे-षसमर्थनरूपोऽर्थान्तरन्यासः, श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्युज्जीवित इति द्वयोरङ्गा-ङ्गिभावेन संकरः ।

तदनु सव्यसाचिशरवीचिनीचीकृतभुजदम्भविजृम्भः कुम्भसंभवः समराय प्रतिगृहीतेषु संविधानेषु तूणीरमात्रमेव प्रतिभटाभिमुखं विदधानैर्योधैः साकं चण्डभानुश्चरमगिरेरिव स्वयमपि कटकसीमानमासीदत् ॥ ८ ॥

अन्येद्युर्द्रोणसंचोदितनृपवचने तस्थिवद्भिस्त्रिगर्तै-
राहूतेऽन्यत्र योद्धुं गतवति विजये कृष्णक्लृप्तप्रसङ्गे ।
प्रातस्ते धार्तराष्ट्राः परबलमभजन् वीतभीकैरनेकै-
र्दावज्वालेन शून्यं वनमिव चमरा वल्गवद्भिः स्वयूथैः ॥ ६० ॥

भारद्वाजोऽपि तस्मिन्नहनि कुरुपतेर्वाञ्छितार्थं विधास्यन्
रन्ध्रान्वेषैकतानो रथमथ निकषा स्थापिते धर्मसूनोः ।
कृष्णाभ्यां रक्षणाय प्रथितभुजमदे सत्यजित्युत्स्फुलिङ्गं
दृष्ट्योर्युग्मं विधाय प्रतिभटपृतनाकुक्षिमाविक्षदेकः ॥ ६१ ॥

---

तदनु अर्जुनगमनानन्तरं सव्यसाचिनः अर्जुनस्य शरवीचिभिः बाणपरम्पराभिः नीचीकृतः अल्पीकृतः भुजदम्भविजृम्भः बाहुगर्वविकासो यस्य सः कुम्भसंभवः द्रोणः समराय युद्धार्थं प्रतिगृहीतेषु संविधानेषु खड्गधनुरादिसाधनेषु मध्ये तूणीमात्रमेव इषुधिमात्रमेव प्रतिभटानां शत्रुभटानाम् अभिमुखं संमुखं विदधानैः कुर्वाणैः स्वपृष्ठं प्रदर्श्य पलायमानैरित्यर्थः, योधैः साकं चण्डभानुः सूर्यः चरमगिरेः अस्ताचलस्य कटकसीमानं नितम्बप्रदेशमिव स्वयमपि कटकसीमानं सेनानिवेशस्थानमासीदत् प्राप ॥ ८ ॥

अन्येद्युः द्रोणयुद्धस्य द्वितीयदिवसे कृष्णेन क्लृप्तः कृतः प्रसङ्गः सारथ्यार्थं संगतिर्यस्य तस्मिन् विजये अर्जुने द्रोणेन संचोदितः प्रेरितः यः नृपः दुर्योधनः तस्य वचने तस्थिवद्भिः त्रिगर्तैः त्रिगर्तदेशीयसुशर्मप्रभृतिभिः आहूते इतो युद्धाय एहीत्याकारिते अतस्तैः सह योद्धुम् अन्यत्र गतवति सति कृष्णेन सह अर्जुने संशप्तकैः सह योद्धुमन्यत्र गतवति सती त्यर्थः, प्रातः प्रातःकाले एव ते धार्तराष्ट्राः दुर्योधनादयः वीता गता भीः भयं येषां तैरनीकैः सैन्यैः सह परबलं पाण्डवसैन्यम् अभजन् प्रापुः । के कैः किमिव, यथा चमरा मृगविशेषाः वल्गद्भिः सशब्दैः स्वयूथैः स्वजातीयसमूहैः सह दावस्य वनाग्नेः ज्वालेन ज्वालया शून्यं वनं भजन्ति तद्वत् ॥ ६० ॥

अथ तस्मिन्नहनि रन्ध्रान्वेषणे शत्रोश्छिद्रदर्शने एकतानः अनन्यवृत्तिः तदेकलक्ष्य इत्यर्थः, एकः एकाकी भारद्वाजोऽपि द्रोणोऽपि धर्मसूनोः रथं निकषा रथस्य समीपे कृष्णाभ्यां कृष्णार्जुनाभ्यां नृपरक्षणार्थं स्थापिते प्रथितः प्रसिद्धः भुजमदो यस्य तस्मिन् सत्यजिति एतत्संज्ञके राजनि उच्चरन्तः स्फुलिङ्गाः क्रोधाग्निकणाः यस्मात्तद्दृष्ट्योः नेत्रयोर्युग्मं विधाय कृत्वा कुरुपतेः दुर्योधनस्य वाञ्छितार्थं धर्मराजं धृत्वा प्रत्यर्पणरूपं विधास्यन्

---

१ क. ख. 'वीचीनीची' । २ ख. परिगृही' । ३ क. 'भटोन्मुखम् । ४ ख. स्वकटकस्य सी' ।
५ क. ख. प्रशंसे । ६ क. 'मधिनिकषा । ७ क. निधाय, ख. निपाय ।

युद्ध्वा चिरेण युगमात्रमपास्य रथ्या-
न्निर्धूनितेन सरुषा गुरुणा निकृत्तम् ।
तस्याथ रङ्गभुवि सत्यजितो वराङ्गं
बाष्पाम्बुभिः सह पपात युधिष्ठिरस्य ॥ ६२ ॥

उच्चया त्वरया तस्मिन्नुपकण्ठं समागते ।
पार्थस्य पश्यतोऽग्रे तं प्राणा अपि तथाऽऽचरन् ॥ ६३ ॥

तस्याथ द्वेष्टृसेनाजलधिकवलनात्कुम्भयोनित्वकीर्तिं
स्पष्टीकर्तुं स्वकीयामिव कुतुकवतः पार्श्वमभ्येत्य कोपात् ।
भीमो रथ्यानमथ्नात् द्रुपदतनुभवः सूदयामास सूतं
कोदण्डं केतुदण्डं द्वयमपि शकलीचक्रतुर्दस्रपुत्रौ ॥ ६४ ॥

ततस्तादृशं कुम्भसंभवस्याभिषङ्गमभिवीक्ष्य क्रोधनतया कर्णतालस-मीरणसमृद्धिपरिणतचक्रवातगर्भपरिभ्रमद्रथकेतुपताकापटसहस्रसंपा-दितसमरसामरावर्तवशंवदकेन कूटशोभानि सकलदिङ्मुखघण्टापथजा-

करिष्यन् सन् प्रतिभटपृतनायाः शत्रुसेनायाः कुक्षिं मध्यदेशम् आविक्षत् प्रविवेश॥ ६१॥

अथ चिरेण बहुकालं युद्ध्वा रथ्यान् द्रोणस्य रथवाहानश्वान् युगमात्रं हस्तचतुष्टय-प्रमाणम् अपास्य उच्चाल्य पश्चात् त्यक्त्वा निर्धूनितेन सत्यजिता तिरस्कृतेन अत एव सरुषा गुरुणा द्रोणेन निकृत्तं छिन्नं तस्य सत्यजितः वराङ्गं मस्तकं रङ्गभुवि रणाङ्गणे युधिष्ठिरस्य बाष्पाम्बुभिः दुखजन्यबाष्पोदकैः सह पपात ॥ ६२ ॥

तस्मिन् द्रोणे उच्चया महत्या त्वरया उपकण्ठं समीपमागते सति तं द्रोणमग्रे पश्यतः पार्थस्य धर्मराजस्य प्राणा अपि तथा आचरन् उपकण्ठमागता बभूवुः । भयेन बहिर्नि-र्गमार्थं कण्ठसमीपमागता बभूवुरित्यर्थः ॥ ६३ ॥

अथ द्वेष्टॄणां शत्रूणां सेनाजलधेः कवलनात् पानात् च हेतोः स्वकीयां कुम्भयोनि त्वकीर्तिं कुम्भसंभवत्वकीर्तिं स्पष्टीकर्तुमिव कुतुकवतः कौतुकिनः तस्य द्रोणाचार्यस्य पा-र्श्वम् अभ्येत्य भीमः कोपात् रथ्यान् रथाश्वान् अमथ्नात् जघान । द्रुपदतनुभवः धृष्टद्युम्नः सूतं सारथिं सूदयामास जघान । दस्रपुत्रौ नकुलसहदेवौ कोदण्डं केतुदण्डं च द्वयमपि शकलीचक्रतुः चिच्छिदतुः ॥ ६४ ॥

ततः सुप्रतीकमेतन्नामकमैरावतकुलसंभवं गजम् अधिरूढः रणे युद्धकर्मणि मत्तः भग-दत्तः राजा तादृशम् अतिशयितं कुम्भसंभवस्य द्रोणस्य अभिषङ्गं पराभवं वीक्ष्य क्रोधन-तया क्रोधवत्तया समस्तानि हास्तिकानि हस्तिवृन्दानि पुरस्तात् स्वाग्रभागे विस्तार्य प्र-सार्य हठेन बलात्कारेण भीमम् अभिदुद्राव संमुखो जगाम । कीदृशानि हास्तिकानि,

१ क. विद्धा। । २ क. जितोत्तमाङ्गम् । ३ क. द्वेषिसेना° । ४ क. वेगात् । ५ ख. दलयाञ्चक्रु ।
६ अत्र द्रोणस्य युधिष्ठिरप्राणानां च श्लेषभित्तिकालव्यैक्येनोपकण्ठसमागमनेन धर्मेणौपम्यस्य गम्यत्वात्केवलप्रकृतास्पदा तुल्ययोगितालंकारः ।

ङ्किकघण्टाभरणरणितबधिरीकृताष्टलोकपालपुरजनानि [1]निबिडसुरसमाजसमाक्रान्तगगनमण्डपसंधिबन्धस्थिरीकरणाय [2]दत्तानिन्द्रनीलस्तम्भानिव शुण्डादण्डानूर्ध्वमुन्नमयमानानि समस्तानि हास्तिकानि पुरस्ताद्विस्तार्य रणमत्तो भगदत्तः सुप्रतीकमधिरूढो हठाद्भीममभिदुद्राव ॥९॥

घोरेऽभियाते सति सुप्रतीके
दूरं [3]ससर्प द्विषतां बलौघः।
परश्वधास्त्रे [4]पतितेऽम्बु[5]पूरः
पत्युर्नदीनामिव पश्चिमस्याः ॥ ६५ ॥

केतून् पातयतो रथान् श्लथयतो दन्तावलान् कृन्ततो
घोटान् पाटयतो विभिद्य गदया भीमो द्विपान्विद्विषाम्।
संग्रामाङ्गणरक्तवारिलहरीसंलक्ष्यमाणस्वक-
च्छायामात्रसहायमेव विदधे तं सुप्रतीकं क्षणात् ॥ ६६ ॥

---

कर्णतालानां ये समीरणाः वायवः तेषां समृद्ध्या परिणताः उत्पन्नाः ये चक्रवाताः तेषां गर्भेषु मध्यभागेषु परिभ्रमत् रथकेतुपटानां सहस्रं तेन संपादिता समरसागरावर्तानां वशंवदा अवश्यप्राप्ता फेनकूटानां फेनराशीनां शोभा यैस्तानि। पुनः०, सकलेषु दिङ्मुखानां घण्टापथेषु विस्तीर्णनिकटपुरोभागेषु जाङ्घिकं जवेन गमनकर्तृ यत् घण्टानाम् आभरणानां च रणितं शब्दः तेन बधिरीकृताः अष्टलोकपालपुराणां जनाः यैस्तानि। पुनः०, निबिडः यः सुरसमाजः देवसमूहः तेन समाक्रान्तस्य गगनमण्डलस्य संधिबन्धानां स्थिरीकरणाय दृढीकरणाय दत्तान् इन्द्रनीलस्तम्भानिव शुण्डादण्डान् ऊर्ध्वमुन्नमयमानानि उन्नतान् कुर्वाणानि ॥ ९ ॥

द्विषतां बलौघः सेनासमूहः घोरे सुप्रतीके गजे अभियाते संमुखमायाते सति दूरं ससर्प दूरं पलायनं चक्रे इत्यर्थः। कस्मिन् सति क इव, परश्वधः परशुः अस्यास्तीति मत्वर्थे मच् परशुरामः तस्यास्त्रे बाणे पतिते सति पश्चिमस्य नदीनां पत्युः समुद्रस्य अम्बुपूर इव। निःक्षत्रियां पृथ्वीं ब्राह्मणाय दत्त्वा स्ववासार्थं स्थलं याचितोऽपि समुद्रः परशुरामाय न ददौ। तदा तेन बाणक्षेपेणापसारितः, इति पौराणिकाः ॥ ६५ ॥

भीमः केतून् ध्वजान् पातयतः, रथान् श्लथयतः शिथिलसंधीन् कुर्वतः, दन्तावलान् गजान् कृन्ततः छिन्दतः, अश्वान् पाटयतः विदारयतः, विद्विषां शत्रूणां द्विपान् गदया विभिद्य तं सुप्रतीकं क्षणात् संग्रामाङ्गणे रक्तवारिलहरीषु संवीक्ष्यमाणा दृश्यमाना स्वकच्छाया स्वप्रतिबिम्बं तदेव तन्मात्रं सहायः द्वितीयः यस्य तमेव विदधे चकार। भीमः सर्वं सुहस्तिसैन्यं हत्वा तमेकं सुप्रतीकमेवावशिष्टं चकारेत्यर्थः ॥ ६६ ॥

---

१ क. निबिडितसु°। २ क. दत्तायतेन्द्रनी°। ३ क. दूरेऽपसत्तु द्विषतां बलानि, ख. दूरे ससर्प। ४ क. पतिते जलानि। ५ ख. पूराः। ६ अत्र सुप्रतीकभिन्नसर्वगजवधस्य स्वच्छायामात्रतत्सहायकस्वरूपेण वर्णनात्पर्यायोक्तमलंकारः।

पादाग्रहस्तरदनप्रतिघातलीला-
भग्नालिरक्तमसृणो भगदत्तदन्ती ।
आलक्ष्यत क्षितिभृतस्तटवप्रकर्म-
ण्यालिप्तगात्र इव गैरिककर्दमेन ॥ ६७ ॥

तदनु करटिमल्लं तत्र वीक्ष्यापतन्तं
दलितपरबलं तं दन्तकुन्तं वहन्तम् ।
चकितहृदयवृत्तः संगरे वायुसूनो-
र्जनकगुणसमृद्धिर्जङ्घयोराविरासीत् ॥ ६८ ॥

इति सुप्रतीकसंक्षुभितनिजध्वजिनीचरकोलाहलसमाकर्णनसंमाकुलमानसो वासवसूनुर्महेषुनिषूदिताशेषसंशप्तकदूरनिरासप्रयुज्यमानवायव्यास्त्रवेगार्धं विभज्य निजरथाय वितीर्णवानिव तूर्णमासाद्य निर्वेलभुजगर्वदुर्विलसितौ कुम्भजातकिरातराजौ निरुध्य चिरेण योधयामास १०

ततः—मनश्च पार्थस्य रथं च हन्तुं मदावलेन्द्रस्य करे प्रवृत्ते ।
सारथ्यचातुर्यवशेन शौरेर्भग्नः स तस्यैव मनोरथोऽभूत् ॥ ६९ ॥

---

पादाग्राणां हस्तस्य शुण्डायाश्च रदनयोश्च या प्रतिघातलीला प्रहारलीला तया भग्नाः हताः ये अरयः तेषां रक्तैः मसृणः क्लिन्नः भगदत्तहस्ती क्षितिभृतः तटे यत् वप्रकर्म दन्तप्रहारलीला तस्मिन् गैरिककर्दमेन पीतरक्तादिमृत्तिकाकर्दमेन लिप्तगात्र इव लिप्ताङ्ग इवालक्ष्यत अदृश्यत । भयंकररूपोऽदृश्यतेति भावः ॥ ६७ ॥

तदनु तत्र रणाङ्गणे दलितं परवलं शत्रुसैन्यं येन तं, दन्त एव कुन्तः तं वहन्तं धारयन्तं करटिमल्लं गजश्रेष्ठम् आपतन्तं स्वोपरि आगच्छन्तं वीक्ष्य संगरे युद्धे चकिता भीता हृदयवृत्तिरन्तःकरणवृत्तिर्यस्य तस्य वायुसूनोर्भीमस्य जङ्घयोः जनकगुणस्य स्वपितुः वायोः गुणस्य समृद्धिराविरासीत् प्रकटीबभूव । स्वोपर्यागच्छन्तं गजं दृष्ट्वा भीमः पलायनं चकारेत्यर्थः ॥ ६८ ॥

इत्येवंप्रकारेण सुप्रतीकेन क्षुभिता ये निजध्वजिनीचराः स्वसैनिकाः तेषां कोलाहलस्य कलकलशब्दस्य समाकर्णनेन समाकुलं ससंभ्रमं मानसं यस्य सः वासवसूनुः अर्जुन महद्भिरिषुभिर्निषूदितानां हतानामशेषाणां संशप्तकानाम् एतत्संज्ञकभटानां दूरनिवासे दूरापसारणविषये प्रयुज्यमानस्य वायव्यास्त्रस्य यो वेगः तस्य अर्धं विभज्य विभागं कृत्वा निजरथाय वितीर्णवानिव दत्तवान् सन्निव तूर्णं क्षिप्रं यथा तथा आसाद्य वायुवेगेन तं रथं प्राप्येत्यर्थः, निर्वेलममर्यादभुजगर्वस्य दुर्विलसितं दुश्चेष्टितं ययोस्तौ कुम्भजातकिरातराजौ द्रोणभगदत्तौ निरुध्य चिरेण बहुकालं योधयामास युद्धं कारयामास ॥ १० ॥

ततः मदावलेन्द्रस्य गजेन्द्रस्य करे शुण्डादण्डे पार्थस्यार्जुनस्य मनः मनोभिलषितं रथं

---

१ ख. धावतो । २ क. चरेति नास्ति । ३ क. समाकर्णनाकु° । ४ क. गणेत्यधिकम् । ५ क. तानित्यधिकम् । ६ क. मद्रुत्तम् । ७ अत्र तादृशस्य सुप्रतीकस्यावलोकनस्य पलायनहेतुत्वात्काव्यलिङ्गम् ।

पार्थस्य तस्य तदनु प्रहिता वधाय
भङ्गं ययौ पथि शरैर्भगदत्तशक्तिः ।
प्रस्थानकर्मसमये भयदायि तस्या
नागस्य दर्शनमजायत यत्समीपे ॥ ७० ॥

अथ तेन हरेः सुताय मुक्तं हृदिकृत्य स्वयमात्मदैवमस्त्रम् ।
तदिदं वनमालया मुकुन्दः सहवास्तव्यकुटुम्बितामनैषीत् ॥ ७१ ॥

स फल्गुनस्तत्र चकार बाणै-
श्चिकीर्षुमन्त्याक्षरवर्जितं स्वम् ।
क्रौञ्चाचलात्पीवरमप्यरातेः
करेणुमाद्याक्षरयोगशून्यम् ॥ ७२ ॥

---

च हन्तुं नाशयितुं प्रवृत्ते सति शौरेः कृष्णस्य सारथ्ये सारथिकर्मणि यच्चातुर्यं तद्वशेन तद्धेतुना तस्यैव गजेन्द्रस्यैव सः मनोरथः भग्नः अभूत् । यत्र स्थले गजेन प्रहारः कृतः ततोऽन्यत्र रथस्य नयनात् गजाभिलषितं नाऽभूदिति भावः ॥ ६९ ॥

तदनु तस्य पार्थस्य वधाय प्रहिता मुक्ता भगदत्तस्य शक्तिः एतत्संज्ञकमल्पकुन्ताकारमायुधं पथि मार्गे शरैः पार्थबाणैः भङ्गं ययौ प्राप । शक्तेर्भङ्गे कारणमाह—प्रस्थानेति । यत् यतः प्रथानकर्मणः समये तस्याः भयदायि भीतिजनकं समीपे नागस्य गजस्य दर्शनमजायत । प्रस्थानवेलायां भयजनकप्राणिदर्शनमपशकुन इति मौहूर्तिकाः ॥ ७० ॥

अथ मुकुन्दः हरेरिन्द्रस्य सुताय अर्जुनं हन्तुमित्यर्थः, तेन भगदत्तेन मुक्तम् आत्मा स्वयं देवो देवता यस्य तत् वैष्णवमित्यर्थः, अस्त्रं स्वयं हृदिकृत्य वक्षःस्थले गृहीत्वा तदिदमस्त्रं वनमालया स्वकण्ठस्थवनमालया सह वास्तव्यः सहनिवासकर्ता कुटुम्बी तस्य भावस्तत्तामनैषीत् प्रापयामास । कृष्णः उत्थाय तदस्त्रं स्वहृदये गृहीत्वा वनमालावद्धारयामासेत्यर्थः ॥ ७१ ॥

तत्र रणाङ्गणे सः फल्गुन्याम् उत्तराफल्गुन्यां जातः फल्गुनः, जातार्थप्रत्ययस्य प्रतिष्ठेत्यादिना लुक् । अर्जुनः अन्त्याक्षरेण नकारेण वर्जितं रहितं स्वकीयं फल्गुन इति नाम तत् फल्गु इति चिकीर्षु कर्तुमिच्छुं लक्षणया फल्गुशब्दार्थं तुच्छं कर्तुमिच्छुं क्रौञ्चाचलात् सप्तमद्वीपस्थमहापर्वतादपि पीवरं पुष्टम् अरातेः शत्रोः करेणुं सुप्रतीकं गजं बाणैः आद्येन अक्षरेण ककारेण यो योगः तेन शून्यं रहितं चकार । करेणुशब्दस्य ककारे गते सति रेणुरित्यवशिष्ट, लक्षणया तदर्थो रजः, चूर्णीचकारेत्यर्थः ॥ ७२ ॥

---

१ ख. 'नोऽस्य । २ क. कृत्वा । ३ क. कुलाच' । ४ अत्र पार्थमनोरथभङ्गार्थमुद्यतस्य सुप्रतीकस्य मनोरथभङ्गवर्णनादनर्थोत्पत्तिरूपो विषमालंकारः, मनसः रथस्य कामस्य च त्रयाणां मनोरथशब्दश्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति द्वयोरङ्गाङ्गिभावेन संकरः । ५ अत्र नागदर्शनस्य हेतोः भङ्गस्य हेतुमतश्च द्वयोरुक्तेर्हेतुरलंकारः नागशब्दश्लेषभित्तिकालब्धसर्पगलद्वयाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति द्वयोरङ्गाङ्गिभावेन संकरः । ६ अत्र फाल्गुनस्यान्त्याक्षरराहित्यचिकीर्षोः सुप्रतीकस्य स्वस्यैव तद्विरुद्धाद्यक्षरशून्यत्वप्राप्तेर्विषादनं नामालंकारः 'इष्यमाणविरुद्धार्थसंप्राप्तिस्तु विषादनम्' इति लक्षणात् ।

मदपङ्कललाम गन्धिफालं
मघवत्सूनुररेर्निपात्य शीर्षम् ।
पृथुलां मुदमादधात्ततोऽसौ
पृथिवी गन्धवतीति गौतमोक्तेः ॥ ७३ ॥
भगदत्ते वधं याते सह मत्तेन दन्तिना ।
सत्यजिन्नाशशोकार्तिमत्यजन्पार्थसैनिकाः ॥ ७४ ॥

तदनु नाम्नाऽरुणे तेजसि संध्ययाऽपि तादृशे कलशयोनिः स्वयं नाम्ना गुरुरपि व्यथयाऽपि तादृग्विधस्त्रिभिरेवाङ्गैर्विरलितेन बलेनानुगम्यमानस्तादात्त्विकं स्वमनोरथमिव दूष्यतामुपगतमावासं शनैः शनैराववृते ॥ ११ ॥

शिबिरमेत्य तदैव सुयोधनः शितशरव्रणमोचितकञ्चुकम् ।
मृदुलमञ्चगतं कलशोद्भवं विरचिताञ्जलिरेवमभाषत ॥ ७५ ॥

---

तदा असौ मघवत्सूनुरर्जुनः मदपङ्कस्य ललामं पुण्ड्रः तस्य गन्धः सुगन्धोऽस्यास्तीति तत्तादृशं फालं ललाटं यस्य तत् अरेः भगदत्तस्य शीर्षं मस्तकं निपात्य भूम्यां पातयित्वा 'गन्धवती पृथ्वी' इति पृथिव्याः लक्षणकर्त्री या गौतमऋषेरुक्तिः तस्याः हेतोः तल्लक्षणसमन्वयाद्धेतोः पृथुलां मुदम् आनन्दम् आदधात् दधार ॥ ७३ ॥

पार्थसैनिकाः मत्तेन दन्तिना गजेन सह भगदत्ते वधं याते प्राप्ते सति सत्यजिन्नाशेन द्रोणकृतसत्यजिद्वधेन यः शोकः तस्य अर्तिं बाधामत्यजन् । महानन्दलाभेन पूर्वोऽल्पशोको गच्छतीति सर्वानुभवः ॥ ७४ ॥

तदनु नाम्ना अरुणे तेजसि सूर्ये संध्ययाऽपि संध्यारागेणापि तादृशे अरुणे आरक्ते सति स्वयं नाम्ना गुरुरपि व्यथयाऽपि तादृग्विधः गुरुः महाव्यथया विशिष्टः कलशयोनिः द्रोणः त्रिभिरेव अङ्गैः भीमेन सर्वसैन्यवधस्य कृतत्वात् अश्वरथपदातिभिस्त्रिभिरेव सेनाङ्गैः विरलितेन विरलीकृतेन बलेन सैन्येन अनुगम्यमानः सन् तादात्त्विकं तदानीन्तनं स्वमनोरथमिव धर्मराजं धृत्वा प्रत्यर्पणरूपमनोरथमिव दूष्यतां दोषं पटवेश्मत्वं च उपगतं प्राप्तमावासं वसतिस्थानं शनैः शनैः आववृते आजगाम । मनोरथावासयोः दूष्यताधर्मसाधर्म्यादुपमानोपमेयभावः ॥ ११ ॥

तदैव द्रोणागमनसमय एव सुयोधनः शिबिरं द्रोणावासपटमण्डपगृहम् एत्य विरचिताञ्जलिः सन् शितशराणां तीक्ष्णबाणानां ये व्रणाः क्षतानि तेभ्यः मोचितः पृथ-

---

१ ख. भालम् । २ क. ख. आददे । ३ ख. हस्तिना । ४ क. पाण्डुनन्दनाः । ५ ख. °दात्त्विकमनो° ।
६ अत्रैकत्र विलसत्कस्तूरीतिलकफालभगदत्तशीर्षपातनेन सर्वत्र तस्या गन्धवत्त्वबोधकगौतमोक्तिप्रमोदकरणासंबन्धेऽपि संबन्धोक्तेरतिशयोक्तिः । ७ अत्रारुणे गुरुरित्यत्र केवलप्रकृतास्पदश्लेषद्वयस्य निन्द्यत्ववस्त्रमयत्वयोः श्लेषभित्तिकाभेदाध्यवसायलब्धैक्येन दूष्यत्वेन द्रोणमनोरथशिबिरयोरौपम्यगमकस्य तुल्ययोगितामेदस्य च तिलतण्डुलन्यायेन संसृष्टिः ।

महारथ त्वं मम वाञ्छितद्रुं फलेग्रहिं न प्रतनोषि यस्मात् ।
कृपेति शब्दोऽपि बभूव नूनं ह्रस्वस्त्वयि श्याल इव त्वदीये ॥७६॥

भगवन्निदमिदानीं स्मरणपथमधिरोपय चेतसा सावधानेन ॥ १२ ॥

पितामहः सोऽपि पृषत्कतल्पे
वपुर्निजं माधवमन्तरङ्गे ।
तवैव हस्ते मम कार्यसिद्धिं
कृत्वा हि धाम स्वमियेष गन्तुम् ॥ ७७ ॥

तमेतं दयमानेन समेतं शोकसंपदा ।
ऊचेऽथ गुरुणा तेन नीचेतरगुणाब्धिना ॥ ७८ ॥

बाष्पातिवृष्टावपि पाण्डवानां
पयोरुहव्यूहवितीर्णमोदान् ।
प्रातः श्व एवाखिलधार्तराष्ट्रा-
न्प्रचारयेयं युधि वाहिनीषु ॥ ७९ ॥

---

क्कृतः कञ्चुकः कवचं येन तं मृदुले मञ्चे गतं विद्यमानं कलशोद्भवं द्रोणम् एवं वक्ष्यमाणमभाषत ॥ ७५ ॥

'हे महारथ आचार्य ! त्वं यस्मात्कारणात् मम वाञ्छितद्रुं मनोरथवृक्षं फलेग्रहिं सफलं न करोषि तस्मात् कृपा इति शब्दः त्वदीये श्याले पत्न्याः भ्रातरि कृपाचार्ये इव त्वय्यपि ह्रस्वः नूनं बभूव । यथा कृपाशब्दः त्वदीये श्याले कृप इति ह्रस्वः बभूव तथा वाच्यवाचकयोरभेदात् कृपार्थो ह्रस्वः अल्पो जातः किंमित्यर्थः ॥ ७६ ॥

हे भगवन् ! सावधानेन एकाग्रेण चेतसा इदानीम् इदं वक्ष्यमाणं वचनं स्मरणपथम् अधिरोपय स्थापय ॥ १२ ॥

स पितामहोऽपि भीष्मोऽपि पृषत्कतल्पे बाणशय्यायां निजं वपुः, अन्तरङ्गे अन्तःकरणे माधवं कृष्णं, तवैव हस्ते मम कार्यसिद्धिं च कृत्वा हि कृत्वैव स्वं धाम स्वर्गं मोक्षं वा गन्तुम् इयेष ऐच्छत् ॥ ७७ ॥

अथ शोकसंपदा शोकातिशयेन समेतं तम् एतं दुर्योधनं दयमानेन दयाकर्त्रा नीचेतराणां महतां गुणानाम् अब्धिना समुद्रेण तेन गुरुणा ऊचे उक्तः ॥ ७८ ॥

पाण्डवानां बाष्पाणां दुःखाश्रूणाम् अतिवृष्टौ सत्यामपि पयोरुहव्यूहेन सेनायाः कमलाकाररचनेन कमलसमूहेन च वितीर्णः दत्तः मोहो हर्षो येषां तान् अखिलान्धार्त-

---

१ क. भगवंस्त्वमिदं सावधानेन चेतसा स्मरणपथमधिरोपय, ख. भगवन्भवदभिधामि° । २ ख. आरोपय । ३ ख. च । ४ क. पाथोरुह° । ५ क. ख. संचार° । ६ अत्र मनोरथसफलीकरणाभावेन करुणाशून्यत्वानुमानादनुमानालंकारस्य कृपद्रोणयोः श्लेषंभित्तिकालब्धैक्यात्यल्पत्वाकारान्तत्वद्वयात्मकह्रस्वत्वाश्रयकृपेतिशब्दत्वेनौपम्यगमकतुल्ययोगिताभेदस्य चैकवाचकानुप्रवेशसंकरः । ७ अत्रानेकक्रियायौगपद्यात्समुच्चयालंकारः । ८ अत्र लाटानुप्रासः शब्दालंकारः ।

इति गिरा तमाश्वास्य राजानं सदनाय विसृष्टवतो मुहुर्मुहुरर्जुनस्य सव्यसाचित्वशैलीमनुचिन्त्य हृदि रणरणिकामनणीयसीं बिभ्राणस्य द्रोणस्य सकाशाद्विनिर्गतां निद्रासखीं विचेतुमिव सा निशाऽपि तरसा निरगात् ॥ १३ ॥

अपरेद्युरसौ वृतो बलौघैरथभेरीनिनदैर्नभो विभिन्दन् ।
कवची विशिखी रथी शरासी कलशीसूनुरवाप युद्धरङ्गम् ॥८०॥
[ द्रोणस्य सेनाचरधूलिपाली क्षोणेस्तु नग्नङ्करणीबभूव ।
घटाऽथ तस्याः कटनादपूरैः पटं पुनः संघटयाञ्चकार ॥ ]

आश्चर्यस्थूललक्ष्यं तदनु दिविषदामन्तरिक्षे स्थितानां
क्षोणीन्द्राणां रिपूणामसुमृगहरणे कूटयन्त्रायमाणम् ।
गन्धर्वैः केसराढ्यैर्मदमधुभिरिभैः केतुपत्रैः शताङ्गैः
पद्मव्यूहं व्यतानीत्प्रधनभुवि गुरुः सांयुगीनाग्रगण्यः ॥ ८१ ॥

---

राष्ट्रान् दुर्योधनादीन् हंसांश्च श्वः परेऽह्नि प्रातरेव युधि वाहिनीषु सेनासु नदीषु च प्रचारयेयं गमयिष्यामि । अतिवृष्टौ सत्यां नदीषु कमलानां नाशः हंसानां संचाराभावश्च वर्तते तद्विपरीतं करोमीति भावः ॥ ७९ ॥

इति गिरा तं राजानं दुर्योधनम् आश्वास्य सदनाय स्वावासं गन्तुं विसृष्टवतः अनुज्ञां दत्तवतः मुहुर्मुहुः अर्जुनस्य सव्यसाचित्वशैलीं सव्यदक्षिणाभ्यां हस्ताभ्यां बाणप्रक्षेपरीतिम् अनुचिन्त्य अनणीयसीं महतीं हृदि रणरणिकां भयेन उच्छ्वसनं बिभ्राणस्य द्रोणस्य सकाशाद्विनिर्गतां निद्रासखीं विचेतुमिव अन्वेष्टुमिव सा निशाऽपि तरसा वेगेन निरगात् ॥ १३ ॥

अथ अपरेद्युः उत्तरेऽहनि बलौघैः सेनासमूहैः युतः कवचादियुतः असौ कलशीसूनुः द्रोणः भेरीशब्दैः नभः आकाशं विभिन्दन् सन् युद्धरङ्गम् अवाप ॥ ८० ॥

तदनु सांयुगीनेषु रणपटुषु अग्रगण्यः गुरुः प्रधनभुवि रणाङ्गणे अन्तरिक्षे स्थितानां दिविषदां देवानाम् आश्चर्यस्य स्थूललक्ष्यं दातारं रिपूणां क्षोणीन्द्राणां राज्ञाम् असव एव

---

१ ख. °नुविचिन्त्य । २ क. भूमिम् । ३ क. श्लोकोऽयमधिकः । तट्टीका चेयम्—

द्रोणस्येति । द्रोणस्य सेनाभ्यः चरति उद्गच्छतीति सेनाचरी च सा धूलिपाली रजःपटलं क्षोणेः भुवस्तु नग्नंकरणी विवस्त्रत्वकारिणी समुद्रशोषिणीति यावत्, बभूव । समुद्रस्य तद्वस्त्रस्थानीयत्वादिति भावः । अथ घटा तदीयगजपंक्तिः 'घटा गोष्ठ्यां हस्तिपंक्तौ' इत्यमरः । कटयोः कुम्भयोः दानपूराः मदजलप्रवाहाः तस्याः क्षोणेः पटं समुद्रं पुनः संघटयाञ्चकार योजयामास, अब्धिं पूरयामासेत्यर्थः । अत्र नग्नीकृतायाः भुवः पुनः पटसंघटनरूपपूर्वावस्थानुवृत्तेः पूर्वरूपालंकारभेदस्य शोषणपूरणासंबन्धेऽपि तत्संबन्धोक्तिरूपातिशयोक्तिद्वयोज्जीवितत्वात् द्वयोरङ्गाङ्गिभावेन संकरः ।

४ क. लक्ष्म् । ५ क. ख °रिक्षस्थिता° । ६ श्लेषानुप्राणितोऽत्र विरोधाभासः । ७ अत्र रणरणिकाशब्दस्त्रीलिङ्गादिमहिम्ना अन्यकान्ताश्लिष्टप्रियाविलोकनकुपितनिष्क्रान्तनायिकान्वेषिसखीवृत्तान्तप्रतीतेः समासोक्तिः । तस्याश्च रूपकानुप्राणितोत्प्रेक्षायाश्चैकवाचकानुप्रवेशसंकरः ।

समयेऽत्र निवेद्य वैरिवृत्तं
तपसः सूनुरभाषताभिमन्युम् ।
अयि वत्स पिताऽन्यतोऽधुना ते
तव भारोऽजनि सर्वसैन्यरक्षा ॥ ८२ ॥
कवचं प्रतिमुञ्च धत्स्व चापं
भज धैर्यं परितो विधेहि योधान् ।
अधिरोह शताङ्गमाविश त्वं
कमलव्यूहमरीन्निषूदयस्व ॥ ८३ ॥

इति राज्ञो निदेशं मौलिदेशे निवेश्य योद्धुं प्रतिष्ठमाने जयनिःस्वाण-भेरीपटहपणवाद्यैर्गगनशायिने गुणाय सौखशायनिकायमाने लीलया व्यूहगर्भमवगाह्य बालेऽपि स्वयमेकाकिनि निजकोदण्डदण्डचण्डिमसंपदा कौरवचमूं क्षोभयमाणे सौभद्रेये सिन्धुपतिर्व्यूहमुखं पिधाय स्मरहरवरलाभदर्पेण तदनुधाविनीं पाण्डववाहिनीं क्रुधा रुरुधे ॥ १४ ॥

---

प्राणा एव मृगाः तेषां हरणविषये कूटयन्त्रायमाणं वागुरायन्त्रवदाचरन्तं केसराढ्यैः ग्रीवागतकेशयुक्तैः गन्धर्वैः अश्वैः मदेन मधुभिः सुन्दरैः इभैः गजैश्च केतवः ध्वजा एव पत्राणि येषां तैः शताङ्गैः रथैश्च पद्मव्यूहं पद्माकारसेनारचनां व्यतानीत् अकरोत् । कमले केसरमधुपत्राणि सन्ति अत्र केसरस्थाने केसरयुताश्वाः मधुस्थाने मदयुतगजाः पत्रस्थाने ध्वजयुतशताङ्गाः कृता इत्यर्थः ॥ ८१ ॥

अत्र अस्मिन्समये तपसः सूनुः धर्मराजः अभिमन्युं वैरिणां वृत्तम् अस्मत्पराजयार्थं सेनायाः पद्मव्यूहरचनया युद्धार्थस्थितिरूपं निवेद्य अभाषत । तदेव भाषणं सार्धेनाह—अयि वत्सेति । अयि वत्स ! अधुना एतत्समये ते पिता अर्जुनः अन्यतः देशान्तरे संशप्तकैः सह युद्धार्थं गतो वर्तते, अतः सर्वसैन्यरक्षा तव भारः अजनि जातः । सर्वसैन्यरक्षा त्वदधीनेत्यर्थः ॥ ८२ ॥

अतः त्वं कवचं प्रतिमुञ्च धारय । चापं धत्स्व हस्तेन गृहाण । धैर्यं भजस्व स्वीकुरु । योधान्परितः स्वरक्षणार्थं समन्ताद्विधेहि स्थापय । शताङ्गं रथम् अधिरोह तस्मिन् आरोहणं कुरु । कमलव्यूहं विश प्रविश । अरीन्निषूदयस्व जहि ॥ ८३ ॥

इति उक्तप्रकारेण राज्ञो धर्मस्य निदेशम् आज्ञां मौलिदेशे शिरसि निवेश्य बहुमानेन गृहीत्वेत्यर्थः, प्रतिष्ठमाने कृतप्रस्थाने शत्रुजयार्थं निर्गमनसमये वादनीयाः भेरीपटहपणवाः आद्याः येषां तैः,—तत्र गजवाह्या भेरी, अश्ववाह्यः पटहः, मनुष्यवाह्यः पणवः,—वाद्यैः गगनशायिने आकाशसंबन्धिने गुणाय शब्दाय सौखशायनिकायमाने त्वया सुखशयनं कृतमिति पृच्छति तस्योद्बोधं कुर्वाणे इत्यर्थः, बाले एकाकिनि सौभद्रेये अभिमन्यौ स्वयं

---

१ क. निशम्य, ख. प्रतिपद्य । २ क. वाद्यैर्वाद्यैर्ग° । ३ क. कमलेत्यधिकम्, ख. पद्मेत्यधिकम् । ४ ख. दण्डेति नास्ति । ५ क. तस्मिन्नित्यधिकम् । ६ क. ख. ये इति नास्ति ।

उद्यद्भिर्युद्धरङ्गादपि सुरवनितापुष्पवर्षात्पतद्भि-
 र्वेगाल्लग्नैः परागैर्दृढतरघटिते चक्षुषां पक्ष्मयुग्मे ।
स्थित्वा मध्येऽन्तरिक्षं विजयसुतभुजागर्वलीलायितानि
 द्रष्टॄणां खेचराणां भृशमनिमिषता तत्क्षणं भङ्गुराऽभूत् ॥८४॥

शरशायितैर्द्विरदशैलमण्डलै-
 र्विपुलैर्विधाय विषमां वसुन्धराम् ।
पृथुचक्रवर्ति पृथुयत्नवैभवं
 वितथीचकार विजयस्य नन्दनः ॥ ८५ ॥

पार्थात्मजो भानुसुतस्य सामि
 च्छित्त्वा शताङ्गं शितभल्लवृष्ट्या ।
पितामहोक्तं कुरुराजगोष्ठ्यां
 तथ्यं चकारार्धरथत्वमस्य ॥ ८६ ॥

---

लीलया व्यूहस्य गर्भं मध्यम् अवगाह्य प्रविश्य निजकोदण्डदण्डस्य चण्डिमसंपदा रौद्रकर्मातिशयेन कौरवचमूं क्षोभयमाणे सति सिन्धुपतिः जयद्रथः व्यूहस्य मुखं द्वारं पिधाय यत् द्वारं कृत्वान्तः प्रविष्टः तत् द्वारं निरुध्य स्मरहरस्य शिवस्य वरलाभेन यो दर्पः तेन तदनुधाविनीं सौभद्ररक्षार्थमनुधाविनीं पाण्डवानां वाहिनीं सेनां क्रुधा क्रोधेन रुरुधे । सिन्धुपतिः समुद्रोऽपि वाहिनीं नदीं रुणद्धि ॥ १४ ॥

मध्येऽन्तरिक्षम् आकाशमध्ये स्थित्वा विजयस्य सुतस्य अभिमन्योः ये भुजे तयोः गर्वस्य लीलायितानि विक्रीडितानि द्रष्टॄणां खेचराणां देवानां नेत्राणां पक्ष्मणोः युग्मे युद्धरङ्गात् रणाङ्गणात् उद्यद्भिः ऊर्ध्वं गच्छद्भिः सुरवनितानां देवीनां पुष्पवर्षादपि पतद्भिः अधोदेशम् आगच्छद्भिः वेगात् लग्नैः संवद्धैः परागैः रेणुभिः पुष्परजोभिश्च दृढतरं यथा तथा घटिते परस्परं मेलिते सति तत्क्षणं तस्मिन्क्षणे अनिमिषता भृशं भङ्गुरा भग्ना आसीत् । युद्धसमये वहुभूमिरज उद्गतं सौभद्रवीर्यातिशयं दृष्ट्वा देवैर्वह्वी पुष्पवृष्टिः कृतेति भावः ॥ ८४ ॥

विजयस्य नन्दनः अभिमन्युः शरैः शायितैः दीर्घनिद्रां प्रापितैः विपुलैः पृथुलैः द्विरदा एव शैलाः तेषां मण्डलैः समूहैः वसुन्धरां विषमां नतोन्नतां विधाय कृत्वा पृथुचक्रवर्तिनः पृथुनामा आदिराजा तस्य पृथुयत्नानां महायत्नानां वैभवं माहात्म्यं वितथीचकार व्यर्थीचकार । विष्ण्वंशपृथुना पृथिवीं पर्वतैर्नतोन्नतां दृष्ट्वा प्रजानिवासार्थमियमसमीचीनेति ज्ञात्वा धनुष्कोट्या पर्वतान् चूर्णीकृत्य समा कृतेति पौराणिकाः ॥ ८५ ॥

पार्थात्मजः अभिमन्युः शितानां तीक्ष्णानां भल्लानां वाणानां वृष्ट्या भानुसुतस्य कर्णस्य

---

१ क. ख. ऽऽसीत् । २ क. भित्त्वा । ३ क. 'वीर' । ४ अत्र सैन्धवसमुद्रयोः सेनानद्योश्च श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्तिभ्यां समुद्रस्य नदीमुखपिधानपूर्वकं तन्निरोधानुरूप्यात्मकसमालंकारप्रतीतेरलंकारेणालंकारध्वनिः ।५ अत्र देवानामनिमिषत्वभङ्गासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः। परागलग्नपक्ष्मयुग्मघटनयोर्हेतुहेतुमतोरुक्त्यात्मकहेत्वलंकारोज्जीवितत्वात् द्वयोरङ्गाङ्गिभावेन संकरः ।

अथाभिमन्युर्धृतभीममन्यु-
द्रौणिं तदीर्ष्यास्मितकान्तिलक्ष्यात् ।
बाल्ये निपीतानिव पिष्टसारा-
नुग्रैः शरैरुद्वमयाञ्चकार ॥ ८७ ॥

सुतस्य शौर्यात्सुरराजसूनो-
रुदीर्णदिग्भ्रान्तिरुदारभीतिः ।
कृपस्वसुर्मङ्गलतन्तुनैव
साकं चकम्पे स गुरुर्मुहूर्तम् ॥ ८८ ॥

विशिखं मुमुक्षुमथ गौतमात्मजे
विबुधेन्द्रपौत्रमभिवीक्ष्य भीषणम् ।
जनने विपद्यपि जना रणाङ्गणे
शर एव हेतुरिति तस्य मेनिरे ॥ ८९ ॥

आश्चर्यकर्मसुकृतेष्वपि हर्षभारा-
न्मोक्तुं मुहुर्मुहुरमुष्य शिरोजबन्धे ।

---

शताङ्गं रथं सामि अर्धं यथा तथा छित्त्वा कुरुराजगोष्ठ्यां दुर्योधनसभायां पितामहेन भीष्मेण उक्तम् अस्य कर्णस्य अर्धरथत्वं तथ्यं चकार । अर्धरथच्छेदेन अर्धः रथो यस्य तस्य भावस्तत्त्वं सिद्धम् ॥ ८६ ॥

अथ धृतः भीमः उग्रः मन्युः क्रोधो येन सः अभिमन्युः उग्रैः शरैः द्रौणिम् अश्वत्थामानं तदीर्ष्यया अभिमन्यूत्कर्षासहनेन यत् स्मितं हास्यं तस्य कान्तिलक्ष्यात् शुभ्रकान्तिकपटाद्धेतोः बाल्ये वयसि निपीतान्पिष्टसारान्गव्यक्षीराभावात् पिष्टसारमिश्रितरसानिव उद्वमयाञ्चकार वमनं कारयामास । नेमाः स्मितकान्तयः अपि तु पिष्टसारा इति कैतवापह्नुतिः[1] ॥ ८७ ॥

सुरराजसूनोः अर्जुनस्य सुतस्य पुत्रस्य अभिमन्योः शौर्यात् उदीर्णा उत्पन्ना दिग्भ्रान्तिर्यस्य सः उदारा महती भीतिर्यस्य सः प्रसिद्धः गुरुः द्रोणाचार्यः कृपस्वसुः कृपाचार्यभगिन्याः कृपीनाम्न्याः द्रोणपत्न्याः मङ्गलतन्तुना मङ्गलसूत्रेण साकमेव मुहूर्तं चकम्पे कम्पं भेजे । पतिमरणे पत्न्या मङ्गलसूत्रनाशात् तस्यापि भयेन कम्पोत्पत्तिः ॥ ८८ ॥

अथ जनाः रणाङ्गणे गौतमात्मजे कृपाचार्ये विशिखं मुमुक्षुं मोक्तुमिच्छुं भीषणं भयंकरं विबुधेन्द्रपौत्रम् अभिमन्युम् अभिवीक्ष्य तस्य कृपस्य जनने उत्पत्तौ विपद्यपि मरणेऽपि शर एव हेतुः कारणं जातम् इति मेनिरे । 'गौतमर्षेः रेतः शरस्तम्बे पपात । तस्मात् कृपी कृपश्चेति युग्ममुत्पन्नम्' इति भारतेतिहासः ॥ ८९ ॥

तदा अभिमन्युयुद्धसमये आश्चर्यकारकेषु कर्मसु कृतेष्वपि हर्षभरात् अमुष्य अभिमन्योः शिरोजबन्धे केशबन्धे मुहुर्मुहुः मोक्तुं दिवि आकाशे कर्तृभूताः मोचनक्रियाक-

---

१ 'कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैः' इति लक्षणम् ।

दृष्टास्तदा सुमनसो दिवि कर्तृभूता
नाकेन्द्रनन्दनवने न तु कर्मभूताः ॥ ९० ॥

अमुष्य कोदण्डमखण्डयद्रवेः
सुतो रथाश्वान्प्रममाथ कुम्भजः ।
कृपः कृणत्ति स्म शरेण सारथिं
व्यपाटयत्केतुपटान्गुरोः सुतः ॥ ९१ ॥

एकाकिनः परिभवाय वहून्प्रवृत्ता-
नेतानवेक्ष्य निखिलोऽपि निलिम्पवर्गः ।
मन्दारशाखिकुसुमानि यथाऽभिमन्यौ
निन्दारवं रिपुषु तस्य तथाऽभ्यवर्षत् ॥ ९२ ॥

रथादवप्लुत्य गदासखस्तदा
विदार्य बालो विजयात्मसंभवः ।
चकार मन्दाक्षभृतो न केवलं
रथानमीषां युधि तानपि क्षणात् ॥ ९३ ॥

---

तृत्वं प्राप्ताः सुमनसः दृष्टाः, परंतु नाकेन्द्रस्य नन्दनवने कर्मभूताः मोचनक्रियाकर्मत्वं प्राप्ताः सुमनसः न दृष्टाः । अभिमन्योः आश्चर्यकारकरणयुद्धकौशलानि दृष्ट्वा तस्मिन् मुहुर्मुहुः पुष्पवृष्टिं कुर्वत्सु वृष्टिकर्तारः सुमनसो देवा अवशेषात् दृष्टाः, सुमनसः पुष्पाणि वृष्टिक्रियायाः कर्माणि, सर्वपुष्पाणां व्ययात् न दृष्टानीत्यर्थः ॥ ९० ॥

एकैकस्य द्रोणाचार्यादेरपि असह्यत्वादभिमन्युः सर्वैर्मिलित्वा हत इत्याह—**अमुष्येत्यादिभिः** पञ्चभिः । रवेः सुतः कर्णो अमुष्य अभिमन्योः कोदण्डम् अखण्डयत् । कुम्भजः द्रोणः रथाश्वान् प्रममाथ जघान । कृपः शरेण सारथिं कृणत्ति स्म चिच्छेद । गुरोः सुतः अश्वत्थामा केतुपटान् व्यपाटयत् चिच्छेद ॥ ९१ ॥

निखिलोऽपि निलिम्पवर्गः देवसमूहः एकाकिनः असहायस्याभिमन्योः परिभवाय प्रवृत्तान् वहून् द्रोणादीन् अवेक्ष्य यथाभिमन्यौ मन्दारशाखिकुसुमानि कल्पवृक्षपुष्पाणि अभ्यवर्षत् तथा रिपुषु द्रोणादिषु निन्दारवं निन्दाशब्दम् अभ्यवर्षत् । देवा द्रोणादीन् निनिन्दुरित्यर्थः ॥ ९२ ॥

तदा वालः विजयात्मसंभवः अभिमन्युः गदायाः सखा सहायः गदाधरः सन् रथात् अवप्लुत्य उड्डीय युधि अमीषां द्रोणादीनां रथान् विदार्य विस्फोट्य क्षणात्केवलं मन्दाक्षान् विशीर्णाक्षान् विभ्रति ते मन्दाक्षभृतः तान् न चकार, अपि तु तानपि द्रोणादीनपि एकेन वालेन वहूनां रथस्फोटनात् मन्दाक्षं लज्जां विभ्रति ते तथाविधान् चकार ॥ ९३ ॥

---

१ ख. कृणाति । २ क. जवेन । ३ क. पटं गु° । ४ क. ख. रवान् ।

बालौ ततः कृतरणौ धृतराष्ट्रपौत्रौ
भीरू पृथग्गमनकर्मणि मन्यमानः ।
पार्थात्मजः स तु परस्परसाह्यवन्तौ
चक्रे कृतान्तपुरवर्त्मनि गन्तुमुग्रे ॥ ९४ ॥

अथ कर्णमुखा महारथास्ते
मिलिताः कैतवमेत्य यौगपद्यात् ।
सुरनायकपौत्रमेनमस्त्रैः
स्वयशोभिः सह पातयाम्बभूवुः ॥ ९५ ॥

तदनु तत्र तयोः सेनयोः क्ष्वेडितरुदिते अपि स्पर्धाजनितया परस्परविजिगीषयेव व्योमसीमानमुदलङ्घयताम् ॥ १५ ॥

तदानीं जगति नियमिवृद्धपरिषदूर्ध्वविक्षिप्तकरपुटजलाञ्जलिक्षालनादिव व्यपयातमहोमहोष्मणि पूषणि तौ द्वावपि बलौघौ निजनिजस्कन्धावारानुसंधानाय निरगच्छताम् ॥ १६ ॥

---

ततः सः पार्थात्मजः अभिमन्युस्तु कृतरणौ बालौ धृतराष्ट्रस्य पौत्रौ दुर्योधनदुःशासनपुत्रौ पृथग्गमनकर्मणि एकाकिनः गमनकर्मणि भीरू मन्यमानः सन् उग्रे भयंकरे कृतान्तपुरस्य यमनगरस्य वर्त्मनि मार्गे परस्परस्य साह्यवन्तौ साहाय्ययुक्तौ चक्रे । अन्योऽपि मार्गे भीरुं मत्वा सहायं ददाति । उभावपि सहैव जघानेत्यर्थः ॥ ९४ ॥

अथ ते प्रसिद्धाः कर्णमुखाः महारथाः महावीराः मिलिताः 'सर्वैर्मिलित्वा हन्तव्यः' इत्येकमत्यं प्राप्ताः सन्तः कैतवम् अधर्मम् एत्य स्वीकृत्येत्यर्थः, यौगपद्यात् एककालावच्छेदेन अस्त्रैः मन्त्रवच्छस्त्रैः एनं सुरनायकपौत्रम् अभिमन्युं स्वयशोभिः सह पातयाम्बभूवुः हत्वा क्षित्यां पातयामासुः । एकबालस्य युद्धे बहुभिर्महद्भिर्हतत्वात् लोकनिन्दया यशः-पतनम् ॥ ९५ ॥

तदनु तत्र रणाङ्गणे तयोः सेनयोः क्ष्वेडितरुदिते अपि कौरवसेनासिंहनादपाण्डुसेनारोदनशब्दावपि परस्परस्पर्धया जनितया उत्पादितया परस्परविजिगीषयेव जेतुमिच्छयेव व्योमसीमानम् उदलङ्घयताम् । द्वावपि शब्दौ महान्तौ उद्बभूवतुरित्यर्थः ॥ १५ ॥

तदानीं जगति पूषणि सूर्ये नियमवृद्धानां त्रिकालसंध्योपासनादिनियमकर्तृषु श्रेष्ठानां परिषदा समूहेन ऊर्ध्वं विक्षिप्ताः त्यक्ताः ये करपुटजलाञ्जलयः अर्घ्यजलाञ्जलयः तैः क्षालनादिव व्यपयातः महसः तेजसः संबन्धी महोष्मा यस्य सः तस्मिन् सति मन्दोष्णे सतीति यावत्, अस्तं गच्छति सतीत्यर्थः । द्वावपि बलौघौ सेनासमूहौ निजनिजान् स्कन्धावारान् शिबिराणि अनुसंधाय विश्रान्त्यर्थं संबन्धं कर्तुं निरगच्छताम् ॥ १६ ॥

---

१ क. °तुमग्रे । २ क. तत्रेति नास्ति । ३ क. ख. विजिगीषुतयेव । ४ ख. खल्वित्यधिकम् । ५ क. जगतीति नास्ति । ६ क. महो इति नास्ति । ७ महोत्प्रलंकारः ।

अथ त्रिगर्तानपि तान् क्षुरप्रैः सहस्रगर्तान्विरचय्य गात्रे।
विनैव हेतुं व्यथमानचेता बिडौजसोऽपि न्यवृतत्कुमारः ॥ ९६ ॥
बाष्पायते दृष्टियुगं कराग्राच्चापो गलत्यन्तरुदेति तापः।
फलं किमेतस्य भविष्यतीति विचिन्तयन्धाम विवेश राज्ञः ॥ ९७ ॥

तत्राश्रुनेत्रानथ सर्वबन्धू-
न्निशाम्य सूनोश्च निशम्य वार्ताम्।
तापापदेशेन धनञ्जयस्य
चित्तं चुचुम्ब स्वसमानतेजः ॥ ९८ ॥

वीरं तनूजमनुचिन्त्य विलापभाजं
धारालदृष्टियुगलं धरणौ लुठन्तम्।
वाग्भिश्चिरेण वसुधाधिपसंयुतस्तं
विश्वंभरोऽर्जुनमपि व्यदधादशोकम् ॥ ९९ ॥

इन्द्रात्मजस्तदनु बाहुमुदस्य कोपा-
त्सिन्धूद्वहस्य समरे द्विषतां समक्षम्।

---

अथ अभिमन्युवधानन्तरं विडौजसः इन्द्रस्य कुमारः अर्जुनोऽपि तान् पूर्वोक्तान् त्रिगर्तानपि छिद्रत्रययुक्तानपि त्रिगर्तसंज्ञसंशप्तकानपि च क्षुरप्रैः बाणविशेषैः गात्रे शरीरे सहस्रगर्तान् सहस्रक्षतयुक्तान् विरचय्य कृत्वा हेतुं कारणं विनैव व्यथमानं चेतो यस्य तथाभूतः सन् न्यवृतत् निववृते। कारणं विना दुश्चित्तत्वमपशकुनं मत्वा निवृत्त इति भावः ॥ ९६ ॥

अपशकुनान्तराणि च जानन् निवृत्त इत्याह—बाष्पायत इति। दृष्टियुगं नेत्रयुगं बाष्पायते बाष्पं त्यजति। कराग्रात् चापं गलति। अन्तः अन्तःकरणे तापः उदेति उत्पद्यते। अत्रापि कारणं विनैवेति संबध्यते। एतस्य फलं किं भविष्यतीति न ज्ञायते इति विचिन्तयन् राज्ञः धाम शिविरं विवेश ॥ ९७ ॥

अथ तत्र राजधाम्नि सर्वबन्धून् अश्रुनेत्रान् निशाम्य दृष्ट्वा सूनोः अभिमन्योः वार्तां च श्रुत्वा धनञ्जयस्य अर्जुनस्य चित्तं प्रति तापस्य अपदेशेन कपटेन स्वेन समानं धनञ्जय इति नाम्ना समानं तेजः अग्निः प्रविवेशेत्यर्थः। पुत्रशोकेन मनसि तापो बभूवेति भावः ॥ ९८ ॥

वसुधाधिपेन धर्मराजेन संयुतः विश्वम्भरः कृष्णः वीरं तनूजं पुत्रम् अनुचिन्त्य विलापभाजम् आक्रोशन्तं धारालं बाष्पधारायुतं दृष्टियुगं यस्य तं धरणौ पृथिव्यां लुठन्तं तम् अर्जुनमपि वाग्भिः शोकशामकवचोभिः चिरेण बहुकालेन अशोकं शोकरहितं व्यधात् अकार्षीत्। किंच अर्जुनवृक्षमपि अशोकवृक्षमकार्षीत्, इत्यर्थान्तरेण चमत्कारः ॥ ९९ ॥

तदनु शोकापनयनानन्तरम् इन्द्रात्मजः अर्जुनः कोपात् बाहुम् उदस्य उर्ध्वं कृत्वा

---

१ क. पुत्रस्य। २ क. ख. युगुलम्। ३ अत्रानेकक्रियायौगपद्यात्समुच्चयः। ४ अपह्नवोऽत्रालंकारः।
५ अत्र अर्जुनं कुटजवृक्षमपि अशोकं वञ्जुलवृक्षं व्यदधादिति विरोधस्य श्लेषेणाभासाद्विरोधाभासः।

हेत्यां श्व एव यदि तस्य शिरो न कुर्यां
तस्यां विशेयमहमित्यकरोत्प्रतिज्ञाम् ॥ १०० ॥
अथ वृत्तमेतदवकर्ण्य भीरवे
विततान सिन्धुपतये प्रतिश्रवम् ।
तव गुप्तियुग्ममपि मे भरोऽर्जुना-
त्समरेष्वभीरिति गभीरधीर्गुरुः ॥ १०१ ॥

इत्यनन्तभट्टकविकुञ्जरकृतौ श्रीमति चम्पूभारते नवमः स्तवकः ॥ ९ ॥

---

## १० दशमः स्तवकः ।

अन्येद्युरवलम्बितप्रथमशिखरिसानौ भानौ स्कन्धावारयुगवसुन्धराधिपतियुद्धसन्नाहपैशुन्यलम्पटपटहध्वानतरले सिन्धुराजयुगले शरणागतभरणालङ्कर्मीणेन भगवता पाणिमित्रतोत्रेण पद्मनेत्रेण सौभद्रवधशोकातिरेकपरिगलितशूरजनबाष्पपूरपङ्किले द्वारतले समानीतं सौवीरना-

---

'समरे द्विषतां शत्रूणां द्रोणकर्णादीनां समक्षं तस्य पुत्ररक्षकसेनामार्गरोधकस्य सिन्धूद्वहस्य जयद्रथस्य शिरः हेत्यां शस्त्रे यदि न कुर्यां तर्हि अहम् तस्यां हेत्याम् अग्निज्वालायां विशेयं प्रवेशं कुर्याम् ' इति प्रतिज्ञाम् अकरोत् ॥ १०० ॥

अथ अर्जुनप्रतिज्ञानन्तरम् एतद्वृत्तम् अर्जुनप्रतिज्ञावृत्तान्तम् अवकर्ण्य दूतमुखात् श्रुत्वा भीरवे सिन्धुपतये जयद्रथाय 'समरे अर्जुनात् तव गुप्त्योः रक्षणाच्छादनयोः युग्ममपि मे भरः भारः अस्ति अभीः भीतिवर्जितः तिष्ठ' इति गभीरा धैर्ययुता धीः बुद्धिर्यस्य सः गुरुः द्रोणाचार्यः प्रतिश्रवं प्रतिज्ञाम् अकरोत् ॥ १०१ ॥

इति श्रीखण्डोपाह्वबाजीरायात्मजनारायणसूरिविरचितायां श्रीमच्चम्पूभारतटीकायां नवमः स्तवकः ॥ ९ ॥

---

अन्येद्युः अभिमन्युवधात् द्वितीयदिवसे भानौ अवलम्बितः प्रथमशिखरिणः उदयाचलस्य सानुर्येन तस्मिन् सति सिन्धुराजयोः जयद्रथसमुद्रयोः युगले स्कन्धावारयोः शिविरयोः युगस्य यौ वसुन्धराधिपती धर्मराजदुर्योधनौ तयोः युद्धसन्नाहस्य युद्धविषयकसन्नद्धतायाः पैशून्यं सूचकत्वं तस्मिन्लम्पटः तत्स्वभावः यो पटहध्वानः तेन तरले भीरौ चञ्चले सति शरणागतस्य भरणे पालने अलंकर्मीणेन समर्थेन पाणिमित्रं पाणौ विद्यमानं तोत्रं कशा यस्य तेन भगवता पद्मनेत्रेण कृष्णेन सौभद्रवधेन यः शोकातिरेकः शोकातिशयः तेन परिगलितानां शूरजनबाष्पाणां पूरेण पङ्किले पङ्कयुते द्वारतले आनीतं

---

१ क. श्रुतम् । २ क. समरे श्व इत्यतिग । ३ क. भगवता पाणिमित्रतोत्रेणेति नास्ति । ४ क. शूरजनेति नास्ति । ५ क. देरो ।

यकगोपनस्थलदिदृक्षयेव तुङ्गतरकेतुशृङ्गमधिरूढेन कपिपरिवृढेन परिमण्डितं मानसमार्गणगरुडगन्धवहबान्धवैः सैन्धवैराहितबन्धनं स्यन्दनमधिरुह्य संक्रन्दननन्दनः समरोचितवेषसंपदविकलेन निजबलेन सह प्रतिष्ठमानो निरुद्धवियत्पथै रथैर्मदबन्धुरैः सिन्धुरैर्विविधगतिनाटकैर्घोटकैः तरणासत्तिभिः पत्तिभिश्च विरचितपरिपन्थिजनमोहस्य [4] व्यूहस्य पृष्ठभागे जयद्रथं प्रतिष्ठाप्य स्वयमपि पुरोभागं परिष्कुर्वाणस्य द्रोणस्य चरणयोर्बाणाभ्यां प्रणीतप्रणिपातस्तेन दीयमानमार्गावकाशश्चण्डमारुत इव घनमण्डलं तमेव व्यूहं क्षणादेव क्षोभयामास ॥ १ ॥

तदनन्तरम्—

संशप्तकासुरपलायनवेगभङ्गीं
तत्तादृशीमभिनयन्निव शौरिनुन्नः।
वेगेन विस्मयकरेण विरोधिसैन्ये
विष्वक् चचार विजयस्य शताङ्गवर्यः ॥ १ ॥

---

सौवीरनायकस्य जयद्रथस्य यद्गोपनस्थलं रक्षणस्थलं तस्य दिदृक्षयेव द्रष्टुमिच्छयेव तुङ्गतरम् उच्चतरं यत्केतुशृङ्गं ध्वजाग्रं तत् अधिरूढेन कृतारोहणेन कपिपरिवृढेन हनुमता परिमण्डितं शोभितं मानसं मनः मार्गणः बाणश्च गरुडश्च गन्धवहः वायुश्च तेषां बान्धवैः आशुगत्या सदृशैः सैन्धवैः अश्वैः आहितं निहितं बन्धनं यस्मिँस्तं स्यन्दनं रथम् अधिरुह्य संक्रन्दननन्दनः अर्जुनः समरोचितवेषाणां संपदा अविकलेन युक्तेन निजबलेन स्वसैन्येन सह प्रतिष्ठमानः निरुद्धः उच्चतया वियत्पथो यैस्तैः रथैः मदेन बन्धुरैर्व्याप्तैः सिन्धुरैः गजैः विविधगतिभिः नानागतिभिः नटन्ति नृत्यन्ति तैः घोटकैः कृता रणे आसत्तिः सान्निध्यं यैस्तैः पत्तिभिः पद्गैश्च विरचितः कृतः परिपन्थिजनानां शत्रुजनानां मोहः अन्तःप्रवेशादिभ्रान्तिर्यस्य तस्य व्यूहस्य पृष्ठभागे जयद्रथं प्रतिष्ठाप्य स्वयमपि पुरोभागं व्यूहाग्रभागं परिष्कुर्वाणस्य अलंकुर्वाणस्य द्रोणस्य चरणयोः बाणाभ्यां प्रणीतः कृतः प्रणिपातः नमस्कारो येन सः अत एव तेन द्रोणेन दीयमानः व्यूहान्तर्गमनाय मार्गावकाशो यस्य तथाभूतः सन् चण्डमारुतः मेघमण्डलमिव तमेव व्यूहं क्षणात् क्षोभयामास ॥ १ ॥

शौरिनुन्नः कृष्णप्रेरितः विजयस्य शताङ्गवर्यः रथश्रेष्ठः सा चासौ तादृशी च तत्तादृशी तां संशप्तकाः संग्रामादनिवर्तिनः ये असुराः असुरांशा भटाः तेषां पलायनवेगस्य भङ्गीं रीतिम् अभिनयन्निव एतादृशः पलायनवेग इति अभिनयेन दर्शयन्निव विस्मयकरेण वेगेन विरोधिसैन्ये शत्रुसैन्ये विष्वक् आसमन्तात् चचार। अन्योऽपि परगतिम् अभिनयेन दर्शयति ॥ १ ॥

---

१ क. मार्गणेति नास्ति। २ ख. सैन्धवैरिति नास्ति। ३ क. चेति नास्ति। ४ ख. पद्मेत्याधिकम्। ५ ख. प्रणिहित। ६ ख. मेघमण्डलम्। ७ अनोपमया अकुतोऽपि प्रतीतेरलंकारेण वस्तुध्वनिः।

तत्र निह्नुतदिनेश्वरदीपे जृम्भिते तमसि धूलिमिषेण ।
खिद्यते स्म युधि पाण्डवसेना हृष्यते स्म सहसा कुरुसेना ॥ २ ॥
गाण्डीवमेतेन मुहुर्विकृष्टं ह्रस्वं च दीर्घं च बभूव युद्धे ।
तुलामिवर्णेन सहाधिरोढुं स्वनामधेयस्थितिशालिनेव ॥ ३ ॥
अस्तं गतश्चेदरविन्दबन्धुर्वन्ध्या भवेत्साऽपि मदीयसंधा ।
इतीव संक्रन्दननन्दनोऽसौ तदीयमार्गं रुरुधे शरौघैः ॥ ४ ॥
मृत्संगतेनौष्ठपुटेन भूभुक्संबन्धितां स्पष्टमिव ब्रुवाणैः ।
धनञ्जयोऽसौ शितभल्लकृत्तैः शिरोभिराच्छादयति स्म धात्रीम् ॥५॥

वङ्गं कङ्ककुलामिषं धृतविपल्लिङ्गं कलिङ्गं पुन-
र्भोजं भाजनमापदां यमपुरीसीमारुधं मागधम् ।
चोलं दुःखनिचोलचित्तमिषुभिः कुर्वन्सुपर्वाधिभू-
पुत्रस्तत्र दिनावसानसमये रुन्धे स्म सिन्धूद्वहम् ॥ ६ ॥

---

तत्र रणाङ्गणे धूलिमिषेण धूलिकपटेन निह्नुतः आच्छादितः दिनेश्वर एव दीपो येन तस्मिन् तमसि जृम्भिते वृद्धिं गते सति सैन्यरजोभिः सूर्याच्छादनादन्धकारे समुद्भूते सतीत्यर्थः, युधि पाण्डवसेना सहसा अकस्मात् खिद्यते स्म, कुरुसेना हृष्यते स्म। उभयत्रापि हेतुः—सूर्यास्तं मत्वा इदानीं कृतप्रतिज्ञस्य अर्जुनस्याग्नौ प्रवेशसंभावना ॥ २ ॥

युद्धे एतेन अर्जुनेन मुहुः पुनः पुनः विकृष्टं बाणमोचनार्थम् आकर्णमाकृष्टं गाण्डीव-धनुः स्वस्य यत् नामधेयं गाण्डीवेति नाम तस्मिन् स्थितिशालिना वासकर्त्रा इवर्णेन सह तुलां सादृश्यम् अधिरोढुम् आप्तुमिव ह्रस्वं दीर्घं च बभूव । धनुः आकर्षणसमये ह्रस्वं भवति बाणप्रक्षेपानन्तरं ज्यामोचनात् दीर्घं च भवति । 'कपिध्वजस्य गाण्डीव-गाण्डिवौ पुंनपुंसकौ' इत्यमरात् गाण्डीवशब्दे इकारस्य ह्रस्वत्वं दीर्घत्वं च ॥ ३ ॥

'अरविन्दबन्धुः सूर्यः अस्तं गतः स्याच्चेत्तर्हि साऽपि मदीया संधा प्रतिज्ञा वन्ध्या जयद्रथवधाभावात् निष्फला भवेत्' इति हेतोरिव असौ संक्रन्दननन्दनः अर्जुनः तदीय-मार्गम् सूर्यस्य गम्यमार्गम् आकाशं शरौघैः रुरुधे ॥ ४ ॥

असौ धनञ्जयः शितभल्लैः तीक्ष्णबाणैः कृत्वा कृत्तैः छिन्नैः अत एव मृदा मृत्तिकया संगतेन संलग्नेन ओष्ठयोः पुटेन भुवं भुञ्जते भक्षयन्ति भुञ्जन्ति पालयन्ति च ते भूभुजः तेषां संबन्धितां स्पष्टं ब्रुवाणैरिव सूचयद्भिरिवेत्यर्थः,शिरोभिः धात्रीं भूमिं छादयति स्म॥५॥

अथ क्षुब्धोऽर्जुनो यच्चकार तदाह—वङ्गमिति । तत्र रणाङ्गणे सुपर्वाधिभुवः इन्द्रस्य पुत्रोऽर्जुनः इषुभिः वङ्गराजानं कङ्ककुलस्य आमिषं भक्ष्यमांसं, कुर्वन्निति क्रियाया इहो-त्तरत्रापि संबन्धः । पुनः ततः कलिङ्गराजानं धृतं विपल्लिङ्गं मरणचिह्नं येन तं, भोजं नृपम्

---

१ क. ख. दीप्तौ । २ ख. खिद्यति । ३ ख. हृष्यति । ४ क. ख. तदा । ५ अत्र संहितबाण-गुणाकर्षणतद्विमोचनकृतालपस्वायतत्वयोः अक्षरधर्मह्रस्वत्वदीर्घत्वयोश्च श्लेषभित्तिकाभेदाध्यवसायमू-लातिशयोक्त्योरुक्तोत्प्रेक्षासापेक्षत्वात्तयोः प्रत्येकमङ्गाङ्गिभावेन संकरद्वयस्य संसृष्टिः ।

तत्रान्तरे—

भूपस्तूत्तपमानधीर्भयभराज्जिज्ञासुरिन्द्रात्मभू-
वार्तां सात्यकिमारुती रिपुचमूव्यूहं प्रति प्राहिणोत् ।
जित्वा तौ रिपुमात्तसिंहनिनदौ संवीक्ष्य भूरिश्रवा
राधेयश्च हठादुभौ रुरुधतुः संक्षोभयन्तौ कुरून् ॥ ७ ॥

अथ सोमदत्ततनुजो रमापते-
रनुजश्च भग्नरथसूतकार्मुकौ ।
परिगृह्य पट्टिशलतां परस्परं
प्रधनं भयानकमुभौ वितेनतुः ॥ ८ ॥

अथ शिनितनयं निपात्य भूमा-
वुरसि धृतासिरसौ तु सौमदत्तिः ।
गलयितुमिव गर्वसारमन्त-
र्निजचरणेन निपीडयाम्बभूव ॥ ९ ॥

---

आपदां मरणदुःखानां भाजनं पात्रं, मागधं मगधदेशीयं राजानं यमपुरीसीमां रुणद्धि स्वीकरोति तथाभूतं, चोलं चोलदेशीयं नृपं दुःखनिचोलः आच्छादनपटो यस्य तथाविधं चित्तं यस्य तं दुःखव्याप्तचित्तमित्यर्थः, कुर्वन् सन् दिनावसानसमये सिन्धूद्वहं जयद्रथं रुन्धे स्म रुरुधे । अर्जुनो व्यूहप्रदेशे तत्र तत्र स्थितान् राज्ञो हत्वा जयद्रथसमीपं जगामेति भावः ॥ ६ ॥

तत्रान्तरे तत्समये—

भयभरात् उत्तपमाना अतिशयदुःखयुता धीर्यस्य सः भूपः धर्मराजस्तु इन्द्रात्मभूवार्ताम् अर्जुनवार्तां जिज्ञासुः सन् सात्यकिः मारुतिः भीमश्च तौ रिपुचमूव्यूहं प्रति प्राहिणोत् प्रेषयामास । तौ सात्यकिमारुती रिपुं द्रोणं जित्वा धर्मराजाय स्वजयसूचनार्थम् आत्तसिंहनादौ कृतसिंहनादौ सन्तौ कुरून् कुरुसैनिकान् क्षोभयन्तौ संवीक्ष्य भूरिश्रवाः राधेयः कर्णश्च उभौ हठात् बलात् रुरुधतुः वाणप्रक्षेपेण निवारयामासतुः ॥ ७ ॥

अथानन्तरं सोमदत्ततनुजः भूरिश्रवाः रमापतेः कृष्णस्य अनुजः कनिष्ठबन्धुः सात्यकिश्च उभौ भग्नानि रथसूतकार्मुकाणि ययोस्तथाभूतौ सन्तौ पट्टिशलतां सरलखड्गाकारमायुधं परिगृह्य परस्परं भयानकं प्रधनं युद्धं वितेनतुः चक्रतुः ॥ ८ ॥

अथ असौ सौमदत्तिः सोमदत्तपुत्रः भूरिश्रवास्तु शिनितनयं शिनियादवपुत्रं सात्यकिं भूमौ निपात्य उरसि धृतासिः स्थापितखड्गः सन् अन्तःस्थितं गर्वसारं गर्वरूपसारांशं गलयितुमिव बहिर्निष्कासयितुमिव निजचरणेन निपीडयाम्बभूव निष्पीडयामास ॥९॥

---

१ क. तौ जित्वा गुरु° । २ ख. गुरुमा° । ३ क. ततः । ४ क. ऽपि । ५ क. ख. पट्टस° । ६ क. मयद्भुं । ७ क. ख. भूमयाम्° । ८ क. चकार ।

तदा हरिर्दूरगतोऽपि नाक्षं
व्यापारयामास रथेऽर्जुनस्य ।
निजानुजातोरसि दत्तपादे
भूरिश्रवस्येव महारथेऽस्मिन् ॥ १० ॥

चोदितस्य हरिणा किरीटिनो
मार्गणेन हृतहस्तपल्लवः ।
सोमदत्ततनुजो न केवलं
कौरवा अपि विहस्ततां ययुः ॥ ११ ॥

भूरिश्रवास्तदनु पुत्रममुं बलारे-
र्भूयो विगर्ह्य पुरुषोत्तमसन्निधाने ।
आचम्य पावनमसौ कुशमेकमन्य-
मास्तीर्य युद्धभुवि तत्र शयालुरासीत् ॥ १२ ॥

तदनु हिडिम्बवैरी दिननायकसुतसाहाय्यकेन भयानकसायकनिकायवर्षिणाममर्षिणां दर्पेण गरीयसां दुःशासनयवीयसामुज्जासयितुं विदलितविमतमदां निजगदामष्टाभिः काष्ठाभिः समं भ्रामयामास ॥ २ ॥

---

तदा सात्यकिवधसमये दूरगतोऽपि हरिः कृष्णः अर्जुनस्य रथे अक्षं रथावयवमध्यकाष्ठं न व्यापारयामास रथगमनेन तस्मिन् चेष्टां नोत्पादयामास किंतु निजानुजातस्य सात्यकेः उरसि दत्तपादे महारथे महावीरे अस्मिन् भूरिश्रवस्येव अक्षं चक्षुरिन्द्रियं व्यापारयामास प्रेषयामास । तदा हरिः सात्यकेः तादृशीमवस्थां ददर्शेत्यर्थः ॥ १० ॥

हरिणा कृष्णेन चोदितस्य–त्वच्छिष्यः सात्यकिर्म्रियते पश्य बाणं मुञ्च–इति प्रेरितस्य किरीटिनः अर्जुनस्य मार्गणेन बाणेन हृतहस्तपल्लवः छिन्नहस्तः सोमदत्ततनयः भूरिश्रवाः केवलं विगतः हस्तो यस्य तस्य भावः तत्ता तां विहस्ततां न ययौ किं तु कौरवाः दुर्योधनपक्षीया अपि विहस्ततां ययुः । विहस्ततां व्याकुलतामित्यर्थः ॥ ११ ॥

तदनु भूरिश्रवाः पुरुषोत्तमस्य कृष्णस्य सन्निधाने सामीप्ये सति बलारेः पुत्रम् अर्जुनं भूयः बहु यथा तथा विगर्ह्य 'अन्यासक्तस्य मम हस्तः अलक्षितेन त्वया छिन्नोऽतस्त्वामधार्मिकं धिक्' इति वाचा विनिन्द्य तत्र युद्धभुवि असौ भुरिश्रवाः पावनं पवित्रम् एकं कुशं जलम् आचम्य अन्यत् पावनं कुशं जातावेकवचनं दर्भान् आस्तीर्य शयालुः योगधारणया प्राणमोचनार्थं निषण्ण आसीत् ॥ १२ ॥

तदनु हिडिम्बवैरी भीमः दिननायकसुतस्य कर्णस्य सहाय्यकेन सहायतया भयानक-

---

१ क. ख. तनयः । २ ख. °मन्यदा° । ३ क. तनयसा° । ४ क. °सां विसरमु° । ५ क. सह भ्रमयाञ्चकार । ६ अत्र दूररूपप्रतिबन्धकसत्त्वेऽपि भूरिश्रवसि चक्षुर्व्यापारवर्णनाद्विभावनाभेदस्य उक्तप्रतिबन्धकाभावरूपसामग्रीसत्त्वेऽपि अर्जुनरथे तद्व्यापारानुदयस्य वर्णनाद्विशेषोक्तेश्च उभयोः श्लेषानुप्राणितयोः संसृष्टिः । ७ अत्रैकस्य हस्तच्छेदेन सर्वेषां विहस्तत्ववर्णनादसंगत्यलंकारः ।

गान्धारजाजठरसीम्नि पुराऽश्मदत्तां
दत्त्वा दशां युधि गदा पवमानसूनोः।
दुःशासनानुजकुलाय हि यौगपद्यां
चक्रे मिथोऽष्टनवतिं त्रिदशीस्तु यातृः॥ १३॥

विहयं विरथं विसारथिं
विशरासं विपताकिकापटम्।
विशिखेन विवस्वतः सुतं
विदधाति स्म वृकोदरः क्षणात्॥ १४॥

अथान्यमासाद्य रथं क्षणेन
कर्णः कुरूणा धुरि कार्मुकस्य।
पूर्वं गुणेनाशुगजातमेकं
पश्चादटन्याऽप्यपरं निरास्यत्॥ १५॥

मारुतिस्तदनु सोमदत्तभू-
पादपांसुपरिधूसरोरसा।

---

सायकानां निकायं समूहं वर्षन्ति तथाविधानाम् अमर्षिणां क्रोधिनां दर्पेण गरीयसां गुरुतराणां दुःशासनस्य यवीयसां कनिष्ठबन्धूनाम् उल्लासयितुं वन्धून् हन्तुमित्यर्थः, विदलितः विनाशितः विमतमदः शत्रुगर्वो यया तां निजगदाम् अष्टाभिः काष्ठाभिः समं दिग्भिः सह भ्रामयामास। गदायाः स्वस्मिन् प्रहारवञ्चनाय दिक्स्थप्राणिभिर्भ्रमितं तदेव दिग्भ्रमणम्, अथवा विलोकयतां भयेन नेत्रभ्रमणात् दिशो भ्रमन्तीति प्रतीयते॥ २॥

युधि पवमानसूनोः गदा पुरा बाल्यवयसि अश्मने शिलायै दत्तां दशां चूर्णतावस्थां गान्धारजायाः गान्धार्याः जठरसीम्नि जठरसमीपभागे हृदये दत्त्वा पुत्रमरणवार्ताश्रवणेन हृदयस्फोटो भवति दुःशासनानुजानां कुलाय समूहाय मिथः परस्परम् अष्टनवतिं त्रिदशीः अप्सरसः यातृः भ्रातृजायाः चक्रे। युधि भीमगदापातेन मृतान् स्वर्गं गतान् अष्टनवतिसंख्याकान् वृत्वाऽप्सरसोऽष्टनवतिः परस्परं यातरो जाता इत्यर्थः। भीमस्तनन्धयावस्थायां मातुरङ्कात् शिलायां पतितस्तदा सा शिला चूर्णीबभूवेतीतिहासः॥ १३॥

तदा वृकोदरः भीमः क्षणात् विशिखेन वाणेन विवस्वतः सुतं कर्णं हताश्वं भग्नरथं मृतसारथिं छिन्नधनुषं छिन्नध्वजपटं चकारेत्यर्थः॥ १४॥

अथ कर्णः क्षणेन आसाद्य आरुह्येत्यर्थः, कुरूणां कौरवाणां धुरि अग्रभागे पूर्वं प्रथमं गुणेन धनुषः मौर्व्या एकम् आशुगजातं वाणसमूहं निरास्यत् चिक्षेप। पश्चात् अटन्या धनुषाग्रेण अपरम् अन्यम् आशुगजातं वायुपुत्रं भीमं निरास्यत् आकृष्य त्वं याहीत्युक्त्वा विससर्ज। अयं भावः, कर्णेन कुन्तीसमागमे अर्जुनं विनाऽन्यं तव पुत्रं न हनिष्यामीति प्रतिज्ञातत्वात् स्ववशं प्राप्तोऽपि भीमो विसृष्ट इति॥ १५॥

तदनु सः कर्णेन मुक्तः मारुतिः भीमः सोमदत्तभुवः भूरिश्रवसः पादपांसुभिः परितः

---

१ क. ख. पश्चाच्चक्रे। २ क. आसाद्य। ३ क. ख. निरास्यत्।

कंसमर्दनकनीयसा समं
शक्रनन्दनसमीपमाप सः ॥ १६ ॥

तदनु तदनुजपरिपन्थिनि [1] शरपुञ्जेन कुरुकुञ्जरान् भञ्जयन्तं धनञ्जयं तं सुतवधेन कृतमन्तुं रिपुं निहन्तुमादिश्य दलितदैत्यचक्रेण निजचक्रेण चण्डकरमण्डलं पिधाने गभस्तिमानस्तमहास्तेति समस्तनिजबलको-लाहलमाकर्ण्य दुःशलाजानिर्मुदा सः निजवदनमुदास ॥ ३ ॥

तदा प्रकाशस्य दिवाकरस्य तिरोहितस्यापि जयद्रथस्य ।
अदर्शनायापि च दर्शनाय सुदर्शनं हेतुरभून्मुरारेः ॥ १७ ॥

सकलमपि जगन्ति चक्रयूथं
सवितुरदर्शनतः सखेदमाहुः ।
समरभुवि कथं नु शौरिचक्रं
तपनतिरोभवनं तदाचकाङ्क्षे ॥ १८ ॥

---

धूसरम् ईषत्पाण्डुरम् उरो यस्य तेन कंसमर्दनकनीयसा सात्यकिना समम् अर्जुन-समीपं प्राप ॥ १६ ॥

तदनु दनुजपरिपन्थिनि दैत्यशत्रौ श्रीकृष्णे शरपुञ्जेन बाणसमूहेन कुरुकुञ्जरान् कौरव-पक्षीयमुख्यान् भञ्जयन्तं निघ्नन्तं तं धनञ्जयम् अर्जुनं सुतवधेन कृतमन्तुं कृतापराधं रिपुं जयद्रथं निहन्तुम् आदिश्य आज्ञाप्य दलितं हतं दैत्यचक्रं दैत्यसमूहो येन तेन निजच-क्रेण चण्डकरमण्डलं सूर्यमण्डलं पिदधाने सति आच्छादयति सति गभस्तिमान् सूर्यः अस्तम् अहास्त अगमत् इति समस्तानां निजबलानां निजसैनिकानां कोलाहलम् आ-कर्ण्य सः दुःशला जाया यस्य सः जयद्रथः मुदा हर्षेण वदनम् उदास इदानीमर्जुनस्य कीदृश्यवस्था भविष्यतीति दर्शनार्थम् ऊर्ध्वे चकार । भारते तु कृष्णेन मायया तम उत्पाद्य तेन सूर्याच्छादनम्, अत्र तु चक्रेणोक्तं तत्पुराणान्तरानुरोधेन ॥ ३ ॥

तदा प्रकाशस्य प्रसिद्धस्यापि दिवाकरस्य तिरोहितस्य अतिगुप्तस्यापि जयद्रथस्य च क्रमेण अदर्शनाय रवेः आच्छादनाय दर्शनाय जयद्रथस्य दर्शनायापि मुरारेः कृष्णस्य सुदर्शनं चक्रं हेतुः कारणम् अभूत् । सूर्योऽस्तं गत इत्यतो निर्भयतया स्वयं द्रष्टुमागतं जयद्रथं ददर्शेत्यर्थः ॥१७॥

जगन्ति सकलमपि चक्रयूथं चक्रसमूहः सवितुः अदर्शनतः अदर्शनेन सखेदं सदुः-खम् आहुः । तदा समरभुवि शौरिचक्रं सूर्याच्छादनं कथं नु आचकाङ्क्षे इच्छति स्मे-त्याश्चर्योक्तिः, चक्रयूथं चक्रवाकपक्षिसमूहः इत्यर्थान्तरेण परिहारः ॥ १८ ॥

---

१ क. श्रीकृष्णे निजेत्यधिकम् । २ क. मण्डलमपिदधाने । ३ क. स इति नास्ति, ख. सह । ४ क. उदासयत् । ५ अत्र सूर्यप्रत्यक्षसामग्रीभूतनेत्रालोकनयोः तदप्रत्यक्षहेतुत्ववर्णनाद्व्याघातालंकारः । एवं प्रत्यक्षप्रतिबन्धकस्य तिरोधानस्य सत्त्वेऽप्युक्तसामग्र्या सैन्धवप्रत्यक्षवर्णनात्तृतीयविभावनाभेदः । तयोः श्लेषानुप्राणितयोः संसृष्टिः । 'स्याद्व्याघातोऽन्यथाकारि तथाकारि क्रियेत चेत्' 'कार्योत्प-त्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके' इति तयोर्लक्षणम् ।

तावत्किरीटी तरुणेन्दुमौलेर्वदान्यताकीर्तिवदावदेन।
शरेण शत्रोरलुनीत शीर्षं साकं प्रमोदेन स कौरवाणाम्॥ १९॥
वृद्धक्षत्राञ्जलौ सायं नालमर्घ्याय कं धृतम्।
इतीव सिन्धुराजस्य जिष्णुस्तस्मिन्न्यपातयत्॥ २०॥
पतत्किमित्ययमपास्य सुतस्य शीर्षं
शीर्यन्स्वमूर्धनि वरेण शशाङ्कमौलेः।
क्षोण्यामवाङ्मुखतया निपपात वेगा-
दाघ्रातुकाम इव तत्सुतवत्सलत्वात्॥ २१॥

अथ तस्मिन्वासवसूनौ वासरविरामे शिबिरमेत्य यथावृत्तं रणकथां विज्ञाप्य हृष्टरोमाणं राजानमुपतिष्ठमाने सुयोधनस्तु क्रोधनतया भगिनीजानिनिधननिदानतया सर्वामपि शर्वरीं नियोद्धुकामः सन् गम्भीरयुद्धारम्भभेरीनिध्वानमुज्जृम्भयामास॥ ४॥

---

यावज्जयद्रथः पश्यति तावत् सः किरीटी अर्जुनः तरुणेन्दुमौलेः शिवस्य वदान्यतायाः औदार्यस्य कीर्तेः वदावदेन वक्त्रा शिवप्रसादलब्धेनेत्यर्थः, शरेण शत्रोः जयद्रथस्य शीर्षं कौरवाणां प्रमोदेन सह अलुनीत अच्छिदत्। जयद्रथमस्तकच्छेदं सूर्यं च दृष्ट्वा सूर्यादर्शनेन जातस्य हर्षस्य नाशात् कौरवा दुःखम् आपुरिति भावः॥ १९॥

'वृद्धक्षत्रा वृद्धक्षतृनामकजयद्रथपित्रा सायं संध्यासमये अर्घ्याय सूर्याय अर्घ्यं दातुम् अञ्जलौ कं नालं न पर्याप्तम्' इतीव इतिमत्वेव जिष्णुः अर्जुनः सिन्धुराजस्य जयद्रथस्य कं तस्मिन् अञ्जलौ न्यपातयत् पातयामास। केनचित् गृहीतं पदार्थमल्पं मत्वा स्वनिकटस्थं तमेव पदार्थं ददाति। कशब्दस्यार्थयोरुदकशिरसोरेकपदवाधकत्वात् अध्यवसायोक्तिः। अत्रेत्थमितिहासः 'यस्त्वत्पुत्रमस्तकं भुवि पातयेत् सः भग्नशिराः सद्यः पतेत्' 'इति जातशिववरस्य देशान्तरे तीर्थे तपस्यतः तत्पितुः अञ्जलौ छिन्नं तत्पुत्रजयद्रथमस्तकं पातय' इति श्रीकृष्णेनोक्तोऽर्जुनो वाणपरंपरया तथैव चकारेति॥ २०॥

अयं वृद्धक्षत्ता 'एतत् अञ्जलौ पतितं किम्' इत्युक्त्वा सुतस्य शीर्षम् अपास्य भुवि त्यक्त्वा शशाङ्कमौलेः वरेण स्वस्य मूर्धनि शीर्यन् भङ्गं प्राप्नुवन् सन् सुतवत्सलत्वात् सुतस्नेहात् तत्सुतमस्तकम् आघ्रातुकाम इव अवघ्राणेच्छुरिव अवाङ्मुखतया अधोमुखत्वेन वेगात् निपपात। 'त्वत्पुत्रशिरो भूम्यां यः पातयेत् स भग्नशिरा भूमौ पतेत्' इति शिववरानुरोधेन पितुर्हस्तात् पुत्रशिरो भूमौ पातितमिति पिता भग्नशिरा भूमौ पतित इति भावः॥ २१॥

अथ वासरविरामे सूर्यास्तमये तस्मिन्वासवसूनौ अर्जुने शिबिरम् एत्य रणकथां यथावृत्तं यथाभूतं विज्ञाप्य निवेद्य हृष्टरोमाणम् उद्गतरोमाञ्चं राजानम् उपतिष्ठमाने

---

१ ख. शरेण। २ क. कं सिन्धुभर्तुः। ३ क. ख. नीति नास्ति। ४ क. हृषितं। ५ क. ख. हानिनि दानया। ६ ख. गम्भीरेति नास्ति।

एते तदाकर्ण्य समयवैज्ञानिकाः स्मरणमात्रकृतसंनिधानं निशि दशगुणितभुजबलावलम्बं हिडिम्बभागिनेयं पृथक् प्रस्थाप्य स्वयमपि निजबलानि सन्नाह्य संयुगाय संयुगायतबाहवः शक्रसुतादयो निश्चक्रमुः ॥ ५ ॥

या तारका मे सततं विरुद्धां
तां बिभ्रतीमा इति बद्धरोषम् ।
सर्वेन्द्रिये सत्यपि सैनिकानां
मार्गं दृशामेव तमो रुरोध ॥ २२ ॥

शर्वर्याश्चिकुरे मनोजशिखिनो धूमे नभोरण्यभू-
जम्बूशाखिनि पेचकाण्डजदृशामालोकसिद्धाञ्जने ।
चेले कालहलायुधस्य तमसामुज्जृम्भणे तादृशे-
ऽप्यह्नीवाहवशिल्पमद्भुततरं चक्रुर्द्वये सैनिकाः ॥ २३ ॥

---

आनन्दयति सति सुयोधनस्तु क्रोधनतया क्रोधेन भगिनीजानेः शालकस्य जयद्रथस्य निधनं मरणं निदानम् आदिकारणं यस्य नियोद्धुकामस्य दुर्योधनस्य तस्य भावस्तत्ता तया सर्वामपि शर्वरीं नियोद्धुकामः सन् गम्भीरयुद्धारम्भसूचकभेरीनिध्वानम् उज्जृम्भयामास प्रकटीकारयामास । दुर्योधनो जयद्रथवधेन रात्रौ युद्धं कर्तुं प्रवृत्त इत्यर्थः ॥ ४ ॥

तत् भेरीनिध्वानादिवृत्तम् आकर्ण्य एते समरे वैज्ञानिकाः कुशलाः संयुगं समीचीनयुगं तद्वत् आयतौ दीर्घौ बाहू येषां ते शक्रसुतादयः स्मरणमात्रेण कृतं सन्निधानं सान्निध्यं येन तं निशि रात्रौ दशगुणितं भुजबलम् अवलम्बते धारयति तथाभूतं हिडिम्बस्य भागिनेयं घटोत्कचं पृथक् प्रस्थाप्य स्वयमपि सकलानि बलानि सैन्यानि सन्नाह्य सन्नद्धानि कारयित्वा संयुगाय युद्धं कर्तुं निश्चक्रमुः निर्जग्मुः ॥ ५ ॥

या तारका सततं निरन्तरं मे मम विरुद्धा विरोधवती वर्तते तां तारकाम् इमाः सैनिकदृशः बिभ्रति धारयन्ति, इतिहेतोः बद्धरोषं धृतक्रोधं तमः सर्वेन्द्रिये सत्यपि सर्वेषु इन्द्रियेषु श्रोत्रादिषु सत्स्वपि सैनिकानां दृशां चक्षुरिन्द्रियाणामेव मार्गं रुरोध । अन्योऽपि वीरः स्वशत्रोराश्रयदातारं पीडयति । तमसो विरोधिनी तारका प्रकाशकर्तृ नक्षत्रं तादृशा तारका कनीनिका तयोरेकपदवाच्यत्वादैक्याध्यवसायमाश्रित्येयमुक्तिः ॥२२॥

द्वये उभये सैनिकाः तादृशे अनिर्वाच्ये तमसाम् उज्जृम्भणेऽपि प्रागल्भ्ये सत्यपि अह्नीव अद्भुततरम् आहवशिल्पं युद्धचातुर्यं चक्रुः प्रकाशयामासुः । कीदृशे तमसामुज्जृम्भणे, शर्वर्याः रात्रियुवत्याः चिकुरे केशरूपे । पुनः की०, मनोजशिखिनः मदनाग्नेः धूमे । पुनः की०, नभ एव अरण्यभूः तत्संबन्धिनि जम्बूशाखिनि जम्बूवृक्षे । पुनः की०, पेचकाण्डजदृशाम् उलूकपक्षिचक्षुषाम् आलोकस्य दर्शनस्य सिद्धाञ्जने । यस्मिन्

---

१ ख. एतदाकर्ण्य । २ क. तदा तं समाकर्ण्य । ३ ख. समरवैज्ञानिकम् । ४ क. ख. सकलान्यपीत्यधिकम् । ५ क. समिति नास्ति । ६ क. ख. तमम् ।

प्रधनेऽद्भुतेऽपि निशि नारददृष्टेः
प्रथमेतरा व्यलसदीतिरुदग्रा ।
वनिता अपि त्रिदशनाथनगर्यां
वरणस्रजं चिकुर एव बबन्धुः ॥ २४ ॥

अमीषु युद्धदिवसेष्वयमेव हि कामुकः ।
रणोत्सवे विभज्यार्धं रात्रयेऽपि ददौ यतः ॥ २५ ॥

ततः क्षणादेव घटोत्कचोऽसौ संग्रामसीमोपरि जृम्भमाणः ।
तमीमिमां सान्द्रतमां तमोभिर्दंष्ट्राप्रभाभिर्दिवसं वितेने ॥ २६ ॥

तिष्ठ द्रोण सुयोधन द्रुततरं धावस्व दुःशासन
त्वां मुञ्चामि किमार्य भो कृप कृपालेशोऽपि न त्वत्कृते ।
गान्धाराधिप का कथा तव रणे दुर्मेधसामग्रणीः
कर्णः क्वेति घटोत्कचः कटुरवो व्यभ्राम्यदभ्रान्तरे ॥ २७ ॥

---

चक्षुषि क्षिप्ते सति अन्धस्य दर्शनशक्तिरुत्पद्यते तत्सिद्धाञ्जनम् । पुनः की०, कालः संहारकालः स एव हलायुधः बलभद्रः तस्य चेले वस्त्रे । अत्र नैल्यगुणेन तमसि चिकुरत्वाद्यारोपः ॥ २३ ॥

निशि अद्भुते प्रधने युद्धे सत्यपि नारदस्य दृष्टेः नेत्रस्य उदग्रा महती प्रथमेतरा 'अतिवृष्टिरनावृष्टिः' इतिश्लोकोक्ता द्वितीया ईतिः अनावृष्टिः व्यलसत् विललास । यदीदं युद्धं दिवा स्यात्तर्हि नारददृष्टेः आनन्दाश्रूणामतिवृष्टिः स्यादिति भावः । त्रिदशनाथस्य इन्द्रस्य नगर्यां वनिताः स्त्रियोऽप्सरसोऽपि वरणस्रजं चिकुरे एव स्वर्गतनवीनवीरजन्यदेवकेशेष्वेव बबन्धुः आसञ्जयामासुः । उभयत्रापि तमसा दर्शनाभावो हेतुः । रात्रावागतनवीनवीरजन्यदेवानामवयवदर्शनाभावादुत्सुकतया वरणस्रजं चिकुरे बबन्धुरिति भावः ॥ २४ ॥

अमीषु अद्यावधिचतुर्दशसु युद्धदिवसेषु अयमेव अद्यतन एव दिवसः कामुकः स्त्रीरक्तः, यतः रणोत्सवे अर्धं विभज्य रात्रयेऽपि ददौ । अन्योऽपि कामुको लब्धं पदार्थं प्रियायै विभज्य ददाति ॥ २५

ततः असौ घटोत्कचः क्षणादेव संग्रामसीमायाः उपरि ऊर्ध्वभागे जृम्भमाणः वृद्धवपुः दधानः सन् तमोभिः सान्द्रतमाम् अतिशयेन निबिडाम् इमां तमीं रात्रिं दंष्ट्राप्रभाभिः धवलकान्तिभिः दिवसं वितेने चकार ॥ २६ ॥

तस्यातिरौद्रत्वमाह—तिष्ठेति । 'हे द्रोण ! तिष्ठ मा पलायस्व । हे सुयोधन ! द्रुततरम्

---

१ क. ख. नगर्याः । २ ख. °स्सवम् । ३ क. ऽसौ । ४ ख. किमद्य भोः । ५ अश्लिष्टमालापरम्परितरूपकस्योपमयाऽत्र संसृष्टिः । ६ अत्र युद्धनैशत्वविशेषणस्य तद्गताश्चर्यतन्मतनवसुरदर्शनप्रतिबन्धकारावरणाभिप्रायगर्भत्वात्परिकरालंकारः । ७ अत्र तमोनीलाया रात्रेर्नैल्यत्यागपूर्वकं दंष्ट्राप्रभाव्यापनवर्णनात्तद्गुणालंकारः ।

हैडम्बेयममुं निजाट्टहसितक्षुभ्यद्दशाशामुखं
दंष्ट्राङ्कूरकरालमात्तपरशुं दृष्ट्वैव केचिद्भटाः।
बिभ्युश्चक्षुरमी मिमीलुरवनौ पेतुर्मुमूर्च्छुर्जहुः
प्राणानारुरुहुर्विमानममरीः प्रापुः प्रमोदं दधुः ॥ २८ ॥

नभसि तमभिवीक्ष्य घोररूपं
दिशि दिशि तत्र पलायिते नृपौघे।
मरणसमयमुष्टिलग्नशस्त्र-
स्तदभिमुखः प्रययौ कबन्ध एव ॥ २९ ॥

पितुश्च पुत्रस्य च वेदवाक्यै-
र्यदुक्तमैकात्म्यमिदं हि दृष्टम्।

---

अतिशीघ्रं धावस्व, जीवरक्षणार्थं पलायनं कुरु। हे दुःशासन! त्वां मुञ्चामि किं, पलायनं मा कुरु, त्वां नैव मुञ्चामीत्यर्थः। भो आर्य कृप! त्वत्कृते मम कृपायाः लेशोऽपि नास्ति। हे गान्धाराधिप शकुने! रणे तव का कथा, मत्पुरस्तिष्ठसीति वार्ताऽपि गगनकुसुमायमाना। दुर्मेधसां दुर्बुद्धीनाम् अग्रणीः मुख्यः मूढतमः कर्णः क्वास्ति' इति कटुरवः क्रूरभाषणः सन् अभ्रान्तरे आकाशमध्ये व्यभ्राम्यत् विशेषेण भ्रमणं चकार ॥ २७ ॥

निजैः स्वकीयैः अट्टहसितैः सशब्दहास्यैः क्षुभ्यन्ति दशाशामुखानि दश दिक्प्रारम्भाः यस्य यत्संबन्धीनि आशामुखानि अट्टहासेन क्षुब्धानि बभूवुः। तं दंष्ट्राणाम् अङ्कुरैः अग्रैः करालं भयंकरम् आत्तपरशुं गृहीतपरशुम् अमुं हैडम्बेयं घटोत्कचं दृष्ट्वैव केचिद्भटाः योद्धारः बिभ्युः भयं प्राप्नुयुः। ततः अमी चक्षुः नेत्रं मिमीलुः पक्ष्मणोर्मेलनं चक्रुः। ततः अवनौ पेतुः, ततः मुमूर्च्छुः, ततः प्राणान् जहुः तत्यजुः, ततः विमानम् आरुरुहुः, ततः अमरीः अप्सरसः प्रापुः लेभिरे, ततः प्रमोदम् आनन्दं दधुः। अनयोक्त्या तस्य शब्देनैव बहवो मृता इति भावः ॥ २८ ॥

तत्र रणाङ्गणे नभसि घोररूपं तं घटोत्कचम् अभिवीक्ष्य नृपौघे राजसमूहे दिशिदिशि पलायिते सति मरणसमये मुष्टेः लग्नं शस्त्रं यस्य सः कबन्ध एव छिन्नशिराः सजीवो भट एव तस्य घटोत्कचस्य अभिमुखः प्रययौ। कबन्धस्य चक्षुःश्रोत्राद्यभावात् दर्शनश्रवणाद्यभावेन शिरच्छेदात् पूर्वं पुरोगमनक्रियया पुर एव जगामेत्यर्थः ॥ २९ ॥

वेदवाक्यैः पितुः पुत्रस्य च ऐकात्म्यम् ऐक्यम् उक्तमस्ति, हि प्रसिद्धम्। इदं ऐका-

---

१ क. हैडिम्बेय°। २. ख. हसितैः। ३ क. ख. चुक्रुशुरामि°। ४ क. प्रेति नास्ति। ५ क. एकः। ६ अत्र कर्तृकारके केषुचिद्भटेषु भयमीलनानां केषुचित्पतनमूर्छनप्राणत्यागानां केषुचिद्विमानारोहणदेवाङ्गनाप्राप्तिप्रमोदवहानां च अनेकक्रियाणामन्वयात् कारकदीपकालंकारत्रयम्। विमानारोहणदेवाङ्गनाप्राप्त्योः प्रमोदवहनहेतुत्वात्काव्यलिङ्गभेदस्य तृतीयेन सहैकवाचकानुप्रवेशसंकरः। अस्य च प्रथमद्वितीययोश्च संसृष्टिरिति विवेकः। ७ अत्राभिमुखगमनस्य कबन्ध एव नियमनात्परिसंख्यालंकारः।

भीमात्मजो हि स्वयमेव युद्धे
भीमो यदासीदरिसैनिकानाम् ॥ ३० ॥
भिन्दीपालैस्तोमरैः शूलजालै-
र्वर्षैरुग्रैश्चोभयेषां नगानाम् ।
दृष्टः क्वापि क्वाप्यदृष्टोऽरिसैन्यं
व्योम्नि स्थित्वा नाम्नि शेषं स चक्रे ॥ ३१ ॥
स्वस्वक्षयं नागमदद्य रात्रौ
दुर्योधनस्य ध्वजिनीति मत्वा ।
पितृव्यभक्त्येव स भीमसूनु-
स्तत्रैव तस्याः क्षयमाततान ॥ ३२ ॥

तत्रान्तरे—

वाहिन्या एव मे नार्धं मेदिन्या अपि नङ्क्ष्यति ।
क्षणं युध्येत चेदेष इति मेने सुयोधनः ॥ ३३ ॥

इत्थं नितान्तचिन्तासंतानादार्तस्य संप्रार्थनगुणनिकया संभृतसर्वाभिसारो मिहिरकुमारो वज्रधारया महेन्द्रो महीध्रमिव तेन दत्तया

---

त्न्यं दृष्टम् । तथाहि यदा युद्धे भीमात्मजः घटोत्कचः अरिसैन्यानां स्वयमेव भीमः अभूत् । भीमः भयंकरः इत्यर्थान्तरक्रोडीकरणात् वाचो युक्तिः ॥ ३० ॥

सः घटोत्कचः व्योम्नि स्थित्वा क्वापि कुत्रचिद्देशे दृष्टः क्वापि अदृष्टः सन् भिन्दीपालैः रज्जुमयपाषाणक्षेपणीभिः तोमरैः अल्पकुन्ताकारवृहत्फलैरायुधैः शूलानां जालैः समूहैश्च उभयेषां द्विविधानां नगानां पर्वतानां वृक्षाणां च उग्रैः वर्षैः वृष्टिभिश्च अरिसैन्यं नाम्नि शेषं चक्रे । नाम अवशिष्टं तदर्थः सैन्यं तु नष्टं चक्रे इत्यर्थः ॥ ३१ ॥

अद्य रात्रौ दुर्योधनस्य ध्वजिनी सेना स्वस्य स्वस्य क्षयं निवासस्थानं नागमत्, इति मत्वा सः भीमसूनुः घटोत्कचः पितृव्ये पितुर्बन्धौ दुर्योधने या भक्तिः अनुरागः तयेव तस्याः ध्वजिन्याः क्षयं निवासस्थानं, नाशं च आततान ददावित्यर्थः । अन्योऽपि रात्रौ आगताय आप्तजनसंबन्धिजनाय निवासस्थानं ददाति ॥ ३२ ॥

तत्रान्तरे तस्मिन् समये—

सुयोधनः 'एषः घटोत्कचः क्षणं युध्येत चेत्तर्हि मे मम वाहिन्याः एव अर्धं न नङ्क्ष्यति न नाशं प्राप्स्यति किं तु मेदिन्याः पृथिव्याः अपि अर्धं नङ्क्ष्यति' इति मेने । अयं मुहूर्तमात्रमितः परं युध्येत चेत् तर्हि मां पराभूय मत्पृथिव्या अर्धमपि पाण्डवेभ्यो दास्यतीति मेने इति भावः ॥ ३३ ॥

इत्थं नितान्तानां तीव्राणां चिन्तानां संतानात् परंपरायाः सकाशात् आर्तस्य पीडि-

---

१ क. ख. ऽपि । २ क. °वालैः । ३ क. वर्षैः । ४ क. नृपाणाम् । ५ ख. छित्त्वा नामशेषम् । ६ क. स्वस्य क्ष° । ७ क. °नार्दितस्य धार्तराष्ट्रस्य संप्रार्थनागु° । ख. नार्दितस्य संप्रा° । ८ अत्र श्लेषानुप्राणितं वाक्यार्थहेतुकं काव्यलिङ्गम् ।

वलक्षाश्वक्षपणदक्षेयमिति चिररक्षितया महत्या शक्त्या वक्षसि ¹निर्भेद्य क्षणेन तं क्षणदाचरं क्षितौ ²पातयामास ॥ ६ ॥

पौत्रस्य तस्य ³प्रबलप्रसिद्धेः
प्रहारपीडां प्रतियोधिदत्ताम्।
अपारयन्द्रष्टुमिवातिघोरा-
मन्तः स्थितो वायुरगाद्बहि⁴र्ष्टात् ॥ ३४ ॥

साऽपि शक्तिरभिहत्य नराशं सांयुगीनजनसन्नुतशौर्यम्।
वायुसूनुपरिघादिव भीता वासवस्य सविधं प्रतिपेदे ॥ ३५ ॥

तदानीं ⁵तेषां कौन्तेयकौरवसैन्यानां वाष्पलहरीमुत्पादयितुं मोद-विषादयोरहमहमिकया स्पर्धा समवर्धत ॥ ७ ॥

अथ जयद्रथघटोत्कचनिधनशोकातिशयगुरून्द्वयानपि कुरूनाश्वा-सयितुमिव ⁶कुरुकूटस्थे कुमुदबान्धवे कुलिशायुधदि⁷शामेत्य काशनी-

---

तस्य धार्तराष्ट्रस्य दुर्योधनस्य संप्रार्थनस्य गुणनिकया पुनः पुनः करणेन संभृतः सिद्धः कृतः सर्वाभिसारः सर्वसैन्यसन्नाहो येन सः मिहिरकुमारः कर्णः महेन्द्रः वज्रधारया महीध्रं पर्वतमिव तेन इन्द्रेण कवचकुण्डलदानसमये दत्तया इयं शक्तिः वलक्षाश्वस्य अर्जुनस्य क्षपणे वधे दक्षा इति हेतुना चिरं रक्षितया महत्या शक्त्या वक्षसि निर्भिद्य क्षणेन तं क्षणदाचरं घटोत्कचं राक्षसं क्षितौ निक्षेपयामास पातयामास ॥ ६ ॥

प्रबल इति प्रसिद्धिर्यस्य तस्य पौत्रस्य स्वस्य नप्तुः घटोत्कचस्य प्रतियोधिभिः दत्ताम् अतिघोरां प्रहारस्य शक्तिप्रहारस्य पीडां द्रष्टुम् अपारयन्निव असमर्थः सन्निव अन्तः शरीरमध्ये स्थितः प्राणवायुः बहिष्टात् बहिर्भागे अगात् अगमत् ॥ ३४ ॥

सा शक्तिरपि सांयुगीनाः रणे निपुणाः ये जनाः तैः सन्नुतं संस्तुतं शौर्यं यस्य तं नराशं राक्षसम् अभिहत्य वायुसूनोः भीमस्य परिघात् गदायाः भीतेव सा वासवस्य सविधं समीपभागं प्रतिपेदे जगाम ॥ ३५ ॥

तदानीं घटोत्कचमरणसमये तत्र रणाङ्गणे तेषां कौन्तेयस्य कुरुकुलोत्पन्नस्य धर्म-राजस्य सैन्यानां वाष्पलहरीं नेत्रयोः अश्रुलहरीं निष्पादयितुं मोदविषादयोः आनन्द-शोकयोः अहमहमिकया इदं कार्यं मया कर्तुं शक्यमिति परस्परस्याहंकारोत्पत्त्या स्पर्धा समवर्धत। अयं भावः, अर्जुनवधार्थं रक्षितया शक्त्या कर्णेन राक्षसो हतः अतोऽर्जुनस्य जीवनात् आनन्दाश्रूणां प्रादुर्भावः, महावीरस्य स्वपक्षीयघटोत्कचस्य मर-णात् दुःखाश्रूणां प्रादुर्भाव इति भावः ॥ ७ ॥

अथ जयद्रथघटोत्कचयोः निधनशोकातिशयाभ्यां गुरून् गुरुत्वयुक्तान् द्वयानपि

---

१ क. ख. निर्भिद्य। २ क. निपा°, ख. न्यक्षिपत्। ३ क. प्रबलस्य शक्तेः। ४ क. ख. 'ष्ठात्। ५ क. ख. तत्रेत्यधिकम्। ६ क. ख. कुलकू°। ७ क. ख. दिशमेत्य°। ८ ख. निकाशै°। ९ अत्रो-पमालंकारः।

काशैरभीषुभिराकाशदिशावकाशं व्याकोचमाने सति कोपेन कुटिलीकृतचापौ द्रुपदविराटभूपौ द्रुतमनीचैर्नाराचैराचार्यं शललैः शल्यमृगमिव निबद्धतनुमातेनतुः ॥ ८ ॥

तस्यार्धमग्ना नाराचास्तन्वां तद्विक्रमश्रियः ।
रोचन्ते स्म प्रहृष्यन्त्या रोमाञ्चानामिवाङ्कुराः ॥ ३६ ॥
अग्निवेश्येन निक्षिप्तमथोभौ द्रोणपार्षतौ ।
कोदण्डविद्यासर्वस्वं कुर्वाते स्म प्रकाशितम् ॥ ३७ ॥

ततः शरसंभवभगिनीजानेश्चापचतुर्मुखः समृद्धविश्राणितविकृतवेषयोरपि विशिखमोचनसृष्टिशिल्पेन विलोभनीयविग्रहीकृतयोर्विराटपाञ्चालयोरहंपूर्विकया वरणोत्सवयौगपद्ये सति विबुधपुरविलासिनीनां विडौजः कुटुम्बिन्या अपि दुःसमाधं विवादमापादयामास ॥ ९ ॥

---

कुरून् दुर्योधनादीन् युधिष्ठिरादींश्च आश्वासयितुमिव समाधानं कर्तुमिव कुरूणां कूटस्थेन मूलपुरुषेण कुमुदबान्धवेन चन्द्रेण कुलिशायुधस्य इन्द्रस्य दिशं प्राचीम् एत्य उदयं प्राप्येत्यर्थः, काशनीकाशैः काशतृणमञ्जरीतुल्यैः शुभ्रैः अभीषुभिः किरणैः आकाशदिशानाम् अवकाशं मध्यभागं व्याकोचमाने सति प्रफुल्लमिव कुर्वाणे सति कोपेन कुटिलीकृतौ बाणान् संधाय आकर्षेण वक्रीकृतौ चापौ याभ्यां तौ द्रुपदविराटौ द्रुतम् अनीचैः महद्भिः नाराचैः आचार्यं शल्यमृगं श्वावित्पशुं शललैः तदङ्गरोमभिरिव बद्धतनुं व्याप्तशरीरम् आतेनतुः चक्रतुः ॥ ८ ॥

तस्य द्रोणस्य तन्वां शरीरे अर्धमग्नाः नाराचाः प्रहृष्यन्त्याः प्रकर्षेण हर्षं प्राप्नुवत्याः तस्य विक्रमश्रियः पराक्रमलक्ष्म्याः रोमाञ्चानाम् अङ्कुरा इव रोचन्ते स्म शुशुभिरे ॥ ३६ ॥

अथ उभौ द्रोणद्रुपदौ अग्निवेश्येन ऋषिणा निक्षिप्तं स्वस्मिन् स्थापितं कोदण्डविद्यायाः धनुर्वेदस्य सर्वस्वं सर्वरहस्यं प्रकाशितं प्रकटितं कुर्वाते स्म चक्रतुः । उभयोर्गुरुबन्धुत्वात् स्वस्मिन् गुरुणा क्षिप्तं रणकौशलम् अस्त्रमन्त्ररहस्यं च प्रकटीचक्रतुरित्यर्थः ॥ ३७ ॥

ततः शरसंभवस्य कृपाचार्यस्य भगिनी कृपी जाया यस्य तस्य द्रोणस्य चाप एव चतुर्मुखः ब्रह्मा समृद्धं विपुलं यथा स्यात्तथा विश्राणितौ दत्तौ विकृतवेषौ विकृताकारौ ययोस्तयोरपि विशिखविमोचनरूपेण सृष्टिशिल्पेन अप्सरसां विलोभनीयौ विग्रहौ देहौ ययोस्तौ विलोभनीयविग्रहौ अतथा तथा संपद्यमानौ कृतौ तयोः द्रुपदविराटयोरित्यर्थः । अहं पूर्वमहं पूर्वमितिभाषणरूपया अहंपूर्विकया वरणोत्सवस्य यौगपद्ये एककालत्वे सति विबुधपुरस्य विलासिनीनाम् अप्सरसां विडौजसः इन्द्रस्य कुटुम्बिन्याः

---

१ क. 'काशं दि' । २ क. व्यकाशयमाने । ३ क. कोपकु' । ४ ख. शललमिव । ५ क. देश्येन । ६ क. तन्वाते । ७ क. वृद्धत्वविं' । ८ ख. सतीति नास्ति । ९ ख. वारेत्यधिकम् । १० क. ख. 'जसः कु' । ११ क. ख. 'माधेयम् । १२ अत्रोत्प्रेक्षासंसृष्ट उपमालंकारः ।

अथ तत्र शर्वरीचरभुजगर्वनिर्वान्तपर्वतश्रृङ्गशिलाविभङ्गपाटितशरीरेवं संध्या रागमिषेण रुधिरधारामुत्सृजन्ती सा निशाऽपि विनाशदशामाशु समाविवेश ॥ १० ॥

तदनु कोककुटुम्बिनीनां नग्नंकरणे महसि समारूढविहायसि क्रोधनिद्रानिरोधसाधारणीभवदरुणिमदृक्प्रतिफलनैरायोधनधरणीरुधिरधुनीषु पङ्केरुहाण्यङ्कुरयन्तो घटोत्कचविराटपाञ्चालपञ्चताप्रपञ्चवैरभारतया 'गुरोरायुर्हेतुमलीकाक्षरं परिमार्ष्टुमलीकं वचनमेकं भवता प्रयुज्यताम्' इति धर्मजानमनुकूलयन्तो वसुदेववासवकुमारादयः प्रथमं सन्निकृष्टस्य धृष्टद्युम्नस्य वरूथिनीविमाथिनीं वारणघोरणीं प्रचेता इव पयोधरपरंपरां पुरोधाय भृशं खस्य गुणं शङ्खस्य परिपूरणेन दुर्वहं कुर्वन्तं कौरवसेनापतिमभिजग्मुः ॥ ११ ॥

---

इन्द्राण्याः अपि दुःसमाधं दुःखेन समाधातुमशक्यं विवादकलहम् आपादयामास उत्पादयामास । द्रोणशरैः मृतयोः प्राप्तदिव्यदेहयोः विराटद्रुपदयोः वरणविषयेऽप्सरसां महाकलहोऽभूदिति भावः ॥ ९ ॥

अथ विराटद्रुपदवधानन्तरं तत्र शर्वरीचरस्य घटोत्कचस्य भुजगर्वेण निर्वान्ताः त्यक्ताः ये पर्वताः तेषां श्रृङ्गशिलानां विभङ्गैः विभङ्गजन्यप्रहारैः पाटितं विदीर्णं शरीरं यस्यास्तथाभूतेव संध्यायाः रागमिषेण रुधिरधाराम् उत्सृजन्ती सा निशाऽपि विनाशदशाम् आशु समाविवेश प्राप । निशा गता प्रातःकलो जात इत्यर्थः ॥ १० ॥

तदनु कोककुटुम्बिनीनां चक्रवाकस्त्रीणां नग्नंकरणे कोकेन कोकी नग्ना क्रियते अनेनेत्यर्थात् रत्युत्पादके इत्यर्थः, महसि सूर्यरूपे तेजसि समारूढं विहायः आकाशो येन तस्मिन् सति उदिते सतीत्यर्थः, क्रोधश्च निद्रानिरोधश्च तयोः साधारणीभवन् अरुणिमा यासां तासां दृशां प्रतिफलनैः प्रतिविम्बैः रणभूमिसंबन्धिरुधिरनदीषु कमलानि अङ्कुरयन्तः उत्पादयन्तः घटोत्कचविराटद्रुपदानां पञ्चतया वधेन प्रपञ्चन् विस्तीर्णो भवन् वैरभारो येषां तेषां भावस्तत्ता तया 'गुरोः द्रोणस्य आयुषः हेतुम् अलीकाक्षरं ब्रह्मणा लिखितं भालाक्षरं परिमार्ष्टुं तं हन्तुमित्यर्थः, भवता एकम् अलीकम् असत्यं वचनं प्रयुज्यताम् उच्यताम्' इतिभाषणेन धर्मराजम् अनुकूलयन्तः कृष्णभीमार्जुनादयः प्रथमं सन्निकृष्टस्य समीपस्थस्य धृष्टद्युम्नस्य वरूथिन्याः सेनायाः विमाथिनीं संहर्त्रीं वारणघोरणीं गजपरंपरां प्रचेताः वरुणः पयोधराणां मेघानां परंपरामिव पुरोधाय अग्रतः कृत्वा शङ्खस्य पूरणेन मुखवायुना

---

१ क. निर्वापितप° । २ क. शिलाभङ्गविपा° । ३ क. इवेति नास्ति । ४ क. समेति नास्ति । ५ क. °द्रारोध° । ६ क. ख. प्रपञ्चितवै° । ७ ख. °मलिका° । ८ ख. भवतेति नास्ति । ९ ख. वाच्चित्यधिकम् । १० क. प्रथमसंनिकृष्टस्य । ११ क. ख. प्रचेतसमित्र । १२ अत्र विराटद्रुपदक्षपणस्य देवाङ्गनाविवदनरूपेण वर्णनात्पर्यायोक्तस्य चापचतुर्मुख इत्यादिसावयवरूपकसापेक्षत्वाद्द्वयोरङ्गाङ्गिभावेन संकरः ।

कोपेन तावत्कुटिलः स भीमः कुम्भानभाङ्क्षीद्गदया [1]द्विपानाम् ।
नामैकदेशोऽपि च कुम्भयोनेरेतैर्धृतोऽभूदिति मत्सरीव ॥ ३८ ॥

[2]तत्र तां करिघटां पाटयता घटोत्कचजनकेन द्रोणसुतस्य सनाम्नि हस्तिनि निपातिते सति 'प्रचुर[3]मदः स्ववशानुवर्ती शुभतरमणिदेदीप्यमानमस्तकोऽयमश्वत्थामा हतः' इति धर्मतनये[4]निगदितं कर्णा[5]रुन्तुदमभ्यर्णमाकर्ण्य वैवर्ण्यभरितवदनं सुतशोक[6]मोहेन परित्यक्तचापशयं स्थण्डिलेशयं भारद्वाजमालोक्य हृष्टधीर्धृष्टद्युम्नो निजपितृबन्धनस्मृतिजनुषा रुषा सत्वरम[8]भिहन्तुमुदयुङ्क्त ॥ १२ ॥

एकेन खङ्गं द्रुपदस्य सूनुः करेण चान्येन कचं गृहीत्वा ।
विलूय शीर्षं गुरुमप्यमुं द्रागन्तेवसन्तं कलयाञ्चकार ॥ ३९ ॥

---

पूरणेन खस्य गुणं शब्दं दुर्वहं दुःखेनैव वोढुमशक्यम् अतिमहान्तमित्यर्थः, कुर्वन्तं कौरवसेनापतिं द्रोणम् अभिजग्मुः ॥ ११ ॥

यावत् जग्मुः तावत्कोपेन कुटिलः भयंकरः सः भीमः एतैः गजैः कुम्भयोनेः अस्मच्छत्रुपक्षीयद्रोणस्य नामैकदेशः कुम्भः तदर्थः कटः धृतः सः एव वा कुम्भशब्दः कुम्भिनाम्नि धृतः अभूत् । शत्रुपक्षीयत्वे सति इदमपि कृतमित्यपिशब्दार्थः । इति हेतोः मत्सरी सन्निव गदया गजानां कुम्भानभाङ्क्षीत् अस्फोटयत् ॥ ३८ ॥

तत्र तां करिघटां गजसमूहं पाटयता भीमेन द्रोणसुतस्य अश्वत्थाम्नः सनाम्नि समाननाम्नि हस्तिनि अश्वत्थामसंज्ञकगजे । 'प्रचुरः मदः गर्वः दानं च यस्य सः स्वस्य वशां करिणीं, स्ववशान् जनांश्च अनुवर्तते तच्छीलः शुभतरैः मणिभिः रत्नैः शुभतरेण मणिना च देदीप्यमानं मस्तकं यस्य सः अयम् अश्वत्थामा हतः' इति धर्मतनयेन धर्मराजेन निगदितं कर्णयोः अरुन्तुदं मर्मस्पृक् अभ्यर्णं समीपम् आकर्ण्य वैवर्ण्येन भरितं वदनं यस्य तं सुतनाशशोकमोहेन अश्वत्थाममरणशोकजन्यमोहेन परित्यक्तः चापो येन सः शयः हस्तो यस्य तं स्थण्डिलेशयं योगधारणया प्राणान् मोक्तुं शुद्धभूमौ निषण्णं भारद्वाजं द्रोणम् आलोक्य हृष्टधीर्धृष्टद्युम्नः निजपितुः द्रुपदस्य बन्धनम् अर्जुनेन कारितं तस्य स्मृतेः सकाशात् जनुः उत्पत्तिर्यस्याः तया रुषा क्रोधेन सत्वरम् अभिहन्तुम् उदयुङ्क्त उद्युक्तो बभूव ॥ १२ ॥

द्रुपदस्य सूनुः धृष्टद्युम्नः एकेन करेण खङ्गं गृहीत्वा अन्येन करेण कचं कचान् गृहीत्वा शीर्षं विलूय छित्त्वा गुरुमपि अमुं द्रोणं द्राक् शीघ्रम् अन्तेवसन्तं शिष्यं, मृत्यौ तिष्ठन्तं च कलयाञ्चकार संपादयामास । द्रोणाचार्यं जघानेत्यर्थः ॥ ३९ ॥

---

१ क. ख. गजानाम् । २ क. ख. इतीत्यधिकम् । ३ ख. तरेत्यधिकम् । ४ क. ख. 'यगदितम् । ५ क. ख. नारेत्यधिकम् । ६ ख. मोहपरि' । ७ क. तरेत्यधिकम् । ८ क. ख. 'मेत्य हन्तु' । ९ रूपकोपमयोरत्र संसृष्टिः । १० अत्र विरोधाभासः ।

तत्तादृशं तदनु तातवधं निशम्य
कोपातिरेककलुषः कृपभागिनेयः ।
आग्नेयमस्त्रममुचत्परसैनिकाना-
मक्षौहिणी शलभतां लभते स्म यस्मिन् ॥ ४० ॥

ततः सुराधीश्वरसूनुमुक्तब्रह्मास्त्रभासा भृशधिक्कृतेन ।
अस्त्रेण सार्धं गुरुनन्दनस्य मन्दायमानद्युतिरास भानुः ॥ ४१ ॥

धृतराष्ट्रसुतोऽपि गेहमागा-
द्दिनदीपाङ्कुरदीनदीनदीप्तिः ।
शकलीकृतबाहुकर्णनासैः
सह योधैः स घटोत्कचाश्मवर्षात् ॥ ४२ ॥

इत्यनन्तभट्टकविकुञ्जरकृतौ श्रीमति चम्पूभारते दशमः स्तवकः ।

---

## ११ एकादशः स्तवकः ।

अन्येद्युरब्धिमिलितैरसृगापगानां
पूरैरिवोदयति पूषणि शोणिताङ्गे ।

---

तदनु स चासौ तादृशश्च तत्तादृशः तं तातस्य वधं त्यक्तशस्त्रसमाधिस्थतातस्य वधं निशम्य श्रुत्वा कोपातिरेकेण कोपाधिक्येन कलुषः क्षुब्धः कृपस्य भागिनेयः अश्वत्थामा आग्नेयम् अग्निदेवताकम् अस्त्रं मन्त्रितशरम् अमुचत् , यस्मिन् आग्नेयास्त्रे शत्रुसैनिकानाम् अक्षौहिणी शलभतां पतङ्गत्वं लभते स्म प्राप । भस्मीबभूवेत्यर्थः ॥ ४० ॥

ततः सुराधीश्वरसूनुना अर्जुनेन मुक्तं यत् ब्रह्मास्त्रं तस्य भासा तेजसा भृशं धिक्कृतेन पराभूतेन गुरुनन्दनस्य अश्वत्थाम्नः अस्त्रेण सह भानुः मन्दायमाना द्युतिः तेजो यस्य तथाभूतः आस बभूव । तदा सूर्यास्तसमयो जात इत्यर्थः । गतिदीप्त्याद्यर्थकस्य भ्वादेरसतेः धातूनामनेकार्थत्वात् सत्तार्थे लिटि रूपम् ॥ ४१ ॥

दिने यः दीपाङ्कुरः अल्पदीपः तद्वत् दीनात् दीना मन्देत्यर्थः, दीप्तिर्मुखकान्तिर्यस्य सः दुर्योधनः घटोत्कचस्य अश्मवर्षात् पाषाणवृष्टेः शकलीकृताः शकलीभूताः त्रुटिता इत्यर्थः, बाहुकर्णनासाः येषां तैः सह गेहं शिविरम् आगात् अगमत् ॥ ४२ ॥

इति श्रीमदनन्तभट्टकृतचम्पूभारतटीकायां श्रीखण्डोपाह्वबाजीराया-
त्मजनारायणसूरिविरचितायां दशमः स्तवकः ।

---

अन्येद्युः द्रोणवधात् द्वितीयदिवसे अब्धौ मिलितैः मिश्रितैः असृगापगानां रुधिरन-

---

१ ख. तं तादृशम् । २ क. तस्मिन् । ३ अत्रोपमालंकारः । ४ अत्र सूर्यस्यास्तगमने आग्नेयास्त्रसाहित्यवर्णनात्सहोक्तिरलंकारः ।

सेनाधिपत्यसरणौ धृतराष्ट्रसूनुः
कर्णं सुवर्णघटवारिभिरभ्यषिञ्चत् ॥ १ ॥
आभामतानीदभिषेककाले
तस्योपरिष्टात्तपनीयकुम्भः।
आघ्रातुमात्मप्रभवोत्तमाङ्गं
समीपयातस्य सरोजबन्धोः ॥ २ ॥
दिङ्मूलशैलकुहरेशयकेसरीन्द्र-
सौखप्रसुप्तिकमहापटहारवेण।
कर्णो बलेन करनर्तितकालपृष्ठो
जन्यस्थलीमभि रथेन जवाज्जगाहे ॥ ३ ॥
तावत्परेषां ध्वजिनीश्वरोऽपि
पदं व्यधत्त प्रधनप्रदेशे।
परिस्फुरत्पट्टिशखेटशक्ति-
शरासतूणीरशरैर्बलौघैः ॥ ४ ॥
चमूद्वयी सा तदनु प्रगल्भा
प्रसृत्वरैर्व्योमनि पांसुपुञ्जैः।
प्रागेव शुद्धामपि सिद्धसिन्धुं
विचित्रमेतद्व्यतनोदपापाम् ॥ ५ ॥

---

दीनां पूरैरिव शोणिताङ्गे रक्तमण्डले पूषणि सूर्ये उदयति सति दुर्योधनः कर्णं सेनाधिपत्यपदव्यां सुवर्णघटवारिभिः अभ्यषिञ्चत् ॥ १ ॥

अभिषेककाले तस्य कर्णस्य उपरिष्टात् ऊर्ध्वभागे तपनीयकुम्भः सुवर्णघटः, आत्मप्रभवस्य पुत्रस्य कर्णस्य उत्तमाङ्गं मस्तकम् आघ्रातुं स्नेहादवघ्राणं कर्तुं समीपमागतस्य सरोजबन्धोः सूर्यस्य आभां शोभाम् अतानीत् उत्पादयामास ॥ २ ॥

अथ कर्णः दिङ्मूलेषु स्थितानां शैलानां कुहरेशयाः गुहास्थिताः ये केसरीन्द्राः सिंहाः तेषां सौखप्रसुप्तिकः सुखप्रसुप्तं पृच्छति तथाभूतः दिगन्तस्थितशैलगुहासुप्तसिंहप्रबोधकारीत्यर्थः, महान् पटहारवो भेरीशब्दो यस्य तेन बलेन सैन्येन सह करे नर्तितं कालपृष्ठम् एतन्नामकं स्वधनुर्येन तथाभूतः सन् रथेन जवात् जन्यस्थलीं युद्धभूमिं जगाहे प्रविवेश ॥ ३ ॥

यावत्कर्णः प्रविशति तावत् परेषां पाण्डवानां सेनापतिर्धृष्टद्युम्नोऽपि परिस्फुरन्तः देदीप्यमानाः पट्टिशादयः शस्त्राणि येषां तैः बलौघैः सेनासमूहैः सह प्रधनदेशे रणाङ्गणे पदं चरणं व्यधत्त स्थापयामास, तत्र जगामेत्यर्थः ॥ ४ ॥

तदनु प्रगल्भा सा चम्वोः द्वयी व्योम्नि प्रसृत्वरैः प्रसरणशीलैः पांसुपुञ्जैः कृत्वा प्रागेव

---

१ ख. आभात्तदानीम्। २ क. अथ। ३ क. ख. पट्टसशक्तियुष्टि। ४ क. विसृत्वरैः।

पादातं पादातं रथ्यां रथ्या च हास्तिकं गजता ।
आश्वं चाश्वीयं द्रागभिदुद्राव प्रकम्पितमहीकम् ॥ ६ ॥
विरोधिसेनामभिवीक्ष्य कोपा-
द्विस्फारिता भानुसुतेन चापात् ।
विजृम्भमाणं तरसा गुणं स्वं
वियत्समस्तं न शशाक वोढुम् ॥ ७ ॥
कुरुचमूपतिबाणविदारिता-
दुदपतन्मणयः करिमस्तकात् ।
सुतविदीर्णनिजास्पददुर्दशां
द्युमणये विनिवेदयितुं किल ॥ ८ ॥
अनेकधा दत्तभिदाऽस्य बाणै-
ररातिखेटावलिराबभासे ।

---

आदावेव शुद्धां निष्पापामपि सिद्धसिन्धुं मन्दाकिनीम् अपापां पापरहितां व्यतनोत् चकार । एतत् चित्रम्, अपगताः आपो यस्याः सा अपापा तामित्यर्थान्तरेणोक्तिसंभवः । अप्शब्दात् "ऋक्पूर—"इत्यनेन समासान्तः अप्रत्ययः । ततष्टाप् । पांसुपुञ्जैः जलशोषणात् अपगतजलां चक्रे इति भावः ॥ ५ ॥

आदौ तावत् सैन्यस्य सावारणयुद्धमाह—पादातमिति । पादातं पत्तिवृन्दं पादातं द्राक् अभिदुद्राव योद्धुम् अभिमुखं जगाम । एतत्क्रियाया उत्तरत्राप्यन्वयः । रथ्या रथसंहतिः रथ्यां, गजता गजसंहतिः हास्तिकं गजवृन्दम्, आश्वम् अश्ववृन्दम् आश्वीयम् अभिदुद्राव । प्रकम्पिता मही येन तत् । इदं विशेषणं लिङ्गविपरिणामेन सर्वेषाम्, योज्यम् ॥ ६ ॥

भानुसुतेन शत्रुसेनाम् अभिवीक्ष्य कोपात् विस्फूर्जितात् ज्यायाः आकर्षणमोचनाभ्यां शब्दीकृतात् चापात् तरसा बलेन विजृम्भमाणं वृद्धिं प्राप्नुवन्तं स्वं गुणं शब्दं समस्तं वियत् वोढुं स्वोपरि धर्तुं न शशाक न समर्थं वभूव । धनुषो गुणटणत्कारशब्देनातीवाकाशं व्याप्तमभूदिति भावः ॥ ७ ॥

कुरुचमूपतेः कर्णस्य बाणैः विदारितात्करिमस्तकात् मणयः मौक्तिकानि उदपतन् उदडीयन्त । तदुड्डयनमुत्प्रेक्षते—सुतेति । सुतेन कर्णेन विदीर्णं विदारितं यन्निजास्पदं स्वस्थानं मस्तकं तस्य दुर्दशां तत्पित्रे द्युमणये सूर्याय विनिवेदयितुं किल, कथयितुमिवेति फलोत्प्रेक्षा ॥ ८ ॥

अस्य कर्णस्य बाणैः अनेकधा बहुधा दत्ता भिदा भेदो यस्याः सा अरातीनां शत्रूणां

---

१ क. आश्वीयं चा° । २ क. वितीर्ण° । ३ ख. 'विलास्य । ४ अत्र श्लेषप्रतिभोत्थापितयोर्विरोधाभासविरुद्धकार्योत्पत्तिरूपविषमप्रभेदयोरेकवाचकानुप्रवेशसंकरः । ५ अत्र संबन्धेऽसंबन्धरूपातिशयोक्तिः ।

भीव्रीडखेदावकराद्गृहीतुं
पृथक्तयाऽसून्यमचालनीव ॥ ९ ॥
तदनु बाणगणैर्द्युमणेः सुतो
धृतविपत्तिसपत्तिकदम्बकम् ।
अतिविषादिनिषादिकुलं व्यधा-
द्यमपुरीपथिकान्रथिकानपि ॥ १० ॥
अग्रेसरः कर्णहतेषु कश्चिद्भटः प्रविष्टो रविरन्ध्रमार्गम् ।
निलिम्पजातस्तुतिपुष्टदेहो निर्गन्तुमीष्टे न च किंचिदुच्चैः ॥ ११ ॥
पुष्पप्रदानेन सुरद्रुवर्गे श्रान्तेऽमराणां प्रथमं वृतानाम् ।
हठेन कण्ठादपहृत्य मालामवृण्वताभ्यग्रसुरानमर्त्यः ॥ १२ ॥
तं तादृशं तरणिभूभुजचण्डिमानं
संवीक्ष्य सर्वरिपुदृक्षु च भीतिभाक्षु ।
आसीत्प्रमोदपरिमेदुरमेकमेव
सव्येतरं रणतले वनमालिनेत्रम् ॥ १३ ॥

---

खेटावलिः शस्त्रप्रहाररक्षकचर्मावलिः भीव्रीडखेदानां भयलज्जादुःखानाम् अवकरात् संकरात् पृथक्तया असून् गृहीतुं यमस्य चालनीव बभासे । अन्योऽपि धान्यसारांशं गृहीतुं चालनीम् उपादत्ते ॥ ९ ॥

तदनु सः द्युमणेः सुतः कर्णः बाणगणैः पत्तिकदम्बकं धृता विपत्तिर्येन तथाभूतं व्यधात् चकार । निषादिनां हस्तिपकानां कुलं वृन्दम् अतिविषादि अतिदुःखितं व्यधात् । रथिकानपि यमपुर्याः पथिकान् पान्थान् व्यधात् । एतान् जघानेति भावः ॥ १० ॥

कर्णेन हतेषु भटेषु मध्ये अग्रेसरः अग्रगामी रविमण्डलं भित्त्वा स्वर्गगमनसमये रविरन्ध्रमार्गं रविमण्डलबिलमार्गं प्रविष्टः कश्चित् भटः निलिम्पजातस्य देवसमूहस्य स्तुत्या पुष्टदेहः देवकृतस्तुतिजन्यपुष्टियुक्तदेहः सन् किंचिदपि उच्चैः ऊर्ध्वदेशे बहिर्निर्गन्तुं नेष्टे न समर्थो बभूव । अत्राद्भुतार्थवर्णनेनाद्भुतरसः ॥ ११ ॥

अमर्त्यः अप्सरसः पुष्पप्रदानेन सुरद्रुवर्गे कल्पवृक्षसमूहे श्रान्ते सति प्रथमं वृतानाम् अभिनवभटजन्यानां सुराणां मालां कण्ठात् हठेन बलात्कारेण अपहृत्य तन्मालया अभ्यग्रसुरान् नूतनसुरान् अवृण्वताम् । अनयोक्त्या कर्णेन बहवो महावीरा भटा हता इति व्यज्यते ॥ १२ ॥

स चासौ तादृशश्च तत्तादृशः तं निरूपयितुमशक्यमित्यर्थः, तरणिभवः कर्णस्य भुजयोः

---

१ क. ख. चाटुश्रुतिं । २ क. ख. स्म न । ३ क. बुधद्रुं । ४ क. तत्तादृशम् । ५ क. वामेतरम् । ६ अत्र सूर्यबिम्बनिर्गमनशक्तिसंबन्धेऽपि तदसंबन्धोक्तिरूपातिशयोक्तेः अग्रसरत्वनिलिम्पचाटुश्रुतिपुष्टदेहत्वरूपानेकपदार्थहेतुककाव्यलिङ्गोऽजीवितत्वाद्द्वयोरङ्गाङ्गिभावेन संकरः । ७ अत्र सुरतरूणां पुष्पशून्यत्वासंबन्धेऽपि संबन्धोक्तिरूपायाः सुराङ्गनानां प्रथमवृतामरकण्ठमालापहरणासंबन्धेऽपि संबन्धोक्तिरूपायाश्चातिशयोक्तेरङ्गाङ्गिभावेन संकरः ।

रिक्ते पुष्पैः सिद्धगन्धर्वमुख्ये
मुक्त्वा मुक्त्वा मूर्ध्नि वीरस्य तस्य।
द्वावेवाभ्रे द्योसदां गोष्ठिमध्ये
पूषाचन्द्रौ पुष्पवन्तावभूताम्॥ १४॥

वियत्प्रदेशाद्विशिखैः कठोरैर्दुद्राव दूरं ध्रुवमब्जबन्धुः।
अमुष्य नो चेदचिराद्भजेरन्पादाः कथं पाटलिमातिरेकम्॥ १५॥

तरणेः किरणैस्तदारुणानां
पटलं व्योम्नि पयोमुचां बभासे।
चिरकालबुभुक्षितैः पिशाचै-
रधिकं मांसमिवाहवादुपात्तम्॥ १६॥

---

चण्डिमानं पराक्रमातिशयं संवीक्ष्य सर्वरिपूणां दृक्षु दृष्टिषु भीतिभाक्षु भयेन निमीलितासु सतीषु रणतले युद्धभूमौ एकमेव वामेतरत् दक्षिणं वनमालिनः कृष्णस्य नेत्रं प्रमोदेन हर्षेण परिमेदुरं सर्वतो व्याप्तम् आसीत्। कर्णपराक्रमं दृष्ट्वा पाण्डवपक्षीयाणां नेत्रेषु भयेन निमीलितेषु सत्सु कृष्णस्य दक्षिणं नेत्रं हर्षेण प्रफुल्लमासीत् इति चमत्कारः। कृष्णस्य विष्णुत्वाद्दक्षिणनेत्रस्य सूर्यत्वात् कर्णस्य तत्पुत्रत्वात् तत्पराक्रमदर्शनजन्यहर्षेण कृष्णनेत्रस्य विकसित्वमिति भावः॥ १३॥

वीरस्य तस्य कर्णस्य मूर्ध्नि मुक्त्वा मुक्त्वा अर्थात्पुष्पाणीति कर्म ज्ञेयम्, अभ्रे आकाशे सिद्धगन्धर्वाः मुख्याः यस्मिन् तस्मिन् द्योसदां देवानां गोष्ठिमध्ये सभामध्ये पुष्पैः रिक्ते रहिते सति द्वावेव पूषाचन्द्रौ सूर्याचन्द्रमसौ पुष्पवन्तौ अभूताम् 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरः। एकशब्देन सूर्याचन्द्रमसोर्ग्रहणे पुष्पवच्छब्दः प्रयोक्तव्य इत्यर्थः, तस्यात्र श्लेषेण ग्रहणम्॥ १४॥

अब्जबन्धुः सूर्यः कर्णस्य कठोरैः विशिखैः वियत्प्रदेशात् दूरम् अस्ताचलं दुद्राव, ध्रुवमित्युत्प्रेक्षा। इदमुक्तं नो भवेच्चेत्तर्हि अमुष्य सूर्यस्य पादाः चरणाः किरणाश्च अचिरात् शीघ्रं पाटलिम्नः अरुणतायाः अतिरेकं बाहुल्यं कथं भजेरन् प्राप्नुयुः। अन्यस्यापि दूरदेशधावनेन पादयोररुणिमोत्पद्यते। तदानीं सूर्योऽस्तं गत इति भावः॥ १५॥

तदा सूर्यास्तसमये व्योम्नि तरणेः अरुणानाम् आरक्तानां पयोमुचां पटलं वृन्दं पिशाचैः चिरकालं या बुभुक्षा भोक्तुमिच्छा तया अधिकम् आहवात् युद्धभूमेः सकाशात् उपात्तं मांसमिव बभासे भाति स्म॥ १६॥

---

१ क. वर्गे। २ क. °मानमेव। ३ क. बुभुक्षया। ४ अत्र कृष्णस्य रिपुदृगन्तःपातिनोऽपि प्रमोदमेदुरत्वविरोधस्य सूर्यात्मकत्वेनाभासीकरणाद्विरोधाभासः। ५ अत्र पूर्ववदलंकारो ध्वनिश्च। ६ अत्र श्लेषभित्तिकाभेदाध्यवसितपादारुण्यान्यथानुपपत्त्या रवेर्धावननिश्चयादर्थापत्तिर्नाम प्रमाणालंकारोऽतिशयोक्त्युज्जीवित इति द्वयोरङ्गाङ्गिभावेन संकरः।

अवरोपितज्यमथ कर्णकार्मुकं
विरतौ दिनस्य विजहौ विनम्रताम् ।
अवलोकनाय हरिदन्तरे भया-
द्द्रवतामरातिधरणीभुजामिव ॥ १७ ॥

अप्राप्तनूतनशरक्षतिभिः स्वसैन्यै-
रस्पन्ददृष्टिभिरनुक्षणमीक्ष्यमाणः ।
दुर्योधनाग्रकरसंवलिताङ्गुलीकः
प्राविक्षदात्मकटकं स तु भानुसूनुः ॥ १८ ॥

अपरेद्युर्[1] विपरिस्फुरत्कमलचक्रव्यूहे प्रकाशमानपत्त्रिकुलसंचारे प्रकटि-तधनञ्जयतेजोवर्धने भाविनि प्रधन इव प्रभातसमये प्रादुर्भवति सति मधुमथनसारथेर्मघवत्कुमारस्य वधकृते शल्यसारथ्यमेव[3] साधनमव-धारयता राधेयेन कृतबोधनः सुयोधनो[4] मानधनभाजं मद्रराजमुपगम्य स्वागमननिदानपरिज्ञानेन विमनायमानमपि तं तैस्तैर्मधुररचनैर्वचनैः कोपगिरेरधित्यकाप्रदेशात् कथंचिदवरोप्य कर्णरथनेपथ्यं सारथ्यमधि-रोपयामास ॥ १ ॥

---

अथ दिनस्य विरतौ अवरोपितज्यं शिथिलीकृतगुणं कर्णस्य कार्मुकं हरिदन्तरे दिगन्तरे भयात् द्रवतां धावताम् अरातिधरणीभुजां शत्रुनृपाणां विलोकनायेव विनम्रतां जहौ उन्नतं बभूवेत्यर्थः । अन्योऽपि दूरस्थितजनदर्शनायोत्थायोन्नतो भवति ॥ १७ ॥

न प्राप्ता नूतनशराणां क्षतिः व्रणो येषां तैः स्वसैन्यैः अस्पन्दाभिः निमेषोन्मेषर-हिताभिः दृष्टिभिः अनुक्षणम् क्षणे क्षणे ईक्ष्यमाणः दृष्टः सः भानुसुतः दुर्योधनस्य अग्रकरेण कराग्रेण संवलिताः धृताः अङ्गुलयो यस्य तथाभूतः सन् आत्मनः कटकं सैन्यनिवासस्थानं प्राविक्षत् प्रविवेश । कर्णस्तद्दिने जयं प्राप्य स्ववासभूमिं जगामेति भावः ॥ १८ ॥

अपरेद्युः कर्णस्य द्वितीयदिवसे परिस्फुरन् कमलचक्राकारः व्यूहः सेनारचना यस्मिन् अन्यत्र परिस्फुरन्तौ कमलानां चक्राणां चक्रवाकानां व्यूहः समूहो यस्मिन् प्रकाशमानः पत्त्रिकुलानां बाणसमूहानाम् अन्यत्र पक्षिसमूहानां संचारः गमनं यस्मिन्प्रकटितं धन-ञ्जयस्य अर्जुनस्य तेजोवर्धनं पराक्रमवृद्धिर्यस्मिन् अन्यत्र प्रकटितं धनञ्जयस्य अग्नेः तेजोवर्धनं तेजोहानिर्यस्मिन् तस्मिन् भाविनि प्रधने संग्रामे इव प्रभातसमये प्रादुर्भवति सति मधुमथनः सारथिर्यस्य तस्य मघवत्कुमारस्य अर्जुनस्य वधकृते शल्यस्य सारथ्यमेव साधनम् अवधारयता निश्चिन्वता राधेयेन कर्णेन कृतं बोधनं ज्ञापनं यस्य सः सुयोधनः

---

१ क. परेद्युः परिस्फुरितक°, ख. परिस्फु° । २ क. शल्यसत्सा° । ३ क. परमित्यधिकम् । ४ क. सबहुमानमित्यधिकम् । ५ अत्र नूतनबाणव्रणराहित्यस्य विशेषणगत्या अनुक्षणनिष्पन्ददृ-ङ्निरीक्षणहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ।

अथ मद्रनायकनिबद्धसैन्धवं
रथमारुरोह रविभूः पराक्रमी ।
प्रमदश्च कौरवचमूचरान् क्षणा-
दतिसाध्वसं च परयोधमण्डलम् ॥ १९ ॥

ततः क्षणादेव रथेन तेन संग्रामसीमानमुपेत्य वीरः ।
शङ्खं तदन्त्याक्षरवाच्यमेतद्द्वयं निनादैरपुपूरदेषः ॥ २० ॥

तदनन्तरं प्रचण्डतरदोर्दण्डश्चण्डकरसूनुर्निजयन्तारं मद्रनेतारं प्रति वचनमित्थमुत्थापयामास ॥ २ ॥

इदानीमयि शल्य तव सारथ्यकौशल्यं निशम्य विजयसारथेर्वदनं लज्जापयोधौ सहमज्जनकृते नाभिकमलवास्तव्यस्य नयनायुधसारथेश्चत्वार्यपि मुखानि समाह्वातुमिव भृशमवनतमास्ते ॥ ३ ॥

---

मान एव धनं भजति रक्षति तं मद्रराजं शल्यम् उपगम्य तदावासं गत्वा स्वस्य आत्मनः आगमनस्य यत् निदानं कर्णसारथ्ये प्रवर्तनरूपम् आदिकारणं तस्य परिज्ञानेन विमनायमानमपि अन्यस्य सारथ्यकरणं स्वस्य लघुत्वदायकमिति मनस्यानीय दुर्मनायमानमपि तं शल्यं तैस्तैः मधुरा रचना येषां तैः 'त्वया सारथ्यं कृतं चेत्तर्हि भीष्मद्रोणादिभिः यत्कार्यं न कृतं तत्त्वयैव कृतं भवेत्' इत्यादिभिर्वचनैः कोपगिरेः स्वस्य लघुकार्यकथनेन यः क्रोधपर्वतः प्राप्तः तस्य अधित्यकाप्रदेशात् ऊर्ध्वभागात् कथंचित् महायासेन अवरोप्य अधोभागमानीय गतक्रोधं कृत्वेत्यर्थः, कर्णरथस्य नेपथ्यं सज्जीकरणं यस्मिन् तत् सारथ्यं प्रति अधिरोपयामास सारथ्ये प्रवर्तयामासेत्यर्थः ॥ १ ॥

अथ पराक्रमी कर्णः क्षणात् मद्रनायकेन निबद्धा सैन्धवाः अश्वाः यस्य तम् आरुरोह, प्रमदः हर्षः कौरवचमूचरान् आरुरोह, प्रापेत्यर्थः । अतिसाध्वसम् अतिभयं परयोधमण्डलं पाण्डवसेनासमूहम् आरुरोह ॥ १९ ॥

ततः एषः वीरः कर्णः तेन रथेन क्षणादेव संग्रामसीमानम् उपेत्य आगत्य शङ्खं, तस्य शङ्खस्य अन्त्याक्षरं खं तस्य वाच्यम् अर्थम् आकाशं च इत्येतत् द्वयं निनादैः अपुपूरत् पूर्णमकरोत् । बहुलमेतन्निदर्शनमिति चुरादावुक्तत्वात् अदन्तपूरधातोर्णाविग्लोपित्वात् सन्वद्भावाभावेनाभ्यासस्य दीर्घाभावः ॥ २० ॥

तदनन्तरम् प्रचण्डतरौ अतिपराक्रमशालिनौ दोर्दण्डौ भुजदण्डौ यस्य सः चण्डकरसूनुः कर्णः निजयन्तारं स्वसारथिं प्रति इत्थं वक्ष्यमाणं वचनम् उत्थापयामास उवाचेत्यर्थः ॥ २ ॥

अयि शल्य ! इदानीं तव सारथ्यकौशल्यं निशम्य दृष्ट्वा विजयसारथेः कृष्णस्य वदनं

---

१ क. तदनु चण्ड° । २ ख. कौशलम् । ३ क. निशाम्य । ४ क. पयोधिसद्दम° । ५ क. ख. आह्वयितुमिव । ६ अत्र कर्णकर्तृकशल्यसारथिरथारोहणवाक्यार्थस्य कौरवपाण्डवचमूद्वयीमोदखेदहेतुत्वाद्वाक्यार्थहेतुककाव्यलिङ्गद्वयसंसृष्टेरारोहणक्रियायास्तद्वाचकस्य चावृत्त्या उभयावृत्तिदीपकस्य चैकवाचकानुप्रवेशसंकरः ।

अपि च—

मरुत्कदम्बैरुपलाल्यमानं महेन्द्रदीप्ताखिलहेतिजालम् ।
शराभिवर्षेण धनञ्जयं तमिङ्गालयेदेष भुजः क्षणेन ॥ २१ ॥

ततस्तां श्रवणपुटक्रकचं वाचमाकर्ण्य पार्थेन पुरा प्रार्थितमर्थं हृदि कृत्य स मद्रभूपतिरवार्यसूर्यसुतधैर्यं गगनकुसुमसोदर्यं विधातुमेव-मुत्तरमुत्तरङ्गयामास ॥ ४ ॥

पुरा विराटस्य पुरोपकण्ठे
रणाङ्गणे सारथिनाऽर्जुनस्य ।
उत्पाट्यमानेऽपि रयेण नेत्रे
निद्रा कथं ते हृदयङ्गमासीत् ॥ २२ ॥

---

लज्जापयोधौ सहमज्जनकृते नाभिकमले वास्तव्यस्य वासकर्तुः नयनमेव तृतीयनेत्रमिव आयुधं स्मरादिशत्रुनाशकं यस्य तस्य शिवस्य सारथेः ब्रह्मणः चत्वार्यपि मुखानि समाह्वातुमिव आह्वानं कर्तुमिव भृशम् अवनतं नम्रम् आस्ते । यत् लज्जया नम्रं जातं मुखं तत् स्वनाभिकमलस्थितब्रह्मणः मुखानि समाह्वातुं किमित्युत्प्रेक्षा । अन्योऽपि भीरुः समुद्रमज्जनार्थमन्यं सहायमाह्वयति । अत्र समाह्वयितुमितिपाठे आङ्पूर्वात् ह्वयतेर्भावे 'घञर्थे कविधानम्' इति कप्रत्यये आह्वानम् आह्वः ततः 'तत्करोति—' इति णिजन्तात्तुमुनि आह्वयितुमिति सिद्धं भवति ॥ ३ ॥

अपि च—

एषः भुजः मरुतां देवानां वायूनां च कदम्बैः समूहैः उपलाल्यमानं सेव्यमानं वृद्धिं नीयमानं च तीव्रम् अखिलं हेतीनां शस्त्राणां ज्वालानां च जालं समूहो यस्य तं धनञ्जयम् अर्जुनम् अग्निं च शराणां बाणानां जलानां च वर्षेण क्षणात् इङ्गालयेत् शान्ताङ्गाररूपं कुर्यात् ॥ २१ ॥

ततः तां पूर्वोक्तां श्रवणपुटयोः क्रकचं काष्ठकर्तनकारिकरपत्रतुल्यां वाचम् आकर्ण्य पार्थेन युधिष्ठिरेण पुरा युद्धस्यादौ पाण्डवसहायार्थमागमनसमये मार्गे आतिथ्यकरणात् दुर्योधनाय 'तव साहाय्यं करिष्यामि' इति दत्तवरं शल्यं प्रति 'कर्णसारथ्यं कुरु' इति दुर्योधनवचनानुरोधनकर्णसारथ्यकृत् त्वं 'निन्दावचनैस्तस्य तेजोहानिं कुरु' इति प्रार्थितम् अर्थं हृदि कृत्य मनसि कृत्वा सः मद्रभूपतिः अवार्यं सत् सूर्यसुतस्य धैर्यं गगनकुसुमस्य सोदर्यं विधातुं धैर्यध्वंसं कर्तुमित्यर्थः, एवं वक्ष्यमाणम् उत्तरम् उत्तरङ्गयामास मुखात् बहिर्निष्कासयामास—उवाचेति यावत् ॥ ४ ॥

'पुरा उत्तरगोग्रहणसमये विराटस्य पुरोपकण्ठे पुरसमीपे रणाङ्गणे अर्जुनस्य सारथिना उत्तरेण रयेण वेगेन नेत्रे वक्त्रे, नयने च उत्पाट्यमानेऽपि आकृष्य गृह्यमाणेऽपि बहिर्नि-

---

१ क. दीप्ताखिल° । २ क. तत् । ३ क. कर्णवचनमा° । ४ क. अपवार्यावार्यसु° । ५ ख. तनय° । ६ अत्र मरुत एव मरुत इति सर्वत्र रूपणात् श्लिष्टसावयवरूपकम् ।

आयासलेशरहितं वनसीम्नि पूर्वं
संदानिते सुहृदि ते सुरवांशिकेन ।
कुत्रापि गूढवसतिस्त्वमहो निकुञ्जे
किं नाबिभेः सविधकीचकरन्ध्रगानात् ॥ २३ ॥

पाञ्चालिकायाः परिणीतिकाले
संघीभवद्भिः सह धार्तराष्ट्रैः ।
भवानभूत्पार्थशरप्रयोगात्
कर्णोऽपि भूत्वा कथमात्तगन्धः ॥ २४ ॥

इन्द्रात्मजातेन स तेन गन्तु-
मीष्टे तुलामीश्वर एक एव ।
तृणाय मत्वा निजजीवितुं यो
युद्धाय येन स्पृहयन्नुदस्थात् ॥ २५ ॥

---

ऽक्रियमाणेऽपि च निद्रा प्रस्वापनास्त्रजन्यनिद्रा कथं केन प्रकारेण ते तव हृदयङ्गमा प्रिया आसीत् ॥ २२ ॥

पूर्वं सुराणां वांशिकेन वेणुवादनशिल्पकृता गन्धर्वेण वनसीम्नि ते तव सुहृदि मित्रे दुर्योधने आयासलेशेन रहितं यथा तथा संदानिते वद्धे सति कुत्रापि निकुञ्जे लतावेष्टितस्थाने गूढा गुप्ता वसतिः स्थितिर्यस्य सः त्वं सविधे समीपे यः कीचकः वेणुविशेषः तस्य रन्ध्रं छिद्रं तस्य गानात् वायुपूरणजन्यनादात् नाबिभेः किं न भीतः किम् अपि तु भीतोऽभूरित्यर्थः । वंशवादनात् अत्रापि गन्धर्व आगतः किमितिशङ्कया भीतोऽभूरिति भावः ॥ २३ ॥

पाञ्चालिकायाः द्रौपद्याः परिणीतिकाले विवाहसमये संघीभवद्भिः एकत्र मिलद्भिः धार्तराष्ट्रैः दुर्योधनादिभिः सह भवांस्त्वं कर्णोऽपि भूत्वा पार्थशरप्रयोगात् आत्तः गृहीतः गन्धो गन्धगुणो येन तथाभूतः कथमभूत् । कर्णेन्द्रियस्य गन्धग्रहणे शक्तिर्नास्तीति तत्कथं जातमिति प्रश्नः। कर्णोऽपि सन् कर्णनामा महावीरोऽपि सन् त्वम् अर्जुनात् आत्तगन्धः पराभूतः कथं जात इत्यर्थान्तरम् ॥ २४ ॥

एक एव सः ईश्वरः शिवः तेन इन्द्रात्मजातेन अर्जुनेन सह तुलां साम्यं गन्तुं प्राप्तुम् ईष्टे समर्थो भवति यतः यः अर्जुनः निजजीवितं तृणाय मत्त्वा तृणतुल्यं मत्त्वा येन शिवेन सह युद्धाय युद्धं कर्तुम् उदस्थात् सन्नद्धोऽभूत् । अनेनार्जुनपराक्रमस्याभयदत्त्वं द्योत्यते [6] ॥ २५ ॥

---

१ क. वैणिकेन । २ क. कृत्वा । ३ क. जीवनम् । ४ अत्रोत्तरेणैव सारथिना तथा क्रियमाणेऽपि निद्राऽऽसीदितिवस्तुना तादृशस्य तव सारथिं मामवलोक्य अद्यतनविजयसारथेर्भगवतो भवेदेव लज्जया मुखावनमनमित्युपहासात्मकस्य प्राथमिकप्रश्नोत्तरस्य वस्तुनः प्रतीतेर्वस्तुना वस्तुध्वनिः। ५ अत्रापि वस्तुना तदार्जुनेन भवत्सुहृन्मोचनं जानताप्येवमुच्यत इति प्रतीतेर्वस्तुना वस्तुध्वनिः । ६ अत्र शूरमात्रप्राप्यस्यार्जुनसाम्यस्येश्वर एव नियमनात्परिसंख्यालंकारः ।

इति तस्य मद्राध्यक्षस्य तादृक्षमृभुक्षकुमारे पक्षपातं समीक्ष्य कर्मसाक्षिनन्दनोऽपि रौक्ष्यवर्ज्यं पदविभागचमत्कृतिसुभगम्भावुकं वचनमेवमभाणीत् ॥ ५ ॥

अयि भागिनेययशसां सुभगं-
करणत्वमद्य भुवि मद्रपते ।
मम मातुलेति बहुधा वदता
विजयेन शम्भुमपि मा तुलय ॥ २६ ॥

इत्युक्तवत एतस्य सौरेर्दन्तपटाविव ।
जवादुभावनीकौ तौ जघटाते परस्परम् ॥ २७ ॥

सर्वतोऽपि भुवि सैन्यपरागैः
शोषितेषु सजलेषु सरस्सु ।
केवलं गगन एव तदानी-
मप्सरःकुलमदृश्यत लोकैः ॥ २८ ॥

---

इतिवचनेन तस्य शल्यस्य तादृक्षं तादृशम् अतिशयितम् ऋभुक्षकुमारे अर्जुने पक्षपातं समीक्ष्य ज्ञात्वा कर्मसाक्षिनन्दनोऽपि सूर्यपुत्रः कर्णोऽपि रौक्ष्येण पारुष्येण वर्ज्यं रहितं पदविभागानां चमत्कृत्या सुभगम्भावुकं कल्याणं वचनम् एवं वक्ष्यमाणम् अभाणीत् ॥ ५ ॥

'अयि ! भागिनेयानां पाण्डवानां यानि यशांसि तेषाम् असुभगानि सुभगानि मनोहराणि क्रियन्ते येन सः सुभगंकरणः तत्संबुद्धौ हे मद्रपते ! अद्य भुवि मम मातुल केनापि मातुलय हे मातुर्भ्रातश्च इति बहुधा त्वां प्रतिवदता विजयेन अर्जुनेन शम्भुमपि मा तुलय मा समीकुरु । अर्जुनस्य मादृशेन सादृश्यं नास्ति कुतः पुनः शंभुनेति भावः' ॥ २६ ॥

इति उक्तवतः एतस्य सौरेः कर्णस्य दन्तपटाविव तूष्णींभावधारणात् ओष्ठाविव उभौ तौ अनीकौ सैन्ये परस्परं जवात् जघटाते युद्धार्थं मिमीलतुः ॥ २७ ॥

भुवि सर्वतोऽपि सर्वस्मिन्देशेऽपि सर्वशब्दात् सार्वविभक्तिकस्तसिः, सजलेषु सरस्सु सैन्ययोः परागैः धूलिभिः शोषितेषु सत्सु तदानीं गगने एव केवलम् अप्सरसां कुलम् उदकयुक्तसरोवराणां वृन्दं देवाङ्गनानां समूहश्च लोकैः अदृश्यत ॥ २८ ॥

---

१ क॰ ऋभुक्षणः कु॰ । २ क॰ वर्जितम् । ३ क॰ अवादीत् । ४ क॰ पुटाविव । ५ क॰ जघटेते । ६ क॰ अलोक्यत । ७ अत्र भागिनेयेत्यादिविशेषणस्य "पक्षपातित्वेन शल्यवचनस्यातात्त्विकत्वमित्यभिप्रायगर्भत्वात्परिकरालंकारः । ८ अत्र कर्णौष्ठयोः सैन्ययोश्च प्रकृतयोर्मिथो मेलनेनौपम्यस्य गम्यत्वात्तुल्ययोगिता । ९ अत्र दिवि भुवि प्रसक्तस्याप्सरोवत्त्वस्य दिवि एकत्र नियमनात्परिसंख्यालंकारः ।

तदनु तत्र तयोः सेनयोरुभयोरपि परस्परघट्टनजनितस्फुलिङ्गव्याजेन निपीतपूर्वान् रुधिरशीकरनिकरानजीर्णशङ्कया वमन्तीभिरिव पट्टिशवल्लरीभिश्च कबन्धोत्पतनसृष्टिपाटवमपि संग्रामदेशिकसदेशादभ्यसितुमवनीतलमवतीर्णैः पयोधरपटलैरिव खेटकैर्वलयैश्च युगपदेव बहुविधवीरयोधजनप्रवेशसौकर्याय तरणिरन्ध्रसरणिमतिविशालयितुमिव वियत्तले दूरंदूरमुच्चलिताभिः शक्तिभिश्च प्रतिक्षणक्षपितविपक्षकुलवृत्तान्तं मुहुर्मुहुरटनीमुखेन कथयितुमिव धानुष्ककर्णाभ्यर्णमभ्यागतैः कोदण्डदण्डैश्च "विचित्रतरचक्रचङ्क्रमणमिषेण पदात्पदमपि न गन्तव्यमिति विमतनिरोधकुण्डलनामिव कुर्वद्भिर्वद्भिश्च युद्धविलोकनबद्धकौतुकसिद्धयौवतकुचमण्डलनिजकुम्भतारतम्यपरीचिक्षिषयेव दूरं दूरं नभसि करान् प्रविसारयद्भिः शुण्डालमण्डलैश्च वेगसंभ्रमसंविदार्यमाणधरणीरन्ध्रनिर्गतवरफणीन्द्रफणासहस्रमणिकिरणधोरणीमसृणितैरिव शोणितपङ्कशोणैश्चक्रैः संक्रीडद्भिः शताङ्गैश्च भयानकं सकलसुरजनतनूरुहसौखशायनिकं समीकमभूत् ॥ ६ ॥

---

तदनु तत्र रणाङ्गणे तयोः सेनयोः भयानकं भयंकरं समीकं युद्धम् अभूत् । कीदृशं युद्धं, सकलसुरजनानां यानि तनूरुहाणि लोमानि तेषां सुखशयनं पृच्छति तत् सौखशायनिकं, तनूरुहाणां सुखशयनप्रश्नकर्तृ सुराणां रोमश्चोत्पादकमिति यावत् । यैः पदार्थैः समीकस्य भयानकत्वं तानाह—परस्परेति । परस्परेषां घट्टनेन प्रहारेण जनिताः ये स्फुलिङ्गाः तेषां व्याजेन निपीतपूर्वाः पूर्वं निपीताः ये रुधिराणां शीकरनिकराः बिन्दुसमूहाः तान् अजीर्णशङ्कया पानोपरिपानं कृतं चेदजीर्णं स्यादिति शङ्कया वमन्तीभिरिव, पट्टिशाः उभयतो धाराः सरलाः खड्गाः ते वल्लर्यः लता इव ताभिः कबन्धानां छिन्नशिरस्कभटानां जलानां च उत्पतनस्य उड्डयनस्य सृष्टिपाटवं सृष्टिकौशलमपि संग्राम एव देशिकः गुरुः तस्य सदेशात् सकाशात् अभ्यसितुम् अवनीतलम् अवतीर्णैः पयोधरपटलैरिव मेघसमूहैरिव, खेटकानि वलयानीव तैश्च युगपदेव बहुविधाः ये वीरयोधजनाः तेषां प्रवेशस्य सौकर्याय सुकरत्वाय तरणेः सूर्यमण्डलस्य रन्ध्रसरणिं बिलमार्गम् अतिविशालयितुम् अतिविशालं कर्तुमिव, वियत्तले दूरात् दूरम् अतिदूरम् उच्चलिताभिः ऊर्ध्वीकृताभिः शक्तिभिः अल्पकुन्ताकारशस्त्रैश्च प्रतिक्षणं क्षपितानि यानि विपक्षकुलानि क्षत्रवृन्दानि

---

१ क. तयोः सेनयोरुभयोरपीति नास्ति, ख. तयोरिति नास्ति । २ क. शीकरानजी° । ३ क. इवेति नास्ति । ४ क. ख. पट्टस° । ५ क. पाटन°, ख. °पादन° । ६ क. °मेव, ख. अपीति नास्ति । ७ क. मण्डलैश्च । ८ ख. चेति नास्ति । ९ क. अतीति नास्ति । १० क. दूरमिति नास्ति । ११ क. कर्णाभ्याशं प्र°, ख. कर्णमभ्या° । १२ क. विचित्रेत्यादि अर्वद्भिश्चेत्यन्तं शुण्डालमण्डलैरित्यस्मादग्रे । १३ क. °रिचिचीषयेव । १४ क. प्रसारयद्भि° । १५ क. ख. शोणितपङ्कशोणितैरिति वेगसंभ्रमेत्यस्मात्पूर्वम् । १६ क. भयानकं । १७ क. शायनिकं समीकं । १८ क. अभूदिति नास्ति ।

तदनन्तरम्—

दुःशासनो नयनजृम्भितकोपवह्नि-
भीत्येव फालतलमूर्ध्वमुपाश्रिताभ्याम् ।
भ्रूभ्यां भयानकमुखो रिपुभूमिपान-
प्यारब्ध योधयितुमेतदतीव चित्रम् ॥ २९ ॥

सकुन्तलालयम्बरधूतिधुर्यः स्वसिंहनादैर्विदधे दुरापः ।
पराभवं सोमकलास्यहेतौ पाञ्चालिकायामिव पार्थचस्वाम् ॥ ३० ॥

---

तेषां वृत्तान्तं मुहुर्मुहुः अटनिः धनुष्कोटिरेव मुखं तेन कथयितुमिव, धानुष्कस्य धनुर्धारिणः कर्णाभ्यर्णं कर्णसमीपभागम् उपगतैः आकर्षणेन सामीप्यं प्राप्तैः कोदण्डदण्डैश्च विचित्रतराः ये चक्रचङ्क्रमाः मण्डलाकारगतयः तेषां मिषेण पदात्पदमपि न गन्तव्यमिति विमतान् शत्रून् प्रति निरोधकुण्डलनामिव रोधस्य कुण्डलाकारमर्यादामिव कुर्वद्भिः अर्वद्भिः अश्वैश्च युद्धस्य विलोकने बद्धं धृतं कौतुकं येन तत् सिद्धानां देवानां यौवतं युवतीवृन्दं तस्य कुचमण्डलस्य निजकुम्भयोश्च तारतम्यस्य पृथुत्वमनोहरत्वादिगुणानां न्यूनाधिकतायाः परीचिक्षिषयेव परीक्षितुमिच्छयेव दूरंदूरम् अतिदूरं वियति करान् शुण्डादण्डान् प्रसारयद्भिः शुण्डालमण्डलैः गजवृन्दैश्च वेगस्य संभ्रमेण त्वरया विदार्यमाणायाः धरण्याः रन्ध्रेभ्यः छिद्रेभ्यः निर्गत्वरी बहिर्निर्गमनशीला फणिनां नागानां फणासहस्रस्य मणिकिरणानां धोरणी परंपरा तया मसृणितैः व्याप्तैरिव शोणितपङ्केन शोणैः रक्तैः चक्रैः कृत्वा संक्रीडद्भिः इतस्ततो गच्छद्भिः शताङ्गैः रथैश्च, एवं चोक्तविधैरनन्तैः शत्रैः चतुरङ्गसैन्यैश्च भयानकमित्यर्थः ॥ ६ ॥

नयनयोः जृम्भितः वृद्धः यः कोपवह्निः तस्माद्भीत्येव ऊर्ध्वम् उपरिभागं भालतलम् उपाश्रिताभ्यां भ्रूभ्यां भयानकं मुखं यस्य सः यः दुःशासनः रिपवश्च तैः भूमिपाः भूमिपानकर्तारः तानपि धयितुं धयान् पानकर्तॄन् कारयितुम् आरब्ध आरभत कृतपानानपि पुनः पानं कारयितुम् आरभत । यच्छब्दस्य स इत्युत्तरस्थेन श्लोकेन संवन्धः । पिष्टस्य पुनः पेषणारम्भ इव व्यर्थतया एतदतीव चित्रम् , रिपुभूमिपालानपि योधयितुं युद्धं कारयितुम् आरभतेति चित्रेपरिहारः ॥ २९ ॥

कुन्तं लालयति आदरेण गृह्णाति यः सः स्वस्य सिंहनादैः कृत्वा अम्बरधूतौ आकाशकम्पने धुर्यः धुरंधरः दुरापः दुर्धर्षः सः दुःशासनः सोमकेषु धृष्टद्युम्नसैनिकेषु लास्यं

---

१ क. तदनन्तरमिति नास्ति । २ क. धुर्यैः । ३ ख. दुरापम् । ४ अत्र स्फुलिङ्गव्याजेनेति सापह्नवहेतूत्प्रेक्षायाः पट्टसवल्लरीभिरित्युपमायाश्च कबन्धशब्दश्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्तिसंग्रामदेशिकेतिरूपकद्वयाभ्यसनफलोत्प्रेक्षयोरङ्गाङ्गिभावसंकरस्य च तरणिरन्ध्रविशालीकरणफलोत्प्रेक्षायाश्च अटनिमुखेनेति रूपककथनफलोत्प्रेक्षयोरङ्गाङ्गिभावसंकरस्य च परिचिचीषाहेतूत्प्रेक्षायाश्च चक्रचङ्क्रमणमिषेणेति सापह्नवस्वरूपोत्प्रेक्षायाश्च अष्टानां तिलतण्डुलन्यायेन संसृष्टिः । ५ अत्रायुधसाध्यरिपुभूमिपाधःकरणस्य भ्रूभङ्गमात्रेण संपादनोद्योगादाश्चर्यमिति वस्तुना कोपवह्निशत्रुवर्ययोरधःकरणेनौपम्यगम्यतात्मकतुल्ययोगिताप्रतीतेर्वस्तुनाऽलंकारध्वनिः ।

ततो याज्ञसेनीकटितटपटापहारसमयचक्रचङ्क्रमणवासनानुवृत्तिवशादिव विविधानि रेचकमण्डलानि वितन्वन्निजास्पदभेदको भीमः क्व वा समागच्छतीति वीक्षितुमुन्नतप्रदेशमधिरूढाभ्यां हृदन्तररुधिरबुद्बुदाभ्यामिव रोषलोहिताभ्यां लोचनाभ्यां साध्वसदानशौण्डः कलितबम्भ्रम्यमाणघनतरगदाविघट्टनविपाटितभटघोटकरटिघटाक्षतजप्रवाहैः समरसीमां गुल्फद्वयसीं विदधानः सुयोधनानुजो वियदध्वनि विजृम्भितध्वनिर्वृकोदरदृगध्वनीनोऽभूत् ॥ ७ ॥

वद्धकच्छावपि द्वौ तावभीकौ भीमकौरवौ।
गदागदि रणं घोरं कुर्वाते स्म परस्परम् ॥ ३१ ॥

निपातितस्य द्विषतः स भूमौ
समक्षमक्ष्णां कुरुभूपतीनाम्।

---

नर्तनं यासां ताः हेतयः शस्त्राणि यस्यां तस्यां पार्थचम्वां पाञ्चालिकायामिव द्रौपद्यामिव पराभवं विदधे चक्रे। पाञ्चालिकापक्षे कुन्तलानां केशानाम् आलिः समूहः अम्बराणि वस्त्राणि च तेषां धूतिः आकर्षणं तस्यां धुर्यः धुरंधरः सः सोमस्य चन्द्रस्य कलाः आस्ये मुखे हेतुः कारणं यस्याः ब्रह्मणा चन्द्रकलाभिर्यस्याः मुखं निर्मितमिति भावः। तथा च नैषधः 'हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा' इति तस्यां पाञ्चालिकायां यथा पराभवं चक्रे तथेत्यर्थः ॥ ३० ॥

ततः याज्ञसेन्याः द्रौपद्याः कटितटस्य पटानां वस्त्राणां हरणसमये यत् चक्रचंक्रमणं तस्याः परितः चक्राकारभ्रमणं तस्य वासना संस्कारः तस्य अनुवर्तनवशादिव विविधानि रेचकमण्डलानि मण्डलाकारभ्रमणानि वितन्वन्कुर्वन् निजम् आस्पदं हृदयस्थानं तस्य भेदकः भीमः क्व वा कस्मिन्देशे समागच्छति इति इदम् ईक्षितुम् उन्नतप्रदेशम् अधिरूढाभ्यां हृदन्तः हृदयमध्यवर्तिनौ यौ रुधिरबुद्बुदौ ताभ्यामिव रोषेण लोहिताभ्यां लोचनाभ्यां साध्वसदाने भयदाने शौण्डः प्रवीणः कलिता हस्ते गृहीता बम्भ्रम्यमाणा भृशं भ्राम्यन्ती घनतरा दृढतरा या गदा तस्याः विघट्टनेन प्रहारेण पाटिताः विदारिताः याः भटघोटकरटिनां घटाः समूहाः तासां क्षतजानां रुधिराणां प्रवाहैः समरसीमां गुल्फद्वयसीं गुल्फप्रमाणरुधिरयुतां विदधानः कुर्वाणः वियदध्वनि आकाशदेशे विजृम्भितः ध्वनिर्यस्य सः सुयोधनानुजः दुःशासनः वृकोदरस्य दृगध्वनीनः दृष्टिविषयः अभूत् ॥ ७ ॥

बद्धकच्छावपि ब्रह्मचारिव्रतवन्तावपि अभीकौ कामुकौ इति विरोधः, युद्धार्थं बद्धः कच्छो याभ्यां तौ अभीकौ भयरहितौ इति विरोधपरिहारः। तौ द्वौ भीमकौरवौ घोरं भयङ्करं परस्परं गदया गदया प्रहृत्येदं युद्धं प्रवृत्तं गदागदि रणं कुर्वाते स्म चक्रतुः ॥ ३१ ॥

सः भीमः कुरुभूपतीनां दुर्योधनादीनाम् अक्ष्णां समक्षं भूमौ निपातितस्य द्विषतः

---

१ क. बुद्बुदमुकुलाभ्यामिव। २ क. ख. करतलबम्भ्र'। ३ क. माणपरिभ्रिपातनपाटितभटघोटकक'। ४ ख. परिघविघ' ५ क. समीकसीमानं कण्ठद्वयसीम्।

गण्डे कराभ्यामुदरे पदाभ्या
संताडनं साधु समाचचार ॥ ३२ ॥
निजप्रियाकैश्यकृषोऽस्य शत्रो-
र्विभिद्य वक्षः पिबतोऽसृगम्भः ।
समीरसूनोश्च पिशाचिकानां
सपीतिकेल्यां कलहो बभूव ॥ ३३ ॥
एणीदृशः स्वकीयाया वेणीं तैरेव शोणितैः ।
क्षोणीभृतां द्विषामेषः शोणीचक्रे सहाक्षिभिः ॥ ३४ ॥

तदनन्तरम्—

[1]रिपुं कुरुक्षेत्रतले चरन्तं तृणाय मत्वा वृषसेनमुग्रम् ।
किरीटिगोपः परधेनुकान्तं निनाय काण्डैर्यमलोकगोष्ठीम् ॥ ३५ ॥
अवकर्ण्य किरीटिभग्नभाजावभिमन्योरधिकं सुतं स कर्णः ।
[2]रिपुरङ्कुतरक्षुरग्रदिक्षु ज्वलयंश्चक्षुरभूदरीन् दिधक्षुः ॥ ३६ ॥

---

शत्रोः दुःशासनस्य गण्डे कपोलस्थले कराभ्याम् उदरे पादाभ्यां च संताडनं साधु सम्यक् अपराधानुरूपमिति यावत्, समाचचार वैर्तयामास ॥ ३२ ॥

निजप्रियायाः द्रौपद्याः कैश्यं केशपाशं कर्षति यः तस्य शत्रोः दुःशासनस्य वक्षः विभिद्य खड्गेन विदार्य असृगम्भः रक्तोदकं पिबतः समीरसूनोः भीमस्य, पिशाचिकानां च सपीतिकेल्यां तुल्यपानक्रियायां कलहः बभूव । अन्येषामपि अहंपूर्विकया युगपत् एकपात्रस्थितेक्षुरसादिपानक्रियायां कलहो भवति ॥ ३३ ॥

एणीदृशः मृगीनेत्रसदृशनेत्रायाः स्वप्रियायाः द्रौपद्याः वेणीं तैरेव दुःशासनहृदय-निष्कासितैरेव शोणितैः क्षोणीभृतां द्विषां कर्णदुर्योधनादीनाम् अक्षिभिः सहैव शोणीचक्रे अशोणां शोणां रक्तां चक्रे । वेणीरक्तलेपेन शोणी कृता, क्रोधेन चाक्षीणि शोणीकृतानि ॥ ३४ ॥

तस्मात् भीमकृतदुःशासनवधात् अनन्तरम्—

किरीटी अर्जुनः गोप इव किरीटिगोपः कुरुक्षेत्रतले कुरुक्षेत्रभूम्यां चरन्तं संचरन्तं परेषां शत्रूणां याः धेनुकाः करिण्यः, यद्वा भामेतिवत् नामैकदेशेन नामग्रहणात् असि-धेनुकाः छुरिकाः तासाम् अन्तो नाशो यस्मात्तम् उग्रं रिपुं वृषसेनम् एतन्नामकं कर्ण-पुत्रं तृणायमत्वा तुच्छं मत्वा काण्डैः बाणैः यमलोकस्य गोष्ठीं सभां निनाय । गोपस्तु क्षेत्रतले केदारभूम्यां तृणाय तृणार्थं चरन्तं गच्छन्तं भक्षयन्तं वा अतः उग्रं रिपुं परे धेनूनां कान्तं पतिं वृषाः सेना यस्य तं वृषेन्द्रमित्यर्थः, काण्डैः लगुडैः गोष्ठीं गोष्ठं नयन्ति ॥ ३५ ॥

रिपव एव रङ्कवः मृगाः तेषां तरक्षुः व्याघ्रविशेषः सः कर्णः अभिमन्योः अधिकं

---

१ क. °र्निर्भिद्य । २ क. रिपून् । ३ अत्र तत्तादृक्प्रियापराधकरपदताडनयोरानुरूप्येण संघटनया समालंकारः ।

कुण्डलीकृतकोदण्डश्चण्डभानुतनूभुवः ।
ताण्डवं विदधे पाणिः पाण्डवानां बलान्तरे ॥ ३७ ॥
युद्धे हतो योधसमूह एष बिम्बं पितुर्मे बत भेत्स्यतीति ।
मत्वेव पत्युर्महसां कुमारः संछादयामास दिवं शरौघैः ॥ ३८ ॥
करीन्द्रमण्डले पेतुः कर्णमुक्ताः शरव्रजाः ।
सदानाम्बुकरं यान्ति स्थूललक्ष्यं हि मार्गणाः ॥ ३९ ॥
प्रकाश्य कर्णे युधि कालपृष्ठं भयंकराभे चलति प्रवीरे ।
तदीयभल्लैर्दलिताः परेऽपि प्रकाश्य चेलुर्बत रक्तपृष्ठम् ॥ ४० ॥
तत्र तत्र युधि संचरमाणः शल्यसारथिमता स रथेन ।
चूषितारिमदवारितयाऽसौ सूर्यसूनुरपि चण्डकरोऽभूत् ॥ ४१ ॥
रवेः कुमारस्य रथं निरीक्ष्य रमाप्रियस्यापि तदा समीके ।
धैर्यं हृदः स्वेदजलं शरीरात् जगाल तोत्रं च जवेन हस्तात्॥४२॥

---

सुतं वृषसेनम् आजौ संग्रामे किरीटिना अर्जुनेन भग्नं हतम् आकर्ण्य क्रोधात् अष्टदिक्षु चक्षुः ज्वलयन् सन् अरीन् दिधक्षुः दग्धुमिच्छुः अभूत् ॥ ३६ ॥

कुण्डलीकृतं कोदण्डं येन सः कर्णस्य हस्तः पाण्डवानां सैन्यमध्ये ताण्डवं नृत्यं विदधे, बाणप्रक्षेपलाघवं चक्रे इत्यर्थः ॥ ३७ ॥

महसांपत्युः कुमारः कर्णः एषः युद्धे हतः योधसमूहः पितुः सूर्यस्य बिम्बं स्वर्गगमनार्थं भेत्स्यति इति मत्वेव दिवम् आकाशं शरौघैः संछादयामास ॥ ३८ ॥

कर्णमुक्ताः शरव्रजाः करीन्द्रसमूहे पेतुः । तथाहि मार्गणाः बाणाः याचकाश्च दानाम्बुना मदोदकेन दानार्थोदकेन च सहितः करः शुण्डादण्डः हस्तश्च यस्य तं स्थूललक्ष्यं पृथुललक्ष्यं बहुलदातारं च यान्ति । सामान्येन विशेषस्य श्लेषेण समर्थनादर्थान्तरन्यासः ॥ ३९ ॥

भयंकरा आभा तेजो यस्य तस्मिन् प्रवीरे महावीरे कर्णे कालपृष्ठम् एतन्नामकं स्वधनुः प्रकाश्य प्रकटीकृत्य युधि चलति संचरति सति तदीयभल्लैः कर्णबाणैः दलिताः परेऽपि शत्रवोऽपि रक्तपृष्ठं रुधिरेण लोहितपृष्ठभागं प्रकाश्य चेरुः चरन्ति स्म । कर्णे कृष्णपृष्ठं प्रकाश्य चरति शत्रवोऽपि रक्तपृष्ठं प्रकाश्यं चेरुरिति समानक्रियाभासात् आश्चर्ये बतशब्दः ॥ ४० ॥

युधि शल्यसारथिमता रथेन तत्र तत्र स्थले संचरमाणः सः असौ कर्णः सूर्यसूनुः सन्नपि चूषितारिमदवारितया चूषिताः अरीणां शत्रूणां मदा एव वारि तस्य भावस्तत्ता तया चण्डकरः स्वयं सूर्य एव अभूत् । चण्डः प्रचण्डः करो यस्येत्यर्थान्तरम् ॥ ४१ ॥

तदा समीके युद्धे कर्णस्य रथं निरीक्ष्य रमाप्रियस्य भगवतः कृष्णस्य हृदः अन्तःकर-

---

१ क. समीक्ष्य । २ अत्र पुत्रवधाकर्णनस्य विशेषणगत्या शत्रुदिधक्षाहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । ३ अत्रानुप्रासः शब्दालंकारः । ४ अत्र कालपृष्ठरक्तपृष्ठशब्दश्लेषप्रतिभया तदुभयप्रकाशनेन विरोधिनोरनुरूपचेष्टासंघटनात्मा समालंकारः । ५ रूपकातिशयोक्त्योरङ्गाङ्गिभावेन संकरोऽत्र ।

तदनन्तरममर्त्यचक्रवर्तिविकर्तनतनयौ परस्परं समरं प्रावर्तयितुमारभेताम् ॥ ८ ॥

राधाकुन्तीपुत्रयोः शौर्यभाजो-
श्चक्रीभूतौ चापदण्डौ ज्वलन्तौ ।
मध्यस्थाया रङ्गभूदेवताया-
स्ताटङ्काभामादधाते स्म तत्र ॥ ४३ ॥

अवकर्ण्य शरासवल्लिघोषं
सुतयोस्तत्र सहस्रदृष्टिघृष्ट्योः ।
दिवि वैणिकतापसस्य चित्रं
महती प्रीतिरभूच्च नैव चाभूत् ॥ ४४ ॥

उल्लोलकल्लोलितदोर्विलासावुपेन्द्रमद्रेश्वरसारथी तौ ।
परस्परं भल्लकुलैरभूतां रुषापि लीढावरुषापि लीढौ ॥ ४५ ॥

---

णात् धैर्यं वेगात् जगाल गलति स्म । तथा शरीरात् स्वेदजलं जगाल, हस्तात् तोत्रं कशा च जगाल । भगवतोऽपीयमवस्था किं पुनरन्यस्य वक्तव्यमिति द्योतयितुमपिशब्दः ॥ ४२ ॥

तदनन्तरममर्त्यचक्रवर्ती इन्द्रः, विकर्तनः सूर्यः तयोः तनयौ अर्जुनकर्णौ परस्परं समरं प्रवर्तयितुमारभेताम् आरब्धवन्तौ ॥ ८ ॥

तत्र ज्वलन्तौ देदीप्यमानौ चक्रीभूतौ आकर्षणेन मण्डलाकारत्वं प्राप्तौ राधाकुन्तीपुत्रयोः कर्णार्जुनयोः चापदण्डौ मध्यस्थायाः उभयोः मध्यगतायाः रणाङ्गणभूदेवतायाः ताटङ्काभां ताटङ्कयोः शोभाम् आदधाते स्म धारयामासतुः ॥ ४३ ॥

तत्र रणाङ्गणे सहस्रं दृष्टयो नेत्राणि, घृष्टयः किरणाश्च ययोस्तयोः इन्द्रसूर्ययोः सुतयोः अर्जुनकर्णयोः शरासवल्लीघोषं धनुर्लताशब्दम् आकर्ण्य दिवि आकाशे वैणिकतापसस्य वीणावादनशिल्पिनः मुनेः नारदस्य महती प्रीतिः अभूत्, नैवाभूच्च । भावाभावविरोधादिदं चित्रमाश्चर्यम् । शब्दश्रवणेन युद्धचमत्कारदर्शनं भविष्यतीति महाप्रीतिरभवत्, अतः महत्याम् एतन्नाम्न्यां स्ववीणायां प्रीतिः आदरः नाभूत् इत्याश्चर्यपरिहारः ॥ ४४ ॥

उत्कृष्टाः लोलाः चञ्चलाः ये कल्लोलाः महोर्मयः ते संजाताः येषां ते उल्लोलकल्लोलिताः अतिशयेन वृद्धिं गताः दोषां भुजानां विलासाः क्रीडाः ययोस्तौ उपेन्द्रमद्रात्मजौ श्रीकृष्णशल्यौ सारथी ययोस्तौ अर्जुनकर्णौ भल्लकुलैः बाणसमूहैः परस्परं रुषाऽपि रोषेणाऽपि लीढौ व्याप्तौ अरुषाऽपि रोषाभावेनाऽपि लीढौ अभूताम् । भावाभावयोः विरोधादिदमाश्चर्यं, रुषा रोषेण अरुषा व्रणेनापि लीढौ अभूतामिति विरोधपरिहारः ॥४५॥

---

१ क. प्रधनं प्रवर्त° । २ क. अव । ३ अत्र जगालेत्युभयावृत्तिदीपकम् । ४ अत्र रुषावलीढावरुषावलीढौ इति यमकभेदविरोधाभासयोः शब्दार्थालंकारयोरेकवाचकानुप्रवेशसंकरः ।

कर्णामरेन्द्रसुतकार्मुकवल्लिवान्तै-
नीरन्ध्रमम्बरतले निविडे पृषत्कैः ।
अभ्यागतानमरभावमुपेत्य योधान्
पप्रच्छ वैणिकमुनिः प्रधनप्रकारान् ॥ ४६ ॥

पाणिना तदनु भानुनन्दने
पन्नगास्त्रमचिरेण गृह्णति ।
पूर्वमेव निखिलाप्सरःकुला-
त्सा दधौ वरणमाल्यमुर्वशी ॥ ४७ ॥

सव्यसाचिहननाय शरासे
संहिते रविभुवा भुजगास्त्रे ।
नन्दनद्वितयवत्त्वममंस्त
स्वस्य कल्पकवनेन सहेन्द्रः ॥ ४८ ॥

रवितनयविमुक्तशस्त्रमेत-
द्दिवि रसनायुगलं वहिर्वितन्वत् ।

---

वैणिकमुनिः नारदऋषिः कर्णार्जुनयोः धनुर्लताभ्यां वान्तैः त्यक्तैः शरौघैः अम्बरतले नीरन्ध्रं यथा तथा निविडे सान्द्रे सति अमरभावं देवत्वम् उपेत्य अभ्यागतान् योधान् प्रधनस्य युद्धस्य प्रकारान् पप्रच्छ[3] । युद्धदर्शनाभावादागतान्प्रति प्रश्नः ॥ ४६ ॥

तदनु भानुनन्दने अचिरेण पाणिना पन्नगास्त्रं गृह्णति सति संपूर्णाप्सरसां समुदायात् पूर्वमेव आदावेव सा प्रसिद्धा पाशुपतास्त्रलाभानन्तरं स्वर्गवासेऽर्जुनेन 'पूर्वजस्य स्त्रियं त्वां न स्पृशामि' इति प्रत्याख्यातोर्वशी वरणमालां दधौ[4] । इदानीं जन्मान्तरं प्राप्स्यत्यतो वरिष्यतीति मत्वेत्यर्थः । 'खाण्डववनदाहे तक्षकपत्न्याः पुत्रं मुखे गृहीत्वाऽऽकाशमार्गेण गच्छन्त्याः शिरसि अर्जुनेन बाणेन छिन्ने सति पुत्रस्य पुच्छं छिन्नं, स चाकाशमार्गेण गतः । ततः पार्थजिघांसया कर्णतूणीरे शरे स्थितः । तं शरं गृहीत्वाऽस्त्राभिमन्त्रितं कृत्वा मुमोच' इतीतिहासोऽत्रानुसंधेयः ॥ ४७ ॥

कर्णेन सव्यसाचिनः अर्जुनस्य हननाय भुजगास्त्रे शरासे धनुषि संहिते सति कृतसंधाने सति इन्द्रः कल्पकवनेन कल्पवृक्षवनेन सह स्वस्य नन्दनद्वितयमेवास्तीत्यमंस्त मन्यते स्म । अद्यावधि जयन्तार्जुनौ वनं चेति नन्दनत्रितयमासीदिदानीम् अर्जुनवधे द्वयमेवावशिष्टमिति निश्चितवान् । अनेनास्त्रस्यापरिहार्यत्वं द्योत्यते ॥ ४८ ॥

रवितनयेन विमुक्तम् एतत् अस्त्रं दिवि आकाशे रसनायुगलं जिह्वाद्वितयं वहिर्वित-

---

१ क. नीरन्ध्रितेऽम्बर' । २ क. वीरान् । ३ अत्र नारदस्य तादृग्वीरपृच्छासंबन्धेऽपि संबन्धोक्तिरूपातिशयोक्त्या कर्णार्जुनयुद्धस्य लोकोत्तरत्वप्रतीतेरलंकारेण वस्तुध्वनिः । ४ अत्र कर्णकर्तृकार्जुनवधार्थनागास्त्रधारणस्य विशेषनगरया उर्वशीवरणमाल्यधारणहेतुत्वात्काव्यलिङ्गम् । ५ अत्रापि पूर्ववदेव काव्यलिङ्गम् ।

अहमरिमधुना द्विधा करोमी-
त्यभिनयकेलिमिवादधद्बभासे ॥ ४९ ॥
द्विधा विधातुं विजयं शिरोधा-
वथापतन्तं स सरीसृपं तम् ।
निरीक्ष्य भारेण निजेन शार्ङ्गी
निमज्जयामास रथाङ्गमुर्व्याम् ॥ ५० ॥
आनेमिमग्नस्य हरेरुपायात्तदा शताङ्गस्य किरीटिनोऽस्य ।
गर्भेऽवकाशं किल बान्धवेन शम्भोः शताङ्गो धरणिर्व्यतानीत् ॥५१॥
ततः कुरूणामिव पुष्करान्ते
क्ष्वेडाभटीं जृम्भयता निजां च ।
उग्राहिना तस्य किरीटशृङ्ग-
मग्राहि नाकेन्द्रभयेन साकम् ॥ ५२ ॥
ततः स्नेहरसार्द्रस्तं पक्षपाती भुजङ्गमम् ।
तक्षकः किल पार्थस्य वर्धयामास सायकः ॥ ५३ ॥

न्वत् प्रकटयत् सत् 'अहम् अधुना अरिं द्विधा करोमि' इति अभिनयस्य द्विधाकारणार्थं सूचनस्य केलिं क्रीडाम् आदधत् कुर्वत् बभासे । अन्योऽपि द्विधाकरणस्याभिनयमङ्गुलि-द्वयप्रदर्शनादिना करोति ॥ ४९ ॥

अथ सः शौरिः श्रीकृष्णः विजयम् अर्जुनं शिरोधौ ग्रीवायां द्विधा विधातुम् आपत-न्तम् आयान्तं तं सरीसृपं नागं निरीक्ष्य निजेन भारेण रथाङ्गं चक्राणि उर्व्यां पृथिव्यां निमज्जयामास अन्तःप्रवेशयामास । ग्रीवायां विभेत्तुं बद्धलक्ष्यमस्त्रं रथमज्जनात् किरीटे लग्नं भवत्वित्याशयेन रथं मज्जयामास ॥ ५० ॥

तदा हरेः कृष्णस्य उपायात् आनेमिधारामभिव्याप्य मग्नस्य इन्द्रात्मजस्य रथस्य अवकाशं स्थित्यर्थं स्थानं शंभोः शताङ्गः रथः—धरणिः बान्धवेन बन्धुत्वेन साजात्येन किलेत्युत्प्रेक्षा, गर्भे व्यतानीत् ददौ ॥ ५१ ॥

ततः पुष्करान्ते आकाशमध्ये कुरूणामिव निजां क्ष्वेडाभटीं विषोत्सर्गलीलां सिंह-नादलीलां च जृम्भयता वर्धयता उग्राहिना भयंकरसर्पेण तस्य अर्जुनस्य किरीटस्य शृङ्गम् अग्रं नाकेन्द्रस्य इन्द्रस्य भयेन साकम् अग्राहि गृहीतम् । किरीटाग्रं छिन्नम् इन्द्रस्य पुत्रमरणभयं चापहृतमित्यर्थः ॥ ५२ ॥

ततः स्नेहरसेन तैलादिना आर्द्रः, अन्यत्र स्नेहरसेन पुत्रवत्सलतया आर्द्रः युक्तः पक्षैः पत्रैः पततिं गच्छति तच्छीलः, अन्यत्र पुत्रसाहाय्यकर्ता तक्षकः छेदकः, अन्यत्र

१ क. पादेन । २ क. ख. शताङ्ग° । ३ क. धरणी व्य° । ४ क. °यताऽऽत्मनश्च । ५ अत्र नागे-न्द्रभयेन साकमिति सहोक्त्यलंकारेण किरीटहरणस्य दोषस्यापि गुणत्वकल्पनात्मकलेशालंकारप्रतीतेरलं-कारेणालंकारध्वनिः ।

दन्तीन्द्रपादातरथाश्वभेदी
कुन्तीकुमारः स हरेर्निदेशात् ।
राधेयकाये विविधास्त्रजाल-
माधेयमेव व्यधित क्षणेन ॥ ५४ ॥

सर्वेषु याचकजनेषु बहुप्रदत्वा-
त्खर्वेतरोन्नतिरयं खमणेः कुमारः ।
पार्थस्य मार्गणगणं पतितं शरीरे
सार्थं व्यधादभिमतं स वितीर्य जीवम् ॥ ५५ ॥

कर्णेऽपि[3] कर्णेन्द्रियमात्रपात्रे दुर्योधनः शोकरसे ममज्ज ।
अभ्यासभूमानमिवाधिरोढुमनागतस्य ह्रदमज्जनस्य ॥ ५६ ॥

ततः स्वकीयस्य तनूभवस्य वधार्दपस्नातुमना इव द्राक् ।
मन्दायमानद्युतिभारमाली मरीचिमाली च ममज्ज सिन्धौ ॥ ५७ ॥

इति श्रीमदनन्तकविकुञ्जरविरचितचम्पूभारते एकादशः स्तबकः ॥ ११ ॥

---

तक्षकनागः पार्थस्य अर्जुनस्य सायकः तं भुजङ्गमं सर्पं वर्धयामास चिच्छेद किल । अन्यत्र वृद्धिं नीतवानित्यर्थः ॥ ५३ ॥

दन्तीन्द्राणां, पादातस्य पत्तिवृन्दस्य, रथानाम् अश्वानां च हन्ता सः अर्जुनः हरेः कृष्णस्य निदेशात् राधेयकाये कर्णशरीरे विविधास्त्रजालम् आग्नेयाद्यस्त्रशस्त्रसमूहं क्षणेन आधेयमेव गुप्तस्थले निक्षेप्यं वस्त्वेव व्यधित कृतवान् । सर्वाणि शस्त्राणि अस्त्राणि च शरीरे आरोपयामास ॥ ५४ ॥

अथ सर्वेषु याचकजनेषु वहु प्रददाति बहुप्रदः तस्य भावः तत्त्वं तस्माद्धेतोः खर्वेतरा महती उन्नतिः औन्नत्यं यस्य सः कर्णः शरीरे पतितम् अन्यत्र शरीरार्थम् आगतं पार्थस्य मार्गणगणं बाणसमूहं, याचकवृन्दं च अभिमतम् इष्टं देहं वितीर्य दत्त्वा सार्थं सफलं, वित्तसहितं च व्यधात् कृतवान् । कर्णो देहत्यागं कृतवानित्यर्थः ॥ ५५ ॥

अथ कर्णे कर्णेन्द्रियमात्रं पात्रं स्थितिः स्थानं यस्य तथाभूते सति कथावशिष्टे सति मृते सतीति यावत्, दुर्योधनः अनागतस्य भविष्यतः ह्रदे मज्जनस्य अभ्यासस्य भूमानं बाहुल्यम् अधिरोढुमिव प्राप्तुमिव शोकरसे शोकोदकरसे ममर्ज्ज ॥ ५६ ॥

ततः मन्दायमानो यः द्युतिभारः कान्तिपरम्परा तेन मालते तथाभूतः मरीचिमाली

---

१ क. मार्गणगणेषु । २ क. °राद्दतिरयं, ख. °द्धतिरयम् । ३ क. ऽथ । ४ क. जलस्नातुं । ५ क. मालभारी । ६ समस्तवस्तुवर्तिश्लेषसावयवरूपकमत्र । ७ अत्र बहुप्रदत्वप्रयुक्तसर्वयाचकमहादरस्य विशेषणगत्या पार्थमार्गणसप्रयोजनीकरणहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । मार्गणशब्दश्लेषभित्तिकालब्धयाचकवाणद्वयाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितमिति तयोरङ्गाङ्गिभावेन संकरः । ८ अत्र कर्णनिधनस्य दुर्योधनशोकाब्धिमज्जनहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् उक्तोत्प्रेक्षयोज्जीवितमिति द्वयोरङ्गाङ्गिभावेन संकरः ।

## १२ द्वादशः स्तवकः ।

शल्यं ततः परमरातिकुलस्य चित्ते
शल्यं दिशन्तमनिशं रमणः कुरूणाम् ।
कल्यं रणेषु पृतनाधिपतिं विधाय
तुल्यं त्रिविष्टपपतेः स्वममन्यतासौ ॥ १

तं त्तादृशं तदनु बाहुमदेन शत्रू-
नाकम्पयन्तममरावलिमस्तकेन ।
शक्त्या निहत्य युधि शल्यमजातशत्रोः
पाणिर्दधौ प्रथमतः परहिंसकत्वम् ॥ २ ॥

अथ तं सुबलात्मजं क्षणादवगत्य प्रियपाशकं मृधे ।
यमदापितपाशकं व्यधाद्यमयोः प्राथमिकः पराक्रमी ॥ ३ ॥

---

सूर्यः स्वकीयस्य तनूभवस्य पुत्रस्य कर्णस्य वधात् अपस्नातुं मृताशौचनिमित्तं स्नानं कर्तुं मनो यस्य सः अपस्नातुमना इव द्राक् शीघ्रं सिन्धौ समुद्रे निममज्ज, अस्तं जगामेति भावः ॥ ५७ ॥

इति श्रीचम्पूभारते टीकायां श्रीखण्डोपाह्वबाजीरायात्मजनारायणसूरिकृता-
यामेकादशः स्तवकः ।

---

ततः परं कुरूणां रमणः दुर्योधनः अरातिकुलस्य चित्ते शल्यं दुःखदम् अयोमयं शरकुन्ताद्यग्रभागं दिशन्तं स्थापयन्तं, रणेषु कल्यं कलहे साधु निपुणं शल्यं मद्रराजं पृतनाधिपतिं सेनाधिपतिं विधाय कृत्वा स्वयम् आत्मनः त्रिविष्टपपतेः तुल्यम् इन्द्रसदृशम् अमन्यत, आत्मानं सर्वाधिकम् अमन्यतेति भावः ॥ १ ॥

तदनु न जातः शत्रुः शत्रुभावो यस्य—यस्य क्वापि शत्रुत्वं नास्ति—तस्य युधिष्ठिरस्य पाणिः हस्तः तत्तादृशं निरुपमं बाह्वोर्मदेन गर्वेण शत्रुम् अमरावलीनां युद्धप्रेक्षकश्लाघाकर्तृदेवावलीनां मस्तकेन सह आकम्पयन्तं शल्यं युधि शक्त्या निहत्य प्रथमतः इदानीमेव परहिंसकत्वं दधौ। अद्यावध्यनेन कोऽपि न हत इति भावः। युधिष्ठिरः शल्यं जघानेत्यर्थः॥ २॥

अथ पराक्रमी यमयोः नकुलसहदेवयोः मध्ये प्राथमिकः नकुलः तं सुबलाया आत्मजं पुत्रं शकुनिं प्रियाः पाशकाः द्यूतसाधनपाशकाः यस्य तथाविधम् अवगत्य ज्ञात्वा मृधे युद्धे क्षणात् यमेन दापितः पाशः प्राणोत्क्रमणकारिपाशो यस्य तं तथाविधं व्यधात् चकार। पाशकप्रियस्य पाशकदापनकरणमिष्टमेव। नकुलः शकुनिं जघानेति भावः ॥ ३॥

---

१ ख. तं तादृशम् । २ क. बलेन । ३ क. गत्य । ४ अत्र दुर्योधनस्यात्मनेन्द्रस्य तुल्यत्वसंभावनां प्रति शल्यसेनापतित्वविधानस्य हेतुत्वात्पदार्थहेतुककाव्यलिङ्गेन शल्यस्य देवसेनानीसाम्यप्रतीतेरलंकारेणालंकारध्वनिः । ५ अत्र प्रियपाशकस्य प्रदापितपाशकत्वोक्त्या ... समालंकारः ।

अथ युद्धतपर्तुर्दुःसहश्रीर्हरिदभ्यन्तरधावदात्मघोषम्।
सहते स्म न किंचिदप्युलूकं सहदेवस्य भुजप्रतापभानुः ॥ ४ ॥

ज्वालानुषक्तमिव दानविधौ कृशानोः
शोणं दधच्चमरवालमुदस्य चापम्।
पार्थे निहन्तरि रिपूनथ कांदिशीका
द्रोणात्मभूकृपमुखाः सहसा बभूवुः ॥ ५ ॥

इत्थं सोदरदायादवरूथिनीनां रणक्षितौ परिक्षयमभिवीक्ष्य महीयसा साध्वसेन मनसि विरचितप्रथमप्रवेशः क्वचन [1] [2] गूढावस्थितिरेव महती ममायुष्टोमेष्टिरित्यालोच्य झटिति घटितकवचावगुण्ठनः पन्नगकेतनः [3]स्यमन्तपञ्चकसामन्तं सागरगम्भीरं स्वरितनामानं कंचन महाह्रदमासाद्य 'मद्भुजेन चिरधार्यमाणां क्षोणीं त्वय्येव समर्पयिष्यामि' इति पातालवासिनः पन्नगाधिपतेर्द्विसहस्रलोचनेषु रहसि [6]वचसा निवेदयितुमिव दूरं दूरं निमज्य स्वविद्यया सर्वमप्यम्भः स्तम्भयामास ॥ १ ॥

---

अथ युद्धमेव तपर्तुः ग्रीष्मर्तुः तस्मिन् दुःसहा श्रीर्यस्य सः सहदेवस्य भुजप्रताप एव भानुः हरितां दिशाम् अन्तरेषु धावन् आत्मघोषः स्वशब्दो यस्य, अन्यत्र अभ्यन्तरेभ्यः धावन्तः आत्मघोषाः काकाः यस्मिन् तं कंचिदपि उलूकम् एतन्नामकं शकुनिपितरम्, उलूकपक्षिणं च न सहते स्म न सेहे। सहदेवः उलूकराजं जघानेत्यर्थः ॥ ४ ॥

अथ पार्थे अर्जुने दानविधौ कृशानोः अग्नेः ज्वालाभिः अनुषक्तं संबद्धमिव शोणं रक्तं चमरवालं चमरमृगपुच्छकेशपुञ्जं दधत् चापं गाण्डीवं धनुः उदस्य उच्चाल्य रिपून्निहन्तरि सति द्रोणात्मभूकृपमुखाः अश्वत्थामकृपादयः सहसा अकस्मात् कांदिशीकाः भयेन पलायिताः बभूवुः ॥ ५ ॥

इत्थं सोदराणां बन्धूनां दायादानां पुत्राणां ज्ञातीनां वरूथिनीनां सेनानां च रणक्षितौ परिक्षयम् अभिवीक्ष्य महीयसा साध्वसेन भयेन मनसि विरचितः कृतः प्रथमप्रवेशो यस्य सः क्वचन कुत्रचित् गूढावस्थितिरेव मम महती आयुष्टोमेष्टिः आयुर्वृद्धिकारको यागविशेषः इति आलोच्य मनसि विचार्य झटिति शीघ्रं घटितं कृतं कवचावगुण्ठनं शरीरस्य कवचवेष्टनं येन सः पन्नगः सर्पः केतने ध्वजे यस्य सः दुर्योधनः स्यमन्तपञ्चकतीर्थस्य सामन्तं समीपभागे वर्तमानं सागरवत् गम्भीरम् अतलस्पर्शं स्वरित इति नाम यस्य तं कंचन महाह्रदं महाजलाशयम् आसाद्य प्राप्य 'मद्भुजेन चिरं धार्यमाणां क्षोणीं त्वय्येव समर्पयिष्यामि' इति पातालवासिनः पन्नगाधिपतेः शेषस्य द्विसहस्रलोचनेषु तत्रैव श्रोत्रेन्द्रियसत्वात् रहसि वचसा निवेदयितुमिव दूरं दूरम् अतिदूरं निमज्य स्वस्य विद्यया अम्भःस्तम्भविद्यया सर्वमपि अम्भः स्तम्भयामास ॥ १ ॥

---

१ क. ज्वालं विप°, ख. निप° । २ ख. रचितेत्यधिकम् । ३ क. दुर्योधनो इत्यधिकम् । ४ क. समन्तपञ्चके । ५ क. त्वरित° । ६ क. वाचा । ७ अत्र श्लिष्टाश्लिष्टसावयवरूपकम् ।

वकहन्ता पुराद्यासौ धार्तराष्ट्रवधोद्यतः ।
इति भीतस्य राज्ञोऽस्य युक्तं कासारमज्जनम् ॥ ६ ॥
दरीषु वा शिखरिसरिज्झरीषु वा पुरीषु वा घनवनवल्लरीषु वा ।
तिरो भवेदयमिति तं स मार्गितुं रणस्थलात्पवनसुतोऽथ निर्ययौ ॥७॥
अपरैरपि सोदरैस्तदानीमनुजातस्य जयार्थसिद्धयेऽस्य ।
शतमन्युभुवः पुरेव दिष्ट्या शबरः कश्चन संन्यधाद्वनान्ते ॥ ८ ॥

अथ तेन कृताञ्जलिना सविनयं निवेदितायां सार्वभौमलक्षणोपेतायां पदपङ्क्तौ लक्ष्यमाणैः सलिलमाहर्तुं वनदेवताभिरानीतैरिव कलशैरङ्किताऽवतारपथात् संगररङ्गप्रयुक्तविविधायुधसविधाधीततैक्ष्ण्यानीव परुषाणि सरोषाणि मारुतिवचनानि निशम्य विशालैः क्रोधनिःश्वासैरुपरिकोरकितबुद्बुदकलकलोदयात्तस्माज्जलाशयादुत्तीर्य मानिनामग्रणीः सुयोधनो धीरधीरमनास्तादृशेन भीमेन सह भयानकं गदागदि कलहायितुं सरभसमुपचक्रमे ॥ २ ॥

---

असौ भीमः पुरा वकस्य वकराक्षसस्य, वकपक्षिणश्च हन्ता अद्य धार्तराष्ट्राणां धृतराष्ट्रपुत्राणां, हंसानां च वधे उद्यतः कृतोद्यमोऽस्ति इति भीतस्य राज्ञः दुर्योधनस्य कासारे मज्जनं भयेन निमज्जनं युक्तम् ॥ ६ ॥

अथ पवनसुतः भीमः, दरीषु गुहासु अथवा सरिज्झरीषु सरित्सु नदीषु झरीषु अल्पनदीषु वा पुरीषु वा घनाः निविडाः याः वनवल्लर्यः वनलताः तासु वा अयं दुर्योधनः तिरोभवेत् तिरोहितो भवेत्, इति निश्चित्य तं मार्गितुम् अन्वेष्टुं रणस्थलात् निर्ययौ॥७॥

तदानीम् अपरैरपि सोदरैः अर्जुनादिबन्धुभिः अनुयातस्य अस्य भीमस्य जयार्थसिद्धये वनान्ते वनमध्ये कश्चन शबरः संन्यधात् सन्निधो बभूव—दृष्टिविषयो बभूवेति यावत् । इदं दिष्ट्या भद्रं जातम्, यथा पुरा शतमन्युभुवः अर्जुनस्य जयार्थसिद्धये शबरः शबररूपधरः शिवः सन्निधो बभूव तद्वत् ॥ ८ ॥

अथ कृताञ्जलिना तेन शबरेण सविनयं यथा तथा निवेदितायां दर्शितायां सार्वभौमस्य लक्षणैः ध्वजाङ्कुशोदककुम्भकमलादिभिः उपेतायां युक्तायां पदपङ्क्तौ लक्ष्यमाणैः दृश्यमानैः सलिलं पादप्रक्षालनार्थम् उदकम् आहर्तुम् आनेतुं वनदेवताभिः आनीतैरिव कलशैरङ्कितः चिह्नितः अवतारपथः तस्मात्संगररङ्गे रणाङ्गणे प्रयुक्तानि यानि विविधायुधानि तेषां सविधात् सकाशात् अधीतं तैक्ष्ण्यं यैस्तानीव परुषाणि क्रूराणि सरोषाणि मारुतेः भीमस्य वचनानि निशम्य श्रुत्वा विशालैः क्रोधनिश्वासैः उपरि जलोपरि कोरकितः उद्भूतः

---

१ क. तटीझ° । २ क. अहितै° । ३ क. °धाभ्यस्त° । ४ क. परुषाणि सरोषाणीति नास्ति । ५ ख. सरोषाणीति नास्ति । ६ ख. धी रेति नास्ति । ७ क. कलहं सर° । ८ अनुरूपघटनात्मकोऽत्र समालंकारः । स च श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति द्वयोरङ्गाङ्गिभावेन संकरः । ९ उभयथाऽप्युपमा श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणिता ।

आजगाम स सरस्वतीतटादाजिसीम्नि बलवान्बलस्तदा ।
जायते खलु यदाख्ययाऽनिशं भद्रदेवपदयोः समागमः ॥ ९ ॥
तत्र विस्मयकरं गदाहवं पश्यतोऽस्य सह संमदाश्रुभिः ।
पुष्पवृष्टिरुभयोरुपान्तयोः पुष्करात्सुरभिगन्धिरापतत् ॥ १० ॥
प्रविवेद कुलालचक्रवद्भ्रमतोस्तत्र तयोर्द्वयोर्भिदाम् ।
न बलो न हरिर्न पाण्डवा न सुरा नाश्वमुखा न चारणाः ॥ ११ ॥

मन्नामधारि मृदुलं वसनं विमृद्ना-
त्येतत्सदेत्यतिरुषेव यदूद्वहस्य ।
नेत्रेण सूचितमरेरथ सक्थियुग्मं
चूर्णीचकार गदया श्वसनस्य सूनुः ॥ १२ ॥

---

बुद्बुदानां कलकलोदयो यस्य तस्मात् जलाशयात् उत्तीर्य बहिर्निर्गत्य मानिनां मानवताम् अग्रणीः मुख्यः सुयोधनः धीरात् धीरं मनो यस्य तथाभूतः सन् तादृशेन परुषभाषण-कारिणा भीमेन सह भयानकं गदया गदया प्रहृत्य प्रवृत्तं युद्धं गदागदि कलहायितुं युद्धं कर्तुं सरभसं सवेगं यथा तथा उपचक्रमे प्रारेभे ॥ २ ॥

तदा बलवान् बलः तीर्थयात्रायां सरस्वतीनदीतटात् आजिसीम्नि रणाङ्गणसमीपे आजगाम । कोऽसौ बल इत्यपेक्षायामाह–जायत इति । यस्य आख्यया बल इति नाम्ना अनिशं सदा भद्रदेवपदयोः संबन्धः जायते ‘ बलभद्र ’ इति ‘ बलदेव ’ इति यदाख्या भवति स बल आगत इत्यर्थः ॥ ९ ॥

तत्र विस्मयकरं गदायुद्धं पश्यतः अस्य बलभद्रस्य संमदाश्रुभिः आनन्दाश्रुभिः सह उभयोः भीमसुयोधनयोः उपान्तयोः समीपभागयोः पुष्करात् आकाशात् सुरभिः गन्धो यस्याः सा पुष्पवृष्टिः आपतत् ॥ १० ॥

तत्र कुलालचक्रवत् भ्रमतोः तयोः द्वयोः भीमसुयोधनयोः भिदां न्यूनाधिकभावं बलः बलभद्रः न प्रविवेद न जानाति स्म । हरिः कृष्णः न विवेद । पाण्डवाः अर्जुनादयः न विविदुः । सुराः इन्द्रादयो देवा न विविदुः । अश्वमुखाः गुह्यकविशेषाः, चारणाः गन्धर्वा-दयश्च न विविदुः ॥ ११ ॥

अथ श्वसनस्य सूनुः भीमः यदूद्वहस्य कृष्णस्य नेत्रेण सूचितम् अरेः दुर्योधनस्य सक्थि-युग्मम् ऊरुद्वयं गदया चूर्णीचकार । सक्थिद्वये प्रहारकरणसूचनकर्तृ नेत्रे कारणमुत्प्रेक्षते–**मन्नामेति** । नामधारी मृदुलं वसनं वस्त्रं कर्म एतत् सक्थियुग्मं सदा विमृद्नाति चूर्णयति इति हेतोः अतिशयिता रुट् रोषो यस्य तेनेव ॥ १२ ॥

---

१ क. सह यदाख्यया खलु भ° । २ क. ° मन्नाख्यं°, ख. प्रमृद्ना° । ३ तेजस्विनः परापकृत्य-सहत्वात्परुषभाषणश्रवणस्य हृदोत्तरणं प्रति तस्य गदागदियुद्धोपक्रमं प्रति हेतुत्वात्पदार्थहेतुककाव्य-लिङ्गद्वयमङ्गाङ्गिभावेन संकीर्णमुत्प्रेक्षासंसृष्टिसंसृष्टं च । ४ अत्रानन्दबाष्पवृष्ट्योः साहित्यकथनात्सहो-क्तिरलंकारः । ५ अत्रानेकाधिकरणकैकक्रियाभावरूपगुणयौगपद्यात्समुच्चयभेदः । ६ अत्रोत्प्रेक्षायाः नेत्रशब्दश्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितत्वात्तयोरङ्गाङ्गिभावेन संकरः ।

तत्राथ तारकमिवाद्रिसुताकुमारो
जित्वा सुयोधनमसौ शिविरं दिनान्ते ।
वर्गः पृथातनुभुवां मधुभित्समेतः
षड्भिर्मुखैर्जनितशङ्खरवो जगाहे ॥ १३ ॥

भूयोऽपि सायमनलाय महःप्रदाने
भासां प्रभोरिव कराद्दिशि विप्रकीर्णैः ।
धूमैरिवाक्षिपथरोधिभिरन्धकारैः
प्रापे कुरुक्षितिभृतां पटमण्डपौघः ॥ १४ ॥

तस्मिन्काले विचिन्त्य क्षितिपतिमसुभिर्युक्तमासाद्य रङ्गे
तैस्तैराश्वास्य लापैर्निजमपि समरे भावि कृत्यं निवेद्य ।
मुक्तस्तेनार्धमार्गे हरवरमुदितो द्रोणभूश्चापमौर्व्या
धृष्टद्युम्नं निकृत्य स्वसुरपि तनयानस्य चिच्छेद शूरान् ॥ १५ ॥

इत्थं निशीथे भयानकनिजसायकशतधा शकलितद्विषदनीकात्कुरुनायकपटनिकेतनात्स्वभुजाभ्यामिव प्रविष्टकटकाभ्यां कृपकृतवर्मभ्यां सह पुनरपि सरस्तीरमागत्य दुष्करं स्ववृत्तान्तं कथयन्तमश्वत्थामानं[3] 'अयि सखे संप्रति मम प्रीतिरेतावती' इत्यभिनेतुमिव तिर्यक् प्रसारितेन बाहुयुगुलेन यत्नादाश्लिष्य 'त्वमेव खलु मम प्राणो भवसि' इत्यौपचारिकवचनं प्रयुञ्जानं तं राजानं कोपादिव तदीयाः प्राणास्तदानीमत्याक्षुः ॥ ३ ॥

---

अथ तत्र दिनान्ते असौ पृथायाः तनुभुवां पुत्राणां वर्गः समूहः मधुभिदा कृष्णेन समेतः युक्तः सन्, अद्रिसुतायाः कुमारः कार्तिकेयः तारकमिव तारकासुरमिव सुयोधनं जित्वा षड्भिर्मुखैः जनिताः उत्पादिताः शङ्खरवाः येन सः, शिविरं सेनानिवेशस्थानं जगाहे प्रविवेश ॥ १३ ॥

भूयोऽपि पुनरपि सायं सायंकाले अनलाय अग्नये महः तेजः प्रदित्सोः दातुमिच्छोः भासां प्रभोः सूर्यस्य करात् दिशि विप्रकीर्णैः गलितैः धूमैरिव अक्षिपथरोधिभिः दृष्टिमार्गप्रतिबन्धकैः अन्धकारैः कुरुक्षितिभृतां दुर्योधनादीनां पटमण्डपौघः प्रापे प्राप्तः ॥ १४ ॥

तस्मिन् काले प्रदोषकाले रङ्गे रणाङ्गणे क्षितिपतिं दुर्योधनम् असुभिः युक्तं विचिन्त्य, आसाद्य समीपं गत्वा च तैस्तैः माधुर्यादिगुणविशिष्टैः लापैः भाषणैः आश्वास्य समरे निजं भावि कृत्यं निशीथे निद्रां गतानां धृष्टद्युम्नादीनां कर्तव्यं वधं निवेद्य च ततः तेन दुर्योधनेन मुक्तः गच्छेत्युक्तः अर्धमार्गे हरस्य वरेण मुदितः द्रोणभूः अश्वत्थामा चापस्य मौर्व्याः गुणेन निद्राणं धृष्टद्युम्नं निकृत्त्य ग्रीवायां छित्त्वा अस्य धृष्टद्युम्नस्य स्वसुः भगिन्याः द्रौपद्याः शूरान् तनयान् प्रतिविन्ध्यादीनपि चिच्छेद ॥ १५ ॥

इत्थं निशीथे भयानकाः ये निजसायकाः तैः शतधा शकलितं छिन्नं द्विषदनीकं

---

१ क. शकलीकृत' । २ क. अनेकानीका' । ३ क. प्रतीत्यधिकम् । ४ क. चारिकं वच' । ५ क. तमिति नास्ति ।

कृपस्ततः कुरुपुरीं कृतवर्मा कुशस्थलीम् ।
प्रययौ द्रोणसूनुश्च पाराशर्यतपोवनीम् ॥ १६ ॥

अथ दीप्तिभिरात्मनो विजेतु-
र्विमतद्रौणिशिरोमणेर्भवित्रीम् ।
सहजास्पदभङ्गमानहानिं
सविता द्रष्टुमिवोदयाद्रिमागात् ॥ १७ ॥

ततः परमात्मसोदरसूतमुखाच्छ्रवणकालकूटमपत्यात्ययमधिगम्य विषीदन्त्या याज्ञसेन्या मूर्च्छान्धकारं रत्नदीपालोकेन दूरमुत्सारयितुमुत्सुक इव गुरुसुतचूडामणेराहरणाय शताङ्गमधिरुह्य मौर्वीं विस्फारयद्भिर्मघवत्कुमारादिभिर्मांसलितपार्श्वभागो मारुतिस्तपस्यतस्तस्यैवाश्रमपदं [4] प्रतस्थे ॥ ४ ॥

---

शत्रुपाण्डवसैन्यं यस्मिंस्तस्मात् कुरुनायकानां पाण्डवानां पटनिकेतनात् पटगृहात् स्वभुजाभ्यामिव प्रविष्टं कटकं सैन्यं प्रविष्टे कटके वलये च याभ्यां ताभ्यां कृपकृतवर्मभ्यां सह पुनरपि यत्र दुर्योधनः पतितः तत् सरस्तीरम् आगत्य दुष्करं स्ववृत्तान्तं धृष्टद्युम्नादिवधात्मकं कथयन्तम् अश्वत्थामानम् ' अयि सखे ! संप्रति मम प्रीतिः एतावती ' इति अभिनेतुमिव अभिनयेन दर्शयितुमिव तिर्यक् प्रसारितेन बाहुयुगुलेन यत्नात् कृच्छ्रात् आश्लिष्य ' त्वमेव खलु मम प्राणो भवसि ' इति औपचारिकम् अतिप्रीत्यासदनिरूपकं वचनं प्रयुञ्जानं राजानं दुर्योधनं कोपादिव स्वस्मिन् अनादरजन्यक्रोधादिव तदीयाः दुर्योधनीयाः प्राणाः तदानीं तम् अत्याक्षुः अमुञ्चन् ॥ ३ ॥

ततः दुर्योधनमरणानन्तरं कृपः कुरुपुरीं हस्तिनापुरीं प्रययौ, कृतवर्मा कुशस्थलीं द्वारकां प्रययौ, द्रोणसूनुः पाराशर्यस्य व्यासस्य तपोवनीं प्रययौ ॥ १६ ॥

अथ सविता आत्मनः दीप्तिभिः विजेतुः विमतद्रौणेः शत्रुभूतस्य अश्वत्थाम्नः शिरोमणेः भवित्रीं भविष्यन्तीं सहजास्पदस्य सहजस्थानस्य अश्वत्थाम्नः भङ्गरूपमानहानिं द्रष्टुमिव उदयाद्रिम् आगात् आजगाम ॥ १७ ॥

ततः परम् आत्मनः सोदरस्य बन्धोः धृष्टद्युम्नस्य सूतमुखात् श्रवणयोः कालकूटविषवत् दुःसहम् अपत्यानां पुत्राणाम् अत्ययं वधम् अधिगम्य ज्ञात्वा विषीदन्त्याः दुःखं प्राप्नुवत्याः याज्ञसेन्याः द्रौपद्याः मूर्छात्मकम् अन्धकारं रत्नदीपस्य आलोकेन प्रकाशेन दूरम् उत्सारयितुम् अपसारयितुम् उत्सुक इव गुरुसुतस्य चूडामणेः आहरणाय आनयनाय शताङ्गं रथम् अधिरुह्य मौर्वीं विस्फारयद्भिः रणत्कारयुक्ताम् कुर्वद्भिः मघवत्कुमारादिभिः अर्जुनादिभिः मांसलितः पुष्टः पार्श्वभागो यस्य सः मारुतिः भीमः

---

१ क. खमणिः । २ क. तदनन्तरमात्म° । ३ क. चूडामणेरिति नास्ति । ४ क. भागमित्यधिकम् । ५ अत्राति प्रियत्वेन प्राणत्वेनाध्यवसायमूलातिशयोक्त्यनुप्राणितत्वादुत्क्षेप्रेक्षायाः द्वयोरङ्गाङ्गिभावेन संकरः ।

तत्रागतेषु युधि तेषु तपोधनोऽय-
मेकोऽपि धीरतरधीरिषुवर्षकेषु ।
निष्पाण्डवास्तु वसुधेति निजव्रतेन
साकं व्यमुञ्चदभिमन्त्र्य जवादिषीकाम् ॥ १८ ॥
अथ ब्रह्मशिरोऽस्त्रस्य प्रहितस्य किरीटिना ।
योगात्तूलपदस्येव ह्रस्वभावं जगाम सा ॥ १९ ॥
अथाहृतो मारुतिना हठेन भग्नस्य शीर्षाद्गुरुनन्दनस्य ।
दत्तो मणिः पार्षतनन्दनायाः शोकाग्निदाहप्रतिबन्धकोऽभूत् ॥२०॥

ततः संवर्तसमयसच्छात्रे तादृशि कुरूणामुभयेषामपि संप्रहारे कृष्णावेणीबन्धायुषा सह परिसमाप्ते ॥ ५ ॥

स्वं दुःशलाशेषमपत्यवर्गं पाण्डोश्च विज्ञाय समस्तशेषम् ।
दृशा सदान्धो जरठो महीपश्चिरं तदा चेतनयाऽपि जज्ञे ॥ २१ ॥

---

तपस्यतः तपः कुर्वतः तस्यैव अश्वत्थाम्न एव आश्रमपदं प्रतस्थे । भीमादयश्चत्वारोऽपि गता इति भावः ॥ ४ ॥

तत्र आगतेषु तेषु पाण्डवेषु युधि इषूणां वर्षकेषु सत्सु एकोऽपि अयं तपोधनः धीरतरधीः सन् वसुधा निष्पाण्डवा अस्तु इति संकल्य निजेन व्रतेन इतः परं परहिंसां न करोमीति मुनिव्रतेन साकं जवात् इषीकां शलाकाम् अभिमन्त्र्य व्यमुञ्चत् ॥१८॥

अथ सा इषीका किरीटिना प्रहितस्य प्रयुक्तस्य ब्रह्मशिरोऽस्त्रस्य योगात् ह्रस्वभावं लघुत्वं जगाम, शान्ता बभूवेत्यर्थः । कस्येव तूलपदस्येव । यथा तूलपदस्य योगात् इषीका पूर्वपदम् 'इष्टकेषीकामालानां–' इतिसूत्रेण इषीकतूलमिति ह्रस्वभावं प्राप्नोतीत्यर्थः ॥ १९ ॥

अथ मारुतिना भग्नस्य पराजितस्य गुरुनन्दनस्य अश्वत्थाम्नः शीर्षात् हठेन बलात्कारेण आहृतः आनीतः दत्तः मणिः पार्षतस्य द्रुपदस्य नन्दनायाः द्रौपद्याः शोकाग्नेः दाहस्य प्रतिबन्धकः अभूत् । तेन शोकः शान्तोऽभूदित्यर्थः ॥ २० ॥

ततः संवर्तसमयस्य प्रलयकालस्य सच्छात्रे सच्छिष्ये तत्तुल्ये इत्यर्थः, तादृशि उभयेषां कुरूणां दुर्योधनादीनां युधिष्ठिरादीनामपि संप्रहारे युद्धे कृष्णायाः द्रौपद्याः वेणीबन्धायुषा सह यदा कचग्राहिणं दुःशासनं वधिष्यसि तदा वेणीं मोक्ष्यामीति भीमं प्रति द्रौपद्या प्रतिज्ञातत्वात् तथा जाते केशप्रसाधनार्थं वेणी मुक्ता अतः कारणात् वेणीबन्धायुषा सह समाप्ते सतीत्यर्थः ॥ ५ ॥

स्वं स्वकीयम् अपत्यवर्गं दुःशलैव शेषो यस्मिंस्तथाभूतं, पाण्डोश्च अपत्यवर्गं समस्ताः

---

१ क. वर्पुकेषु । २ ख. विजिग्ये । ३ अत्रोक्तोत्प्रेक्षाया मूर्च्छान्धकारमित्यादिरूपकद्वयोज्जीवितत्वात्तयोरङ्गाङ्गिभावेन संकरः । ४ शापस्य तपःक्षयकरत्वादत्रातिधैर्यस्य विशेषणगत्या स्वस्यैकाकित्वेऽप्यनेकेषु युद्धोद्यमं प्रति हेतुत्वात्पदार्थहेतुककाव्यलिङ्गनिजव्रतेन साकमिति सहोक्तेश्चाङ्गाङ्गिभावेन संकरः । ५ अत्र शोकाग्निदाहप्रतिबन्धक इति रूपकातिशयोक्त्योरेकवाचकानुप्रवेशसंकरः ।

तदानीं विदुरसंजयाभ्यां व्यजनादिभिरुपचारैर्विश्राणितसंज्ञो "हा सुयोधन दुःशासन" इति बहुधा विलपन्नुत्थाय रणनिहतस्वजनमुखेन्दुस्मरणमात्रादुल्लोलकल्लोलितशोकसिन्धुभिर्बन्धुभिः सह नगरान्निर्गतो "भवत्समेषु गतेष्वपि यूयमद्यापि न निर्गताः" इति रोषेण प्राणान्बहिरुत्सारयितुमिव हृदि पुनः पुनर्विरचितकरास्फालनाभिः सविधमागम्य मज्जन्मभूसौन्दर्यप्रातिभट्यमियमाचरन्तीत्यसहिष्णुतयेव कपोलमकरिकामुन्मूलयन्तं बाष्पप्रवाहं नयनैरुत्सृजन्तीभिरनवरतमस्मान्कुसुमैरामोदभरितान्विदधानाः सुयोधनादयः "क्वेति गवेषयितुमिव भुवि दूरमवतीर्णैश्चिकुरहस्तैरुपलक्षिताभिः पवनसुतपरिघोपालम्भनपरिपूरितार्थैर्विलापैर्दिगन्तरं निरन्तरयन्तीभिः स्नुषाभिः परिवार्यमाणया गान्धारसुतया शनैः शनैरनुगम्यमानः संग्राममुवमवगाह्य पङ्क्तिभिः परिशीलितदीर्घनिद्रेषु पाकशासनपरिमुक्तपारिजातप्रसवपरिमलितकचबन्धेषु "वीरेषु तनयेषु निपत्य परितो "लुठन् स कुरुभूपश्चिरमरोदीत् ॥ ६ ॥

---

शेषा यस्मिंस्तथाभूतं विज्ञाय जरठः वृद्धः महीपतिः धृतराष्ट्रः दृशा नेत्रेण सदा अन्धः सन् चिरं चेतनयाऽपि अन्धः जज्ञे जातः । दुःखेन मूर्छां प्रापेत्यर्थः ॥ ११ ॥

तदानीं विदुरसंजयाभ्यां व्यजनाद्युपचारैः विश्राणिता दत्ता संज्ञा चेतना यस्य सः हा सुयोधन! दुःशासनेति बहुधा विलपन् आक्रोशन् सन् उत्थाय रणे ये निहताः स्वजनाः तेषां मुखेन्दोः स्मरणमात्रात् उल्लोलाः अतिचञ्चलाः ये कल्लोलाः महोर्मयः ते संजाताः येषां तथाभूता शोकसिन्धवो येषां तैः बन्धुभिः सह नगरान्निर्गतः स्नुषाभिः परिवार्यमाणया गान्धार्या शनैः शनैः अनुगम्यमानः सः कुरुभूपतिः धृतराष्ट्रः संग्रामभुवम् अवगाह्य प्रविश्य पङ्क्तिभिः परिशीलिता स्वीकृता दीर्घा निद्रा यैस्तेषु पाकशासनेन इन्द्रेण परिमुक्ताः ये पारिजातस्य प्रसवाः पुष्पाणि तैः परिमलिताः सुगन्धिताः कचबन्धा येषां तेषु वीरेषु तनयेषु निपत्य परितो लुठन् सन् चिरम् अरोदीत् । कथंभूताभिः स्नुषाभिः, 'भवद्भिः समेषु पतिषु गतेषु सत्स्वपि यूयमद्यापि न निर्गताः' इति रोषेण प्राणान् बहिरुत्सारयितुं निष्कासयितुमिव हृदि पुनः पुनः विरचितं करास्फालनं याभिस्ताभिः । पुनः कथं०, 'सविधं सामीप्यमागम्य मम जन्मभूः जन्मस्थानं नयनं तस्य यत्सौन्दर्यं तस्य प्रातिभट्यं शत्रुत्वम् इयम् आचरन्ती कुर्वती' इति मनसि आनीय असहिष्णुतयेव कपोलसंबन्धिनीं मकरिकाम् उन्मूलयन्तं मार्जयन्तं बाष्पप्रवाहं नयनैः उत्सृजन्तीभिः । पुनः क०, 'अनवरतं निरन्तरम् अस्मान्कुसुमैः आमोदभरितान्विदधानाः कुर्वाणाः सुयो-

---

१ क. कुरुपतिरित्यधिकम् । २ क. हेत्यधिकम् । ३ क. हे प्राणा इत्यधिकम् । ४ क. आगत्य । ५ क. आचरति । ६ क. चिकुरहस्तानित्यधिकम् । ७ क. ख. क्व पतिता इति । ८ क. पङ्क्तिशः, खः पङ्क्ति शो निपतितेषु परि° । ९ क. परीति नास्ति । १० क. ख. प्रेत्यधिकम् । ११ क. विलुण्ठन् । १२ अत्र तादृगुभयविज्ञानस्य धृतराष्ट्रमूर्छाहेतुत्वात्पदार्थहेतुककाव्यलिङ्गस्य अन्धत्वमूर्छितत्वगुणयोर्गपद्यात्मकसमुच्चयस्य चैकवाचकानुप्रवेशसंकरः ।

रुष्टं पितृव्यमसुमागतमाजिभूमौ
द्रष्टुं भयाकुलधियाऽथ युधिष्ठिरेण ।
अभ्यर्थितौ हरिपराशरनन्दनौ द्रा-
गाजग्मतुस्तमपनीतरुषं विधातुम् ॥ २२ ॥

तं व्यासकृष्णावतितप्यमानं शोकेन शान्तं सुतरां व्यधत्ताम् ।
नभोनभस्याविव दावबृक्षं दंदह्यमानं दवपावकेन ॥ २३ ॥

अथ सहजैः सममाहवभुवमागत्य 'स्वामिन्ननेकविधापराधकरणेन तव शापपात्रं जनोऽयमागतः' इति चरणयोः प्रणमन्तं धर्मात्मजं प्रथमतो मृदुलमालिङ्गितवन्तं पश्चाद्भावज्ञेन मुकुन्देन पुरःस्थापितलोहभीमसेनेन सह निजवैरमपि चूर्णीकृतवन्तं प्रज्ञादृशं तं पुरस्कृत्य स्मृतबहुलकरणीयजातो युधिष्ठिरः पुरा भगीरथ इव प्रेतभूयंगताय सर्वस्मै ज्ञातिजनाय निर्मलैर्निलिम्पनिम्नगासलिलैर्निवापाञ्जलिनिर्वापणं विधिवदेव निर्वर्तयामास ॥ ७ ॥

---

धनादयः क्व सन्ति' इति गवेषयितुं मार्गितुमिव भुवि दूरम् अवतीर्णैर्मुक्तत्वादधोगतैः चिकुरहस्तैः केशसमूहैः उपलक्षिताभिः युक्ताभिः । पुनः क०, पवनसुतस्य परिघोपालम्भनेन गदानिन्दया परिपूरितः अर्थो येषु तैः विलापैः दिगन्तरं निरन्तरयन्तीभिः पूरयन्तीभिः ॥ ६ ॥

अथ रुष्टम् आजिभूमौ आगतमसुं पितृव्यं धृतराष्ट्रं द्रष्टुं भयेन आकुला धीर्यस्य तेन युधिष्ठिरेण अपनीतरोषं गतरोषं विधातुमभ्यर्थितौ हरिपराशरनन्दनौ कृष्णव्यासौ द्राक् शीघ्रम् आजग्मतुः ॥ २२ ॥

व्यासकृष्णौ शोकेन अतितप्यमानं तं धृतराष्ट्रं सुतरां शान्तं व्यधत्ताम् अकुरुताम् । कौ कमिव, यथा नभोनभस्यौ श्रावणभाद्रपदमासौ दवपावकेन दावाग्निना दंदह्यमानं भृशं ज्वलन्तं दावबृक्षं वनवृक्षं शान्तं विधत्तः तथा ॥ २३ ॥

अथ सहजैः बन्धुभिः समम् आहवभुवं रणभूमिम् आगत्य 'स्वामिन् अनेकविधापराधकरणेन तव शापस्य पात्रम् अयं जनः आगतः' इत्युक्त्वा चरणयोः प्रणमन्तं धर्मात्मजं प्रथमतः मृदुलं यथा तथा आलिङ्गितवन्तं पश्चाद्भावज्ञेन अभिप्रायवेदिना मुकुन्देन पुरः अग्रभागे स्थापितो यो लोहस्य भीमसेनः तेन सह निजवैरमपि चूर्णीकृतवन्तं चूर्णतां प्राप्नुवन्तं त्यजन्तं च प्रज्ञादृशम् अन्धं तं धृतराष्ट्रं पुरस्कृत्य स्मृतं बहुलं करणीयजातं कर्तव्यसमूहो येन सः युधिष्ठिरः पुरा भगीरथ इव प्रेतभूयंगताय प्रेतत्वं प्राप्ताय सर्वस्मै ज्ञातिजनाय निर्मलैः पवित्रैः निलिम्पनिम्नगायाः भागीरथ्याः सलिलैः निवापाञ्जलीनां पितृभ्यो देयजलाञ्जलीनां निर्वपणं दानं विधिवदेव यथाशास्त्रमेव निर्वर्तयामास कारयामास ॥ ७ ॥

---

१ क. बभित°, ख. अथ । २ क. सह महाहव° । ३ क. आसाद्य । ४ क. आत्मानम् । ५ क. ख. स्थापितेन । ६ ख. तमिति नास्ति । ७ क. ख. निर्वापणम् । ८ क. निवर्तया° ।

सुधाब्धिवीचीरिव तोरणावलीस्ततो वहन्तीं ततवाद्यनिस्वनाम् ।
हरिं पुरोधाय समं सहोदरैरविक्षदात्मीयपुरीं युधिष्ठिरः ॥ २४ ॥
वलग्नसूतैर्द्रुपदात्मजाया वितानिते धाम्नि स तत्र चेलैः ।
स्थित्वा पितृव्यस्य दिनं तदेकं परेऽह्नि पार्थः प्रययौ स्वगेहम् ॥२५॥
ततः—

राज्याभिषेकसलिलादिव संगतं द्रा-
गावर्तमुद्वहति मूर्धनि धर्मसूनोः ।
कृष्णादयः शुभगुणे कृतिनो मुहूर्ते
हैमं न्यधुर्मुकुटमुज्ज्वलरत्नजालम् ॥ २६ ॥

द्विजप्रणामेषु नृपस्य लग्ना भूरेणुराजिर्भुजसीम्नि रेजे ।
एकाधिकद्वादशहायनेषु क्षितिः कृशाङ्गी विरहादिवास्य ॥ २७ ॥
तदानीमेव पराशरसुतविदुरसंजयैः सह संभाषमाणं रमारमणमग्रतो विधाय सविनयं बीभत्सुना दीयमानहस्तावलम्बो भूभारलघुकरणोपकारेण प्रीयमाणैर्दिग्वारणैः प्रेषितमिव महान्तं कंचिद्द्विपमुपवाह्यमधिरूढः शशिमण्डलेन शरद्राकाशर्वरीप्रथमयाम इव धवलातपत्रेण

---

ततः युधिष्ठिरः हरिं पुरोधाय अग्रतः कृत्वा सोदरैः समं सुधाब्धेः अमृतसमुद्रस्य वीचीरिव तोरणानां द्वारोपरि कौतुकेन बद्धानां आम्रपल्लवादीनाम् आवलीः वहन्तीं ततवाद्यानां वीणादिवाद्यानां निस्वनाः शब्दाः यस्यां ताम् आत्मीयां स्वकीयां पुरीं हस्तिनापुरीम् अविक्षत् प्राविक्षत् ॥ २४ ॥

सः पार्थः युधिष्ठिरः द्रुपदात्मजायाः वलग्नेन मध्यभागेन सूतैः प्रसूतैः चेलैः वस्त्रैः वितानिते संजातविताने तत्र तस्मिन् पितृव्यस्य धाम्नि तत् एकं दिनं स्थित्वा परेऽह्नि स्वगेहं प्रययौ ॥ २५ ॥

ततः स्वनगरगमनादूर्ध्वं कृतिनः कुशलाः कृष्णादयः राज्याभिषेकसलिलात् सकाशादिव द्राक् संगतम् आवर्तम् अम्भोभ्रमम् उद्वहति धर्मसूनोः मूर्धनि मस्तके शुभगुणे मुहूर्ते उज्ज्वलं देदीप्यमानं रत्नानां जालं वृन्दं यस्मिन् तं हैमं सौवर्णमुकुटं न्यधुः स्थापयामासुः । धर्मराजस्य यथाविधि राज्याभिषेकं चक्रुरित्यर्थः ॥ २६ ॥

द्विजप्रणामेषु तदानीं ब्राह्मणनमस्कारेषु नृपस्य भुजसीम्नि लग्ना भूरेणुराजिः भूरेणुपङ्क्तिः एकाधिकद्वादशसु त्रयोदशसु हायनेषु वनवासाज्ञातवासवर्षेषु अस्य धर्मराजस्य विरहात् कृशाङ्गी क्षितिरिवेत्युत्प्रेक्षा, रेजे शुशुभे ॥ २७ ॥

तदानीमेव व्यासविदुरसंजयैः सह भाषमाणं श्रीकृष्णम् अग्रतो विधाय सविनयं यथा तथा बीभत्सुना अर्जुनेन दीयमानः हस्तावलम्बो यस्य सः भूभाररूपस्य लघुकरणरूपो

---

१ क. शुभाब्धि° । २ ख. आविक्ष° । ३ क. सूत्रैः° । ४ क. निधाय । ५ क. युयुत्सुना । ६ क. करणेन । ७ क. °त्विरीय° । ८ क. शरद्राकेति नास्ति ।

परिष्क्रियमाणोपरिभागो लालनवशेन पार्श्वयोरागम्य प्रमोदतरलपक्षपुटाभ्यां मरालदम्पतिभ्यां चतुर्मुख इव चामराभ्यामुपवीज्यमानो हर्म्यशिखरावलम्बिनीनां नितम्बिनीनां कपोलस्खलनदूरविप्रकीर्णैरानन्दबाष्पबिन्दुमुकुलैरिव लाजाञ्जलीभिरवकीर्यमाणः पुरस्सरविविधमङ्गलवाद्यगुरुजनशिष्यायमाणगवाक्षपरंपरां तां पुरीं प्रदक्षिणीकृत्य द्वारभुवमवतीर्णो निजमणितिलकप्रतिबिम्बानीव दीपाङ्कुराणि कनकपात्रमध्ये वहन्तीभिर्वारसीमन्तिनीभिर्विरचितार्तिक्यमङ्गलः पाण्डुसूनुर्निबिडवितानमाल्यधूपपरिमलसुरभिते मण्डपे कुरुकुलक्रमादागतं सर्वतोभद्रं नाम सिंहासनमध्यवात्सीत् ॥ ९ ॥

सौधं कदाचिदधिरुह्य समं सुहृद्भि-
र्भूपश्चिराद्विरहितस्य पुरस्य तस्य ।
वापीषु वीथिषु वनीषु चतुष्पथेषु
नृत्यालयेषु च निमज्जयति स्म दृष्टिम् ॥ २८ ॥

---

यः उपकारः तेन प्रीयमाणैः संतुष्यद्भिः दिग्वारणैः दिग्गजैः प्रेषितमिवेत्युत्प्रेक्षा, महान्तम् उच्चं स्थूलं च उपवाह्यं वाहनं द्विपं गजम् अधिरूढः शशिमण्डलेन शरत्कालिकपौर्णमास्याः प्रथमयाम इव धवलातपत्रेण परिष्क्रियमाणः शोभां नीतः उपरिभागो यस्य स लालनवशेन पार्श्वयोः आगम्य प्रमोदेन तरलौ चञ्चलौ पक्षपुटौ ययोस्ताभ्यां मरालदम्पतिभ्यां चतुर्मुख इव ब्रह्मेवेत्युपमा, चामराभ्यां वीज्यमानः हर्म्यशिखरेषु धनिकगृहाग्रभागेषु अवलम्बिनीनाम् आरूढानां नितम्बिनीनां सुन्दरीणां कपोलयोः स्खलनेन दूरं विप्रकीर्णैः आनन्दबाष्पबिन्दवः मुकुलानीव आनन्दबाष्पमुकुलानि तैरिव लाजाञ्जलिभिः विकीर्यमाणः पुरःसराणि यानि विविधानि मङ्गलवाद्यानि तान्येव गुरुजना तेषां शिष्यायमाणा शिष्यवदाचरन्ती मङ्गलवाद्यनिनादोत्तरं प्रतिध्वनिनादं कुर्वती गवाक्षाणां परंपरा यस्यां तां पुरीं हस्तिनानगरीं प्रदक्षिणीकृत्य द्वारभुवम् अवतीर्णः निजाः ये मणितिलकाः मणिश्रेष्ठाः तेषां प्रतिबिम्बानीव दीपाङ्कुराणि कनकपात्रमध्ये वहन्तीभिः वारसीमन्तिनीभिः वारवनिताभिः विरचितं कृतम् आर्तिक्यमङ्गलं यस्य सः पाण्डुसूनुः धर्मराजः निबिडानि घनानि वितानानि यस्मिन् तस्मिन् माल्यधूपानां परिमलेन सुरभिते सुगन्धिते मण्डपे कुरुकुलक्रमादागतं सर्वतोभद्रं नाम सिंहासनम् अध्यवात्सीत् आरोहणं कृतवान् ॥ ९ ॥

कदाचित् नृपः धर्मराजः सुहृद्भिः समं सौधं राजगृहोपरिभागम् अधिरुह्य चिरात् बहुकालं विरहितस्य स्वकीयविरहयुक्तस्य तस्य हस्तिनापुरस्य वापीषु, वीथिषु गृहपरम्प-

---

१ क. आगत्य । २ क. पुरेत्यधिकम् । ३ क. फलकेत्याधेकम् । ४ ख. मङ्गलेति नास्ति । ५ क. नगरीम् । ६ क. बिम्बानिव दीपाङ्कुरान् । ७ क. °ताराजिकम्° । ८ क. सुरभिले । ९ क. °मागतम् । १० अत्रोत्प्रेक्षितोपमासंसृष्टिः ।

तदानीं खलु—

क्षोणीं कोशगृहाणि गोधनततिं घोटान् रथान् कुञ्जरा-
न्न्यां संपदमप्यदात्पणमिषादस्माकमीशाय यः ।
तादृक्षः शकुनेः करो विजयतामित्यालपन्तीः शुकी-
रुद्यानेऽथ [1]निशाम्य धर्मतनयो मन्दं जहासानुजैः ॥ २९ ॥

[2]कृत्यज्ञः पाण्डवोऽसौ सुतशतविरहादन्तरत्यन्तमार्तं
भक्त्या साकं पितृव्यं प्रतिदिनमनुजैरग्रतः स्थापयित्वा ।
कृत्वाऽधस्तात्कुशाग्रं विजितमिव धिया प्राञ्जलिः सर्वधर्मान् ।
भीष्माद्वर्णाश्रमाणामविकलमशृणोत्स्वास्पदं गन्तुमिच्छोः ॥ ३० ॥

आलङ्कायास्तदनु सहजैराहिमाद्रेर्जितश्रीः
शौरेर्दोष्णा घटितनिजदोर्धर्मभूर्वेदिपार्श्वे ।
साहस्रीणां शतमखदृशां [3]संदधानोऽभ्यसूया-
मन्यादृक्षं नियमपरधीराजहाराश्वमेधम् ॥ ३१ ॥

---

रासु, वनीषु उपवनेषु, चतुष्पथेषु चतुर्मार्गस्थसभासु, नृत्यालयेषु च दृष्टिं निमज्जयति स्म बहुकालं सादरमवलोकयामासेत्यर्थः ॥ २८ ॥

तदानीं खलु—

'यः शकुनेः करः पणमिषात् ग्लहकपटात् क्षोणीं, कोशगृहाणि, गोधनततिं गवां समुदायं, घोटान् अश्वान्, रथान्, कुञ्जरान् अन्यां संपदमपि अस्माकमीशाय दुर्योधनराजाय अदात् तादृक्षः शकुनेः करः विजयतां सर्वोत्कर्षेण वर्तताम्' इति उद्याने आलपन्तीः शुकीः शुकपक्ष्यङ्गनाः निशाम्य दृष्ट्वा धर्मतनयः मन्दं यथा तथा अनुजैः सह जहास॥२९॥

अनुजैः सह कृत्यज्ञः असौ पाण्डवः धर्मराजः सुतशतस्य विरहात् अन्तः अन्तःकरणे अत्यन्तम् आर्तं पीडितं पितृव्यं धृतराष्ट्रं भक्त्या साकं प्रतिदिनम् अग्रतः स्थापयित्वा धिया विजितमिव कुशाग्रम् अधस्तात् कृत्वा कुशासने उपविश्येत्यर्थः, प्राञ्जलिः कृताञ्जलिः सन् स्वस्य स्थानं वसुलोकं गन्तुमिच्छोः भीष्मात् वर्णानां ब्राह्मणादीनाम्, आश्रमाणां ब्रह्मचर्यादीनां सर्वधर्मान् अविकलं समग्रं यथा तथा अशृणोत् ॥ ३० ॥

तदनु आलङ्कायाः लङ्कां मर्यादीकृत्य आहिमाद्रेः हिमाचलं मर्यादीकृत्य च अनुजैः कृत्वा जिता श्रीः राज्ञां लक्ष्मीर्येन सः शौरेः कृष्णस्य दोष्णा बाहुना घटितः निजदोः स्वबाहुर्येनः सः कृष्णदोर्बलेनैतस्य दोर्बलमिति भावः, भक्त्या कृष्णालिङ्गनसमये च तथा भूदेवनियमपरा धीर्यस्य सः धर्मभूः धर्मराजः वेदिपार्श्वे यज्ञकुण्डस्थलभूमिपार्श्वभागे साहस्रीणां सहस्रसंख्यावतां शतमखस्य इन्द्रस्य दृशाम् अभ्यसूयाम् ईर्ष्यां संदधानः कुर्वाणः सन् अन्यादृक्षं लोकविलक्षणं निरुपमम् अश्वमेधम् आजहार चकार ॥ ३१ ॥

---

१ क. ख. निशम्य । २ क. कुन्त्या पाण्डोस्तनूजः । ३ क. आदधानो' । ४ अत्र नियमासक्तेर्विशेषणगत्या अश्वमेधाहरणहेतुत्वमावलिङ्गम् ।

राज्ञां मौलिपरंपरां चरणयोः पाणौ प्रदानश्रियं
बुद्धौ राजनयोदयं हृदि कृपां सत्यं च जिह्वाञ्चले ।
बाहौ सागरमेखलां वसुमतीं मस्ते किरीटं मुदा
कुर्वन्धर्मतनूभवश्चिरमसौ गोपायति स्म प्रजाः ॥ ३२ ॥

दिगन्तरलुठत्कीर्तिरनन्तकविकुञ्जरः ।
प्राणैस्तुल्यं सरस्वत्याः प्राणैषीच्चम्पुभारतम् ॥ ३३ ॥

उन्मीलदम्बुजकदम्बकसौरभीणा-
मुन्नृत्यदीशमुकुटीतटिनीसखीनाम् ।
आचान्तवैरियशसाममृतोर्मिलानां
वाचामनन्तसुकवेर्वसुधैव मौल्यम् ॥ ३४ ॥

इत्यनन्तभट्टकविकुञ्जरकृतौ चम्पूभारते द्वादशः स्तवकः ॥ १२ ॥

---

असौ धर्मतनूभवः राजा आत्मनः चरणयोः राज्ञां मौलिपरंपरां नमनेन मस्तकसमूहेन कुर्वन् सन् पाणौ हस्ते प्रदानस्य श्रियं कुर्वन् बुद्धौ राजनयस्य राजनीतेः उदयं कुर्वन्, हृदि कृपां कुर्वन् जिह्वाञ्चले जिह्वाग्रभागे वचसीत्यर्थः, सत्यं कुर्वन् बाहौ सागरमेखलां समुद्रवलयां वसुमतीं कुर्वन् स्वबाहुना तद्रक्षणं कुर्वन्नित्यर्थः, मस्ते मस्तके किरीटं कुर्वन् राजचिह्नं धारयन् सन्नित्यर्थः, चिरं बहुकालं प्रजाः गोपायति स्म ररक्ष ॥ ३२ ॥

इदानीं कविः स्वग्रन्थस्य सौन्दर्यं द्वाभ्यां वर्णयति—दिगन्तरेति । दिगन्तरे लुठन्ती कीर्तिर्यस्य सः अनन्तसंज्ञः कविकुञ्जरः कविश्रेष्ठः सरस्वत्याः देव्याः प्राणैस्तुल्यं प्राणवदतिप्रियं चम्पूभारतं गद्यपद्यात्मकं भारतेतिहासयुक्तं ग्रन्थं प्राणैषीत् रचयामास ॥ ३३ ॥

उन्मीलयतां विकसताम् अम्बुजानां कदम्बकस्य सौरभीव सौरभी यासां तासाम् अनेन स्वादुता प्रतिपाद्यते, उच्चैः नृत्यन् यः ईशः शिवः तस्य मुकुटीतटिन्याः भागीरथ्याः सखीनाम् अनेन पावित्र्यं प्रतिपाद्यते, आचान्तं नाशितं वैरियशो याभिस्तासाम् अनेन स्वस्पर्धाकारिणामुपमर्दो द्योत्यते, अमृतोर्मिलानाम् अमृतोर्मिसदृशीनाम् अनेन माधुर्यं द्योत्यते, अनन्तसुकवेः वाचां वसुधैव संपूर्णा पृथिव्येव मौल्यं भवेत् ॥ ३४ ॥

बल्लालसंज्ञः खलु धर्ममूर्तिरभूत्पुरा तत्सुतमध्यवर्ती ।
श्रीखण्डनाम्ना प्रथितेऽन्ववाये स बाजिरायः प्रबभूव येन ॥ १ ॥
श्रीमद्भवानीकमलेश्वरस्य पादाब्जमाध्वीलिहसत्स्वभावम् ।
संप्राप्य विद्यामधिगम्य राज्ञश्छत्राधिपेशः करवीरभोजः ॥ २ ॥
शिवाजिसंज्ञस्य कृपासमुद्रे संक्रीड्य वृत्तिं प्रतिपद्य दुर्गे ।
मनोहरे भूधरनाम्नि चक्रे स्थितिः कुटुम्बस्य जितेन्द्रसौख्या ॥ ३ ॥

---

१ क. मूल्यम्, ख. ऽप्यमूल्यम् । २ अत्रैकाधिकरणानेकक्रियायौगपद्यात्समुच्चयभेदः ।

तस्यात्मजानां प्रथमः प्रतीतो वांवाजिनामा पितुराप्तविद्यः ।
नारायणाख्योऽपि स भारतेतिहासाढ्यचम्प्वा अकरोत्सुटीकाम् ॥ ४ ॥
बालावबोधार्थमविस्तरार्थं प्रायो न कोशादिविलेखनानि ।
रामेभवाजीन्दुशके नभस्येऽनङ्गे सिते सा परिपूर्तिमागात् ॥ ५ ॥

इति श्रीखण्डोपाह्ववाजिरायात्मजनारायणसूरिविरचितायां
चम्पूभारतटीकायां द्वादशः स्तवकः ।

---

समाप्तोऽयं ग्रन्थः ।



## 'गुजराती' मुद्रणालयस्थानि क्रय्यसंस्कृतपुस्तकानि।



| | मूल्यं | मार्गव्ययः |
|---|---|---|
| १ श्रीमद्भगवद्गीता प्रथमो गुच्छः **Bhagavat-Geeta with 7 commentaries**—आनन्दगिरिकृतटीकासंवलितशांकरभाष्य—जयतीर्थविरचितटीकासंवलितानन्दतीर्थीय ( माध्व ) भाष्य—रामानुजभाष्य—पुरुषोत्तमजीप्रकाशितामृततरङ्गिणी—नीलकण्ठीसमेता। मञ्जुलैरायसाक्षरैर्मुद्रिता। पृष्ठान्यष्टशतपरिमितानि सुचिक्कणानि। मूल्यम् रू.... ... ... ... | ६–०–० | ०–७–० |
| २ श्रीमद्भगवद्गीता द्वितीयो गुच्छः **Bhagavat-Geeta with 8 other commentaries**—निम्बार्कमतानुयायिश्रीकेशवकाश्मीरिभट्टाचार्यपादप्रणीता–'**तत्त्वप्रकाशिका,**' श्रीमधुसूदनसरस्वतीकृता—'**गूढार्थदीपिका,**' श्रीशङ्करानन्दप्रणीता—'**तात्पर्यबोधिनी,**' श्रीधरस्वामिकृता–'**सुबोधिनी,**' श्रीसदानन्दविरचितः–'**भावप्रकाशः,**' श्रीधनपतिसूरिविरचिता–'**भाष्योत्कर्षदीपिका,**' दैवज्ञपण्डितश्रीसूर्यविरचिता–'**परमार्थप्रपा,**' पूर्णप्रज्ञमतानुसारिश्रीराघवेन्द्रकृतः–'**अर्थसंग्रहः**' इत्येताभिर्व्याख्याभिः सहिता। अत्र श्लोकाः स्थूलतमाक्षरैष्टीकाश्च स्थूलाक्षरैर्मुद्रिताः, वृद्धा मा क्लेशिषतेति। मू. रू. ... ... ... | १०–०–० | ०–१५–० |
| ३ उत्तरगीता **Uttara-Geeta with a commentary**—गौडपादीयदीपिकाख्यव्याख्यायुता। भगवत्पादश्रीशंकराचार्याणां परमगुरुभिः श्रीशुकाचार्याणां च शिष्यैः श्रीगौडपादाचार्यैः प्रणीतेयं व्याख्येत्येतावत्कथनमलमस्या महिमानमवगमयितुम्। मूल्यम् रू. ... | ०–३–० | ०–०–६ |
| ४ श्रीमद्वाल्मीकिरामायणम्। **Valmiki Ramayana with 3 well-known commentaries,** सर्वतन्त्रस्वतन्त्रप्रतिभेन शब्देन्दुशेखरादिनानानिबन्धप्रणेत्रा श्रीमन्नागेशभट्टेन स्वशिष्यस्य सतो जीविकाप्रदातुः शृङ्गवेरपुराधीशस्य वीरमणेः श्रीरामराजस्य नाम्ना प्रणीतया रामायणतिलकाख्यया टीकया, | | |

पण्डितश्रीवंशीधर–शिवसहायाभ्यां प्रणीतया रामायणशि- रोमण्याख्यया टीकया, श्रीगोविन्दराजप्रणीतया भूषणा- ख्यया टीकया च सह मुद्रयितुमारब्धमस्माभिः श्रीमद्वाल्मी- किरामायणम् । तच्च सप्तभिः खण्डैः समापयिष्यामः । — मूल्यं — मार्गव्ययः

बालकाण्डम् । प्रथमं खण्डम् **Bal Kanda** उपरिनिर्दिष्टटीकात्रयोपेतम् । मूल्यम् रू. ... ... ३–०–० ०–५–०

अयोध्याकाण्डम् । द्वितीयखण्डम् **Ayodhya Kanda** उर्ध्वनिर्दिष्टटीकात्रयोपेतम् । मू. रू. ... ५–०–० ०–७–०

अरण्यकाण्डम् । तृतीयखण्डम् । **Aranya Kanda** उपरिनिर्दिष्टटीकात्रयोपेतम् । मू. रू. ... २–१२–० ०–४–०

किष्किन्धाकाण्डम् । चतुर्थं खण्डम् **Kishkindha Kanda** उपरिनिर्दिष्टटीकात्रयोपेतम् । मू. रू. २–१०–० ०–४–०

५ **स्तोत्रमुक्ताहारः–Stotra-muktahar containing 256 Stotras** अस्मिन् २५६ स्तोत्राणि संगृहीतानि । यद्यपि सन्ति भूरीणि स्तोत्रपुस्त- कानि मुद्रितानि भूरिभिस्तथापि न तेष्वियतां स्तोत्ररत्नानां संग्रहः । अस्माभिः पूर्वमसुद्रितानां स्तोत्राणां पुस्तकानि काश्यादिक्षेत्रेभ्यो भूयसा प्रयासेन द्रविणव्ययेन च समासाद्य तेभ्यश्च प्रसादगुणयुक्तानि स्तोत्राणि संकलय्य संशोध्य च तानि भाविकजनानां कृतेऽत्र समावेशितानि तदाशास्महे श्रद्धावन्तो जनाः सफलयिष्यन्ति प्रयत्नमस्माकममुमिति । मूल्यम् रू. ... ... ... ... ०–८–० ०–२–०

६ **संस्कारमयूखः—Samskar Mayukha** मीमांसकनीलकण्ठभट्टसुतशंकरभट्टकृतः । अत्र संस्काराणां स्वरूपं कालः इतिकर्तव्यता वर्णधर्मा आश्रमधर्माश्च वि- स्तरतो मूलवचनोपन्यासपुरःसरं निरूपिताः । मूलवचनानि चाप्रतिपत्तिविप्रतिपत्तिसंभावनास्थलेषु क्रमेण पर्यायश- ब्दप्रदर्शनेन मीमांसकाभिमतन्यायानुसरणेन च व्याख्या- तानि । अन्ते कातीयसूत्रानुसारिप्रयोगाश्च दत्ताः । पूर्वं वाराणस्यादिषु मुद्रितोऽप्ययं वर्णपदवाक्यभ्रंशविपर्ययादिदो- षप्रचुरतयाऽविभक्तविषयतया च भृशं दुर्बोधो विपरी- तबोधकरश्चासीत् । अस्माभिस्तु ग्रन्थकृतैव पुनः शोधितस्य वर्धितस्य चास्य ग्रन्थस्य पुस्तकमासाद्य विषयांश्च प्रविभज्य शोधने च महान्तमायासमास्थाय मुद्रितः । मू. रू. ... ०–१२–० ०–१–०

| | मूल्यं | मार्गव्ययः |
|---|---|---|
| ७ आचारमयूखः—**Achara Mayukha** नीलकंठभट्टकृतः । प्रातःस्मरणादिशयनान्तस्याह्निकक्रियाकलापस्य निरूपणपरो ग्रन्थः । मूल्यम् ... ... ... | ०–८–० | ०–१–० |
| ८ मनुस्मृतिः—**Manu Smriti** कुल्लूकभट्टकृतटीकया, ग्रन्थान्तरेषु मनुनाम्नोल्लिखितैरिदानींतनमनुस्मृतिपुस्तकेष्वनुपलभ्यमानैः श्लोकैः, पद्यानां वर्णानुक्रमकोशेन, विषयानुक्रमेण च सहिता । सूक्ष्मेक्षिकया संशोधिता च । मू. रू. ... ... ... ... ... | १–८–० | ०–३–० |
| ९ विदुरनीतिः—**Vidura-Niti with a commentary** संस्कृतटीकोपेता नीतिशास्त्राभ्यासिनां विद्यार्थिनामतीवोपयोगिनी । मू. रू.... ... | ०–४–० | ०–१–० |
| १० वेदान्तरहस्यम्—**Vedanta Rahasya** वेदान्तवागीशभट्टाचार्यविरचितम् । अत्राद्वैतमतसिद्धान्तो निरूपितः । उपपत्तिश्च प्रदर्शिता । भाषाऽतिसरला प्रौढा च । मूल्यम् रू. ... ... ... ... | ०–१–० | ०–०–६ |
| ११ विशिष्टाद्वैतमतविजयवादः—**Vishishtadvaita-Mata-Vijaya-Vada** नरहरिपण्डितकृतः । अत्र विशिष्टाद्वैतमते परेषामाक्षेपान्निराकृत्य विशिष्टाद्वैत एवोपनिषदां तात्पर्यं व्यवस्थापितम् । मू. रू. | ०–१–० | ०–०–६ |
| १२ रघुवंशमहाकाव्यम्—**Raghuvamsha With Mallinatha's commentary** श्रीकालिदासकृतम् । मल्लिनाथकृतसंजीविन्याख्यटीकासहितम् । मू. रू. ... ... ... | ०–१०–० | ०–३–० |
| १३ रघुवंशमहाकाव्यं—Only First Five Sargas of the Same with Commentary मल्लिनाथकृतटीकोपेतम् । सर्गाः १–५ मूल्यम् रू. ... ... ... | ०–४–० | ०–१–० |
| १४ कुमारसंभवं महाकाव्यम्—**Kumar Sambhav with 3 known commentaries** कविवरश्रीकालिदासविरचितमिदं सप्तमसर्गपर्यन्तं मल्लिनाथकृतसंजीविन्या चारित्र्यवर्धनकृतशिशुहितैषिण्या च संवलितं तत आसमाप्ति सीतारामकृतसंजीविन्याऽलंकृतं सुललितैरायसाक्षरैर्मुद्रितमतीव दर्शनीयमस्ति। मूल्यम् रू. ... ... ... | १–४–० | ०–२–० |

मूल्यं मार्गव्ययः

१५ कारिकावली सिद्धान्तमुक्तावलीसहिता—**Karikavalee with SiddhantaMuktavali and other notes** न्यायवैशेषिकदर्शनयोर्व्युत्पित्सूनां कृते प्रणीतेषु प्रकरणग्रन्थेषु सिद्धान्तमुक्तावलीसमुद्भासिता कारिकावली मूर्धाभिषिक्तेत्यत्र न विदुषां वैमत्यं किंतु तत्र दीधितिकृदुपसृतया विवेकसरण्या संक्षेपतः सूक्ष्मतमानामर्थानामुपनिबद्धतया प्रायः खिद्यन्ति नव्याश्छात्राः, इति तेषामुपकारायास्माभिः प्रायः सर्वेषु विषमस्थलेष्वतिविस्तृतां सरलां सुबोधां च टिप्पनीं पण्डित-जीवरामशास्त्रिभिः कारयित्वा तया सहेयं दृढतरेषु सुचिक्कणेषु पत्रेषु स्थूलाक्षरैर्मुद्रिता । सार्धशताभ्यधिकपत्रयुतामपीमां सर्वसौलभ्यायाल्पीयसा मूल्येन वितरामः । मू. रू. ०–७–० ०–१–३

१६ वैशेषिकदर्शनम्—**Vaisheshika Darshana with several commentaries** श्रीशंकरमिश्रकृत—वैशेषिकसूत्रोपस्कार—जयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीत–विवृति–चन्द्रकान्तभट्टाचार्यप्रणीत—भाष्यसहितम् । मू. रू. ... २–०–० ०–३–०

१७ वादार्थसंग्रहः (प्रथमो भागः)—**Vadartha Samgraha** First Part अत्र शेषकृष्णकृतं स्फोटतत्त्वनिरूपणं, श्रीकृष्णमौनिकृता स्फोटचन्द्रिका, गोडवोलेकृतः प्रातिपदिकसंज्ञावादः, वाक्यवादः, हरियशोमिश्रकृता वाक्यदीपिकेति पञ्च ग्रन्थाः संकलिताः । पण्डितानां प्रौढच्छात्राणां च बहुतरमुपकारकः । मू. रू. ... ०–६–० ०–०–६

१८ वादार्थसंग्रहः (द्वितीयो भागः)—Second Part अत्र भवानन्दसिद्धान्तवागीशकृतं षट्कारकविवेचनम्, जयरामभट्टाचार्यकृतः कारकवादः समासवादश्च, एवकारवादश्चेति चत्वारो ग्रन्थाः सन्ति । मू. रू. ... ... ०–६–० ०–०–६

१९ वादार्थसंग्रहः (तृतीयो भागः)—Third Part अत्र कृष्णाचार्यकृतः '**वादसुधाकरः**' मौनिश्रीकृष्णकृतः '**लघुविभक्त्यर्थनिर्णयः**' रामकिशोरकृता—'**शाब्दबोधप्रकाशिका**' चेति शाब्दिकानां त्रयो ग्रन्थाः सन्ति । मू. रू. ... ... ... ... ... ०–८–० ०–१–०

२० न्यायबिन्दुः—**Nyayabindu** पूर्वमीमांसायाः

अधिकरणार्थसंग्राहको ग्रन्थः। तत्सदुपाख्यभट्टवैद्यनाथकृतः। मूल्यं मार्गव्ययः
टिप्पनीसहितः। मू. रू. ... ... ... १–४–० ०–२–०

२१ **महाभागवतम्–Maha Bhagavata** देवीपुराणम्। अस्मिन् भगवत्या ब्रह्मस्वरूपिण्या महाकाल्या दाक्षायणी—गङ्गा—पार्वती—श्रीकृष्णेत्यवतारचतुष्टयचरितानि, महाकाल्या मूलस्थानं च प्रधानतयोपवर्णितानि। प्रसङ्गाद्रामचरितं स्कन्दचरितं पाण्डवचरितं गणेशोत्पत्तिर्गङ्गावतरणं भगवतीगीता ललितासहस्रनाम शिवसहस्रनामादयश्च विषया निरूपिताः। सार्धपञ्चसाहस्री संहितेयम् मू. रू. ... ... ... ... ... २–०–० ०–३–०

२२ **तैत्तिरीयोपनिषत्–Taittiriya-Upanishat** श्रीमच्छंकरभगवत्पादकृतभाष्येणानन्दगिरिकृतटीकायुतेन तैत्तिरीयविद्याप्रकाशेन च सहिता। मू. रू. ... १–०–० ०–२–०

२३ **दशरूपकम्—Dasha Rupaka** नाट्यशास्त्रं धनञ्जयविरचितमवलोकसहितं पञ्चनदीयपण्डितसुदर्शनाचार्यप्रणीतप्रभाख्यव्याख्यासहितं च। मू. रू. ... ... १–०–० ०–२–०

२४ **ब्रह्मसूत्रवृत्तिः–Brahma Sutra Vritti** अद्वैतमञ्जरी। भगवत्पाद(आद्यशंकराचार्य)शिष्यकृता।मू.रू. ०–१२–० ०–२–०

२५ **चन्द्रालोकः—Chandraloka with a commentary** श्रीपीयूषवर्षजयदेवकविविरचितोऽलंकारग्रन्थः। पायगुण्डोपाह्ववैद्यनाथ(वाळंभट्ट)विरचितरमाख्यव्याख्यासहितः मू. रू. ... ... ... ०–८–० ०–०–६

२६ **महाभारतविराटपर्व–Mahabharata-Virata Parva with eight commentaries** नीलकण्ठकृतभारतभावदीप–अर्जुनमिश्रकृतदीपिका–चतुर्भुजमिश्रकृतप्रकाश–सर्वज्ञनारायणकृतभारतार्थप्रकाश–विमलबोधकृतदुर्घटार्थप्रकाशिनी–रामकृष्णकृतविरोधार्थभञ्जनी–विषमपदविवरण–वादिराजतीर्थविरचितलक्षाभरणेत्यष्टटीकोपेतं विपुलपाठभेदसहितं च। मू. रू. ... ३–८–० ०–६–०

२७ **चन्द्रकान्त Chandrakanta (Hindi)** ( वेदान्त ज्ञानका मुखग्रन्थ ) प्रथम भाग. यह वह ग्रन्थ है कि, जो नितान्त निर्भ्रान्त वेदान्त सिद्धान्तका एकांत प्रतिपादक "चन्द्रकान्त" मणि बम्बई प्रान्तके प्रसिद्ध साप्ताहिक 'गुजराती' पत्रके मुख्य–आद्य संपादक

| | मूल्यं | मार्गव्ययः |
|---|---|---|
| गुजराती भाषाके सुविख्यात लेखक, अनेक ग्रन्थोंके निर्माता देशभक्तधुरीण, सारासारविवेकप्रवीण, वैश्यकुलभूषण श्रीमान् शेठ **इच्छाराम सूर्यराम** देसाईके शुद्ध हृदयमें देदीप्यमान प्रवोधरत्नभाण्डागारका चमचमाता हुआ एक अमूल्य रत्न है. किं. रू. ... ... | २–८–० | ०–४–० |
| ३८ **युक्तिप्रकाश—Yukti Prakasha**(Hindi) विचारसागरका कर्ता साधु श्रीनिश्चलदासजीने किया हुआ यह ग्रन्थ हिन्दुस्तानी भाषामें है. इसमें वेदान्तके ३९ सिद्धान्त वहुत अच्छीतरहसे सिद्ध किये गये हैं. निश्चलदासकी वाणी सव जिज्ञासुलोकोंको ज्ञात होनेसे विशेष निरूपणकी कुछ जरूरत है नहीं. और जिज्ञासुलोकोंको ये ग्रन्थ वहुत उपयुक्त हैं. पक्की जिल्द और अच्छा कागज. | १–०–० | ०–२–० |

**नोंध—व्ही. पी. खरच जूदा पडेगा.**

'गुजराती' मुद्रणालयाधिपतिः ।

कोट सर्कल सासून विल्डिंग–**मुंवई.**

# न्यायग्रन्थाः

## कारिकावली सिद्धांतमुक्तावली सहिता ।

न्यायवैशेषिक–दर्शनयोर्व्युत्पित्सूनां कृते प्रणीतेषु प्रकरणग्रन्थेषु सिद्धान्तमुक्तावली समुद्भासिता मूर्धाभिषिक्तेत्यत्र न विदुषां वैमत्यं, किंतु तत्र दीधितिकृदुपस्तृतया विवेकसरण्या संक्षेपतः सूक्ष्मतमानामर्थानामुपनिबद्धतया प्रायः खिद्यन्ति नव्याश्छात्राः इति तेषामुपकारायास्माभिः प्रायः सर्वेषु विषमस्थलेष्वति विस्तृतां सरलां सुबोधां च टिप्पणीं पण्डितजीवरामशास्त्रिभिः कारयित्वा तया सहेयं दृढतरेषु सुचिक्कणेषु पत्रेषु स्थूलाक्षरैर्मुद्रिता । सार्धशताभ्यधिकपत्रयुतामपीमां सर्वसौलभ्यायाल्पीयसा मूल्येन वितरामः । मू. १–००

## वादार्थसंग्रहः प्रथमो भागः

अत्र शेषकृष्णकृतं स्फोटतत्त्वनिरूपणं श्रीकृष्णमौनिकृता स्फोटचन्द्रिका, गोडबोले कृतः प्रातिपदिकसंज्ञावादः, वाक्यवादः, हरियशोमिश्रकृता वाक्यदीपिकेति पञ्च ग्रन्थाः संकलिताः । पण्डितानां प्रौढच्छात्राणां च बहुतरमुपकारकः । २–००

## वादार्थसंग्रहः द्वितीयो भागः

अत्र भवानन्दसिद्धांतवागीशकृतषट्कारकविवेचनम्, जयरामभट्टाचार्य कृतः कारकवादःसमासवादश्च, एवकारवादश्चेति चत्वारो ग्रन्थाः सन्ति। २–००

## वादार्थसंग्रहः तृतीयो भागः

अत्र कृष्णाचार्यकृतः 'वादसुधाकरः' मौनिश्रीकृष्णकृतः 'लघुविभक्त्यर्थनिर्णयः' रामकिशोरकृता 'शाब्दबोध प्रकाशिका' चेति शाब्दिकानां त्रयोग्रन्थाः सन्ति। २–००

## वादार्थसंग्रहः चतुर्थो भागः

आख्यातशक्तिवादः । सटीकः २–००

## न्यायबिन्दुः

पूर्वमीमांसाया अधिकरणार्थसंग्राहकोऽयं ग्रन्थः । तत्सदुपाख्यभट्ट वैद्यनाथकृतः टिप्पणी सहितः ३–००

## मीमांसान्यायप्रकाशः

आपदेवकृतः–अनन्तदेवकृत–भाट्टालंकाराख्यटीकासहितः–(पूर्वार्धम्) १–००

# वेदांतग्रंथाः ।

## वेदान्तरहस्यम्

वेदान्तवागीशभट्टाचार्यविरचितम् । अत्राद्वैतमतसिद्धान्तो निरूपितः । उपपत्तिश्चप्रदर्शिता । भाषाऽतिसरला प्रौढा च । मू. ०-५०

## विशिष्टाद्वैतमतविजयवादः

नरहरिपण्डितकृतः । अत्र विशिष्टाद्वैतमते परेषामाक्षेपान्निराकृत्य विशिष्टाद्वैत एवोपनिषदां तात्पर्यं व्यवस्थापितम् । मू. ०-५०

## विशिष्टाद्वैताधिकरणमाला

पञ्चनदीयपण्डितसुदर्शनाचार्यविरचिता। अत्र अथशब्दस्यानन्तर्यं परमतः शब्दस्य च कर्मज्ञानवृत्ततापरत्वं, हिरण्यगर्भादिजीवानां परमेश्वरनिरासः, योगमतनिरासः, ब्रह्मणः प्रपञ्चोपादानत्वं च, सृष्टौ वैषम्यं कर्मापेक्षम्, पशुपतिमतनिरासः भागवतमतसंस्थापनम्, इत्यादयो विषयाः रामानुजमतेन सम्यङ्निरूपिताः । मू॰ १-००

## तैत्तिरीयोपनिषत्

श्रीमच्छङ्करभगवत्पादकृतभाष्येणानन्दगिरिकृतटीकायुतेन तैत्तिरीयविद्याप्रकाशेन च सहिता । मू. २-००

## ब्रह्मसूत्रवृत्तिः

अद्वैतमञ्जरी । भगवत्पाद-( आद्यशंकराचार्य ) शिष्यकृता । मू. १-००

## उपदेशसाहस्री

श्रीमच्छङ्कराचार्यकृता। रामतीर्थकृतपदयोजनिकासहिता। विषयानुक्रमणिकया, श्लोकानुक्रमणिकया, नैष्कर्म्यसिद्धिधृतश्लोक प्रदर्शनेन, अत्रोदाहृतग्रन्थान्तरस्थवाक्यानुक्रमणिकया, शुद्धिवृद्धिभ्यां च सहिता । ४-००

## वेदांतसंज्ञावलिः-विवृतिसमेता

ग्रन्थगतानां पारिभाषिकशब्दानां सूचीसहिता । मू. १-००

